# BIBLIOTHECA INDICA

O. S. fasc. 14, 15, 17, 20, 23, 25

Collection of Oriental Works

Published under the Patronage of the
Hon. Court of Directors of the East India Company,
and the Superintendence of the
ASIATIC SOCIETY OF BENGAL.

volume 3

The Chandogya Upanishad

Reprint of the edition Calcutta 1849–1850

Biblio Verlag · Osnabrück 1980

# BIBLIOTHECA INDICA;

## COLLECTION OF ORIENTAL WORKS

PUBLISHED UNDER THE PATRONAGE OF THE

Hon. Court of Directors of the East India Company,

AND THE SUPERINTENDENCE OF THE

ASIATIC SOCIETY OF BENGAL.

EDITED BY DR. E. RÖER.

VOL. III.—NOS. 14, 15, 17, 20, 23, 25.

# सानन्दगिरिकृतटीकशाङ्करभाष्यसम्बलित-छान्दोग्योपनिषत् ।

# THE CHHA'NDOGYA UPANISHAD,

WITH THE

COMMENTARY OF SANKARA A'CHA'RYA, AND THE GLOSS OF A'NANDA GIRI.

EDITED BY DR. E. RÖER.

CALCUTTA:

PRINTED BY J. THOMAS, AT THE BAPTIST MISSION PRESS, CIRCULAR ROAD.

1850.

ॐ परमात्मने नमः ।

## छान्दोग्योपनिषद्भाष्यं ॥

भा० ओमित्येतदक्षरमित्याद्यष्टाध्यायी छान्दोग्योपनिषत् । तस्याः सङ्क्षेपतोऽर्थजिज्ञासुभ्य ऋजुविवरणमल्पग्रन्थमिदमारभ्यते ॥

### आनन्दगिरिकृतटीका ।

आ० ॐ ॥ नमो जन्मादिसम्बन्धबन्धविध्वंसहेतवे ।
हरये परमानन्दवपुषे परमात्मने ॥ १ ॥
नमस्त्रय्यन्तसन्दोहसरसीरुहभानवे ।
गुरवे परपक्षौघध्वान्तध्वंसपटीयसे ॥ २ ॥

छन्दोगानामुपनिषदिदं व्याचिख्यासुर्भगवान् भाष्यकारश्चिकीर्षितग्रन्थपरिसमाप्तिप्रचयपरिपन्थिदुरितनिबर्हणसिद्ध्यर्थमोङ्कारोच्चारलक्षणं मङ्गलाचरणं सम्पादयन् व्याख्येयस्वरूपं दर्शयति । ओमित्येतदिति ॥ व्याख्यानं सप्रयोजनं प्रतिजानीते । तस्या इति ॥ ननु प्राचीनके भूयःसु प्रदेशेषु विस्तरेण व्याख्यातत्वादमुष्य भाष्यं किमिति समस्त्यारभ्यतेऽत आह । सङ्क्षेपत इति ॥ विस्तरेण व्याख्यातत्वेऽपि सङ्क्षेपतो व्याख्यानमस्याः सम्भाव्यते विस्तृतस्य सङ्क्षिप्य ग्रहणे सुग्रहत्वादित्यर्थः ॥ किञ्च । न चैवं यथा पाठक्रमं व्याख्याता । प्रकृते तु पाठक्रममनतिक्रम्य व्याख्यायते तद्युक्तमिदं भाष्यमित्याह । ऋजुविवरणमिति ॥ ऋजु पाठक्रमानुसारि विवरणमर्थस्फुटीकरणं प्रकृतोपनिषदो यस्मिन् भाष्ये तत्तथेति यावत् ॥ अथ पाठक्रममाश्रित्यापि द्राविड भाष्यं प्रणीतं तत् किमनेनेत्याशङ्क्याह । अल्पग्रन्थमिति ॥ तथापि

भा॰ तत्र सम्बन्धः। समस्तं कर्माधिगतं प्राणाग्न्यादिदेवताविज्ञानसहितमर्चिरादिमार्गेण ब्रह्मलोकप्रतिपत्तिकारणं। केवलं च धूमादिमार्गेण चन्द्रलोकप्रतिपत्तिकारणं। स्वभावप्रवृत्तानां च मार्गद्वयपरिभ्रष्टानां कष्टाऽधोगतिरुक्ता॥

---

व्या॰ विशिष्टाधिकार्य्यभावे कथमिदमारभ्यते। तत्राह। अर्थजिज्ञासुभ्य इति॥ ये हि मुमुक्षवोऽस्याविवक्षितमर्थं जिज्ञासन्ते तेभ्यो भाष्यमिदं प्रस्तूयते। तथा च विशिष्टाधिकारिसम्भवे तदारम्भः सम्भवति। तस्य च प्रकृतोपनिषदर्थपरिज्ञानमवान्तरफलं तद्द्वारा कैवल्यं परमं फलमिति भावः॥

ननु कर्म्मविधिशेषत्वादुपनिषदस्तद्व्याख्यानेनैव कृतव्याख्यानत्वात् पिष्टपिष्टिप्रसङ्गात् कृतं तद्भाष्येणेत्याशङ्क्य शेषशेषित्वे प्रमाणाभावान्नैवमित्यभिप्रेत्य पूर्व्वोत्तरकाण्डयोर्नियतपूर्व्वापरभावप्रयुक्तं सम्बन्धं प्रतिजानीते। तत्रेति॥ तस्या व्याख्येयत्वेन प्रस्तुताया उपनिषदः कर्म्मकाण्डेन सह सम्बन्धोऽभिधीयत इत्यर्थः। कोऽसावित्यपेक्षायां तदभिधित्सया कर्म्मकाण्डार्थमनुवदति। समस्तमिति॥ विहितं प्रतिषिद्धञ्च कर्म्म पूर्व्वस्मिन् काण्डे प्रतिपन्नमित्यर्थः॥ तत्र हि विहितं समुच्चितमसमुच्चितञ्चेति द्विविधमङ्गीकृत्य समुच्चितस्य फलमनुवदति। प्राणाग्न्यादीति॥ प्राणश्चाग्निश्चेत्याद्यधिदेवता तद्विज्ञानं तदुपासनं तेन समुच्चितमग्निहोत्रादि कर्म्म अर्चिराद्युपलक्षितेन देवयानेन यथा कार्य्यब्रह्मप्राप्तौ कारणं न तु ब्रह्मप्राप्तौ तस्य गन्तव्यत्वाभावात् कार्य्यस्यैव गन्तव्यताया वादर्य्यधिकरणे राद्धान्तितत्वात्। तस्मान्न समुच्चितं विहितं कर्म्म परमपुरुषार्थहेतुरित्यर्थः॥ तस्यैवासमुच्चितस्य फलमाह। केवलञ्चेति॥ विहितस्य गतिमुक्त्वा प्रतिषिद्धस्य गतिमाह। स्वभावेति॥ स्वभावेन शास्त्रापेक्षामन्तरेण प्रकृतिवशादेव प्रवृत्ता यथेष्टचेष्टारसिकास्तेषां कर्म्मज्ञानाभावाद्देवयाने पितृयाणे च पथ्यनधिकृतानामधोगतिस्तिर्य्यगवस्था क्षुद्रजन्तुलक्षणा अपुनरावृत्तिर्दुर्लभा॥

भा० न चोभयोरपि मार्गयोरन्यतरस्मिन्नपि मार्गे आत्यन्तिकी पुरुषार्थसिद्धिरित्यतः कर्मनिरपेक्षमद्वैतात्मविज्ञानं संसारगतित्रयहेतूपमर्देन वक्तव्यमित्युपनिषदारभ्यते ।

न चाद्वैतात्मविज्ञानादन्यत्रात्यन्तिकी निःश्रेयसप्राप्तिः ।

---

व्या० वाक्येनान्यतरस्मिन्नेवाधिकृतानां परमपुरुषार्थः सेत्स्यति । शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते इति स्मृत्या तयोर्नित्यफलत्वप्रतिपत्तेरत आह । न चोभयोरित्यादिना ॥ ननु मार्गद्वयभ्रष्टानां पुरुषार्थाभावेऽपि द्वयोः पथोरन्यतरस्मिन् वा भविष्यतीति चेत् तत्र न तावद्देवयानपथि निमित्ते निरतिशयपुरुषार्थसिद्धिः ॥ इमं मानवमावर्त्तन्नावर्त्तते तेषामिह न पुनरावृत्तिरित्यत्रेममिहेति विशेषणात् एकया यात्यनावृत्तिमिति स्मृतावनावृत्तेरेतत्काल्पविषयत्वात् कल्पान्तरेऽप्यनावृत्तावपि विशेषणानर्थक्यात् । नापि पितृयाणपथि निरतिशयपुरुषार्थसिद्धिः । एतमेवाध्वानं पुनर्निवर्त्तते । अन्यथा वर्त्तते पुनरिति चन्द्रस्थलस्खलनावगमात् । तस्मान्न कर्म्मवशादात्यन्तिकपुरुषार्थप्राप्तिरित्यर्थः ॥ एवमनूद्य कर्म्मफलं फलितं सम्बन्धमाह । इत्यत इति ॥ उक्तरीत्या कर्म्म यतो न निरतिशयपुरुषार्थहेतुरतः ससाधनात् कर्म्मणस्तत्फलाच्च विरक्तस्य निरतिशयपुरुषार्थं काङ्क्षतस्तत्साधनं केवलमात्मज्ञानं संसारान्तर्भूतपूर्व्वोक्तगतित्रयहेतुकर्म्म तद्धेतुनिराकरणेन वक्तव्यमित्यभिप्रायेणोपनिषदारभ्यते । न हि कर्म्मानुष्ठानात् पुमर्थो निरतिशयो लभ्यते । तस्य तत् यथेहेत्यादौ क्षयिष्णुफलत्वश्रुतेः । तथा चेश्वरार्पणबुद्ध्याऽनुष्ठितशुभकर्म्मवशादुपजातशुद्धबुद्धेर्विरक्तस्य मुमुक्षोर्मोक्षसाधनज्ञानार्थोऽयमुपनिषदारम्भ इति हेतुहेतुमद्भावः सम्बन्ध इत्यर्थः ॥

ननु मोक्षार्थी न प्रवर्त्तेत तत्र काम्यनिषिद्धयोर्नित्यनैमित्तिके कुर्य्यात् प्रत्यवायजिहीर्षयेति वृद्धैरुक्तत्वात् । काम्यनिषिद्धे वर्जनीये नित्यनैमित्तिके च कृत्वा व्यवस्थितस्य मुमुक्षोर्वर्त्तमानदेहपाते पुनर्देहान्तरग्रहे हेत्वभावादनायाससिद्धाज्ञानाद्वृतेऽपि मुक्तिरिति कथं तादर्थ्येनोपनिषदारभ्यते तत्राह । न चेति ॥ न

भा॰ वक्ष्यति हि। अथ येऽन्यथातो विदुरन्यराजानस्तेक्षय्य-
लोका भवन्ति। विपर्य्यये च स स्वराट् भवतीति ॥

तथा द्वैतविषयानृताभिसन्धस्य बन्धनं तस्करस्येव
तप्तपरशुग्रहणे बन्धदाहभावः संसारदुःखप्राप्तिश्चेत्युक्त्वा

---

व्या॰ हि त्वदुत्प्रेक्षितो मोक्षोपायो विना प्रमाणं कल्प्यते। न च पौरु-
षेयं वाक्यं मूलप्रमाणमन्तरेण प्रमाणं। न चात्र श्रुतिस्मृती प्रत्य-
क्षादि वा मूलमालोच्यते। सम्भवति च यथावर्णितरचितस्यापि
कर्म्मशेषवशाद्देहान्तरं न चैकभविकः कर्म्माशयः। तद्य इह रमणी-
यचरणास्ततः शेषेणेत्यादिश्रुतिस्मृतिविरोधात्तस्मादात्मज्ञानादेव
मुक्तिरिति भावः ॥ अद्वैतात्मज्ञानविधुराणां भेदज्ञानभाजां
कर्म्मानुष्ठायिनां क्षय्यफलशालित्वे वाक्यशेषं प्रमाणयति। वक्ष्यति
हीति ॥ अद्वैतात्मोपदेशानन्तर्य्यमथशब्दार्थः। ये पुनरनुपासि-
तगुरवस्तदुपदेशशून्या यथा मति यथोक्तादद्वैतादन्यथा द्वैतमेव
तत्त्वं विन्दन्ति ते परतन्त्राः सन्तो रागादिना कर्म्मानुतिष्ठन्तो
विनाशिफलशालिनः स्युरिति श्रुत्यर्थः ॥ अद्वैतात्मज्ञानादात्य-
न्तिकपुरुषार्थसिद्धिरित्यत्रापि वाक्यशेषमनुकूलयति। विपर्य्यये
चेति ॥ चकारात् क्रियापदमनुकृष्यते। स हि विद्वान्विद्यया
निरस्ताऽविद्यादिमलः स्वपरिज्ञानात्स्वयमेव परात्मा भवति।
भेदप्रतिपत्तिहेतोरुच्छिन्नत्वादित्यर्थः ॥

कर्म्मिणां पुरुषार्थो निरतिशयो न सिद्ध्यति। अद्वैतनिष्ठा-
नान्तु कर्म्म त्यजतां पुमर्थः सेत्स्यतीत्यत्र वाक्यशेषस्थं लिङ्गं दर्शयति।
तथेत्यादिना ॥ द्वैतमेव विषयस्तस्मिन्नाचारम्भणमिति श्रुते-
रनृतेऽभिसन्धा यस्याभिसन्धा सत्यत्वाभिमानस्तस्य बन्धनं पर-
मानन्दस्याविर्भावहारित्वं। संसारात्मकस्य दुःखस्य प्राप्तिश्च।
यथा वस्तुतस्तस्करस्य नाहं तस्करोऽस्मीति मिथ्यैवाभिमन्वानस्य
परिशोधनार्थं तप्तपरशोर्ग्रहणे दाहो बन्धनं दुःखप्राप्तिश्च
प्रतीयते। तथैव द्वैताभिनिवेशवतोऽपीति प्रथममुक्त्वा वस्तुतोऽत-
स्करस्य परारोपिततस्करत्वस्य परिशुद्धया तप्तपरशुग्रहणे
दाहाद्यभाववद्द्वैताभावोपलक्षिते प्रत्यगात्मनि परमार्थसत्येऽभि-

भा० ऽद्वैतात्मसत्याभिसन्धस्यातस्करस्येव तप्तपरशुग्रहणं बन्ध-
दाहाभावः संसारदुःखनिवृत्तिश्चेति। अतएव न कर्म्मसह-
भाव्यद्वैतात्मदर्शनं ॥

क्रियाकारकफलभेदोपमर्द्देन सदेकमेवाद्वितीयमात्मै-
वेदं सर्व्वमित्येवमादिवाक्यजनितस्य बाधकप्रत्ययानुप-
पत्तेः। कर्म्मविधिप्रत्यय इति चेत्। न। कर्तृभोक्तृस्वभाव-
विज्ञानवतस्तज्जनितकर्म्मफले रागद्वेषादिदोषवतश्च कर्म्म-
विधानात्। अधिगतसकलवेदार्थस्य कर्म्मविधानादद्वैत-

---

व्या० मानवतो द्वैताच्च व्यावृत्तचित्तस्यानर्थध्वंसो निरतिशयानन्दावि-
र्भावश्चेति। यथोक्तार्थानुरोधेनाग्रे श्रुतिर्वच्यतीति योजना। केवल-
मात्मज्ञानं कैवल्यहेतुस्तत्सिद्ध्यर्थमुपनिषदारम्भ इति स्वपक्षो
दर्शितः। स्वयूथ्यास्तु कर्म्मसमुच्चितमात्मज्ञानं मोक्षसाधनं।
तादर्थ्येनोपनिषदारम्भ इत्याहुः॥ तां प्रत्याह। अत एवेति॥ यत्कृ-
तकं तदनित्यमिति व्याप्त्यनुगृहीततया तद्यथेहेत्यादिश्रुत्या कर्म्म-
फलस्यानित्यत्वावगमाद्ब्रह्मविदाप्नोति परमित्यादिश्रुत्या च ज्ञान-
फलस्य नित्यत्वसिद्धेर्ज्ञानकर्म्मणोर्विरुद्धफलत्वाध्यवसायादद्वैत-
स्यात्मनो दर्शनं नैव कर्म्मणा सह भावि भवितुमुत्सहते। न हि
विरुद्धयोस्तमःप्रकाशयोः समुच्चयः सङ्गच्छते। तन्न समुच्चितज्ञा-
नार्थत्वेनोपनिषदारम्भ इत्यर्थः॥

किञ्चाद्वैतात्मज्ञानं स्वसाध्यसिद्ध्यर्थं कर्म्मापेक्षते। स्वबाधक-
विधूननार्थं वा। नाद्यः तस्यासाध्यफलत्वादिति मन्वानो द्वितीयं
प्रत्याह। क्रियेति॥ वाक्यजनितस्याद्वैतात्मज्ञानस्येति शेषः। तस्य
बाधकाभावेन तत्परिहारार्थं सहकार्य्यपेक्षा नास्तीत्यर्थः॥
बाधकप्रत्ययाभावस्यासिद्धिमाशङ्कते। कर्म्मेति॥ तद्विषयो विधि-
प्रत्ययो यजेतेत्यादिविधिजनितः कर्त्तव्यतावबोधः। स चात्मनि
कर्तृत्वादिकमाकाङ्क्षन्कर्त्राद्यात्मज्ञानस्य बाधको भवतीत्यर्थः।
कस्यायं कर्म्मविधिरज्ञस्य विदुषो वेति विकल्प्याद्यं प्रत्याह।

भा० ज्ञानवतोऽपि कर्म्मेति चेत्। न। कर्माधिकृतविषयस्य कर्तृ-
भोक्त्रादिज्ञानस्य स्वाभाविकस्य सदेकमेवाद्वितीयमात्मैवेदं
सर्व्वमित्यनेनोपमर्द्दितत्वात्। तस्मादविद्यादिदोषवत एव
कर्म्माणि विधीयन्ते। नाद्वैतज्ञानवतः। अत एव हि
वक्ष्यति। सर्व्वे एते पुण्यलोका भवन्ति। ब्रह्मसंस्थोऽमृतत्व-

---

व्या० नेत्यादिना॥ कर्त्राद्याकारं प्रमाणनिरपेक्षप्रकृतिप्रसूतं मिथ्या-
ज्ञानं तद्वतस्तेन मिथ्याज्ञानेन जनितकर्म्मफलविषयो रागादि-
दोषस्तद्वतस्य कर्म्म विधीयते। न हि कर्त्ताहमित्यादिमिथ्याधियो
रागादेश्च भावे कर्म्म विधातुं शक्यं। यद्यद्धि कुरुते जन्तुस्तत्तत्का-
मस्य चेष्टितमिति स्मृतेः। अतोऽज्ञस्य कर्म्मविधिपक्षे न तत्प्रत्ययो
बाधकः प्राप्त्यभावादित्यर्थः॥ द्वितीयं शङ्कते। अधिगतेति॥
अधीतस्वाध्यायो हि वैदिके कर्म्मणि अधिक्रियते। अध्ययनस्या-
र्थावबोधफलमिति मीमांसकमर्य्यादा। तथा चाध्ययनवतो
ज्ञातसर्व्ववेदार्थस्य यजेतेत्यादिना कर्म्मविधानादात्मज्ञानस्यापि
कर्म्माङ्गत्वं गम्यते। न चात्मज्ञानमपबाध्यते। अविरोधादित्यर्थः।
न तावदर्थावबोधफलमध्ययनमिति प्रामाणिकमक्षरावाप्तिफलं
तदिति चाध्येष्टप्रसिद्धं। तत्राध्ययनविधिवशेन नात्मज्ञानस्य
कर्म्मविधिसम्बन्धः सम्भवतीति परिहरति। नेति॥ किञ्च ममेदं
कर्म्मेति कर्म्मणोऽस्वर्थं प्रतिपद्य व्यवस्थितं विषयीकृत्य प्रवृत्तस्य कर्त्रा-
द्याकारविज्ञानस्य प्रमाणापेक्षामन्तरेण स्वभावप्राप्तस्य वाक्यो-
त्थेन सम्यग्ज्ञानेनापहृतत्वात् कर्म्मफलविषये रागाद्ययोगात्तन्निब
न्धनस्य कर्म्मणोऽपि दुरनुष्ठानत्वाज्ज्ञात्मज्ञस्य कर्म्मोपपत्तिरित्याह।
कर्म्माधिकृतेति॥ अद्वैतात्मज्ञानस्य कर्म्मप्रवृत्तिविरोधित्वे फलि-
तमुपसंहरति। तस्मादिति॥ अज्ञस्य कर्माविधिर्न त्वात्मज्ञस्येत्यत्र
श्रौतं संवादयति। अत एवेति॥ एते त्रयोऽप्याश्रमिणः कर्म्मा-
धिकृता इति यावत्॥ यथा ब्रह्मचारी गृहस्थो वानप्रस्थश्चेत्येते
कर्म्मिणस्तथा ब्रह्मविदपि कर्म्मी चेन्न पृथक् क्रियेत। पृथक्कर-
णाच्च न तस्य कर्म्मविधिरिति मत्वाह। ब्रह्मसंस्थ इति॥ यदि

भा॰ सतीति । तत्रैतस्मिन्नद्वैतविद्याप्रकरणेऽभ्युदयसाधनान्युपासनान्युच्यन्ते । कैवल्यसन्निकृष्टफलानि चाद्वैतादीषद्विकृतब्रह्मविषयाणि मनोमयश्शरीर इत्यादीनि कर्मसमृद्धिफलानि च कर्माङ्गसम्बन्धीनि । रहस्यसामान्यान्मनोवृत्तिसामान्याच्च ॥ यथाऽद्वैतज्ञानं मनोवृत्तिमात्रं तथान्यान्युपासनानि मनोवृत्तिरूपाणीत्यस्ति हि सामान्यं । कस्तर्ह्यद्वैतज्ञानस्योपासनानाञ्च विशेषः । उच्यते । स्वाभाविकस्यात्मन्यक्रियेऽध्यारोपितस्य कर्त्रादिकारकक्रियाफलभेदविज्ञानस्य निवर्त्तकमद्वैतविज्ञानं । रज्ज्वादाविव

---

व्या॰ समुच्चयासम्भवात् केवलमेवात्मज्ञानं कैवल्यसाधनमिति तादर्थ्येनोपनिषदारभ्यते । हन्त किमित्यस्यामुपनिषदि त्रिविधान्युपासनान्युपन्यस्यन्ते तत्राह । तत्रेति ॥ उक्तरीत्योपनिषदारम्भे सतीति यावत् । स यो वायुं दिशां वत्सं वेदन् पुरेदं रोदतीत्यादीन्यभ्युदयफलानि उपासनानि । कैवल्येन सन्निकृष्टफलत्वं नाम क्रममुक्तिफलत्वं । अद्वैतान्निष्प्रपञ्चादीषद्विकृतं सगुणं ब्रह्म । कर्म्मसमृद्धिफलानि कर्म्मफलगतातिशयफलान्युद्गीथाद्युपासनानीत्यर्थः ।

आत्मविद्याप्रकरणे त्रिविधोपासनोपन्यासे हेतुमाह । रहस्येति ॥ उपनिषत्पदवेदनीयत्वस्यात्मविद्यायामुपासनेषु चाविशेषादित्यर्थः । तत्रैव हेत्वन्तरमुद्भाव्य विभजते । मनोवृत्तीत्यादिना ॥ आत्मज्ञानस्योपासनाना च यथोक्तं सामान्यमिष्यते चेत्तर्हि फलतोऽपि विशेषो न स्यादिति मन्वानः शङ्कते । कस्तर्हीति ॥ फलतो विशेषं दर्शयन्नुत्तरमाह । उच्यत इति ॥ तत्र प्रथममात्मज्ञानस्योपासनाभ्यो विशेषमादर्शयति । स्वाभाविकस्येति ॥ प्रत्यगात्मनि क्रियाकारकफलविभागविकले कूटस्थे स्वभावप्रवृत्ताविद्याकृतमध्यारोपितं कर्त्राद्याकारविज्ञानं । तस्याद्वितीयत्वादिलक्षणाधिष्ठानयाथात्म्यज्ञानं निवर्त्तकं । यथा

भा० सर्पाद्यध्यारोपलक्षणज्ञानस्य रज्ज्वादिस्वरूपनिश्चयः प्रकाशनिमित्तः । उपासनं तु यथाशास्त्रसमर्पितं किञ्चिदालम्बनमुपादाय तस्मिन् समानचित्तवृत्तिसन्तानलक्षणं । तद्विलक्षणप्रत्ययानन्तरितमिति विशेषः । तान्येतान्युपासनानि सत्त्वशुद्धिकरत्वेन वस्तुतत्त्वावभासकत्वादद्वैतज्ञानोपकारकाण्यालम्बनविषयत्वात् सुखसाध्यानि चेति पूर्व्वमुपन्यस्यन्ते ॥ तत्र कर्म्माभ्यासस्य दृढीकृतत्वात्कर्म्मपरि-

---

आ० रज्ज्वादावधिष्ठाने सर्पादिसमारोपरूपस्य मिथ्याज्ञानस्य प्रकाशादिकारणप्रसूतो रज्ज्वाद्यधिष्ठानस्वरूपनिश्चयो निवर्त्तकस्तथेत्यर्थः । सम्प्रत्युपासनानामद्वैतज्ञानाद्विशेषं दर्शयति । उपासनं त्विति ॥ शास्त्रं मनो ब्रह्मेत्युपासीतेत्यादि किञ्चिदालम्बनं मनःप्रभृति विवक्षितं । समानजातीयप्रत्ययसन्तानकरणं विच्छिद्य विच्छिद्य ध्यायिनोऽपि सिध्यतीत्याशङ्क्य विशिनष्टि । तद्विलक्षणेति ॥

आत्मज्ञानस्योपासनानां च अवान्तरविशेषमुपसंहरति । इति विशेष इति ॥ ननु विद्याप्रकरणे यथोक्तोपासनानामुपदेशसम्भवेऽपि विद्यैव प्राधान्यात्प्राथम्येनोच्यतामुपासनानि पुनरप्रधानत्वात्पश्चात्तेन वाच्यानीत्याशङ्क्याह । तानीति ॥ उपासनानामीश्वरार्पणबुद्ध्यानुष्ठितनित्यादिकर्म्मवच्चित्तशुद्धिद्वारा ज्ञानकारणत्वात् । कार्य्याच्च कारणस्य प्राथम्यप्रसिद्धेः साकारवस्तुविषयत्वेन सुसाध्यत्वाच्च । मन्दानां सहसा तेषु प्रवृत्त्युपपत्तेरादावुपदेशः सम्भवतीत्यर्थः ॥ तथापि बहुविधेषूपासनेषु किमित्यङ्गावबद्धमेवोपासनं प्रथममुच्यते तत्राह । तत्रेति ॥ प्राकृते पुरुषे कर्म्माभ्यासस्यानादिवासनया दृढीकृतत्वादभ्यस्ततत्तत्कर्म्मत्यागेनातत्सम्बन्धिनि केवलोपासने चेतसः समर्पणं दुःखं कर्त्तुमित्यङ्गावबद्धमेव तावदुपासनमुच्यते । एवमादावुक्त्वा पुनरुपासनान्तराणि क्रमेण वक्तव्यानीत्यर्थः । काण्डद्वयस्य नियत-

उ॰ ॐमित्येतदक्षरमुद्गीथमुपासीत ॥

भा॰ त्यागेनोपासन एव दुःखं चेतःसमर्पणं कर्त्तुमिति कर्म्माङ्ग-विषयमेव तावदादावुपासनमुपन्यस्यते ॥

ओमित्येतदक्षरमुपासीत। ओमित्येतदक्षरं। परमात्मनोऽभिधानं नेदिष्ठं। तस्मिन् हि प्रयुज्यमाने स प्रसीदति प्रियनामग्रहण इव लोकः। तदिहेति परं प्रयुक्तमभिधायकत्वाद्भावर्त्तितं शब्दस्वरूपमात्रे प्रतीयते। तथाचार्चादिवत्परस्यात्मनः प्रतीकं सम्पद्यते ॥

व्या॰ पौर्व्वापर्य्यप्रयुक्तसम्बन्धमुपनिषत्तात्पर्य्यञ्चोक्का प्रत्यक्षरं व्याख्यातुकामः प्रतीकमादत्ते। ओमित्येतदक्षरमिति ॥

तत्र प्रथममोङ्कारस्याभिधायकत्वपक्षमेवावलम्बते। परमात्मन इति ॥ अभिधानान्तरेभ्यो विशेषं दर्शयति। नेदिष्ठमिति ॥ निकटतममतिशयेन प्रियमिति यावत्। ॐकारस्य नेदिष्ठत्वं समर्थयति। तस्मिन्निति ॥ ॐकारस्यान्यत्र परमात्मनामत्वेऽपि प्रकृते किं विवक्षितमित्याशङ्क्याह। तदिहेति ॥ प्रकृते हि वाक्ये तदोमिति पदमितिशब्दशिरस्कं प्रयुक्तमिति शब्दसामर्थ्यादेव वाचकत्वाद्व्यावर्त्तितं। शब्दस्वरूपमात्रमुपास्यं गम्यते। यत्र हीति परः प्रयोगो न तत्राभिधेयविवक्षास्ति यथा गौरित्ययमाहेति। तथा चात्रेति परत्वादोंकारस्य स्वरूपमात्रमुपास्यं विवक्षितमित्यर्थः॥ तस्योपास्यत्वार्थं श्रैष्ठ्यं साधयति। तथा चेति ॥ इति परप्रयोगवशादभिधायकत्वाभावे सत्यर्चाशब्दितप्रतिमायां भगवत्प्रतीकत्ववदोंकारस्यापि परमात्मप्रतीकत्वेन श्रेष्ठत्वादुपास्यत्वसिद्धिरित्यर्थः ॥ तदीयं श्रैष्ठ्यं सप्रमाणकं निगमयति।

भा॰ एवं नामत्वेन प्रतीकत्वेन च परमात्मोपासनसाधनं श्रेष्ठमिति सर्व्ववेदान्तेष्ववगतं। जपकर्मस्वाध्यायाद्यन्तेषु बहुशः प्रयोगात्प्रसिद्धमस्य श्रैष्ठ्यं। अतस्तदेतदक्षरं वर्णात्मकमुद्गीथभक्त्यवयवत्वादुद्गीथशब्दवाच्यमुपासीत। कर्म्माङ्गावयवभूते ॐकारे परमात्मप्रतीके दृढामैकाग्र्यलक्षणां मतिं सन्तनुयात्॥

---

आ॰ एवमिति॥ सर्व्ववेदान्तेष्वेतदालम्बनं श्रेष्ठमेतदालम्बनं परमित्यादिषु। किञ्च नान्यस्य श्रैष्ठ्यं समर्थनीयं प्रसिद्धत्वादित्याह। जपेति॥ गायत्र्यादिजपे यज्ञादौ कर्म्मणि स्वाध्यायस्यादावन्ते चोंकारस्य प्रयोगो दृश्यते॥ तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः। प्रवर्त्तन्ते विधानोक्ताः सततं ब्रह्मवादिनां। ब्राह्मणः प्रणवं कुर्य्यादादावन्ते च सर्व्वदा। स्रवत्यनोंकृतं पूर्व्वं परस्ताच्च विशीर्य्यत इति स्मृतेः॥ ओमिति ब्राह्मणः प्रवक्ष्यन्नाहेत्यादिश्रुतेश्चेत्यर्थः। ओमितीत्ययं भागो व्याख्यातः। सम्प्रत्येतदक्षरमित्यस्यार्थमाह। अत इति॥ श्रेष्ठत्वमुपास्यत्वार्थमनूद्यते। व्याप्तेश्च समञ्जसमिति न्यायेन विशेषणस्यार्थवत्त्वमभिप्रेत्य रूढिर्योगमपहरतीति न्यायेनाक्षरशब्दस्य प्रकरणमनुसृत्य प्रसिद्धमर्थमाह। वर्णात्मकमिति॥ ग्रामो दग्धः पटो दग्ध इतिवदेकदेशे समुदायविषयं पदं प्रयुक्तमित्याह। उद्गीथेति॥ उपास्तिं विभजते। कर्म्मेति॥ उद्गीथावयवत्त्वादोंकारे तच्छब्दप्रवृत्तिरित्युक्तत्वादनन्तरवाक्यमकिञ्चित्करमित्याशङ्क्य श्रुत्युक्तो योऽस्मदुक्तो हेतुस्तेन स्फुटीक्रियते ततश्चोत्सूत्र्याख्याभिर्दर्शितस्याख्याभिर्दर्शित इत्यभिप्रेत्याह।

उ० ओमित्युद्गायति तस्योपव्याख्यानं ॥ १ ॥
एषां भूतानां पृथिवी रसो पृथिव्या आपो रसः ॥

भा० स्वयमेव श्रुतिरोंकारस्योद्गीथशब्दवाच्यत्वे हेतुमाह। ओमिति ह्युद्गायति। ओमित्यारभ्य हि यस्मादुद्गायति अत उद्गीथ ओंकार इत्यर्थः। तस्याक्षरस्योपव्याख्यानमेव-मुपासनमेवं विभूत्येवं फलमित्यादिकथनमुपव्याख्यानं। प्रवर्त्तत इति वाक्यशेषः।

एषां चराचराणां भूतानां पृथिवी रसो गतिः परा-यणमवष्टम्भः। पृथिव्या आपो रसोऽप्सु ह्योता च प्रोता च

व्या० स्वयमेवेति॥ ओमित्येतदक्षरमित्यत्रोपासनोत्पत्तिविधिरुक्तः। सम्प्रति गुणं विवक्षुर्वाक्यान्तरमादाय व्याचष्टे। तस्येति॥ एवमु-पासनमिति॥ रसतमत्वमाप्तिः समृद्धिरित्येवंगुणकमुपासनं यस्या-क्षरस्य तत्तथेत्यर्थः। एवं विभूतीति परमपरार्द्धः। तेनेयं त्रयीविद्या वर्त्तत इत्याद्या विभूतिः स्तुतिर्यस्य तत्तथेति यावत्॥ एवं फल-मित्यापयिता ह वै कामानामित्यादिफलं यस्योपास्यस्याक्षरा-त्कारस्य तत्तथोक्तमित्यर्थः॥ गोदोहनवदाश्रित्य विधानादधि-कृताधिकारमिदमुपासनं तथापि पृथगेव। पृथग्ध्यप्रतिबन्धः फलमिति न्यायेन फलवत्फलं याजमानमुद्गातुर्यजमानेन कर्म्मार्थं क्रीतत्वात्तत्कर्त्तृकस्योपासनस्यापि यजमानस्य स्वामिनः फलमिति वचनमादिशब्दार्थः। वाक्यस्य साकाङ्क्षत्वेनानर्थक्यं वारयति। प्रवर्त्तत इति॥

तदेवोपव्याख्यानमनुवर्णयन्नोंकारस्य रसतमत्वं गुणं विधातुं पातनिकां करोति। एषामिति॥ गतिरित्युत्पत्तिकारणत्वं परा-यणमिति स्थितिहेतुत्वमवष्टम्भ इति प्रलयनिदानत्वमुच्यत इति भेदः। वैपरीत्येन वामूनि पदानि नेयानि। अपां पृथि-

उ॰ अपामोषधयो रस ओषधीनां पुरुषो रसः पुरुषस्य वाग्रसो वाच ऋग्रस ऋचः साम रसः साम्न उद्गीथो रसः ॥ २ ॥ स एष रसानाꣳ रसतमः परमः

---

भा॰ पृथिव्यतस्ता रसः पृथिव्याः । अपामोषधयो रसोऽप्परिणामत्वादोषधीनां। तासां पुरुषो रसोऽन्नपरिणामत्वात्पुरुषस्य । तस्यापि पुरुषस्य वाग्रसः। पुरुषावयवानां हि वाक् सारिष्ठा। अतो वाक् पुरुषस्य रस उच्यते। तस्या अपि वाचः ऋग्रसः सारतरा। ऋचः साम रसः सारतरं । तस्यापि साम्न उद्गीथः प्रकृतत्वादोंकारः सारतरः। एवं स एष उद्गीथाख्य ॐकारो भूतादीनामुत्तरोत्तररसानामति-

---

आ॰ वीरसत्वं साधयति ॥ अप्सु हीति । अस्यार्थस्य श्रुत्यन्तरप्रसिद्धिं द्योतयितुं हिशब्दः। ओषधीनामपः प्रति कारणत्वाभावात् कथं तत्र रसशब्दस्तत्राह । अप्परिणामत्वादिति ॥ कारणपरतया पूर्वत्र व्याख्यातोऽपि रसशब्दो गोरस इतिवदुत्तरत्र कार्य्यपरतया व्याख्येय इत्यर्थः। कथमोषधीनां पुरुषो रसः। न हि ताभिरसौ क्रियते तत्राह। अन्नेति ॥ पुरुषरसत्वं वाचः समर्थयते । पुरुषेति ॥ वाग्विहीनं प्रति पुरुषान्तरं निन्दन्ति अतो वाचः सारतमत्वं प्रसिद्धमिति हिशब्दार्थः । तस्याः सारिष्ठत्वप्रसिद्धिरतःशब्दार्थः ॥ वाङ्गिर्वर्त्यत्वादृचस्तद्रसत्वमित्यभिप्रेत्याह । सारतरेति ॥ ऋचः सकाशादपि तदूढं साम गीयमानं वक्तृश्रोत्रोःसुखकरमिति मत्वाह । सारतरमिति ॥ उद्गीथशब्दस्यावयवे प्रकरणान्नियमयति । प्रकृतत्वादिति ॥ न हि सामानोङ्कृतं फलाय भवतीति मन्वानो ब्रूते । सारतर इति ॥

यदर्थं पृथिव्यादीनां रसत्वमुक्तं तदिदानीं दर्शयति । एवमिति ॥ रसतमत्वगुणकमोङ्कारमुपास्यत्वार्थं विशेषणाभ्यामधि-

भा॰ परार्द्धोऽष्टमो यदुद्गीथः ॥ ३ ॥ कतमा कतमर्क्कतमत्कतमत्साम कतमः कतम उद्गीथ इति

---

भा॰ अयेन रसो रसतमः परमात्मप्रतीकत्वात् परार्द्धः अर्द्धं स्थानं परञ्च तदर्द्धञ्च तदर्हतीति परार्द्धः परमात्मस्थानार्हः। परमात्मवदुपास्यत्वादित्यभिप्रायः। अष्टमः पृथिव्यादिरससङ्ख्यायां यदुद्गीथो य उद्गीथः। वाच ऋग्रस इत्युक्तं। कतमा सा ऋक् कतमत्तत्साम कतमो वा स उद्गीथः कतमा कतमेति वीप्सादरार्था। ननु वा बहूनां जाति-

---

आ॰ करोति। रस इति॥ तस्य परमात्मस्थानयोग्यत्वं समर्थयते। परमात्मवदिति॥ यथा परमात्मा स्वरूपत्वेनानुसन्धीयते तथास्यापि तदात्मनानुसन्धेयत्वाद्विष्णुबुद्ध्यालम्बनार्हप्रतिमावदयमपि परमात्मबुद्ध्यालम्बनयोग्यो भवतीत्यर्थः। ॐकारात्परतरो रसो नास्तीति तदीयरसतमत्वस्फुटीकरणार्थं परिगणना। स्वतः सिद्धमष्टमत्वमनुवदति। अष्टम इति॥ ननु भूतान्यारभ्य नवमत्वे प्रतीयमाने कथमोंकारस्याष्टमत्वं प्रतिज्ञायते तत्राह। पृथिव्यादीति॥ स एष इत्युक्तं व्यक्तीकर्त्तुं यदुद्गीथ इत्येतद्व्याचष्टे। य उद्गीथ इति॥ पूर्व्ववदुद्गीथशब्दोऽवयवपरो नेतव्यः। अथ गुणान्तरविधानार्थं प्रश्नमवतारयन्वृत्तमनुवदति। वाच इति॥ ऋचः साम रसः साम्न उद्गीथो रस इति चोक्तमिति द्रष्टव्यं। इदानीमृगादिजातिं जिज्ञासमानः पृच्छति। कतमेति॥ वीप्साचयं प्रश्ने तत्तज्जातिज्ञाने अद्धातिरेकं दर्शयितुमित्याह। कतमा कतमेति॥ प्रश्नचयमाक्षिपति। ननु वेति॥ अनेकजात्यवच्छिन्नानां मध्ये यदैकस्या जातेर्निर्द्धारणार्थः परिप्रश्नो भवति तदा तस्मिन्विषये विकल्पेन डतमच्प्रत्ययः स्याद्यथा बहूनां कठादीनां मध्ये कठजातिनिर्णयार्थं कतमे काठा इति प्रश्नो दृश्यते तथान्यत्रापीति सूत्रार्थः। बहूनामेकस्यानिर्द्धारणो डतमज्विधानेऽपि

उ॰ विमृष्टं भवति ॥ ४ ॥ वागेवर्क्प्राणः साम

---

भा॰ परिप्रश्ने डतमच् । न ह्यत्र ऋग्जातिबहुत्वं कथं डतमच् प्रत्ययः । नैष दोषो जातौ परिप्रश्नो जातिपरिप्रश्न इत्येतस्मिन् विग्रहे जातावृग्व्यक्तीनां बहुत्वोपपत्तेः । न तु जातेः परिप्रश्न इति विगृह्यते ।

ननु जातेः परिप्रश्न इत्यस्मिन्विग्रहे कतमः कठ इत्याद्युदाहरणमुपपन्नं जातौ परिप्रश्न इत्यत्र तु न युज्यते। तत्रापि कठादिजातावेव व्यक्तिबहुत्वाभिप्रायेण परिप्रश्न इत्यदोषः । यदि जातेः परिप्रश्नः स्यात् कतमा कतमा

---

आ॰ प्रकृते प्रश्नत्रये कानुपपत्तिरित्याशङ्क्याह। न हीति ॥ अत्रेत्यध्यापकाध्येतृव्यवहारभूमिरुक्ता । ऋग्जातिग्रहणं सामजातेरुद्गीथजातेश्चोपलक्षणं। तद्बहुत्वाभावेऽपि किन्नः छिद्यते तत्राह। कथमिति ॥ ऋगादिजातयो यदि भूयस्यः स्युस्तदा तासां मध्ये कतमा ऋग्जातिः कतमा सामजातिर्वा कतमा वोद्गीथजातिरत्र विवक्षितेति प्रश्नो युज्यते। न चास्ति तत्र जातिबहुत्वं प्रमाणाभावादतोऽनुपपन्नं प्रश्नत्रयमित्यर्थः। प्रश्नानुपपत्तिं दूषयति। नैष दोष इति ॥ बह्वीनां तत्तज्जात्यवच्छिन्नानां सन्निधाने जातौ सत्यां व्यक्तिबहुत्वसम्भवात्तदन्यतमनिर्द्धारणार्थं परिप्रश्ने विकल्पेन डतमजिति सूत्रार्थाङ्गीकारादृगादिजातौ तद्व्यक्तिबाहुल्यात्कतमा तद्व्यक्तिर्वाच ऋयस इत्यादौ विवक्षितेति प्रश्नपर्य्यवसानादुपपन्नं प्रश्नत्रयमित्यर्थः॥ यत्तु विग्रहान्तरं गृहीत्वा प्रश्नानुपपत्तिरित्युक्तं तत्राह। न त्विति ॥

तत्र चानुपपत्तिं यदि जातेरित्यत्र व्यक्तीकरिष्यति। अस्मदिष्टविग्रहापरिग्रहे वृत्तिकारीयमुदाहरणं विरुध्यते ॥ कठशब्दस्य व्यक्तिविशेषत्वाभावादिति शङ्कते। नन्विति ॥ उदाहरणेऽपि सत्यां कठजातौ तद्व्यक्तिबाहुल्यात्तदन्यतमनिर्धारणाभि-

उ॰ ॐमित्येतदक्षरमुद्गीथः

भा॰ ऋगित्यादौ उपसङ्ख्यानं कर्त्तव्यं स्यादिमृष्टं भवति विमर्शः कृतो भवति। विमर्शे हि कृते सति प्रतिवचनोक्तिरुपपन्ना वागेवर्क्प्राणः सामेति।

वागृचोरेकत्वेऽपि नाष्टमत्वव्याघातः। पूर्व्वस्माद्वाक्यान्तरत्वादाप्तिगुणसिद्धये ओमित्येतदक्षरमुद्गीथ इति वाक्

व्या॰ प्रायेण परिप्रश्ने डतमजित्यङ्गीकारान्न परोक्तोदाहरणविरोधोऽस्मिन् पक्षेऽस्तीति परिहरति। तत्रापीति ॥ ननु द्विधापि विग्रहोपपत्तौ किमिति त्वदिष्टो विग्रहो नियम्यते तत्राह। यदीति ॥ त्वदिष्टविग्रहपरिग्रहस्वेदृगादिजातेरेकत्वात् प्रत्येकं बहुत्वायोगाद्वा बहूनामित्यादिसूत्रेण कतमर्क्कतमत्सामेत्युदाहरणं न सिद्ध्येत। तथा च तत्सिद्ध्यर्थं पृथक् सूत्रविधानं प्रसज्येत। न हि वैदिकमुदाहरणं प्रमत्तगीतमिव हातुं शक्यं तस्मादृगादिव्यक्तिरेवात्र प्रयुक्तेत्यर्थः ॥ किमिति यथोक्तरीत्या विमृश्यते। विवक्षितमृगादिस्वरूपमेवादावुपन्यस्यतां लाघवादित्याशङ्क्याह। विमर्शं हीति ॥ शिष्यभूतया श्रुत्या चोदिते सैवाचार्य्यभूता परिहरति। वागेवेति ॥ नन्वाद्ये प्रतिवचने वागृचोरेकत्वावगमात् ॐकारस्य रसतमवाक्योपदिष्टमष्टमत्वं व्याहन्येतेत्याशङ्क्याह। वागृचोरिति ॥

कथमनेनारसतमत्ववाक्यादिदं प्रश्नप्रतिवचनरूपं वाक्यं भिद्यतेऽर्थं पुधिक्याभावात् तत्राह। व्याप्तीति ॥ पूर्व्वं हि वाक्यमोङ्कारस्य रसतमत्वं विदधाति। इदन्तु तस्यैवाप्तिगुणं विधत्ते। तथा च तादृग्गुणविध्यर्थत्वेनास्य वाक्यान्तरत्वादेतद्वाक्यवशादष्टमत्वाभावेऽपि पूर्व्ववाक्यादोङ्कारस्याष्टमत्वमविरुद्धमित्यर्थः ॥ तथापि कथमृगादिजातीये पृष्टे वागेवर्गित्यादिप्रतिवचनमुचितं। तद्व्यक्तिविशेषवचनमेव प्रश्नानुसारीत्याशङ्क्याह। वाक्प्राणाविति ॥ वागृचो योनिस्तन्निर्वर्त्तकत्वात्। प्राणाच्च साम्नो हेतुर्बलेन हि गीतिरुत्पाद्यते। तथा च वागेवेत्यादिना कार्य्यका-

उ॰ तद्वा एतन्मिथुनं यद्वाक् च प्राणश्चर्क् च साम च ॥ ५ ॥

---

भा॰ प्राणावृक्सामयोनी इति वागेवर्क् प्राणः सामेत्युच्यते । यथाक्रममृक्सामयोन्योर्वाक्प्राणयोर्ग्रहणे हि सर्व्वासामृचां सर्व्वेषाञ्च साम्नामवरोधः कृतः स्यात् । सर्व्वर्क्सामावरोधे चर्क्साममाध्यानां च सर्व्वकर्म्मणामवरोधः कृतः स्यात् । तदवरोधे च सर्व्वे कामा अवरुद्धाः स्युः । ओमित्येतदक्षरमुद्गीथ इति भक्त्याशङ्का निवर्त्त्यते । तद्वैतदिति मिथुनं निर्दिश्यते । किन्तन्मिथुनमित्याह यद्वाक् च प्राणश्च सर्व्वर्क्सामकारणभूतौ मिथुनं

---

आ॰ रणयोरभेदोपदेशादृङ्मात्रं साममात्रं वा तत्तत्कारणात्मकं प्रतीयते न पूर्व्वत्रापि व्यक्तिरविवक्षिता । प्रश्नप्रतिवचनयोरेकार्थत्वात् । न चैवमृगादिजातेरेकत्वात् डतमच्प्रत्ययानुपपत्तिस्तत्तज्जात्यवच्छिन्नानामृक्सामोद्गीथानां सन्निधावृगादिजातेरेकस्या निर्धारणार्थं परिप्रश्ने तत्प्रयोगसम्भवादृगादिषु प्रत्येकं भेदविवक्षया षष्ठीसमासे दूषणमुक्तं । तत्र प्रत्येकमेकत्वमुपेत्योक्तरीत्या षष्ठीसमासे तु न किञ्चिद्दुष्यतीति भावः । ऋगात्मिकाया वाचः सामात्मकस्य प्राणस्य ग्रहणे फलितं दर्शयन्नुक्तमेव व्यक्तीकरोति । यथा क्रममिति ॥

ऋक्साममात्रावरोधेऽपि किं सिद्ध्यतीत्याशङ्क्याह । सर्व्वेति ॥ तथापि किं स्यादिति चेत्तदाह । सर्व्वे कामा इति ॥ उक्तप्रक्रियया सर्व्वकामावाप्तिहेतुरोङ्कारो विवक्षितासिगुणकः सिद्ध्यतीत्यर्थः । तृतीये प्रतिवचने तात्पर्य्यमाह । ओमित्येतदिति ॥ अत्रापि पूर्व्ववज्जातिगृहीतौ तद्व्याप्तित्वेन भक्तिरेवोक्तेति शङ्कां निरसितुमोमित्येतदक्षरमिति विशेषणं । तथा चोद्गीथस्तदवयवो विशेषणात् प्रकरणाच्चेत्यर्थः । पारम्पर्य्येण वाक्प्राणयोः सर्व्वका-

उ॰ तदेतन्मिथुनमोमित्येतस्मिन्नक्षरे सꣳसृज्यते

भा॰ ऋक् च साम चेति ऋक्सामकारणौ ऋक्सामशब्दोक्ता-वित्यर्थः। ननु स्वतन्त्रं ऋक् च साम च मिथुनं। अन्यथा हि वाक् च प्राणश्चेत्येकमिथुनमृक्साम चापरं मिथुनमिति द्वे मिथुने स्यातां। तथा च तदेतन्मिथुनमित्येकवचननिर्द्देशोऽनुपपन्नः स्यात्। तस्मादृक्सामयोन्योर्वाक्प्राणयोरेव मिथुनत्वं॥

तदेतदेवंलक्षणं मिथुनमोमित्येतस्मिन्नक्षरे संसृज्यते। एवं सर्व्वकामावाप्तिगुणविशिष्टं मिथुनमोंकारे संसृष्टं विद्यत इत्योंकारस्य सर्व्वकामावाप्तिगुणवत्त्वं प्रसिद्धं। वाङ्मयत्वमों-

---

ष्या॰ मसम्बन्धादुद्गीथस्यापि तथाभूतवागादिसम्बन्धादस्ति सर्व्वकामसम्बन्ध इत्युक्तः। इदानीमोङ्कारस्य वाक्प्राणद्वारा सर्व्वकामसम्बन्धे हेत्वन्तरमाह। तद्वा इति॥ तदेतत्पदयोरक्षरविषयत्वं व्यावर्त्त्य वक्ष्यमाणविषयं दर्शयति। मिथुनमिति॥ वैशब्दो मिथुनप्रसिद्ध्यर्थः॥ वाक् च प्राणश्चेति यदुभयमुपलभ्यते तदेतन्मिथुनमिति योजनामङ्गीकृत्य वाक्यार्थमाह। सर्व्वर्क्सामेति॥ वाक्प्राणयोर्ऋक्सामकारणत्वमुत्तरवाक्येन स्पष्टयति। ऋक् चेति॥ यथा वाक्प्राणौ मिथुनमेवमृक्सामे च स्वातन्त्र्येण मिथुनं निर्द्दिश्यसामान्यादित्याशङ्क्याह। नन्विति॥ विपक्षे दोषमाह। अन्यथेति॥ इष्टमेव मिथुनद्वयमिति चेन्नेत्याह। तथा चेति॥ ननु मिथुनयोरनुगतं मिथुनत्वमादायैकवचनमुपपत्स्यते चेन्नेत्याह। तस्मादिति॥

उपक्रमभङ्गान्न स्वतन्त्रं मिथुनद्वयमस्तीत्यर्थः॥ भवतु वाक्प्राणाख्यमृक्सामात्मकं वाक्प्राणरूपं। ओंकारमिथुनयोः संसर्गे किं फलतीत्याह। एवमिति॥ कया पुनर्विधया मिथुनेन सन्दृब्धत्वमक्षरस्य सेत्स्यति तत्राह। वाङ्मयत्वमिति॥ यस्तु सर्व्वकामा-

उ॰ यदा वै मिथुनौ समागच्छत आपयतो वै ता-
वन्योन्यस्य कामं ॥ ६ ॥

आपयिता ह वै कामानां भवति य एतदेवं

---

भा॰ कारस्य प्राणनिष्पाद्यत्वञ्च मिथुनेन संसृष्टत्वं मिथुनस्य कामापयितृत्वं प्रसिद्धमिति दृष्टान्त उच्यते। यथा लोके मिथुनौ मिथुनावयवौ स्त्रीपुमांसौ यदा समागच्छतो ग्राम्यधर्म्मतया संयुज्येयातां तदाऽऽपयतः प्रापयतोऽन्योन्यस्येतरेतरस्य तौ कामं। तथा च स्वात्मानुप्रविष्टेन मिथुनेन सर्व्वकामाप्तिगुणवत्त्वमोंकारस्य सिद्धमित्यभिप्रायः ॥

तदुपासकोऽप्युद्गाता तद्धर्म्मा भवतीत्याह। आपयिता ह वै कामानां यजमानस्य भवति य एतदक्षरमेवाप्तिगुणवदुद्गीथमुपास्ते तस्यैतद्यथोक्तं फलमित्यर्थः। तं यथा

---

व्या॰ प्तिगुणविशिष्टं मिथुनमित्युक्तं तदुपपादयति। मिथुनस्येति ॥ प्रसिद्धमिति ॥ स तादृगर्थो यथोक्ताक्षरस्य सर्व्वकामापयितृत्वे दृष्टान्तः समुच्यतेऽनन्तरवाक्येनेत्यर्थः ॥ दृष्टान्तमेव विवृणोति। यथेत्यादिना ॥ मिथुनद्वयं नास्तीत्युक्तत्वात्कथं मिथुनाविति द्विवचनं तत्राह। मिथुनावयवाविति ॥ ग्राम्यधर्म्मतया तथाविधव्यापारतयेति यावत्। वै शब्दोऽवधारणे ॥ विवक्षितं दार्ष्टान्तिकमाचष्टे। तथेति ॥ एवमोंकारमाप्तिगुणविशिष्टं शिष्ट्वा तदुपासनाफलं कथयति। तदुपासकोऽपीति ॥

तद्धर्म्मेत्युपासकस्याप्तिगुणवैशिष्ट्योक्तिः। व्याप्तेति वक्तव्ये कथमापयितेत्युक्तं तत्राह। यजमानस्येति॥ निपातौ त्ववधारणार्थौ। उद्गीथं तदवयवभूतमिति यावत्॥ व्याप्तिगुणवदोंकारोपासनात् कथमुपासिता तद्गुणो भवतीत्याशङ्क्याह। तमिति ॥ उत्तरग्रन्थस्य गुणान्तरविधाने तात्पर्य्यं दर्शयति। समृद्धीति ॥ तस्य

उ० विद्वानक्षरमुद्गीथमुपास्ते ॥ ७ ॥ तद्वा एतदनुज्ञा-
क्षरं यद्धि किञ्चानुजानात्योमित्येव तदाह एषो
एव समृद्धिर्यदनुज्ञा समर्द्धयिता ह वै कामानां

भा० यथोपासते तदेव भवतीति श्रुतेः। समृद्धिवांश्चोंकारः कथं तद्वा एतत्प्रकृतमनुज्ञाक्षरमनुज्ञा च साक्षरञ्च तत्। अनुज्ञानुमतिरोंकार इत्यर्थः। कथमनुज्ञेत्याह। श्रुतिरेव यद्धि किञ्च यत्किञ्च लोके ज्ञानं धनं वानुजानाति विद्वान्धनी वा तत्रानुमतिं कुर्व्वन्नोमित्येव तदाह। तथा च वेदे त्रयस्त्रिंशदित्योमिति होवाचेत्यादि ॥

तथा च लोकेऽपि तवेदं धनं गृह्णामि इत्युक्त ओमित्याह। अत एषा उ एव एषैव समृद्धिर्यदनुज्ञा या अनुज्ञा सा समृद्धिस्तन्मूलत्वादनुज्ञायाः समृद्धो ह्योमित्यनुज्ञां

व्या० समृद्धिगुणवत्त्वमप्रामाणिकमित्याशङ्क्य परिहरति। कथमित्यादिना ॥ तदेतत्पदयोरोंकाराख्यमक्षरविषयत्वेन निर्दिशति। प्रकृतमिति ॥ तस्य स्मृत्यर्था वैशब्दः। अनुज्ञाक्षरमित्येतद्विगृह्य विवक्षितेनार्थेन घटयति। अनुज्ञा चेति ॥ तस्यानुज्ञात्वे प्रश्नपूर्व्वकप्रसिद्धिमुपन्यस्यति। कथमिति ॥ तत्रेति ज्ञानधनयोरुक्तिस्तदित्यनुमन्तव्यं साधारण्येनोच्यते॥ ओंकारस्यानुज्ञाक्षरत्वे लोकप्रसिद्धिवद्वेदप्रसिद्धिं समुच्चिनोति। तथा चेति ॥ कत्येव देवा याज्ञवल्क्येति शाकल्येन पृष्टे त्रयस्त्रिंशदिति याज्ञवल्क्येन प्रत्युक्ते सत्योमिति शाकल्योऽनुज्ञां कृतवान् पुनश्च कत्येवेति प्रश्ने षडिति प्रतिवचने सत्योमिति होवाचेत्यादि वृहदारण्यके यथोक्तार्थानुसारि प्रसिद्धमित्यर्थः॥ यद्धि किञ्चेत्यादावुक्तां लोकप्रसिद्धिमेव प्रकटयति। तथा च लोकेऽपीति ॥ ओंकारस्य लोकवेदप्रसिद्धिभ्यामनुज्ञात्वेऽपि कथं समृद्धिगुणकत्वमित्याशङ्क्याह। अत

उ० भवति य एतदेवं विद्वानक्षरमुद्गीथमुपास्ते ॥ ८
तेनेयं त्रयी विद्या वर्त्तते ओमित्याश्रावयत्योमिति शꣳसत्योमित्युद्गायत्येतस्यैवाक्षरस्यापचित्यै महिम्ना रसेन ॥ ९ ॥

---

भा॰ ददाति तस्मात्समृद्धिगुणवानोंकार इत्यर्थः। समृद्धिगुणोपासकत्वात्तद्धर्म्मा समर्द्धयिता ह वै कामानां यजमानस्य भवति य एतदेवं विद्वानक्षरमुद्गीथमुपास्त इत्यादि पूर्व्ववत्। अथेदानीमक्षरं स्तौति उपास्यत्वात्प्ररोचनार्थं। कथं तेनाक्षरेण प्रकृतेनेयमृग्वेदादिलक्षणा त्रयी विद्या विहितं कर्म्मेत्यर्थः।

न हि त्रयी विद्यैवाश्रावणादिभिर्वर्त्तते कर्म्म तु तथा प्रवर्त्तत इति प्रसिद्धं। कथमोमित्याश्रावयत्योमिति शंस-

---

आ॰ इति॥ उशब्दोऽप्यर्थः समृद्धिशब्दादुपरि सम्बध्यते। तस्याः समृद्धिमूलत्वं साधयति। समृद्धो हीति॥ अनुज्ञायाः समृद्धिं प्रति कारणत्वेन समृद्धित्वे सत्योंकारस्यापि तदात्मकस्य समृद्धिगुणवत्त्वं सिद्धमित्युपसंहरति। तस्मादिति॥ समर्द्धयितेत्यादिफलवाक्यं प्रत्याह। समृद्धीति॥ अस्मिन्वाक्ये समर्द्धयितेत्यादिपदजातमापयितेत्यादिपूर्व्ववद्व्याख्येयमित्याह। इत्यादिपूर्व्ववदिति॥ ओंकारस्य गुणत्रयवतः सफलमुपासनमुक्तं। तथा च वक्तव्याभावात् तेनेयमित्यादिवाक्यमनर्थकमित्याशङ्क्याह। अथेति॥ स्तुतेरानर्थक्यमाशङ्क्याह। उपास्यत्वादिति॥ प्ररोचनं प्रश्नपूर्व्वकं प्रकटयति। कथमित्यादिना॥ त्रयी विद्या वर्त्तत इति सम्बन्धः। त्रयी विद्येत्यस्योपचरितार्थत्वं कथयति। त्रयी विद्येति॥

किमिति श्रुतं त्यक्त्वा व्याख्यायते तत्राह। न हीति॥ तस्याः स्वरूपलाभस्थानादित्वेन हेत्वनपेक्षत्वादित्यर्थः। कर्म्मापि कथ

उ॰ तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद ।

भा॰ त्योमित्युद्गायतीति लिङ्गाच्च सोमयाग इति गम्यते तच्च कर्म्म एतस्यैवाक्षरस्यापचित्यै पूजार्थं । परमात्मप्रतीकं हि तत् । तदपचितिः परमात्मन एव सा । स्वकर्म्मणा तमभ्यर्च्य सिद्धिं विन्दति मानव इति स्मृतेः । महिम्ना रसेन किञ्चैतस्यैवाक्षरस्य महिम्ना महत्त्वेन ऋत्विग्यजमानादिप्राणैरित्यर्थः ।

तथैतस्यैवाक्षरस्य रसेन व्रीहियवादिरसनिर्वृत्तेन हविषेत्यर्थः । यागहोमाद्यक्षरेण क्रियते । तच्चादित्यमुप-

व्या॰ माश्रावणादिभिरात्मानं लभते तत्राह । कर्म्म त्विति ॥ प्रसिद्धिमेव प्रपञ्चयति । कथमित्यादिना ॥ आध्वर्य्यवहौत्रौद्गात्रसमाहारस्य दर्शपूर्णमासादिष्वसम्भवादग्निष्टोमादिषु च सम्भवात्त्रितयसमाहारात्लिङ्गादोङ्कारेण प्रवर्त्तमानं त्रयीविहितं कर्म्म सोमयाग इति प्रतिभातीत्याह । लिङ्गाच्चेति ॥ स्ववत्यनोङ्कृतं कर्म्मेति न्यायादोङ्कारेण वैदिकस्य कर्म्मणः स्थितिरिति स्तुतिं विधाय स्तुत्यन्तरमाह । तच्चेति ॥ कथं पुनरक्षरं कर्म्मणा पूज्यते तत्राह । परमात्मेति ॥ तस्य तत्प्रतीकत्वे किं स्यादिति चेत्तदाह । तदपचितिरिति ॥ ननु कर्म्मणा परमात्मा चेदाराध्यते तर्हि तत्प्रतीकत्वादक्षरस्यापि तेनाराधनं स्यात् । न चेश्वरस्तेनाराध्यत इति प्रमाणमस्ति तत्राह । स्वकर्म्मणेति ॥ वर्णाश्रमविहितेन कर्म्मणा ईश्वरं प्रसाद्य तत्प्रसादवशात्तत्फलं कर्त्ता प्राप्नोतीति भगवतोक्तत्वात् ईश्वरपूजार्थं कर्म्मेति गम्यते । तथा च तत्प्रतीकत्वादोङ्कारस्य तत्पूजार्थं कर्म्मेति युक्तमित्यर्थः । वैदिकं कर्म्माक्षरपूजार्थमित्यक्षरं स्तुत्वा विधान्तरेण स्तौति । किञ्चेति ॥ यजमानादीत्यादिपदेन पत्नी गृह्यते । प्राणैस्त्रयीविहितं कर्म्म वर्त्तत इति सम्बन्धः ॥

स्तुत्यन्तरमाह । तथेति ॥ यथाक्षरविकारैर्यजमानादिप्राणैर्वैदिकं कर्म्म प्रवर्त्तते तथेति यावत् ॥ हविषेत्यत्रापि पूर्ववदन्वयः । कथं ऋत्विगादिप्राणानां हविषश्चाक्षरविकारत्वमत

तिष्ठते। ततो वृष्ट्यादिक्रमेण प्राणोऽन्नञ्च जायते। प्राणैरन्नेन च यज्ञस्तायते। अत उच्यतेऽक्षरस्य महिम्ना रसेनेति। तत्राक्षरविज्ञानवतः कर्म्म कर्त्तव्यमिति स्थितमाक्षिपति। तेनाक्षरेणोभौ यश्चैतदक्षरमेवं व्याख्यातं वेद यश्च कर्म्ममात्रवित् अक्षरयाथात्म्यं न वेद तावुभौ कुरुतः कर्म्म। तयोश्च कर्म्मसामर्थ्यादेव फलं स्यात् किं तत्राक्षरयाथात्म्यविज्ञानेनेति॥

दृष्टं हि लोके हरीतकीं भक्षयतोस्तद्रसाभिज्ञेतरयोर्विरेचनं। नैवं। यस्मान्नाना तु विद्या च अविद्या च। भिन्ने हि विद्याविद्ये। तुशब्दः पक्षव्यावृत्त्यर्थः। ओंकारस्य

---

आ० आह। यागेति॥ आदिशब्दोऽनुक्तवैदिककर्म्मसङ्ग्रहार्थः। तस्मादोमित्युदाहृत्येत्यादिस्मृतेरित्यर्थः। अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजा इति स्मृतिमाश्रित्याह। ततेति॥ वृष्ट्यादीत्यादिशब्देनान्नस्य प्रजानाञ्चोत्पत्त्युपकरणं सर्व्वमुच्यते। तथापि कथमेतस्यैवाक्षरस्य महिम्नेत्यादि तत्राह। प्राणैरिति॥ अक्षरस्य स्तुत्या महीकृतत्वादुपासने सिद्धे किमुत्तरेण ग्रन्थेनेत्याशङ्क्याह। तत्रेति॥ पूर्व्वस्मिन्सन्दर्भे स्तुतिवशादक्षरविज्ञाने कर्त्तव्ये तन्निष्पाद्यं कर्म्म तद्विज्ञानवतोऽनुष्ठेयमिति स्थितं। तदाक्षेप्तुमुत्तरं वाक्यमित्यर्थः॥ आक्षेपाक्षराणि व्याचष्टे। तेनेत्यादिना॥ ननु कर्म्मकर्तृत्वे विद्वदविदुषोर्विद्वानेव तत्फलमश्नुते नाविद्वानिति कथमित्याशङ्क्याह। तयोश्चेति॥ इति शब्दस्त्वाक्षिपतीत्यनेन सम्बध्यते॥ कथं विद्वदविदुषोरविशिष्टं फलमित्याशङ्क्य दृष्टान्तमाह॥

दृष्टं हीति॥ विमतं न स्वतन्त्रफलमङ्गज्ञानत्वादाज्यावेक्षणवदिति प्राप्ते प्रत्याह। नैवमिति॥ हेतुत्वेनावतारितं वाक्यं

उ॰ यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्य्यवत्तरं भवतीति खल्वेतस्यैवाक्षरस्योप-

---

भा॰ कर्म्माङ्गत्वमात्रविज्ञानमेव रसतमाप्तिसमृद्धिगुणवद्विज्ञानं किन्तर्हि ततोऽभ्यधिकं। तस्मात्तदङ्गाधिक्यात्फलाधिक्यं युक्तमित्यभिप्रायः। दृष्टं हि लोके वणिक्शवरयोः पद्म-रागादिमणिविक्रये वणिजो विज्ञानाधिक्यात्फलाधिक्यं॥

तस्माद्यदेव विद्यया विज्ञानेन युक्तः सन् करोति कर्म्म श्रद्धया श्रद्दधानस्य सन्नुपनिषदा योगेन युक्तस्येत्यर्थः

---

व्या॰ व्याचष्टे। भिन्ने हीति॥ विद्योपासना कर्म्माविद्या तयोर्भिन्नत्वं पृथक्फलवत्त्वं तन्न विद्यावैयर्थ्यमित्यर्थः॥ विद्यायाः स्वतन्त्रफल-वत्त्वं नास्तीति पक्षस्य व्यावृत्तिप्रकारमेव प्रपञ्चयति। नेत्यादिना॥ अङ्गज्ञानादुद्गावदक्षरज्ञानस्याधिक्ये फलितमाह। तस्मादिति॥ तदङ्गकर्म्माङ्गमुद्गीथमात्रज्ञानं तस्मादाधिक्याद्विशिष्टाक्षरस्य ज्ञानस्येति यावत्। यत्तु पुनरुक्तं तयोश्च कर्म्मसामर्थ्यादेव फलं स्यादिति तत्राह। दृष्टं हीति॥ यत्त्वङ्गज्ञानत्वादिति तत्किम-ङ्गत्वे सति ज्ञानत्वं किंवाश्रित्य विहितत्वमथवा एतदेव ज्ञान-त्वविशेषितं। नाद्यः। तन्निर्द्धारणानियमन्यायेनासिद्धेः। न द्वितीयो गोदोहने व्यभिचारात्। न तृतीयो दृष्टान्तस्य साधनविक-लत्वादाज्यावेक्षणस्याश्रित्य विध्युदाहरणवर्हिर्भूतत्वादङ्गसम्बन्ध-ज्ञानत्वमात्रेण दृष्टान्तत्वे सत्यङ्गत्वोपाधेः सम्भवादित्यभिप्रेत्य ज्ञानाधिक्ये फलाधिक्यमित्यत्रानन्तरवाक्यं योजयति। तस्मादिति॥

विज्ञानमुद्गीथाद्यङ्गमात्रविषयमुपासनातिरिक्तं तेनेति यावत्। योगो देवतादिविषयमुपासनं। इतिशब्दस्तदर्थसमाप्त्यर्थः॥ तत्रैवार्थसिद्धमर्थं कथयति। विद्वदिति॥ नन्वर्थी समर्थो विद्वानपर्य्युदस्तस्य कर्म्मण्यधिकारीत्यङ्गीकारादविदुषस्तल्लक्षणा-नाक्रान्तस्यानधिकारात्कथं तत्कर्म्म वीर्य्यवदिति प्रतिज्ञायते तत्राह। न चेति॥ शौषस्ते उपस्तिसम्बन्धे मटचीहतेष्वित्यादिके

उ॰ व्याख्यानं भवति ॥ १० ॥ १ ॥ तृतीयस्य प्रथमः खण्डः ॥

---

भा॰ तदेव कर्म्म वीर्य्यवत्तरं । अविद्वत्कर्म्मणोऽधिकफलं न भवतीति । विद्वत्कर्म्मणो वीर्य्यवत्तरवचनादविदुषोऽपि कर्म्म वीर्य्यवदेव भवतीत्यभिप्रायः । न चाविदुषः कर्म्मण्यनधिकारः । औषस्त्ये काण्डेऽविदुषामपि आर्त्विज्यदर्शनात् । रसतमाप्तिसमृद्धिगुणवदक्षरमित्येकमुपासनं । मध्ये प्रयत्नान्तरादर्शनात् । अनेकैर्हि विशेषणैरनेकधोपास्यत्वात्खल्वेतस्यैव प्रकृतस्योद्गीथाख्यस्याक्षरस्योपव्याख्यानं भवति ॥ * ॥ छान्दोग्यतृतीयाध्यायप्रथमखण्डभाष्यं ॥ १ ॥

---

व्या॰ तस्मिन्ग्रन्थजाते विद्याहीनानामपि कर्म्मानुष्ठानं दृश्यते प्रस्तोतर्या देवतेत्यादौ । तांश्चेदविद्वानित्यादिलिङ्गात् । तस्मादविदुषोऽपि कर्म्मण्यधिकारः । अधिकारलक्षणे तु ज्ञानाभावेऽपि द्रव्यादिज्ञानमात्रेण विशेषणसिद्धिरित्यर्थः । गुणवदक्षरज्ञानं स्वतन्त्रफलमित्युक्तं । तत्तु रसतमगुणवदक्षरविषयमेकमुपासनं तत्र च विध्युद्देशे फलस्याश्रुतत्वेऽपि विश्वजिन्न्यायेन वा तत्कल्प्यते । आप्तिगुणवतः समृद्धिगुणवतश्चाक्षरस्य द्वे विज्ञाने प्रत्येकं फलश्रुतेः । तथा चात्र त्रीण्युपासनानि पृथक्फलानि विवक्षितानीत्यत आह । रसतमेति ॥ न तावदित्येवोपासीतेति विधिव्यतिरेकेण मध्ये विध्यन्तरमुपलभ्यते । न चापयिता ह वै कामानामित्यादिवाक्ये फलश्रुत्या विधिरुन्नेयः । रसतमगुणवदक्षरविज्ञानविधौ फलाकाङ्क्षिण्यर्थवादस्थफलांशान्वयेनानेकगुणवदेकविज्ञानविधिसम्भवे विधिभेदकल्पनायोगान्न खल्वर्थवादिफलवदनेकविशेषणैकोपासनाविषयविध्युपगमेन वाक्यसम्भवे वाक्यं भेत्तुमुचितं । एतेन विश्वजिन्न्यायो निरस्तः । रात्रिसत्रन्यायस्तु प्रकृताविरोधीति भावः ॥ तस्योपव्याख्यानमित्युक्तस्योपसंहार-

उ॰ देवासुरा ह वै यत्र संयेतिरे

भा॰ देवासुराः। देवाश्चासुराश्च। देवा दीव्यतेर्द्योतनार्थस्य शास्त्रोद्भासिता इन्द्रियवृत्तयः। असुरास्तद्विपरीताः। स्वेष्वेवासुषु विष्वग्विषयासु प्राणनक्रियासु रमणात् स्वाभाविक्यस्तम आत्मिका इन्द्रियवृत्तय एव। ह वै इति पूर्व्ववृत्तोद्भासकौ निपातौ। यत्र यस्मिन्निमित्ते इतरे-

व्या॰ वाक्यं खल्वेतस्येत्यादि तत्रैतच्छब्देन प्रकृताक्षरस्य कारणमाह। अनेकैरिति ॥ रसतमाप्तिसमृद्धिरूपाण्यनेकानि विशेषणानि तैर्विशिष्टत्वेनाक्षरस्यानेकप्रकारेणोपास्यत्वात्। प्रकारभेदेऽप्युपासनैक्यस्य प्रागेवोक्तत्वात्प्रकृतस्यैवाक्षरस्यैतदुपव्याख्यानं यत्खलु विहितमित्यर्थः॥ ॥ प्रथमः खण्डः ॥ १ ॥

गुणत्रयविशिष्टमुद्गीथावयभूतमोंकाराख्यमक्षरं परमात्मप्रतीकं तद्ब्रह्मोपास्यमित्युपदिष्टमिदानीं तस्यैवाक्षरस्याध्यात्माधिदैवभेदेनादित्यप्राणदृष्ट्योपासनं विवक्षन् कण्डिकान्तरमवतारयति। देवासुरा इति॥ तत्राक्षराणि व्याचिख्यासुरप्रतिभाव्युदासार्थं विवक्षितं समासन्दर्शयति। देवाश्चेति॥ देवशब्दनिष्पत्तिप्रकारं सूचयति। देवा इति॥ दीव्यतिर्द्योतनार्थो दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिष्विति दर्शनात्तस्य चाजन्तस्य सति गुणे कर्त्तरि यथोक्तरूपसिद्धिरित्यर्थः॥ ते च द्योतका देवा रूढेरिन्द्रादयो भविष्यन्तीत्याशङ्क्याह। शास्त्रेति॥ इत्यध्यात्ममित्युपसंहारविरोधात्प्रसिद्धेरेव हेयत्वादुपासकशरीरस्थकरणावस्था देवाः सत्त्वात्मकाः शास्त्रानुसारिणो देवशब्दवाच्या इत्यर्थः॥ तथाध्यात्मं असुरा विरोचनादयः स्युरित्याशङ्क्य पूर्व्ववदुपसंहारविरोधमभिप्रेत्याह। असुरा इति॥ असुरा इन्द्रियवृत्तय एवेति सम्बन्धः। सात्त्विकेन्द्रियवृत्तिभ्यो वैपरीत्यं तासामसुरत्वसिद्ध्यर्थं दर्शयति। तद्विपरीता

भा॰ तरविषयापहारलक्षणे संयेतिरे । सम्पूर्व्वस्य यततेः सङ्ग्रामार्थत्वमिति । सङ्ग्रामं कृतवन्त इत्यर्थः । शास्त्रीयप्रकाशवृत्त्यभिभवनाय प्रवृत्ताः स्वाभाविकास्तमोरूपा इन्द्रियवृत्तयोऽसुराः । तथा तद्विपरीताः शास्त्रार्थविषयविवेकज्योतिरात्मानो देवाः स्वाभाविकतमोरूपासुराभिभवनाय प्रवृत्ता इत्यन्योन्याभिभवोद्भवरूपः सङ्ग्राम इव सर्व्वप्राणिषु प्रतिदेहं देवासुरसङ्ग्रामोऽनादिकालप्रवृत्त इत्यभिप्रायः ॥

---

आ॰ इति ॥ तासामसुरशब्दवाच्यत्वे निमित्तान्तरमाह । स्वेष्वेवेति ॥ विश्वग्विषयासु विश्वञ्चो नानागतया विषया यासां तास्विति यावत् । प्राणनक्रियासु जीवनानुकूलप्राणचेष्टास्वित्यर्थः ॥ तदेव स्फोरयति । स्वाभाविक्य इति ॥ शास्त्रापेक्षामन्तरेणैव स्वभाववशात्प्रवर्त्तमानत्वं स्वाभाविकत्वं । तथा च शास्त्रीयेन्द्रियवृत्तिभ्यो वैपरीत्यममूषामतिविशदमित्यर्थः । वैपरीत्यान्तरमाह । तमआत्मिका इति ॥ कथं मिथो विषयापहारं निमित्तीकृत्य देवानामसुराणां सङ्ग्रामोऽभूदित्यपेक्षायामासुरीं वृत्तिं प्रकटयति । शास्त्रीयेति ॥ दैवीं वृत्तिं प्रथयति । तथेति ॥ देवानामुक्तासुरवैपरीत्यं स्फुटयति । शास्त्रेति ॥ स्वाभाविकः शास्त्रानपेक्षस्तमोरूपः पाप्माऽसुरपरिच्छेदाभिमानस्तस्य तिरस्करणार्थमिति यावत् ॥ उक्तमाध्यात्मिकसङ्ग्रामं निगमयति । इत्यन्योन्येति ॥ उक्तरीत्या यथोक्तानां देवानामसुराणाञ्च पराभिभवः सोद्भवश्चेत्येवं रूपः सङ्ग्रामः प्रतिदेहमनादिकालप्रवृत्तो यथा देवासुरसङ्ग्रामस्तथेति योजना । किमर्थं पुनरपुरुषार्थरूपो देवासुरसङ्ग्रामः श्रुत्या श्राव्यते तत्राह ॥ स इहेति ॥

उ० उभये प्राजापत्यास्तत्र देवा उद्गीथमाजह्रु-

भा० स इह श्रुत्याख्यायिकारूपेण धर्म्माधर्म्मोत्पत्तिविवेकविज्ञानाय कथ्यते प्राणविशुद्धिविज्ञानविधिपरतया। अत उभयेऽपि देवासुराः प्रजापतेरपत्यानीति प्राजापत्याः। प्रजापतिः कर्म्मज्ञानाधिकृतः पुरुषः। पुरुष एवोक्थमयमेव महान्प्रजापतिरिति श्रुत्यन्तरात्। तस्य हि शास्त्रीयाः स्वाभाविक्यश्च रणप्रवृत्तयो विरुद्धापत्यानीव तदुद्भवत्वात्। तत्तत्रोत्कर्षापकर्षलक्षणनिमित्ते ह देवा उद्गीथं उद्गीथभक्त्युपलक्षितमौद्गात्रं कर्म्माजह्रुराहृतवन्तः। तस्यापि केवलस्याहरणासम्भवाज्ज्योतिष्टोमाद्याहृतवन्त इत्यभिप्रायः॥

व्या० स हि सङ्ग्रामोऽस्मिन्प्रकरणे प्राणस्य विशुद्धिविषयं विज्ञानं विधातुं प्रवृत्तः। तथा श्रुत्या कथारूपेणाख्यायते। इन्द्रियाणां विषयवैमुख्ये धर्म्मः स्यात्तेषां तदाभिमुख्ये पापस्योत्पत्तिरिति विवेकविज्ञानसिद्ध्यर्थं चाख्यायिका प्रणीयते। तस्मादिन्द्रियाणां प्रयत्नतो विषयप्रावण्यं परिहर्त्तव्यं। तद्वैमुख्यञ्च तेषां श्रेयोऽर्थिभिर्यत्नादाधेयमिति भावः। यजमानप्राणानामेव देवासुरभावस्योक्तत्वमतःशब्दार्थः। प्रजापतिशब्दस्य रूढमर्थमपाकृत्य विवक्षितमर्थमाह। प्रजापतिरिति॥ उक्तरूपः पुरुषः प्रजापतिरित्यत्र गमकमाह। पुरुष एवेति॥ कथं पुनर्यथोक्तानां देवासुराणां तदपत्यत्वं तत्राह। तस्य हीति॥ यच्चेत्युक्तं संग्रामनिमित्तं परामृशति। तत्त्रेति॥ देवानामुत्कर्षोऽपकर्षस्यासुराणामित्यस्मिन्निमित्ते कथमुद्गीथभक्त्याहरणमित्याशङ्क्याह। उद्गीथेति॥ लक्षितलक्षणान्यायं सूचयति। तस्यापीति॥ उद्गीथभक्तेरित्यपेरर्थः॥

उ॰ एनेनैनानभिभविष्याम इति ॥ १ ॥
ते ह नासिक्यं प्राणमुद्गीथमुपासाञ्चक्रिरे

---

भा॰ तत्किमर्थमाजह्रुरित्युच्यते। अनेन कर्म्मणैनानसुरानभिभविष्याम इत्येवमभिप्रायाः सन्तो यदा च तदुद्गीथकर्म्माजिहीर्षवस्तदा ते ह देवा नासिक्यं नासिकायां भवं चेतनावन्तं घ्राणं प्राणं उद्गीथकर्त्तारमुद्गातारं उद्गीथभक्त्योपासाञ्चक्रिरे कृतवन्त इत्यर्थः। नासिक्यप्राणदृष्ट्योद्गीथाख्यमक्षरमोंकारमुपासाञ्चक्रिर इत्यर्थः। एवं हि प्रकृतार्थपरित्यागोऽप्रकृतार्थोपादानञ्च न कृतं स्यात्। खल्वेतस्यैवाक्षरस्येत्योंकारो ह्युपास्यतया प्रकृतः॥

---

आ॰ तदाहरणप्रयोजनं प्रश्नपूर्व्वकं कथयति। तत्किमर्थमित्यादिना॥ सम्प्रत्युद्गीथाहरणप्रकारं प्रकटयति। यदा चेति॥ अचेतनस्य करणस्योद्गातृत्वासम्भवाद्विशिनष्टि। चेतनावन्तमिति॥ मुख्यं प्राणं व्यावर्त्तयति। घ्राणमिति॥ तत्र उद्गायेति वाजसनेयकश्रुतिमाश्रित्याह। उद्गीथकर्त्तारमिति॥ अथोद्गीथभक्तिरेव श्रूयते न तूद्गाता॥ तत्कथं तदुपासनमित्याशङ्क्याह। उद्गीथभक्त्येति॥ तयोपलक्षितमुद्गातारमुपासत इति यावत्॥ कथमुपासनमित्यपेक्षायामुद्गीथेन कर्तृत्वप्रार्थनयेत्याह। कृतवन्त इति॥ ते ह नासिक्यमित्यक्षरोक्तमर्थमुक्त्वा वाक्यार्थमाह। नासिक्येति॥ किमित्यक्षरमोंकाराख्यमिहोपास्यत्वेन व्याख्यायते तत्राह। एवं हीति॥ उक्तमेव स्फुटयति। खल्विति॥ तथा च प्राणस्योद्गातृदृष्ट्योपासने प्रकृतस्य परित्यागो भक्तेश्च प्राणदृष्ट्योपास्यत्वाङ्गीकारे प्रकृतोपादानमिति शेषः॥ पूर्व्वापरविरोधमाशङ्कते। नन्विति॥

उ० तꣳ हासुराः पाप्मना विविधुः

---

भा० ननु उद्गीथोपलक्षितं कर्म्माहृतवन्त इत्यवोच इदानीमेव कथं नासिक्यप्राणदृष्ट्योङ्कारमुपासाञ्चक्रिर इत्यात्थ। नैष दोषः। उद्गीथकर्म्मण्येव हि तत्कर्तृप्राणदेवतादृष्ट्योद्गीथभक्त्यवयवस्योंकार उपास्यत्वेन विवक्षितो न स्वतन्त्रो ऽतस्तादर्थ्येन कर्म्माहृतवन्त इति युक्तमेवोक्तं। तमेवं देवैर्वृतमुद्गातारं ह्यसुराः स्वाभाविकास्तमश्चात्मानो ज्योतीरूपं नासिक्यं प्राणं देवं स्वोत्थेन पाप्मना ऽधर्म्मासङ्गरूपेण विविधुर्विद्धवन्तः संसर्गं कृतवन्त इत्यर्थः। स हि नासिक्यः प्राणः कल्याणगन्धग्रहणाभिमानासङ्गाभिभूतविवेकविज्ञानो बभूव॥

---

घा० उद्गीथोपलक्षितेनौद्गात्रेणोपलक्षितं ज्योतिष्टोमादि कर्म्माहृतमित्युक्तं तदाहरणञ्च तस्योपासनं तद्विरुद्धं नासिक्यप्राणदृष्ट्याक्षरोपासनवचनमित्यर्थः॥ स्वोक्तिमिथो विरोधं परिहरति। नैष दोष इति॥ उद्गीथोपलक्षितकर्म्मोपलक्षिते ज्योतिष्टोमादौ कर्म्मणि सत्येवोद्गातृप्राणदृष्ट्योपास्यत्वेनाक्षरं विवक्षितं। ओंकारस्योद्गीथावयवो ध्येयत्वेनेष्टो न स्वतन्त्रो व्यापकः। तथा चाक्षरोपासनार्थत्वेन कर्म्माहरणं न ध्येयत्वेनेत्यविरोध इत्यर्थः॥ आश्रित्य विधानार्थं कर्म्माहरणमित्युक्त्वा तं हेत्यादि व्याचष्टे। तमेवमिति॥ स्वोत्थेन चासुरेण नासिकासम्बन्धेनेति यावत्। अधर्म्मादासङ्गस्तद्रूपेणेत्येतस्यासङ्गवेधं साधयति। स हीति॥ कल्याणो गन्धः सुरभिस्तत्तस्य ग्रहणं ममैवेत्यभिमानात्प्रायोऽयमासङ्गस्तेनाभिभूतमुपकारो गन्धाघ्राणकृतस्तुल्यः सर्व्वस्य कार्य्यकरणसङ्घातस्येति विवेकविज्ञानं यस्य स तथेति विग्रहः॥

उ॰ तस्मात्तेनोभयं जिघ्रति सुरभि च दुर्गन्धि च पाप्मना ह्येष विद्धः ॥ २ ॥

---

भा॰ स तेन दोषेण पाप्मसंसर्गी बभूव । तदिदमुक्तमसुराः पाप्मना विविधुरिति । यस्मादासुरेण पाप्मना विद्धस्तस्मात्तेन पाप्मना प्रेरितो घ्राणः प्राणो दुर्गन्धिग्राहकः प्राणिनां । अतस्तेनोभयं जिघ्रति लोकः सुरभि च दुर्गन्धि च । पाप्मना ह्येष यस्माद्विद्धः । उभयग्रहणमविवक्षितं । यस्योभयं हविरार्त्तिमार्च्छतीति यद्वत् । यदेवेदमप्रतिरूपं जिघ्रतीति समानप्रकरणश्रुतेः ॥

---

व्या॰ ननु कथं यथोक्तासङ्गस्पर्शितेत्याशङ्क्याह । स तेनेति ॥ उक्तेऽर्थे वाक्यं योजयति । तदिदमिति ॥ घ्राणप्राणस्यासुरपाप्मविद्धत्वे कार्य्यलिङ्गकमनुमानं सूचयति । तस्मादिति ॥ उक्तानुमानावद्योति वाक्यं व्याकरोति । अत इति ॥ अतः शब्दार्थमेव स्पष्टयति । पाप्मनेति ॥ ननु पाप्मना विद्धत्वात्तेन लोको दुर्गन्धं जानातीत्येव वक्तव्यं सुरभिज्ञानस्य पाप्मकर्म्मत्वाभावात् । तथा च कथं तेनोभयं जिघ्रतीत्युक्तं तत्राह । उभयग्रहणमिति ॥ एकस्यापि हविषो द्रवात्मकस्य पुरोडाशादेर्वा काकादिसम्बन्धाद्भ्रंशे प्रायश्चित्तसत्त्वेऽपि यस्योभयं हविरार्त्तिमार्च्छति स ऐन्द्रं पञ्चशरावमोदनं निर्वपेदित्यत्रोभयग्रहणमविवक्षितमिति स्थितं प्रथमतन्त्रे तथाऽत्रापीत्याह । यस्येति ॥ न केवलं पाप्मना ह्येति वाक्यशेषादत्रोभयग्रहणमविवक्षितं किन्तु वाजसनेयके यथोक्तोद्गीथविद्याविषयत्वेन समानप्रकरणे यदेवेदमप्रतिरूपं जिघ्रति स एव स पाप्मेति श्रुतेरत्रापि पाप्मवेधवशाद्दुर्गन्धं जानातीत्येव वक्तव्यत्वादविवक्षितमुभयग्रहणमित्याह' यदेवेति ॥

उ॰ अथ ह वाचमुद्गीथमुपासाञ्चक्रिरे ताꣳ हासुराः पाप्मना विविधुस्तस्मात्तयोभयं वदति सत्यञ्चानृतं च पाप्मना ह्येषा विद्धा ॥ ३ ॥ अथ ह चक्षुर-

भा॰ मुख्यप्राणस्योपास्यत्वाय तद्विशुद्धत्वानुभवार्थोऽयं विचारः श्रुत्या प्रवर्त्तितः । अतश्चक्षुरादिदेवताः क्रमेण विचार्य्यासुरेण पाप्मना विद्धा इत्यपोह्यन्ते। समानमन्यत्। अथ ह वाचं चक्षुः श्रोत्रं मन इत्यादि । अनुक्ता अप्यन्यास्त्वग्रसनादिदेवता द्रष्टव्याः । एवमु खल्वेता देवताः पाप्मभिरिति श्रुत्यन्तरात् ॥

असुरेण विद्धत्वात्प्राणादिदेवता अपोह्यन्ते। अथानन्तरं य एवायं प्रसिद्धो मुखे भवो मुख्यः प्राणस्तमुद्गीथमुपा-

व्या॰ ननु नासिक्यस्य प्राणस्य पाप्मविद्धत्वादनुपास्यत्वे सिद्धे न्यायसामान्याद्वागादीनामपि नोपास्यत्वमिति सिद्ध्यति तत्किमुत्तरग्रन्थेनेत्यत आह । मुख्यप्राणस्येति ॥ न्यायसाम्येऽपि मुखतो निराकरणाभावे मुख्यप्राणस्यैवोपास्यत्वमित्यनिश्चयात्तदुपास्यतादार्ढ्यार्थं मुखतो वागादीनामुपास्यत्वमपाकर्त्तुमुत्तरग्रन्थ इत्यर्थः । विद्धा इति विचार्य्य क्रमेणापोह्यन्त इति सम्बन्धः । उत्तरवाक्येष्वक्षरव्याख्यानमनपेक्षितं पूर्व्वेण समानत्वादित्याह । समान इति ॥ अवशिष्टवाक्यैकदेशग्रहणार्थमादिपदं ॥ ननु प्राणादीनां पाप्मविद्धत्वादनुपास्यत्वेऽपि त्वगादीनां तद्विद्धत्वेनानुपास्यत्वावचनान्मुख्यस्यैव प्राणस्योपास्यत्वं नावसीयते तत्राह । अनुक्ता इति ॥ उक्तानामनुक्तोपलक्षणत्वे बृहदारण्यकश्रुतिं संवादयति । एवमु खल्विति ॥ अथ हेत्यादि मुख्यप्राणविषयवाक्यमुत्थाप्य व्याकरोति । असुरेणेत्यादिना ॥

पूर्व्ववद्वागादिष्विवेति यावत् । टङ्कैश्च विदारकैर्लोहविशेषैरित्यर्थः । अश्रुतस्य लोष्टस्याचोपादाने हेतुमाह । सामर्थ्या-

उ० द्गीथमुपासाञ्चक्रिरे तद्धासुराः पाप्मना विविधुस्तस्मात्तेनोभयं पश्यति दर्शनीयं चादर्शनीयं च पाप्मना ह्येतद्विद्धं ॥ ४ ॥ अथ ह श्रोत्रमुद्गीथमुपासाञ्चक्रिरे तद्धासुराः पाप्मना विविधुस्तस्मात्तेनोभयꣳ शृणोति श्रवणीयञ्चाश्रवणीयञ्च पाप्मना ह्येतद्विद्धं ॥ ५ ॥ अथ ह मन उद्गीथमुपासाञ्चक्रिरे तद्धासुराः पाप्मना विविधुस्तस्मात्तेनोभयं सङ्कल्पते सङ्कल्पनीयञ्चासङ्कल्पनीयञ्च पाप्मना ह्येतद्विद्धं ॥ ६ ॥ अथ ह य एवायं मुख्यः प्राणस्तमुद्गीथमुपासाञ्चक्रिरे तꣳ हासुरा ऋत्वा विदध्वंसुर्यथाश्मानमाखणमृत्वा विध्वꣳसेत ॥ ७ ॥

---

भा० साञ्चक्रिरे तं हासुराः पूर्ववदृत्वा प्राप्य विदध्वंसुर्विनष्टा अभिप्रायमात्रेण। अकृत्वा किञ्चिदपि प्राणस्य कथं विनष्टा इत्यत्र दृष्टान्तमाह। यथा लोके अश्मानमाखणं न शक्यते खनितुं कुद्दालादिभिरपि टङ्कैश्छेत्तुं न शक्योऽखण एवाखणस्तमृत्वा। सामर्थ्याल्लोष्टः पांशुपिण्डः श्रुत्यन्तराच्चाश्मनि क्षिप्तोऽश्मभेदनाभिप्रायेण तस्याश्मनः किञ्चिदप्यकृत्वा स्वयं विध्वंसेत विदीर्य्येतैव विदध्वंसुरित्यर्थः।

---

व्या० दिति॥ तस्य ध्वंसनयोग्यत्वात् ध्वंसतेश्च कर्तृपदत्वादित्यर्थः। तर्हि यस्य कस्यचिदेवंविधस्य सम्भवादलं लोष्टग्रहणेनेत्याशङ्क्य यथाश्मानमृत्वा लोष्टो विध्वंसेतेति बृहदारण्यकश्रुतेस्तस्यैवात्र ग्रहणमित्याह। श्रुत्यन्तराच्चेति॥

उ॰ एवं यथाश्मानमाखणमृत्वा विध्वंꣳसत एवꣳ हैव स विध्वꣳसते य एवंविदि पापं कामयते यश्चैनमभिदासति स एषोऽश्माखणः ॥ ८ ॥

---

भा॰ एवं विशुद्धोऽसुरैरधर्षितत्वात्प्राण इति। एवंविदः प्राणात्मभूतस्येदं फलमाह। यथाश्मानमित्येष एव दृष्टान्तः। एवं हैव स विध्वंसते विनश्यति। कोऽसावित्याह। य एवंविदि यथोक्तप्राणविदि पापं तदनर्हं कर्त्तुं कामयते इच्छति यश्चाप्येनमभिदासति हिनस्ति प्राणविदं प्रत्याक्रोशताडनादि प्रयुंक्ते सोऽप्येवमेव विध्वंसत इत्यर्थः। यस्मात् स एष प्राणवित् प्राणभूतत्वादश्माखण इवाश्माखणोऽधर्षणीय इत्यर्थः। ननु नासिक्योऽपि प्राणो वाय्वात्मा यथा मुख्यस्तत्र नासिक्यः प्राणः पाप्मना विद्धः प्राण एव सन्न मुख्यः कथं। नैष दोषो नासिक्यस्तु स्थानकरणवैगुण्याद्विद्धो वाय्वात्मापि सन् मुख्यः स्थानदेवताबलीयस्त्वान्न विद्ध इति युक्तं॥

---

व्या॰ दृष्टान्तदार्ष्टान्तिकाभ्यां सिद्धमर्थं निगमयति। एवमिति॥ इति प्राणस्य विशुद्धत्वात्तदुपासनं कर्त्तव्यमिति शेषः॥ फलवचनमवतार्य्य व्याकरोति। एवं विद इत्यादिना॥ प्राणवित्प्रतिस्पर्द्धिनो विनाशे हेतुमाह। यस्मादिति॥ नासिक्यप्राणस्य मुख्यप्राणस्य च वायुविकारत्वेन प्राणत्वाविशेषात्पाप्मना वेधावेधौ तुल्याविव स्यातामिति शङ्कते। नन्विति॥ स्थानविशेषसम्बन्धासम्बन्धाभ्यां द्वयोरपि पाप्मवेधावेधव्यवस्था युक्तेति परिहरति। नैष दोष इति॥ स्थानावस्थावच्छिन्ने करणे वैगुण्यं विषयविशेषासक्तत्वं तस्मात्तद्रूपस्य नासिक्यप्राणस्यापि विद्धता स्यादिति यावत्। तदसम्भवाद्विशेषसम्बन्धप्रयुक्तवैगुण्यायोगादित्येतच्छिष्टमुक्तमुपपन्नं॥

उ॰ नैवैतेन सुरभि न दुर्गन्धि विजानात्यपहतपाप्मा ह्येष तेन यदश्नाति यत्पिबति तेनेतरान्प्राणानवति ।

---

भा॰ यथा वास्यादयः शिक्षावत्पुरुषाश्रयाः कार्य्यविशेषं कुर्व्वन्ति नान्यहस्तगतास्तद्दोषवद्घ्राणसचिवत्वाद्विद्धा घ्राणदेवता न मुख्यः । यस्मान्न विद्धोऽसुरैर्मुख्यस्तस्मान्नैवैतेन सुरभि दुर्गन्धि वा विजानाति घ्राणेनैव तदुभयं विजानाति लोकः । अतश्च पाप्मकार्य्यादर्शनादपहतपाप्माऽपहतो विनाशितोऽपनीतः पाप्मा यस्मात्सोऽयमपहतपाप्मा ह्येष विशुद्ध इत्यर्थः । यस्माच्चात्मम्भरयः कल्याणाद्यासङ्गवत्त्वाद्घ्राणादयो न तथात्मम्भरिर्मुख्यः किं तर्हि सर्व्वार्थः । कथमित्युच्यते तेन मुख्येन यदश्नाति यत्पिबति लोकस्तेनाशितेन पीतेन चेतरान् घ्राणादीनवति पालयति ।

---

आ॰ स्थानसम्बन्धविशेषात् । घ्राणप्राणस्य पाप्मविद्धत्वं तदभावाच्च मुख्यप्राणस्य तदविद्धत्वमित्येतद्दृष्टान्तेन स्पष्टयति । यथेत्यादिना । न मुख्यो दोषवद्घ्राणसचिवत्वाभावादिति शेषः ॥ घ्राणदेवता विद्धा प्राणदेवता तु न विद्धेत्यत्र गमकत्वेनानन्तरवाक्यं व्याचष्टे । यस्मादिति ॥ मुख्यप्राणस्य पाप्मवेधाभावमुपसंहरति । अतश्चेति ॥ पाप्मकार्य्यमासङ्गस्तस्य प्राणेऽनुपलम्भादित्यतः शब्दस्यैवार्थं हिशब्देनोक्तं ॥ पाप्मावेधं विशुद्धत्वे हेतूकृत्य मुख्यप्राणविशुद्धिमुपसंहरति । ह्येष इति ॥ तस्य विशुद्धत्वे हेत्वन्तरमाह । यस्माच्चेति । अतो विशुद्ध इत्युत्तरत्र सम्बन्धः ॥ सर्व्वार्थत्वं प्राणस्य प्रश्नपूर्व्वकं प्रतिपादयति । कथमित्यादिना ॥ घ्राणादीत्यादिशब्देन कार्य्यमप्युच्यते ।

उ॰ एतमु एवान्ततोऽवित्त्वोत्क्रामति व्याददात्येवान्तत इति ॥ ६ ॥

---

भा॰ तेन हि तेषां स्थितिर्भवतीत्यर्थः । अतः सर्व्वम्भरिः प्राणोऽतो विशुद्धः । कथं पुनर्मुख्याशितपीताभ्यां स्थितिरेषां गम्यत इति । उच्यते । एतं मुख्यं प्राणं मुख्यप्राणवृत्तिं । अन्नपाने इत्यर्थः । अन्ततोऽन्ते मरणकालेऽवित्त्वाऽलब्ध्वोत्क्रामति । घ्राणादिप्राणसमुदाय इत्यर्थः । अप्राणो हि न शक्नोत्यशितुं पातुं वा । तेन तदोत्क्रान्तिः प्रसिद्धा घ्राणादिकलापस्य । दृश्यते ह्युत्क्रान्तौ प्राणस्याशिशिषा । अतो व्याददात्येवास्य विदारणं करोतीर्थः । तद्ध्यन्नालाभे उत्क्रान्तस्य लिङ्गं ॥

---

व्या॰ तेनैतास्तृप्यन्तीति श्रुत्यन्तरमाश्रित्याह । तेन हीति ॥ प्राणवृत्तिहेतुभ्यामन्नपानाभ्यां सङ्घातस्थितिरतः शब्दार्थः । सर्व्वार्थत्वं द्वितीयस्यातः शब्दस्यार्थः ॥ मुख्यप्राणोपयुक्तत्वादन्नपानानां सङ्घातस्थितिहेतुत्वमित्यत्र प्रश्नपूर्व्वकं लिङ्गं दर्शयति । कथमित्यादिना ॥ वृत्तिमेव विशिनष्टि । अन्नपाने इति ॥ अन्वहमुपयुज्यमानेऽन्नपाने प्राणस्थितिहेतू इति यावत् । प्राणसोच्चिक्रमिषायामपि सङ्घातः स्वयमशनपाने कृत्वा स्थास्यति इत्याशङ्क्याह । अप्राणो हीति ॥ तदा प्राणोच्चिक्रमिषावस्थायामिति यावत् ॥ नन्वुत्क्रान्त्यवस्थायामशिशिषाद्यभावादेव सङ्घातस्योत्क्रान्तिर्न त्वशनाद्यभावात्तत्र प्रमाणाभावादत आह । दृश्यते हीति ॥ तदिति मुखव्यादानमुच्यते । अन्नग्रहणं पानोपलक्षणार्थं ॥

उ० तꣳ हाङ्गिरा उद्गीथमुपासाञ्चक्र एतमु एवाङ्गिरसं मन्यन्ते

---

भा० तं हाङ्गिरास्तं मुख्यं प्राणं ह अङ्गिरा इत्येवगुणमुद्गीथमुपासाञ्चक्रे उपासनं कृतवान् वको दाल्भ्य इति वक्ष्यमाणेन सम्बध्यते। तथा बृहस्पतिरित्यायास्य इति चोपासाञ्चक्रे वक इत्येवं सम्बन्धं कृतवन्तः केचित्। एतमु एवाङ्गिरसं बृहस्पतिमायास्यं प्राणं मन्यन्ते इति वचनाद् भवत्येवं। यथाश्रुतासम्भवे सम्भवति तु यथाश्रुतमृषिचोदनायामपि श्रुत्यन्तरवत्। तस्माच्छतर्चिन इत्याचक्षते एतमेव मन्तमृषिमपि।

---

व्या० विशुद्धिगुणकमुख्यप्राणात्मोद्गातृदृष्ट्योद्गीथावयवभूतमोङ्काराख्यमक्षरमुपास्यमित्युक्तं इदानीं तत्रैवाङ्गिरसबृहस्पत्यायास्यगुणत्रयविधानार्थमुत्तरग्रन्थमुत्थापयति। तं हेति॥ तत्र वृत्तिकाराभिप्रेतं सम्बन्धं दर्शयति। तं मुख्यमिति॥ पराभिप्रेतसम्बन्धे गमकमाह। एतमिति॥ अव्यवहितसम्बन्धसम्भवे व्यवहितसम्बन्धकल्पना न युक्तेति परिहरति। भवत्येवमिति॥ ऋषीणामङ्गिरोबृहस्पत्यादिशब्दैरुपदेशेऽपि गुणत्रयविशिष्टप्राणोपासनं न विरुध्यतेऽतस्त्व प्रधानानामबाधे प्राणोपासकानामृषीणामुपदेशो न त्यागमर्हत्यङ्गिरोबृहस्पत्यादिशब्देभ्योऽपि। प्रथमप्रतिपन्नान्दृषीन्विहाय यौगिकवृत्तिप्रतिपत्तव्यगुणमात्रप्रतिपत्त्यनुपपत्तेरित्यर्थः॥ प्राणोपासकानामृषीणामभिधानमैतरेयकश्रुत्या दृढयति। श्रुत्यन्तरवदिति॥ तदेव स्पष्टयति। तस्मादिति॥ शतर्चिनो नाम प्रथममण्डलदृश ऋषयः। एष च प्राणो यस्मात्पुरुषं सङ्घातारव्यं शतवर्षाण्यभिगतवान् तस्मादेतमेव प्राणं सन्तमृषिशरीरस्थितमपि शतर्चिनशब्दवाच्यं वदन्तीति योजना॥

उ॰ अङ्गानां यद्रसः ॥ १० ॥

भा॰ तथा मध्यमा गृत्समदो विश्वामित्रो वामदेवोऽत्रिरित्यादिऋषीनेव प्राणमापादयति श्रुतिः। तथैतानप्यृषीन् प्राणोपासकानङ्गिरोहृहस्पत्यायास्यान् प्राणं करोत्यभेदविज्ञानाय। प्राणो ह पिता प्राणो मातेत्यादिवच्च। तस्मादृषिरङ्गिरा नाम प्राण एव सन्नात्मानमाङ्गिरसं प्राणमुद्गीथमुपासाञ्चक्र इत्येतत्। यस्मात्सोऽङ्गानां प्राणः सन् रसस्तेनासावाङ्गिरसः।

---

व्या॰ एतर्चिन्शब्दवदुभयविषयाणि शब्दान्तराण्यपि सन्तीत्याह। तथेति॥ आद्यं मण्डलमुक्त्वा मध्यमानां मण्डलानां द्रष्टारो माध्यमा ऋषयस्तेऽपि प्राणस्तस्य स्वात्मनि मध्ये सर्व्वजगद्विधारकत्वात्। गृत्समदस्तु द्वितीयमण्डलदर्शी। स्वापकाले वागादीनां गिरणात्प्राणो गृत्सः रेतोविसर्गकारणं मदश्हेतुत्वात्। अपानो मदः प्राणापानात्मकत्वात्प्राणोऽपि तथोच्यते। तृतीयमण्डलदर्शी विश्वामित्रः प्राणोऽपि तथा व्यपदिश्यते तस्य हि विश्वं भोज्यजातं स्थितिहेतुतया मित्रमासीत्। वामदेवस्तु चतुर्थमण्डलद्रष्टा प्राणोऽपि तच्छब्दवाच्यस्तस्य वागादिदेवतासम्भजनीयत्वात्। पञ्चममण्डलद्रष्टाऽत्रिरित्युच्यते प्राणोऽपि तथैव कथ्यते। तस्य प्राप्मनोऽनर्थरूपान्त्रति सर्व्वत्रात्तृत्वात्। आदिपदेन भरद्वाजादिपदानि गृहीतानि॥ दृष्टान्तमेवं व्याख्याय दार्ष्टान्तिकमाह। तथेति॥ किमित्यङ्गिरःप्रभृतीन्प्राणं करोति श्रुतिरत आह। अभेदेति॥ तथा च सप्तमे प्राणस्य सार्व्वात्म्यं वक्ष्यते तथापि तस्य तत्तदृष्टिरूपत्वं विवक्षितमित्याह। प्राणो हेति॥ अव्यवहितसम्बन्धसम्भवे फलितं वाक्यार्थं कथयति। तस्मादिति॥ प्राणस्याङ्गिरस्त्वं व्युत्पादयति। यस्मादिति॥

उ॰ तꣳ हाङ्गिरा उद्गीथमुपासाञ्चक्र एतमु एवाङ्गिरसं मन्यन्ते

---

भा॰ तं हाङ्गिरास्तं मुख्यं प्राणं ह अङ्गिरा इत्येवगुणमुद्गीथमुपासाञ्चक्रे उपासनं कृतवान् बको दाल्भ्य इति वक्ष्यमाणेन सम्बध्यते। तथा बृहस्पतिरित्यायास्य इति चोपासाञ्चक्रे बक इत्येवं सम्बन्धं कृतवन्तः केचित्। एतमु एवाङ्गिरसं बृहस्पतिमायास्यं प्राणं मन्यन्ते इति वचनाद् भवत्येवं। यथाश्रुतासम्भवे सम्भवति तु यथाश्रुतऋषिचोदनायामपि श्रुत्यन्तरवत्। तस्माच्छतर्चिन इत्याचक्षते एतमेव सन्तमृषिमपि।

---

व्या॰ विशुद्धिगुणकमुख्यप्राणात्मोद्गातृदृष्ट्योद्गीथावयवभूतमोङ्काराख्यमक्षरमुपास्यमित्युक्तं इदानीं तत्रैवाङ्गिरसबृहस्पत्यायास्यगुणत्रयविधानार्थमुत्तरग्रन्थमुत्थापयति। तं हेति॥ तत्र वृत्तिकाराभिप्रेतं सम्बन्धं दर्शयति। तं मुख्यमिति॥ पराभिप्रेतसम्बन्धे गमकमाह। एतमिति॥ अव्यवहितसम्बन्धसम्भवे व्यवहितसम्बन्धकल्पना न युक्तेति परिहरति। भवत्येवमिति॥ ऋषीणामङ्गिरोबृहस्पत्यादिशब्दैरुपदेशेऽपि गुणत्रयविशिष्टप्राणोपासनं न विरुध्यतेऽतस्तु प्रधानानामबाधे प्राणोपासकानामृषीणामुपदेशो न त्यागमर्हत्यङ्गिरोबृहस्पत्यादिशब्देभ्योऽपि। प्रथमप्रतिपन्नानृषीन्विहाय यौगिकवृत्तिप्रतिपत्तव्यगुणमात्रप्रतिपत्त्यनुपपत्तेरित्यर्थः॥ प्राणोपासकानामृषीणामभिधानमैतरेयकश्रुत्या दृढयति। श्रुत्यन्तरवदिति॥ तदेव स्पष्टयति। तस्मादिति॥ शतर्चिनो नाम प्रथममण्डलदृश ऋषयः। एष च प्राणो यस्मात्पुरुषं सङ्घाताख्यं शतवर्षाण्यभिगतवान् तस्मादेतमेव प्राणं सन्तमृषिशरीरस्थितमपि शतर्चिनशब्दवाच्यं वदन्तीति योजना॥

उ० अङ्गानां यद्रसः ॥ १० ॥

भा० तथा मध्यमा गृत्समदो विश्वामित्रो वामदेवोऽत्रिरित्यादिऋषीनेव प्राणमापादयति श्रुतिः। तथैतानप्यृषीन् प्राणोपासकानङ्गिरोऽरुस्त्वायास्यान् प्राणं करोत्यभेदविज्ञानाय। प्राणो ह पिता प्राणो मातेत्यादिवञ्च। तस्मादृषिरङ्गिरा नाम प्राण एव सन्नात्मानमाङ्गिरसं प्राणमुद्गीथमुपासाञ्चक्र इत्येतत्। यस्मात्सोऽङ्गानां प्राणः सन् रसस्तेनासावाङ्गिरसः।

व्या० शतर्चिन्शब्दवदुभयविषयाणि शब्दान्तराण्यपि सन्तीत्याह। तथेति॥ आद्यं मण्डलमुक्त्वा मध्यमानां मण्डलानां द्रष्टारो माध्यमा ऋषयस्तेऽपि प्राणास्तस्य स्वात्मनि मध्ये सर्व्वजगद्विधारकत्वात्। गृत्समदस्तु द्वितीयमण्डलदर्शी। स्वापकाले वागादीनां गिरणात्प्राणो गृत्सः रेतोविसर्गकारणं मदहेतुत्वात्। अपानो मदः प्राणापानात्मकत्वात्प्राणोऽपि तथोच्यते। तृतीयमण्डलदर्शी विश्वामित्रः प्राणोऽपि तथा व्यपदिश्यते तस्य हि विश्वं भोज्यजातं स्थितिहेतुतया मित्रमासीत्। वामदेवस्तु चतुर्थमण्डलद्रष्टा प्राणोऽपि तच्छब्दवाच्यस्तस्य वागादिदेवतासम्भजनीयत्वात्। पञ्चममण्डलद्रष्टाऽत्रिरित्युच्यते प्राणोऽपि तथैव कथ्यते। तस्य प्राप्मनोऽनर्थरूपान्प्रति सर्व्वत्रातृत्वात्। आदिपदेन भरद्वाजादिपदानि गृहीतानि॥ दृष्टान्तमेवं व्याख्याय दार्ष्टान्तिकमाह। तथेति॥ किमित्यङ्गिरःप्रभृतीन्प्राणं करोति श्रुतिरत आह। अभेदेति॥ तथा च सप्तमे प्राणस्य सार्व्वात्म्यं वक्ष्यते तथात्रापि तस्य तत्तदृषिरूपत्वं विवक्षितमित्याह। प्राणो हेति॥ अव्यवहितसम्बन्धसम्भवे फलितं वाक्यार्थं कथयति। तस्मादिति॥ प्राणस्याङ्गिरस्त्वं व्युत्पादयति। यस्मादिति॥

उ॰ तेन तꣳ ह बृहस्पतिरुद्गीथमुपासाञ्चक्र एतमु एव बृहस्पतिं मन्यन्ते वाग्घि बृहती तस्या एष पतिः ॥ ११ ॥ तेन तꣳ हायास्यमुद्गीथमुपासाञ्चक्र एतमु एवायास्यं मन्यन्त आस्याद्यदयते ॥ १२ ॥ तेन तꣳ ह बको दाल्भ्यो विदाञ्चकार ।

---

भा॰ तथा वाचो बृहत्याः पतिस्तेनासौ बृहस्पतिः । तथा यद्यस्मादास्यादयते निर्गच्छति तेनायास्यः । ऋषिः प्राण एव सन्नित्यर्थः । तथान्योऽप्युपासक आत्मानमेवाङ्गिरसादिगुणं प्राणमुद्गीथमुपासीतेत्यर्थो न केवलमङ्गिरःप्रभृतय उपासाञ्चक्रिरे । तं ह बको नाम दल्भस्यापत्यं दाल्भ्यो विदाञ्चकार यथा दर्शितं प्राणं विज्ञातवान् ॥

---

आ॰ अङ्गिरःशब्दवद्बृहस्पतिशब्दोऽप्युभयत्र नेतव्य इत्याह । तथेति ॥ प्राणस्य बृहस्पतित्वं साधयति । वाच इति ॥ अङ्गिरोबृहस्पतिशब्दवदायास्यशब्दोऽप्युभयत्र द्रष्टव्य इत्याह । तथेति ॥ तस्योभयत्र वृत्तिं विशदयति । यद्यस्मादिति । यस्मादायास्यादयते तेनायास्यः प्राणः स एवात्रोपासकत्वादृषिरपि तथेति योजना ॥ यथोक्तानामृषीणामेवोक्तगुणकमुपासनं नान्येषां विशेषवचनादित्याशङ्क्याह । तथेति ॥ विशेषस्य न शेषनिवर्त्तकत्वं प्रदर्शनार्थत्वादित्यर्थः ॥ यथोक्तोपासनस्य त्रिषु नियमाभावे गमकं दर्शयति । न केवलमिति ॥

उ॰ स ह नैमिषीयानामुद्गाता बभूव स ह स्मैभ्यः कामानागायति ॥ १३ ॥ आगाता ह वै कामानां भवति य एतदेवं विद्वानक्षरमुद्गीथमुपास्त इत्यध्यात्मं ॥ १४ ॥ २ ॥ तृतीयस्य द्वितीयः खण्डः ॥

अथाधिदैवतं य एवासौ तपति तमुद्गीथ-

---

भा॰ विदित्वा च स ह नैमिषीयानां सत्त्रिणामुद्गाता बभूव । स च प्राणविज्ञानसामर्थ्यादेभ्यो नैमिषीयेभ्यः कामानागायति स्म ह आगीतवान् किलेत्यर्थः । तथान्योऽप्युद्गाता आगाता ह वै कामानां भवति य एवं विद्वान् यथोक्तगुणं प्राणमक्षरमुद्गीथमुपास्ते तस्यैतद्दृष्टं फलमुक्तं । प्राणात्मभावस्त्वदृष्टं । देवो भूत्वा देवानप्येतीति श्रुत्यन्तरात्सिद्धमेवेत्यभिप्रायः । इत्यध्यात्ममेतदात्मविषयमुद्गीथोपासनमित्युक्तोपसंहारोऽधिदैवतोद्गीथोपासने वक्ष्यमाणे बुद्धिसमाधानार्थः ॥ २ ॥

अथानन्तरं अधिदैवतं देवताविषयमुद्गीथोपासनं प्रस्तुतमित्यर्थोऽनेकधोपास्यत्वादुद्गीथस्य य एवासावादित्य-

---

आ॰ सम्प्रति विहितोपासनस्य दृष्टफलमादेष्टुं पातनिकां करोति । विदित्वेति ॥ भूमिकां कृत्वा विवक्षितमुपास्तिफलं कथयति । तथेति । दृष्टमिति विशेषणादभीष्टं फलान्तरमाचष्टे । प्राणेति ॥ आत्मविषयं शरीरवर्त्तिप्राणगोचरमिति यावत् ॥ उपसंहारस्य प्रयोजनमाह । अधिदैवतेति ॥ २ ॥

अनन्तरमाध्यात्मिकप्राणदृष्ट्योद्गीथोपासनवचनादिति शेषः ॥ किमिति देवताविषयमुद्गीथोपासनं प्रस्तूयते तत्राह । अने

उ० मुपासीतोद्यन्वा एष प्रजाभ्य उद्गायति ।
उद्यꣳस्तमोभयमपहन्त्यपहन्ता ह वै भयस्य तम-
सो भवति य एवं वेद ॥ १ ॥ समान उ एवा-

---

भा० स्तपति तमुद्गीथमुपासीतादित्यदृष्ट्योद्गीथमुपासीतेत्यर्थ-
स्तमुद्गीथमित्युद्गीथशब्दोऽक्षरवाची सन् कथमादित्ये वर्त्तत
इति । उच्यते । उद्यन्नुद्गच्छन्नेष प्रजाभ्यः प्रजार्थमुद्गायति
प्रजानामन्नोत्पत्त्यर्थं । न ह्यनुद्यति तस्मिन्व्रीह्यादेः पक्तिः
स्यादत उद्गायतीवोद्गायति ॥ १ ॥

यथैवोद्गाताऽन्नार्थं अत उद्गीथः सवितेत्यर्थः । किञ्चो-
द्यन्नैशं तमस्तज्जञ्च भयं प्राणिनामपहन्ति तमेवंगुणं सवि-
तारं यो वेद सोऽपहन्ता नाशयिता ह वै भयस्य जन्मम-

---

व्या० कथेति ॥ प्राणरूपेणादित्यादिरूपेण चोद्गीथस्योपास्यत्वाद्देवता-
विषयतदुपास्तिप्रस्तावो युक्त एवेत्यर्थः ॥ आदित्यादिमतयस्त्वेत्या-
दिन्यायेन वाक्यार्थं कथयति । आदित्यदृष्ट्येति ॥ तमादित्यमु-
द्गीथमुपासीतेत्यादित्यशब्दस्योद्गीथशब्दस्य च सामानाधिकर-
ण्यमयुक्तमुद्गीथशब्दस्य प्रकरणादक्षरवाचित्वादादित्यशब्दस्य च
ज्योतिर्विषयत्वाद्भिन्नार्थयोश्च शब्दयोः सामानाधिकरण्यायो-
गादिति शङ्कते । तमुद्गीथमिति ॥ आदित्ये यद्यपि नोद्गीथ-
शब्दो रूढ्या वर्त्तितुमर्हति तथापि गौण्या च तत्र तत्र वृत्तेः
सामाधिकरण्यसिद्धिरित्युत्तरमाह । उच्यत इति ॥ प्रजार्थमुद्गा-
यतीत्येतदेव स्पष्टयति । प्रजानामिति । अन्नोत्पत्त्यर्थमुद्गायतीति
पूर्व्वेण सम्बन्धः ॥ तदेव व्यतिरेकद्वारा साधयति । न हीति ॥
आदित्यस्यान्नार्थमागानमतः शब्दार्थः । न तस्योद्गातुरिव प्रत्य-
क्षमुद्गानमुपलब्धमित्याशङ्क्याह । उद्गायतीवेति ॥

उपमामेवोपपादयति । तथेति ॥ अथात्मनेऽन्नाद्यमागायेदिति-
श्रुत्यन्तरे यथान्नार्थमुद्गाताऽऽगायतीत्यवगतं तथाऽऽदित्योऽपि

उ॰ यञ्चासौ चोष्णोऽयमुष्णोऽसौ स्वर इतीममाचक्षते स्वर इति प्रत्यास्वर इत्यमुं तस्माद्वा एत-मिमममुञ्चोद्गीथमुपासीत ॥ २ ॥

---

भा॰ रणादिलक्षणस्यात्मनस्तमसश्च तत्कारणस्याज्ञानलक्षणस्य भवति। यद्यपि स्थानभेदात्प्राणादित्यौ भिन्नाविव लक्ष्येते तथापि न स तत्त्वभेदस्तयोः। कथं समान उ एव तुल्य एव प्राणः सवित्रा गुणतः सविता च प्राणेन। यस्मादुष्णोऽयं प्राणः उष्णश्चासौ सविता। किञ्च स्वर इतीमं प्राण-माचक्षते कथयन्ति तथा स्वर इति प्रत्यास्वर इति चामुं सवितारं। यस्मात्प्राणः स्वरत्येव न पुनर्मृतः प्रत्यागच्छति॥

---

आ॰ प्रजानामन्नार्थमागायतीत्यर्थः। उद्गीथशब्दस्यादित्ये सम्भवं परामृश्य फलितमाह। अत इति ॥ आदित्यदृष्ट्योद्गीथोपास-नमुपपाद्य फलोक्तिं व्याचष्टे। किञ्चेत्यादिना ॥ एवंगुणं तम-स्तज्ज भयनिवर्त्तकत्वगुणसहितमिति यावत्। नन्वध्यात्ममधिदै-वतमिति स्थानभेदात्प्राणादित्ययोर्भिन्नत्वात्॥ भिन्नमेव तयोरु-पासनमुपादेयमत आह। यद्यपीति ॥ प्राणादित्ययोः स्वरूप-भेदाभावं प्रश्नपूर्व्वकं प्रतिपादयति। कथमित्यादिना ॥ उशब्दो ऽप्यर्थः। स्थानभेदतो भेदमनुजानाति गुणतः साम्यं साधयति। यस्मादिति ॥ नामतः साम्यं सङ्गिरते। किञ्चेति ॥ सवितृव-त्प्राणेऽपि प्रत्यास्वरशब्दप्रवृत्तिमाशङ्क्याह। यस्मादिति ॥ स्वर-त्येव गच्छत्येवेति यावत्। तस्मिन्नेव स्थूलदेहे स प्रत्यागच्छति तस्मात्प्राणेऽप्रत्यास्वरशब्दप्रवृत्तिरित्यर्थः ॥

उ॰ अथ खलु व्यानमेवोद्गीथमुपासीत यद्वै प्राणिति स प्राणो यदपानिति सोऽपानः ।१ अथ यः

---

भा॰ सविता ह्यस्तमित्वा पुनरप्यहन्यहनि प्रत्यागच्छति । अतः प्रत्यास्वरोऽस्माद्गुणतो नामतश्च समानमितरेतरं प्राणादित्यौ । अतः सतत्त्वाभेदादेतं प्राणमिमममुञ्चादित्यमुद्गीथमुपासीताथ खल्विति । प्रकारान्तरेणोपासनमुद्गीथस्योच्यते व्यानमेव वक्ष्यमाणलक्षणं । प्राणस्यैव वृत्तिविशेषमुद्गीथमुपासीत । अधुना तस्य तत्त्वं निरूप्यते । यद्वै पुरुषः प्राणिति मुखनासिकाभ्यां वायुं बहिर्निःसारयति स प्राणाख्यो वायोर्वृत्तिविशेषो यदपानित्यपश्वसिति ताभ्यामेव अन्तराकर्षति वायुं सोऽपानोऽपानाख्या वृत्तिः ॥

---

व्या॰ सवितर्य्यपि तर्हि तच्छब्दप्रवृत्तिरेवेत्याशङ्क्याह । सविता त्विति ॥ आदित्यस्यास्तं गतस्य प्रत्यहमेकत्रैवागतिदर्शनात्तस्मिन्प्रत्यास्वरशब्दस्यापि प्रवृत्तिरस्तीत्यर्थः । अतः प्राणादित्ययोरुक्तं साम्यं निगमयति । अस्मादिति ॥ अन्योन्यसाम्यकृतं फलमाह । अत इति ॥ प्राणादित्यावेकीकृत्य तद्दृष्ट्योद्गीथावयवभूतमोङ्काराख्यमक्षरमुपास्यमित्यर्थः । अथाध्यात्मिकमाधिदैविकञ्चोद्गीथोपासनं प्रस्तुत्य तदेव समस्यैकीकृत्योक्तं तया च वक्तव्याभावात् किमुत्तरेण ग्रन्थेनेत्याशङ्क्याध्यात्मिकमेवोद्गीथोपासनमनुस्मृत्याह । अथेति ॥ कोऽसौ व्यानो यद्दृष्ट्योद्गीथोपासनमुपदिदिक्षितमत आह । वक्ष्यमाणलक्षणमिति ॥ पक्षान्तरं व्यावर्त्तयति । प्राणस्यैवेति ॥ वक्ष्यमाणलक्षणमित्युक्तं व्यक्तीकरोति । अधुनेति ॥ तन्निरूपणार्थमादौ प्राणापानौ निरूपयति । यद्वा इत्यादिना ॥ ताभ्यामेव मुखनासिकाभ्यामित्येतत् स्यातामित्येवं प्राणापानौ ॥ व्यानस्य तु किमायातमिति शङ्कित्वा तत्स्वरूपं दर्शयति । तत इत्यादिना ॥

उ॰ प्राणापानयोः सन्धिः स व्यानो यो व्यानः सा वाक् । तस्मादप्राणन्ननपानन्वाचमभिव्याहरति ॥ ३ ॥

---

ततः किमित्युच्यते अथ य उक्तलक्षणयोः प्राणापानयोः सन्धिस्तयोरन्तरावृत्तिविशेषः स व्यानो यः साङ्ख्यादिशास्त्रप्रसिद्धः श्रुत्या विशेषनिरूपणान्नासौ व्यान इत्यभिप्रायः। कस्मात्पुनः प्राणापानौ हित्वा महताऽऽयासेन व्यानस्यैवोपासनमुच्यते। वीर्य्यवत्कर्म्महेतुत्वात्। कथं वीर्य्यवत्कर्म्महेतुत्वमित्याह। यो व्यानः सा वाक्। व्यानकार्य्यत्वाद्वाचः।

यस्माद्व्याननिर्वर्त्त्या वाक्तस्मादप्राणन्ननपानन् प्राणापानव्यापारावकुर्व्वन् वाचमभिव्याहरत्युच्चारयति लोकः ।

---

व्या॰ सन्धिमेव स्फुटयति । तयोरिति॥ प्राणापानयोर्वृत्त्योरभावावस्थायां मध्ये च वायोर्वृत्तिविशेषो योऽस्ति स व्यानशब्दार्थ इत्यर्थः । सन्धिःस्कन्धमर्म्मदेशवृत्तिर्व्यान इति साङ्ख्या योगाश्चाङ्गत्वान् प्रत्याह । यः साङ्ख्यादीति । साङ्ख्यानां योगानाञ्च शास्त्रे प्रसिद्धो यो वायोर्वृत्तिविशेषः स्कन्धादिदेशगो नासौ व्यानः श्रुत्या विशेषनिरूपणादिति योजना। व्यानस्य प्राणापानसापेक्षत्वात्तयोरन्यतरस्योपासनमेवोचितं न व्यानोपासनमिति मन्वानश्चोदयति। कस्मादिति॥ महताऽऽयासेन न व्यानसतत्त्वनिरूपणेनेति यावत्॥ ताभ्यां वैशिष्ट्यमुपेत्य परिहरति । वीर्य्यवदिति ॥ व्यानस्यैवोपासनमिति शेषः। तदेव प्रश्नद्वारा प्रपञ्चयति। कथमित्यादिना ॥ कथं व्यानस्य वीर्य्यवत्कर्म्म प्रसिद्धं प्रतिज्ञायते कार्य्यकारणाभावादित्याह। व्यानेति ॥

वाचो व्याननिर्वर्त्त्यत्वे लिङ्गं दर्शयति। यस्मादिति ॥ या वागित्यादिवाक्यानामर्थं सङ्क्षिपति । तथेत्यादिना ॥ ह्यसौ यानी-

उ॰ या वाक्सर्क्सास्मादप्राणन्ननपानन्नृचमभिव्याह-
रति यर्क्तत्साम तस्मादप्राणन्ननपानन्साम गायति
यत्साम स उद्गीथस्तस्मादप्राणन्ननपानन्नुद्गायति
॥ ४ ॥ अतो यान्यन्यानि वीर्य्यवन्ति कर्म्माणि
यथाग्नेर्मन्थनमाजेः सरणं दृढस्य धनुष आय-
मनमप्राणन्ननपानꣳस्तानि करोत्येतस्य हेतो-

---

भा॰ तथा वाग्विशेषामृचमृक्संस्थञ्च साम सामावयवञ्चोद्गीथम-
प्राणन्ननपानन् व्यानेनैव निर्वर्त्तयतीत्यभिप्रायः। न केवलं
वागाद्यभिव्याहरणमेवातोऽस्मादन्यान्यपि यानि वीर्य्यवन्ति
कर्म्माणि प्रयत्नादधिकनिर्वर्त्यानि यथाग्नेर्मन्थनमाजेर्मर्य्या-
दायाः सरणं धावनं दृढस्य धनुष आयमनमाकर्षणम-
प्राणन्ननपानंस्तानि करोति। अतो विशिष्टो व्यानः
प्राणादिप्रवृत्तिभ्यः। विशिष्टस्योपासनं न्याय्यः फलवत्त्वाद्रा-
जोपासनवत्॥

---

व्या॰ त्यादि व्याचष्टे। न केवलमिति॥ व्यानेन निर्वर्त्तयतीति पूर्व्वेण
सम्बन्धः। यान्यन्यान्यपि यथोक्तानि कर्म्माणि तानि लोको व्याने-
नैव करोतीत्युत्तरत्र सम्बन्धः। प्रयत्नाधिक्यनिर्वर्त्यानि कर्म्माण्यु-
दाहरति। यथेति॥ यथा तानि कर्म्माणि तथान्यान्यप्येवं-
प्रकाराणीति योजना॥ व्यानस्य वीर्य्यवत्कार्य्यहेतुत्वे फलितमाह।
अत इति॥ वैशिष्ट्येऽपि किं स्यादिति चेत्तदाह। विशिष्ट-
स्येति॥

उ॰ र्थानमेवोद्गीथमुपासीत ॥ ५ ॥ अथ खलूद्गीथाक्षराण्युपासीतोद्गीथ इति प्राण एवोत्प्राणेन

---

भा॰ एतस्य हेतोरेतस्मात्कारणाद्ध्यानमेवोद्गीथमुपासीत नान्यद्दृत्यन्तरं कर्म्म वीर्य्यवत्तरत्वं फलं। अथाधुना खलूद्गीथाक्षराण्युपासीत भक्त्यक्षराणि मा भूवन्नित्यतो विशिनष्टि उद्गीथ इति। उद्गीथनामाक्षराणीत्यर्थो नामाक्षरोपासनेऽपि नामवत एवोपासनं कृतं भवेदमुकमिश्रा इति यद्वत्। प्राण एवोदित्यस्मिन्नक्षरे प्राणदृष्टिः। कथं प्राणस्योत्त्वमित्याह। प्राणेन ह्युत्तिष्ठति सर्व्वोऽप्राणस्यावसाददर्शनादतोऽस्युदः प्राणस्य च सामान्यं। वाग्गीः। वाचो ह गिर इत्याचक्षते शिष्टाः॥

---

व्या॰ वैशिष्ट्यफलमुपसंहरति। एतस्येति॥ फलवत्त्वादित्युक्तमुपात्तिफलं स्पष्टयति। कर्म्मेति॥ ध्यानदृष्ट्योद्गीथोपासनस्याङ्गावबद्धत्वादिति शेषः। उद्गीथोपासनप्रसङ्गेनोद्गीथाक्षरोपासनां प्रस्तौति। अथेति॥ विशेषणतात्पर्य्यं दर्शयति। भक्तीति॥ उद्गीथाक्षराण्युपासीतेत्युक्ते भक्त्यक्षराण्युपास्यानि प्राप्तानि तानि मा भूवन्निति यतो मन्यते श्रुतिस्ततो विशेषणं करोतीत्यर्थः॥ विशेषणश्रुतिं व्याकरोति। उद्गीथेति॥ नामाक्षरोपासनमुद्गीथोपासनस्याकिञ्चित्करमित्याशङ्क्याह। नामेति॥ यथा लोके कृष्णमिश्रादिवाचकशब्दप्रयोगे वाच्यस्य पुरुषविशेषस्योपासनं गम्यते तथेहापीत्यर्थः॥ नामाक्षरोपासने नामवत्तदुपासनेऽपि तदुपासनमेव कथमित्याशङ्क्य विभजते। प्राण एवेति॥ प्राणस्योदः सादृश्यं प्रश्नपूर्व्वकमाह। कथमित्यादिना॥ गिरित्यस्मिन्नक्षरे वाग्दृष्टिः कर्त्तव्येत्याह। वाग्गीरिति॥ वाचो गिरश्च सादृश्यं दर्शयति। वाचो हेति॥

उ॰ द्युतिष्ठति वाग्गीर्वाचो ह गिर इत्याचक्षते अन्नं थमन्ने हीदं सर्वं स्थितं ॥ ६ ॥
द्यौरेवोदन्तरिक्षं गीः पृथिवी थमादित्य एवो-
द्वायुर्गीरग्निस्थं सामवेद एवोद्यजुर्वेदो गीः

---

भा॰ तथान्नं थमन्ने हीदं सर्व्वं स्थितमतोऽस्त्यन्नस्य थाचरस्य च सामान्यं। त्रयाणां श्रुत्युक्तानि सामान्यानि तानि तेनानुरूपेण शेषेष्वपि द्रष्टव्यानि द्यौरेवोदुच्चैःस्थानात्। अन्तरिक्षं गीर्गिरणाद् लोकानां। पृथिवी थं प्राणिस्थानात्। आदित्य एवोदूर्द्धत्वात्। वायुर्गीरग्न्यादीनां गिरणात्। अग्निस्थं याज्ञीयकर्म्मावस्थानात्। सामवेद एवोत्स्वर्गसंस्तुतत्वात्। यजुर्वेदो गीर्यजुषा प्रत्तस्य हविषो देवतानां गिरणात्।

---

आ॰ उद्गीथाक्षरयोः प्राणवाग्दृष्टिरिव थमित्यस्मिन्नक्षरेऽन्नदृष्टिः कार्य्येत्याह। तथेति॥ थकाराऽन्नयोरपेक्षितं सादृश्यं दर्शयति। अन्ने हीति॥ प्राण एवोदित्यादौ सादृश्यं श्रुत्यैवोक्तं। द्यौरेवोदित्यादौ तु नोक्तं। तथा च तत्र सादृश्याभावे कथं दृष्टीकरणमित्याशङ्क्याह। त्रयाणामिति॥ अन्तरिक्षमाकाशस्तदन्तः प्रतिष्ठा लोकास्तेन गीर्णा इवेति मत्वाह। गिरणादिति॥ अग्न्यादीनां गिरणादिति संवर्गविद्यायां द्रष्टव्यं॥ सामवेदो वै स्वर्गो लोक इति स्वर्गलोकत्वेन सामवेदस्य संस्तुतत्वादिति हेतुमाह। स्वर्गेति॥ यजुषा स्वाहास्वधादिनेति यावत्। अध्यात्ममधिलोकमधिदैवमधिवेदञ्च नामाक्षरोपासनमुक्त्वा तत्फलोक्तिमवतार्य्य व्याकरोति॥ उद्गीथेति॥

उ० ऋग्वेदस्थं दुग्धेऽस्मै वाग्दोहं यो वाचो दोहः अन्नवानन्नादो भवति य एतान्येवं विद्वानुद्गीथाक्षराण्युपास्त उद्गीथ इति ॥ ७ ॥

---

भा० ऋग्वेदस्थमृच्यस्फुटत्वात्साम्नः । उद्गीथाक्षरोपासनफलमधुनोच्यते दुग्धे दोग्ध्यस्मै साधकाय। का सा वाक् कं दोहं कोऽसौ दोह इत्याह । यो वाचो दोहः । ऋग्वेदादिशब्दसाध्यं फलमित्यभिप्रायस्तद्वाचो दोहस्तं स्वयमेव वाग्दोग्धि आत्मानमेव दोग्धि किञ्चान्नवान् प्रभूतान्नोऽन्नादश्च दीप्ताग्निर्भवति य एतानि. यथोक्तानि एवं यथोक्तगुणान्युद्गीथाक्षराणि विद्वान्सन्नुपास्ते उद्गीथ इति ॥

---

व्या० यो वाचो दोह इत्यत्र षष्ठी कर्म्मणि द्रष्टव्या । तमेव वाग्दोहं प्रकटयति । ऋग्वेदादीति ॥ तत्साध्यं फलं स्वाधीनोच्चारणत्वमत्वं तदनायासेनास्य सम्भवतीत्यर्थः । तदिति प्रकृतफलपरामर्शः । षष्ठी पूर्व्ववत् । तमिति दोहोक्तिः । वाच एव दोहे कर्म्मत्वं कर्तृत्वञ्चेत्याह । आत्मानमेवेति ॥ यो दोग्धा सा वागेव सा चात्मानमेव तं दोग्धीति योजना । यथोक्तानि प्राणवागन्नादिरूपत्वेनोक्तानीति यावत् । यथोक्तगुणान्युत्थानगिरणस्थित्यादिधर्म्मकानीत्यर्थः । उद्गीथाक्षराणीत्युक्तं विशेषणानुवादेन स्फुटयति । उद्गीथ इतीति ॥ उद्गीथ इत्येवं रूपस्य नाम्नोऽक्षराणीति यावत् । वागादिसमृद्धिफलकमुपासनमुपदिश्य फलसमृद्धिर्येन प्रकारेण भवति तत्प्रकारं ज्ञानं सर्व्वकाम्योपासनशेषभूतं प्रासङ्गिकं विधीयत इत्याह । अथ खल्विति । वागादिसमृद्धिफलकोपासनानन्तर्य्यमथशब्दार्थः । वक्ष्यमाणोपासनानां सर्व्वकाम्योपासनाशेषत्वद्योतनार्थं खल्वित्युक्तं ॥

उ॰ अथ खल्वाशीःसमृद्धिरुपसरणानीत्युपासीत येन साम्ना स्तोष्यन् स्यात्तत्सामोपधावेत् ॥ ८ ॥ यस्यामृचि तामृचं यदार्षेयं तमृषिं यां देवतामभिष्टोष्यन्स्यात्तां देवतामुपधावेत् ॥ ९ ॥ येन छन्दसा स्तोष्यन्स्यात्तच्छन्द उपधावेद्येन स्तोमेन स्तोष्यमाणः स्यात् तꣳस्तोममुपधावेत् ॥ १० ॥

---

भा॰ अथ खलु इदानीमाशीःसमृद्धिराशिषः कामस्य समृद्धिर्यथा भवेत्तदुच्यत इति वाक्यशेषः । उपसरणान्युपसर्त्तव्यान्युपगन्तव्यानि ध्येयानीत्यर्थः । कथमित्युपासीत एवमुपासीत तद्यथा येन साम्ना विशेषेण स्तोष्यन् स्तुतिं करिष्यन् स्याद्भवेदुद्गाता तत्सामोपधावेदुपसरेच्चिन्तयेदुत्पत्त्यादिभिः । यस्यामृचि तत्साम तामृचं उपधावेद्देवतादिभिः । यदार्षेयं साम तमृषिं । यां देवतामभिष्टोष्यन् स्यात्तां देवतामुपधावेत् । येन छन्दसा गायत्र्यादिना स्तोष्यन् स्यात्तच्छन्द उपधावेत् । येन स्तोष्यमाणः स्यात् स्तोमेन ।

---

आ॰ प्रासङ्गिकत्वं दर्शयति । इदानीमिति ॥ कामशब्दः फलविषयः । तच्छब्दः प्रकारज्ञानपरामर्श उच्यते विधीयते इत्यर्थः ॥ ध्यानप्रकारं प्रश्नपूर्व्वकं विशदयति । कथमित्यादिना ॥ इतिशब्दार्थमभिनयति । एवमिति ॥ एवं शब्दार्थमुदाहरणनिष्ठतया स्पष्टयति । तद्यथेति ॥ उत्पत्त्यादिभिरित्यादिशब्देन छन्दोदेवतादिगृह्यते देवतादिभिरित्यादिपदेनार्षेयादिग्रहः । गायत्र्यादिनेत्यादिपदमुष्णिगनुष्टुब्बृहत्यादिसंग्रहार्थं । त्रिवृत्पञ्चदश सप्तदश एकविंश इति प्रसिद्धः सोमयागे स्तोमः ॥

उ॰ यां दिशमभिष्टोष्यन्स्यात्तां दिशमुपधावेत् ॥ ११ ॥
आत्मानमन्तत उपसृत्य स्तुवीत कामं ध्यायन्न-
प्रमत्तोऽभ्याशो ह यदस्मै स कामः समृध्येत
यत्कामः स्तुवीतेति यत्कामः स्तुवीतेति ॥ १२ ॥
३ ॥ तृतीयस्य तृतीयः खण्डः ॥

---

भा॰ स्तोमाङ्गफलस्य कर्तृगामित्वादात्मनेपदं स्तोष्यमाण इति । तं स्तोममुपधावेत् । यां दिशं स्तोष्यमाणः स्यात्तां दिशमुपधावेदधिष्ठात्रादिभिः । आत्मानमुद्गाता स्वं रूपं गोत्रनामादिभिः सामादीन् क्रमेण स्वञ्चात्मानमन्ततोऽन्ते उपसृत्य स्तुवीत । कामं ध्यायन्नप्रमत्तः स्वरोष्मव्यञ्जनादिभ्यः प्रमादमकुर्वंस्ततोऽभ्याशः क्षिप्रमेव ह यद्यत्रास्मा एवंविदे स कामः समृध्येत समृद्धिं

---

व्या॰ आत्मनेपदप्रयोगप्रतिपन्नमर्थमाह । स्तोमाङ्गेति ॥ यत्र कर्तृगामि फलं तत्रात्मनेपदं प्रयुज्यते प्रकृते च स्तोष्यमाण इत्यात्मनेपदं दृश्यते। तस्मादेतत्फलस्य कर्तृगामित्वं गम्यते अन्यथा पूर्वोत्तरयोरिव परस्मैपदप्रयोगप्रसङ्गादित्यर्थः । यां दिशमभीत्याभिव्याप्येत्यर्थः । स्तोष्यन्देवताविशेषमिति शेषः । अधिष्ठातृशब्देनेन्द्रादयो गृह्यन्ते । आदिपदं तत्तद्दिगवस्थितासाधारणधर्मसङ्ग्रहार्थं। आत्मानं स्वरूपं गोत्रादिभिरुपसृत्योद्गाता स्तुवीतेति सम्बन्धः । नामादिभिरित्यादिशब्देन वर्णाश्रमादिग्रहणं । अन्तत इत्यस्यार्थमाह । सामादीनिति ॥ पूर्वोक्तान् सामादीन् सर्वानुक्तेन क्रमेण ध्यात्वा तदवसाने स्वात्मानमपि सञ्चिन्त्यापेक्षितफलमनुसन्दधानः स्वरादिभ्यः प्रमादमकुर्वन्नुद्गाता स्तुवीतेति योजना । यत्र कर्मण्ययमुद्गाता यथोक्तरीत्या स्तोता भवति तत्र क्षिप्रमे-

उ० ॐमित्येतदक्षरमुपासीतोमिति ह्युद्गायति त स्योपव्याख्यानं ॥ १ ॥ देवा वै मृत्योर्बिभ्यतस्त्रयीं विद्यां प्राविशꣳस्ते

---

भा० गच्छेत्कोऽसौ यत्कामः सन् स्तुवीतेति हिरन्नेरादरार्थो ॥ ३ ॥

ॐमित्येतदित्यादिप्रकृतस्याक्षरस्य पुनरुपादानं । उद्गीथाक्षराद्युपासनान्तरितत्वादन्यत्र प्रसङ्गो माभूदित्येवमर्थं प्रकृतस्यैवाक्षरस्यामृताभयगुणविशिष्टस्योपासनं विधातव्यमित्यारम्भः । ॐमित्यादि व्याख्यातं । देवा वै मृत्योर्मारकाद्विभ्यतः किं कृतवन्त इत्युच्यते । त्रयीं विद्यां त्रयीविहितं कर्म प्राविशन् प्रविष्टवन्तो वैदिकं कर्म प्रारब्धवन्त इत्यर्थः । तन्मृत्योस्त्राणं मन्यमानाः ॥

---

व्या० वास्मै स सकामः समृद्धिं गच्छेत् यत्कामः सन् यः स्तुवीतेत्यन्वयः। इतिशब्दः प्रासङ्गिकोपासनसमाप्त्यर्थः ॥ ३ ॥

प्रासङ्गिकं हित्वा प्रकृतमनुसन्धत्ते । ॐमित्येतदित्यादीति ॥ पुनरुपादानस्य तात्पर्य्यमाह । उद्गीथेति ॥ आदिशब्देन पूर्वोक्तान्युपासनानि गृह्यन्ते । उद्गीथस्य तैर्व्यवहितत्वात्प्रकरणविच्छेदशङ्कायां ततोऽन्यस्मिन्नर्थे प्रसङ्गः स्यात् स माभूदित्येवमर्थं पुनरुपादानमित्यर्थः । देवा वै मृत्योरित्यादेस्तात्पर्य्यमाह । प्रकृतस्येति ॥ अक्षरव्याख्यानप्रसावनुवादभागं प्रत्याह ॥ ओमित्यादीति ॥ देवासुरा ह वै यत्रेत्यत्र व्याख्याता देवाः मारकादसुरात्पाप्मनः सकाशादिति यावत् ॥ कोऽयं कर्म्मणि प्रवेशो नाम तत्राह । वैदिकमिति ॥ तदिति वैदिकं कर्म्मोच्यते तं छन्दोभिरित्यादि व्याचष्टे । किञ्चेति ॥

उ॰ छन्दोभिरच्छादयन्यदेभिरच्छादयꣳस्तच्छन्दसां छन्दस्त्वं ॥ २ ॥ तानु तत्र मृत्युर्यथा मत्स्यमुदके परिपश्येदेवं पर्य्यपश्यदृचि साम्नि यजुषि।



भा॰ किञ्च ते कर्मण्यविनियुक्तैः छन्दोभिर्मन्त्रैर्जपहोमादि कुर्व्वन्त आत्मानं कर्मान्तरेष्वच्छादयन् छादितवन्तः। यद्यस्मादेभिर्मन्त्रैराच्छादयंस्तस्माच्छन्दसां मन्त्राणां छादनाच्छन्दस्त्वं प्रसिद्धमेव। तांस्तत्र देवान् कर्मपरान्मृत्युर्यथा लोके मत्स्यघातको मत्स्यमुदके नातिगम्भीरे परिपश्येद्बडिशोदकस्रावोपायसाध्यं मन्यमान एवं पर्य्यपश्यद्दृष्टवान् मृत्युः। कर्मक्षयोपायसाध्यान् देवान् मेने इत्यर्थः। क्वासौ देवान्ददर्शेत्युच्यते। ऋचि साम्नि यजुषि। ऋग्यजुःसामसम्बन्धिकर्मणीत्यर्थः ॥

---

व्या॰ नहि सर्व्वे मन्त्राः सर्व्वत्र विनियुज्यन्ते। तथा चैकस्मिन् कर्म्मणि अनुष्ठीयमाने विनियुक्तान् मन्त्रान् हित्वा कर्म्मान्तरेष्ववशिष्टैर्जपादि कुर्व्वन्तः स्वात्मानं देवाश्छादितवन्तः। तस्मान्न मृत्युवश्यता तेषामित्यर्थः॥ तेषां छन्दोभिश्छादितत्वे छन्दसा छन्दस्त्वप्रकारमभिनयति। तस्मादिति॥ कर्म्मानुतिष्ठतां देवानां मृत्युवश्यता न व्यावर्त्ततेत्याह। तानिति॥ तत्रेति वैदिककर्म्मप्रारम्भोक्तिः। उ शब्दोऽप्यर्थः। यथोक्तकर्म्मपरानपि तान्मृत्युः पर्य्यपश्यदिति सम्बन्धः॥ कर्म्मणां मृत्युपदगोचरत्वं दृष्टान्तेनाह। यथेति॥ दार्ष्टान्तिकभागस्य विवक्षितमर्थं गृह्णाति। मृत्युरिति॥ दार्ष्टान्तिके क्षुद्रोदकस्थानीयं किं स्यादिति प्रश्नपूर्व्वकं दर्शयति। क्वासावित्यादिना॥ ऋगादीनां नित्यत्वेन क्षयाभावान्न क्षुद्रोदकस्थानीयतेत्याशङ्क्य विवक्षितमर्थमाह। ऋगिति॥ कर्म्मणस्तु कृतकत्वेन फलतः स्वरूपतश्च क्षयिता प्रसिद्धेति भावः॥ मृत्युपरिहारोपायमुपदिशति॥

उ॰ ते नु विदित्वोर्द्ध्वा ऋचः साम्नो यजुषः स्वरमेव प्राविशन् ॥ ३ ॥ यदा वा ऋचमाप्नोत्योमित्येवातिस्वरत्येवꣳ सामैवं यजुरेष उ स्वरो यदेतदक्षरमेतदमृतमभयं तत्प्रविश्य देवा अमृता अभया अभवन् ॥ ४ ॥

---

भा॰ ते नु देवा वैदिकेन कर्म्मणा संस्कृताः शुद्धात्मानः सन्तो मृत्योश्चिकीर्षितं विदितवन्तः। विदित्वा च तदूर्द्ध्वा व्यावृत्ताः कर्म्मभ्यः ऋचः साम्नो यजुषः ऋग्यजुःसामसम्बद्धात्कर्म्मण: अभ्युत्थायेत्यर्थः। तेन कर्म्मणा मृत्युभयापगमं प्रति निराशास्तदपास्यामृताभयगुणमक्षरं स्वरशब्दितं प्राविशन्नेव प्रविष्टवन्तः। ॐकारोपासनपराः संवृत्ताः। एवशब्दोऽवधारणार्थः सन् समुच्चयप्रतिषेधार्थः। तदुपासनपराः संवृत्ता इत्यर्थः। कथं पुनः स्वरशब्दवाच्यत्वमक्षरस्येत्युच्यते। यदा वै ऋचमाप्नोत्योमित्येवातिस्वरत्येवं सामैवं

---

आ॰ ते नु देवा इत्यादिना कर्म्मभ्यः सकाशादूर्द्ध्वा व्यावृत्ता इत्यर्थः। सर्व्वकर्म्मसङ्ग्रहार्थं कर्म्मभ्य इति बहुवचनं। अवैदिककर्म्मत्यागस्य कर्म्मिष्वपि सिद्धत्वाद्वैदिककर्म्मत्यागार्थं विशिनष्टि। ऋच इति॥ कर्म्मत्यागमात्रात्कृतकृत्यताशङ्कां वारयति। तेनेति॥ किन्तदक्षरं तदाह। ॐकारेति॥ उदात्तादिरूपत्वाभावादक्षरस्य न स्वरशब्दत्वमित्याशङ्क्य परिहरति। कथमित्यादिना॥ ऋचमाप्नोत्यध्ययनेन स्वाधीनं करोतीत्यर्थः। अतिस्वरत्यतिशयेनादरधियोच्चारयतीति यावत्॥ ऋग्यजुःसाम्नां प्रत्येकमोंकारोच्चारणद्वारेणै-

उ० स य एतदेवं विद्वानक्षरं प्रणौत्येतदेवाक्षरꣳ स्वरममृतमभयं प्रविशति तत्प्रविश्य यदमृता देवास्तदमृतो भवति ॥ ५ ॥ तृतीयस्य चतुर्थः खण्डः ॥ ४ ॥

---

भा० यजुः । एष एव उ स्वरः । कोऽसौ यदेतदक्षरमेतदमृतमभयं तत्प्रविश्य यथागुणमेवामृता अभयाश्चाभवन्देवाः ।

स योऽन्योऽपि देववदेवैतदक्षरमेवममृताभयगुणं विद्वान् प्रणौति स्तौति उपासनमेव चात्र स्तुतिरभिप्रेता स तथैवैतदेवाक्षरं स्वरममृतमभयं प्रविशति तत् प्रविश्य च राजकुलं प्रविष्टानामिव राज्ञोऽन्तरङ्गवहिरङ्गतावन्न परस्य ब्रह्मणोऽन्तरङ्गवहिरङ्गताविशेषः । किन्तर्हि यदमृता देवा येनामृतत्वेन यदमृता अभूवन् तेनैवामृतत्वेन विशिष्टस्तदमृतो भवति न न्यूनता नाप्यधिकता अमृतत्व इत्यर्थः ॥

---

वाप्तिदर्शनादित्यतिशब्दार्थः । उ शब्दोऽपिपर्य्यायः । सम्प्रतिपन्नस्वरवदिति दृष्टान्तार्थः ॥

आ० अमृतमभयं तथाविधब्रह्मप्रतीकत्वादित्यर्थः । तत् प्रविश्य ब्रह्मबुद्ध्या तद्ध्यानं कृत्वेत्यर्थः ॥ भवतु देवानामेवमस्माकन्तु किमायातमित्याशङ्क्याह । स योऽन्योऽपीति ॥ राजगृहं प्रविष्टस्य विशेषदर्शनादक्षरं प्रविष्टस्यापि फले विशेषः स्यादित्याशङ्क्याह । तत् प्रविश्येति ॥ अमृतत्वेन विशिष्टा इति शेषः ॥ ४ ॥

उ॰ अथ खलु य उद्गीथः स प्रणवो यः प्रणवः स उद्गीथ इत्यसौ वा आदित्य उद्गीथ एष प्रणव ओमिति ह्येष स्वरन्नेति ॥ १ ॥

---

भा॰ प्राणादित्यदृष्टिविशिष्टस्योद्गीथस्योपासनमुक्तमेवानूद्य प्रणवोद्गीथयोरेकत्वं कृत्वा तस्मिन् प्राणरश्मिभेदगुणविशिष्टदृष्ट्याऽक्षरस्योपासनमनेकपुत्रफलमिदानीं वक्तव्यमित्यारभ्यते। अथ खलु य उद्गीथः स प्रणवो बह्वृचानां। यश्च प्रणवस्तेषां स एव छान्दोग्य उद्गीथशब्दवाच्योऽसौ वादित्य उद्गीथ एष प्रणवः प्रणवशब्दवाच्योऽपि स एव बह्वृचानां नान्य उद्गीथ आदित्यः कथं उद्गीथाख्यमक्षरमोमित्येतदेष हि यस्मात् स्वरन्नुच्चारयन्ननेकार्थत्वाद्धातूनां। अथवा स्वरन् गच्छन्नेति अतोऽसावुद्गीथः सविता॥

---

व्या॰ खण्डान्तरस्य तात्पर्य्यमाह। प्राणादित्येति॥ प्रणवस्योद्गीथस्य चैकत्वं कृत्वा तस्मिन् सत्यध्यात्मं प्राणदृष्ट्याऽधिदैवतमादित्यदृष्ट्या च विशिष्टस्योद्गीथस्य यदुपासनमुक्तं तदेवानूद्य निन्दित्वा प्राणानां रश्मीनां च भेद एव गुणस्तद्विशिष्टदृष्ट्या तस्यैवोद्गीथावयवस्याक्षरस्यानेकपुत्रफलमुपासनमनेन ग्रन्थेन वक्तव्यमित्युत्तरो ग्रन्थः सम्प्रति प्रस्तूयत इत्यर्थः। अमृताभयगुणकाक्षरोपासनानन्तर्य्यमथशब्दार्थः। प्रणवोद्गीथयोरेकत्वे वैदिकप्रसिद्धिप्रदर्शनार्थं खल्वित्युक्तं। तयोरेकत्वमुक्त्वा आदित्यदृष्ट्योद्गीथोपास्तिमुक्तामनुवदति। असाविति॥ उद्गीथादित्ययोरेकत्वं प्रश्नपूर्व्वकमुपपादयति। उद्गीथ इत्यादिना॥ उच्चारयन्नेतीति सम्बन्धः॥ स्वरतेर्गत्यर्थत्वात्कथमुच्चारयतीत्युच्यते तत्राह। अनेकार्थत्वादिति॥

उ० एतमु एवाहमभ्यगासिषं तस्मान्मम त्वमेकोऽसीति ह कौषीतकिः पुत्रमुवाच रश्मीꣳस्त्वं पर्य्यावर्त्तयाद्बहवो वै ते भविष्यन्तीत्यधिदैवतं ॥ २ ॥ अथाध्यात्मं य एवायं मुख्यः प्राणस्तमुद्गीथमुपासीतोमिति ह्येष स्वरन्नेति ॥ ३ ॥

---

भा० तमेतमु एवाहमभ्यगासिषमाभिमुख्येन गीतवानस्म्यादित्यरश्म्यभेदं कृत्वा ध्यानं कृतवानस्मीत्यर्थस्तेन तस्मात् कारणान्मम त्वमेकोऽसि पुत्र इति ह कौषीतकिः कुषीतकस्यापत्यं कौषीतकिः पुत्रमुवाचोक्तवान्। अतो रश्मीनादित्यञ्च भेदेन त्वं पर्य्यावर्त्तयात्पर्य्यावर्त्तयेत्यर्थः । त्वं योगादेवं बहवो वै ते तव पुत्रा भविष्यन्तीत्यधिदैवं। अथानन्तरमध्यात्ममुच्यते। य एवायं मुख्यः प्राणस्तमुद्गीथमुपासीतेत्यादि । तथा पूर्ववदोमिति ह्येष प्राणोऽपि स्वरन्नेत्योमिति ह्यनुज्ञां कुर्व्वन्निव वागादिप्रवृत्त्यर्थमेतीत्यर्थः ।

---

आ० गच्छन् सविता प्राणिनां प्रवृत्त्यर्थमोमित्यनुज्ञां कुर्व्वन्निव गच्छति तस्मादोङ्कारत्वं सवितुरित्याह । अथवेत्यादिना ॥ आदित्यदृष्ट्योद्गीथमुपदिष्टमनूद्य निन्दति। तमेतमिति॥ निन्दाफलं दर्शयति। अत इति॥ पर्य्यावर्त्तयादिति प्रथमपुरुषे श्रूयमाणे किमिति मध्यमपुरुषो व्याख्यायते तत्राह। त्वं योगादिति॥ युष्मद्युपपदे मध्यमपुरुषविधानादित्यर्थः ॥ रश्मिभेदगुणदृष्टिविशिष्टोद्गीथोपासनस्य फलं कथयति। एवमिति ॥ वक्ष्यमाणोऽध्यात्मबुद्धिसमाधानार्थमुक्तं ॥ देवताविषयं दर्शनमुपसंहरति। इत्यधिदैवतमिति॥ अध्यात्मप्राणदृष्ट्योद्गीथोपास्तिमुक्तामनुवदति। अथेत्यादिना। कथं प्राणोद्गीथयोरेकत्वमित्याशङ्क्याह। तथेति ॥ यथा प्राणिनां प्रवृत्त्यर्थमोमित्यनुज्ञां कुर्व्वन्निवादित्यो गच्छतीत्युक्तं तद्वदिति यावत्॥

उ  एतमु एवाहमभ्यगासिषं तस्मान्मम त्वमेकोऽसीति ह कौषीतकिः पुत्रमुवाच प्राणाꣳस्त्वं भूमानमभिगायताद्बहवो मे भविष्यन्तीति ॥ ४ ॥

---

भा० न हि मरणकाले मुमूर्षोः समीपस्थाः प्राणस्योङ्करणं पश्यन्तीति । एतत्सामान्यादादित्येऽप्योङ्करणमनुज्ञामात्रं द्रष्टव्यं । एवमु एवाहमभ्यगासिषमित्यादि पूर्ववदेव । अतो वागादीन् मुख्यञ्च प्राणं भेदगुणविशिष्टमुद्गीथं पश्यन् भूमानं मनसाऽभिगायतात् । पूर्ववदावर्त्तयेत्यर्थः । बहवो वै मे मम पुत्रा भविष्यन्तीत्येवमभिप्रायः सन्नित्यर्थः । प्राणादित्यैकत्वोद्गीथदृष्टेरेकपुत्रत्वफलदोषेणापोदितत्वाद्रश्मिप्राणभेददृष्टेः कर्त्तव्यता चोद्यतेऽस्मिन् काण्डे बहुपुत्रफलत्वार्थं ॥

---

व्या० उक्तमेव व्यतिरेकद्वारा स्फोरयति । न हीति ॥ मुमूर्षुसमीपवर्त्तिनो बन्धवो मरणकाले प्राणस्य वागादिप्रवृत्त्यर्थमनुज्ञाकरणं नैव जानन्ति । तथा च जीवदवस्थायामोमिति तदनुज्ञावशादेव वागादीनां प्रवृत्तिरालक्ष्यते ॥ तस्मात्प्राणस्यानुज्ञामात्रमोङ्करणमित्यर्थः । प्राणादित्ययोरध्यात्माधिदैवतयोरुद्गीथत्वाविशेषात्प्राणवदादित्येऽप्यनुज्ञामात्रमोङ्करणमवधेयमित्याह । एतत्सामान्यादिति ॥ प्राणदृष्ट्योक्तामुद्गीथोपास्तिं निन्दित्वा विवक्षितामुपास्तिमुपन्यस्यते । एतमु एवेति ॥ भूमानं बहुत्वोपेतमिति यावत् । मध्यमपुरुषे तातङादेशस्य वैकल्पिकत्वेऽपि प्रथमपुरुषशङ्काया दुरन्वयं व्यावर्त्तयति । पूर्ववदिति ॥ एकत्वदृष्टिनिन्दाद्वारा प्रधानोपासनं सफलमुपसंहरति । प्राणेत्यादिना ॥

उ॰ अथ खलु य उद्गीथः स प्रणवो यः प्रणवः स उद्गीथ इति होतृषदनाद्धैवापि दुरुद्गीथमनुसमाहरतीत्यनुसमाहरतीति ॥ ५ ॥ तृतीयस्य पञ्चमः खण्डः ॥ ५ ॥

---

भा॰ अथ खलु य उद्गीथ इत्यादिप्रणवोद्गीथैकत्वदर्शनमुक्तं तस्यैतत्फलमुच्यते। होतृषदनाद्धोता यत्रस्थः शंसति तत्स्थानं होतृषदनं हौत्रात्कर्म्मणः सम्यक् प्रयुक्तादित्यर्थः। न हि देशमात्रात्फलमाहर्त्तुं शक्यं किन्तद्ध एवापि दुरुद्गीतं दुष्टमुद्गीतमुद्गानं कृतं उद्गाता स्वकर्म्मणि क्षतं कृतमित्यर्थस्तदनुसमाहरत्यनुसन्धत्त इत्यर्थः। चिकित्सयेव धातुवैषम्यशमीकरणमिति ॥ ५ ॥

---

ष्या॰ पूर्व्वोत्तरयोर्ग्रन्थयोरसङ्गतिमाशङ्क्य तात्पर्य्यप्रदर्शनपूर्व्वकमुत्तरग्रन्थमवतार्य्य व्याकरोति। अथेत्यादिना ॥ ननु यथाश्रुतं स्थानं होतृषदनं किं नेष्यते तत्राह। न हीति ॥ हौत्रात्कर्म्मणो यत्फलमाह्रियते तत्प्रश्नपूर्व्वकमविशेषतो दर्शयति। किन्तदित्यादिना ॥ निपातद्वयमवधारणातिशयफलकं क्रियापदेन सम्बध्यते। अपिशब्दस्तु निष्ठानन्तरभावितया नेतव्यः ॥ दुष्टमुद्गानमेव स्पष्टयति। उद्गात्रेति ॥ कथमन्यनिष्ठात्कर्म्मणोऽप्यत्र फलमाहर्त्तुं शक्यमित्याशङ्क्याह। चिकित्सयेति ॥ उद्गात्रा प्रणवोद्गीथैकत्वविज्ञानमाहात्म्यात्प्रमादिकं स्वकर्म्मणि प्राप्तं क्षतं हौत्रात् कर्म्मणः सम्यक् प्रयुक्तात्प्रणवात्प्रतिसन्दधातीत्यर्थः ॥ ५ ॥

उ॰ इयमेवर्गग्निः साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयत इयमेव साऽग्निरमस्त-

---

भा॰ अथेदानीं सर्व्वफलसम्पत्त्यर्थमुद्गीथस्योपासनान्तरं विधित्स्यते। इयमेव पृथिव्यृक्। ऋचि पृथिवीदृष्टिः कार्य्या। तथाग्निः साम। सामन्यग्निदृष्टिः। कथं पृथिव्यग्न्योर्ऋक्सामत्वमिति। उच्यते। तदेतदग्न्याख्यं सामैतस्यां पृथिव्यामृच्यध्यूढमधिगतमुपरिभावेन स्थितमित्यर्थः। ऋचीव साम। तस्मादत एव कारणादृच्यध्यूढमेव साम गीयत इदानीमपि सामगैः। यथा च ऋक्सामनी नात्यन्तभिन्नेऽन्योन्यं तथैतौ पृथिव्यग्नी॥

---

आ॰ इयमेवेत्यादिसन्दर्भस्य तात्पर्य्यमाह। अथेति॥ पूर्व्वमैश्वर्य्यैकदेशविषयोपासनोपदेशानन्तरमवसरे प्राप्ते ज्योतिष्टोमादावधिकृतस्य समग्रैश्वर्य्यप्राप्त्यर्थमधिदैवाध्यात्मविभागेनोद्गीथविषयमेवापूर्व्वमुपासनमस्मिन् ग्रन्थे विधातुमिष्टमित्यर्थः॥ तत्र तदङ्गभूतमुपासनमादौ विदधाति। इयमेवेति॥ पृथिव्यामृग्दृष्टिरत्र नेष्टा कर्म्माङ्गस्य संस्कर्त्तव्यत्वादित्यभिप्रेत्याह। ऋचीति॥ ऋचि यथा पृथिवीदृष्टिरनन्तरवाक्ये विहिता तथाग्निः सामेत्यत्राग्निदृष्टिः साम्नि विधीयते पूर्व्ववदित्याह। तथेति॥ ऋक्त्वं पृथिव्याः सामत्वञ्चाग्नेरप्रसिद्धमिति शङ्कते। कथमिति॥ ऋक्सामत्वसिद्धिरित्युत्तरमाह। उच्यत इति॥ तयोराधाराधेयभावे गमकं दर्शयति। तस्मादिति॥ ऋचि पृथिवीदृष्टिः साम्नि चाग्निदृष्टिरित्यत्र हेत्वन्तरमाह। यथा चेति॥

उ॰ त्साम ॥ १ ॥ अन्तरिक्षमेवर्ग्वायुः साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयतेऽन्तरिक्षमेव सा वायुरमस्तत्साम ॥ २ ॥ द्यौरेवर्गादित्यः साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयते द्यौरेव साऽऽदित्योऽमस्तत्साम ॥ ३ ॥ नक्षत्राण्येवर्क्चन्द्रमाः साम तदेतस्यामृच्यध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयते नक्षत्राण्येव सा चन्द्रमा अमस्तत्साम ॥ ४ ॥ अथ यदेतदादित्यस्य शुक्लं भाः सैवर्गथ यन्नीलं

---

भा॰ कथमियमेव पृथिवी सा सामनामार्द्धशब्दवाच्या इतरार्द्धशब्दवाच्योऽग्निरमस्तदेतत्पृथिव्यग्निद्वयं सामैकशब्दाभिधेयत्वमापन्नं साम। तस्मान्नान्योन्यं भिन्नं पृथिव्यग्निद्वयं नित्यसंश्लिष्टमृक्सामनी इव । तस्माच्च पृथिव्यग्न्योः ऋक्सामत्वमित्यर्थः । सामाक्षरयोः पृथिव्यग्निदृष्टिविधा-

---

व्या॰ पृथिव्यग्न्योरत्यन्तभेदाभावं प्रश्नपूर्व्वकं प्रकटयति। कथमित्यादिना ॥ कर्म्माङ्गयोः सह प्रयोगादृक्सामयोरन्योन्यमव्यभिचारान्नात्यन्तभेदस्तथा पृथिव्यग्न्योरप्येकशब्दवाच्यत्वान्नात्यन्तं भिन्नतेत्यर्थः ॥ तयोरत्यन्तभेदाभावे फलितमाह। तस्माच्चेति ॥ पृथिवी साशब्दवाच्या स्त्रीत्वादग्निरमः पुंस्त्वादिति द्रष्टव्यं ॥ पक्षान्तरमुत्थाप्याङ्गीकरोति । सामाक्षरयोरिति ॥ कथं पुनर्नक्षत्रपर्य्याये तदेतदेतस्यामित्यादि वाक्यं। न हि नक्षत्रेषु चन्द्रमसः स्थितिरत आह । नक्षत्राणामिति ॥ नक्षत्राधिपत्यात्तदुपरिभावेन चन्द्रमसः स्थितेरित्यतः शब्दार्थः ॥ नक्षत्रसहितं चन्द्रमसं

उ० परः कृष्णं तत्साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयते ।५। अथ यदेवैतदादित्यस्य शुक्लं भाः सैव साऽथ यन्नीलं परः कृष्णं तदमस्तत्सामाथ य एषोऽन्तरादित्ये हिरण्मयः

---

भा० नार्थसियमेव साग्निरम इति केचित्। अन्तरिक्षमेवर्ग्वायुः सामेत्यादि पूर्ववत्। नक्षत्राणामधिपतिश्चन्द्रमा। अतः स साम। अथ यदेतदादित्यस्य शुक्लं भाः शुक्ला दीप्तिः सैवर्क्। अथ यदादित्ये नीलं परः कृष्णं परोऽतिशयेन कार्ष्ण्यं तत्साम। तद्ध्येकान्तसमाहितदृष्टेर्दृश्यते। अतएवैते भाःशुक्लकृष्णत्वे सा चामश्च साम। अथ य एषोऽन्तरादित्ये आदित्यस्यान्तर्मध्ये हिरण्मयो हिरण्मय इव हिरण्मयो नहि सुवर्णविकारत्वं देवस्य सम्भ-

---

आ० परामर्ष्टं स शब्दः। अङ्गोपासनानि कानिचिदुक्त्वा तादृगेवोपासनान्तरमाह। अथेति॥ आदित्यस्य मण्डलात्मनो यद्रूपं शुक्लं दृश्यते ऋचि तद्दृष्टिः कर्त्तव्येत्यर्थः॥

तदेव रूपं विशिनष्टि। भा इति॥ तामेव व्याचष्टे। शुक्ला दीप्तिरिति॥ ऋचि यथा पूर्वोक्तरूपदृष्टिस्तथा साम्नि वक्ष्यमाणरूपदृष्टिरनुष्ठेयेत्याह। अथेति॥ नन्वादित्ये शौक्लवदतिशयं कार्ष्ण्यं नास्माभिरनुभूयते तत्राह। तद्धीति॥ एकान्तेन समाहिता शास्त्रसंस्कृता यस्य दृष्टिस्तस्यादित्ये निरतिशयं कार्ष्ण्यं दृश्यते तथा च तद्दृष्टिः साम्नि क्षिप्तेत्यर्थः॥ अथ यदेवैतदित्यादेस्तात्पर्यमाह। अत एवेति॥ अङ्गोपासनानि समाप्यानन्तरमाधिदैविकीं प्रधानोपासनां विवक्षुरुपास्यस्वरूपमुपन्यस्यति। अथेत्यादिना॥ किमिति हिरण्मयपदमुपमार्थं व्याख्यायते॥ हिरण्यविकारत्वमेवात्र विवक्षितं किं न स्यादित्याशङ्क्याह।

उ॰ पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णः ॥ ६ ॥ तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति नाम स एष

---

भा॰ वति ऋक्सामगेष्णत्वापहतपाप्मत्वासम्भवात्। नहि सौवर्णे ऽचेतने पाप्मादिप्राप्तिरस्ति येन प्रतिषिध्येत चाक्षुषे चाग्रहणात्। अतो लुप्तोपम एव हिरण्मयशब्दो ज्योतिर्मय इत्यर्थः ॥ ८ ॥

उत्तरेष्वपि समाना योजना। पुरुषः पुरि शयनात्पूरयति वा स्वेनात्मना जगदिति दृश्यते निवृत्तचक्षुर्भिः समाहितचेतोभिर्ब्रह्मचर्य्यादिसाधनापेक्षैस्तेजस्विनोऽपि श्मश्रुकेशादयः कृष्णाः स्युरित्यतो विशिनष्टि । हिरण्यश्मश्रुर्हिरण्यकेश इति॥ ज्योतिर्मयान्येवास्य श्मश्रूणि केशाश्चेत्यर्थः।

---

व्या॰ न हीति ॥ अपहतपाप्मत्वासम्भवं साधयति। न हीत्यादिना॥ पाप्मादीत्यादिपदं तत्कार्य्यत्वसङ्ग्रहार्थं। किञ्च चक्षुष्युपास्ये पुरुषे सुवर्णविकारस्याग्रहणाद्गौणमेव हिरण्मयपदमित्याह। चाक्षुषे चेति ॥ न च तत्राप्यातिदेशिकं तद्ग्रहणं ऋक्सामगेष्णत्वादिना तादृशेन विरोधात्तस्माद्गौणमेव हिरण्मयपदमित्युपसंहरति। अत इति ॥

हिरण्यश्मश्रुरित्यादिविशेषणेष्वपि तुल्यं गौणत्वमित्याह । उत्तरेष्वपीति ॥ नन्वादित्यादिमण्डले पुरुषो नास्माभिर्दृश्यते तत्राह । निवृत्तचक्षुर्भिरिति ॥ विशिष्टाधिकारिणामादित्यपुरुषदर्शनमुपपादयति । ब्रह्मचर्य्यादीति ॥ सर्व्व एव सुवर्ण इति विशेषणादक्ष्णोरपि सुवर्णत्वप्राप्तौ प्रत्याह । तस्येति ॥ विशेषमेव प्रश्नपूर्व्वकं विशदयति। कथमित्यादिना॥ यथा कप्या-

उ॰ सर्व्वेभ्यः पाप्मभ्य उदित उदेति ह वै सर्व्वेभ्यः पाप्मभ्यो य एवं वेद ।७।

---

भा॰ आप्रणखात् प्रणखो नखाग्रं नखाग्रेण सह सर्व्वः सुवर्ण इव भारूप इत्यर्थः। तस्यैवं सर्व्वतः सुवर्णवर्णस्याप्यक्ष्णोर्विशेषः कथं तस्य यथा कपेर्मर्कटस्यासः कप्यासः। आसेरुपवेशनार्थस्य करणे घञ् कपिपृष्ठान्तो येनोपविशति। कप्यास इव पुण्डरीकमत्यन्ततेजस्व्येवमस्य देवस्याक्षिणी॥

उपमितोपमत्वान्न हीनोपमा तस्यैवंगुणविशिष्टस्य गौणमिदं नामोदिति। कथं गौणत्वं। स एष देवः सर्व्वेभ्यः पाप्मभ्यः पाप्मना सह तत्कार्य्येभ्य इत्यर्थः। य आत्मापहतपाप्मेत्यादि वक्ष्यति। उदित उत् इत उद्गत इत्यर्थोऽतोऽ

---

आ॰ सवह्यवस्थितं पुण्डरीकं तथा तस्याक्षिणी इति योजना॥ आसशब्दनिष्पत्तिप्रकारं सूचयति। आसेरिति॥ घञन्तस्य शब्दस्य विवक्षितमर्थं कथयति। कपीति॥ तस्य करणत्वं स्फुटयति। येनेति॥ कपिः स कपिरष्ठान्तः कप्यास इति शेषः॥ पदार्थमुक्त्वा वाक्यार्थमाह। कप्यास इवेति॥

निहीनोपमया देवस्य चक्षुषी व्यपदिशता तयोरपि निहीनत्वं व्यवदिष्टं स्यादित्याशङ्क्याह। उपमितेति॥ कप्यासेनोपमितं पुण्डरीकं तेनोपमानेनोपमितत्वाच्चक्षुषोर्न निहीनोपमानप्रयुक्तं निहीनत्वमित्यर्थः॥ यथोक्तस्यादित्यपुरुषस्य क्षेत्रज्ञत्वशङ्कां व्यावर्त्तयितुं नाम व्यपदिशति। तस्येति॥ नाम्नो गौणत्वं शङ्काद्वारा व्युत्पादयति। कथमित्यादिना॥ तस्य न सर्व्वपाप्मोदयस्तत्कार्य्यभावादित्याशङ्क्याह। पाप्मनेति॥ आदित्यक्षेत्रज्ञेऽपि सर्व्वपाप्मोदयः सम्भवति। न ह वै देवान्पापं गच्छतीति श्रुतेरित्याशङ्क्य परमात्मविषयवाक्यशेषमुदाहरति। य आत्मेति॥ उक्तार्थ-

उ॰ तस्यर्क्च साम च गेष्णौ तस्मादुद्गीथस्तस्मात्त्वेवोद्गातैतस्य हि गाता स एष ये चामुष्मात्पराञ्चो

भा॰ यावुन्नामा तमेवंगुणसम्पन्नमुन्नामानं यथोक्तेन प्रकारेण यो वेद सोऽप्येवमेवोदेत्युद्गच्छति सर्व्वेभ्यः पाप्मभ्यः । ह वै इत्यवधारणार्थौ निपातौ । उदेत्येवेत्यर्थः ॥

तस्योद्गीथत्वं देवस्यादित्यादीनामिव विवक्षितत्वाद्ध । तस्यर्क् साम च गेष्णौ पृथिव्याद्युक्तलक्षणे पर्व्वणी । सर्व्वात्मा हि देवः परापरलोककामेशितृत्वादुपपद्यते । पृथिव्यग्न्याद्यृक्सामगेष्णत्वं सर्व्वयोनित्वाच्च । यत एवमुन्नामा चासावृक्सामगेष्णश्च तस्मादृक्सामगेष्णत्वप्राप्तमुद्गीथत्वमुच्यते

---

व्या॰ योगोऽतःशब्दार्थः ॥ उपास्य परमात्मानमुपन्यस्य तदुपासनमिदानीं सफलमुपन्यस्यति । तमेव गुणसम्पन्नमिति ॥ यथोक्तेन प्रकारेणोन्नामानमिति सम्बन्धः ॥ कथं परस्योपासनमित्यपेक्षायामुद्गीथे सम्पाद्येति दर्शयति । तस्येत्यादिना ॥

यथाऽऽदित्यादीनामुद्गीथे सम्पाद्योपासनमत्र विवक्ष्यते तथा परमात्मनोऽपि तत्र सम्पाद्योपासनं विवक्षितत्वात् सर्व्वर्क्सामात्मत्वमाह तस्येत्यादिवाक्यमित्यर्थः ॥ मण्डलावच्छिन्नस्य पुरुषस्य कथमृगादिगेष्णत्वमित्याशङ्क्याह । सर्व्वात्मेति ॥ परस्य स्वारस्येन सर्व्वात्मत्वादाध्यानार्थं मण्डलावच्छेदादुपपन्नमृगादिगेष्णत्वमित्यर्थः ॥ तत्रैव हेत्वन्तरमाह । परापरेति ॥ सर्व्वात्मत्वं साधयति । सर्व्वयोनित्वादिति ॥ सर्व्वकारणत्वेन सर्व्वात्मत्वादृगादिगेष्णत्वं युक्तमेवेत्यर्थः ॥ तस्मादुद्गीथ इति वाक्यं योजयति । यत इति । प्राप्ते सति तस्मादुद्गीथ इत्यनेन वाक्येनोद्गीथत्वं परोक्षेण नाम्ना देवस्योच्यत इति योजना ॥ किमिति ॥ परोक्षनाम्ना देवो व्यपदिश्यत इत्याशङ्क्य परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विष-

उ॰ लोकास्तेषां चेष्टे देवकामानां चेत्यधिदैवतं ॥ ८ ॥ ६ ॥ तृतीयस्य षष्ठः खण्डः ॥

---

भा॰ परोक्षेण परोक्षप्रियत्वाद्देवस्य तस्मादुद्गीथ इति। तस्मात्त्वेव हेतोरुद्गायतीत्युद्गाता। यस्माद्गीतस्य यथोक्तस्योन्नाम्नो गाताऽसौ अतो युक्ता उद्गातेति नामप्रसिद्धिरुद्गातुः॥

स एष देव उन्नामा ये चामुष्मादादित्यात्पराञ्चः परागञ्चनादूर्द्ध्वा लोकास्तेषां लोकानाञ्चेष्टे न केवलमीशित्वमेव च शब्दाद्धारयति च। सदाधारपृथिवीं द्यामुतेमामित्यादिमन्त्रवर्णात्। किञ्च देवकामानामिष्ट इत्येतदधिदैवतं देवताविषयं देवस्योद्गीथस्य स्वरूपमुक्तं॥ ६॥

---

व्या॰ इति श्रुत्यन्तरमाश्रित्याह। परोक्षप्रियत्वादिति॥ उन्नामत्वे देवस्योद्गातुरुद्गातृत्वप्रसिद्धिं प्रमाणयति। तस्मादिति॥ तच्छब्दार्थं स्फुटयति। यस्मादिति॥ प्रकृतस्योन्नाम्नो देवस्यागानादित्यतःशब्दार्थः। इद्गातुरुद्गातेति नामप्रसिद्धिरिति युक्तमिति योजना। सर्व्वपाप्मोदयलिङ्गात्तस्य चान्यत्रासम्भवात्॥ आदित्यान्तर्गतो देवः परात्मेत्युक्तं तत्रैव हेत्वन्तरमाह। स एष इति॥ देवकामानामादित्यादुपरितनलोकेष्वधिष्ठातारो ये देवास्तेषां कामाः काम्यमानफलविशेषास्तेषामिति यावत्। न हि निरङ्कुशं लोककामेशितृत्वं परस्मादन्यत्र सम्भवत्येष सर्व्वेश्वर इति श्रुतेरितिभावः। आधिदैविकोपास्त्यानन्तर्य्यमथशब्दार्थः॥ ऋचि वागदृष्टिः साम्नि प्राणदृष्टिश्च कर्त्तव्येत्यत्र हेतुमाह। अधेति॥ कथमृक्सामयोरिव वाक्प्राणयोरधरोपरिस्थानत्वं तत्राह। प्राण इति॥ स्थानमात्रत्वं व्यावर्त्तयति। सह्येति॥ भोक्तारं व्यावर्त्तयति। आत्मेति॥ छायात्मनः सामत्वे हेतुमाह। तत्स्थत्वादिति॥ चक्षुषि छायात्मनः स्थितत्वादृचि सामवदित्यर्थः

उ० अथाध्यात्मं वागेवर्क्प्राणः साम तदेतस्यामृच्य-
ध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयते वागेव
सा प्राणोऽमस्तत्साम । १ । चक्षुरेवर्गात्मा साम
तदेतदेतस्यामृच्यध्यूꣳ साम तस्मादृच्यध्यूढꣳ साम
गीयते । चक्षुरेव साऽऽत्माऽमस्तत् साम । २ ।
श्रोत्रमेवर्ङ्मनः साम तदेतदेतस्यामृच्यध्यूढꣳ साम
तस्मादृच्यध्यूढꣳ साम गीयते । श्रोत्रमेव सा मनो
ऽमस्तत्साम । ३ । अथ यदेतदक्ष्णः शुक्लं भाः
सैवर्गथ यन्नीलं परः कृष्णं तत्साम तदेतदेत-
स्यामच्यध्यूढꣳ साम तस्मादृच्यढꣳ साम गीयते
अथ यदेवैतदक्ष्णः शुक्लं भाः सैव साऽथ यन्नीलं
परः कृष्णं तदमस्तत्साम । ४ । अथ य एषोऽ

---

भा० अथाधुनाध्यात्ममुच्यते । वागेवर्क्प्राणः साम अध-
रोपरिस्थानत्वसामान्यात् । प्राणो घ्राणमुच्यते सह वायुना
वागेव सा प्राणोऽम इत्यादि पूर्ववत् । चक्षुरेवर्क् आत्मा
साम आत्मेति छायात्मा तत्स्थत्वात्साम श्रोत्रमेवर्ङ्मनः
साम श्रोत्रस्याधिष्ठातृत्वान्मनसः सामत्वं ॥

---

व्या० आधिदैविकोपास्त्यानन्तर्य्यमथशब्दार्थः ॥ ऋचि वाग्दृष्टिः
साम्नि वाग्दृष्टिश्च कर्त्तव्येत्यत्र हेतुमाह । अधरेति ॥ कथमृक्
सामयोरिव वाक्प्राणयोरधरोपरिस्थानत्वं तत्राह । प्राण
इति ॥ प्राणमात्रत्वं व्यावर्त्तयति । सहेति ॥ भोक्तारं व्यावर्त्तयति ।
आत्मेति । छायात्मनः सामत्वे हेतुमाह । तत्स्थत्वादिति । चक्षुषि
छायात्मनः स्थितत्वादृचि सामवदित्यर्थः ॥

उ॰ न्तरक्षिणि पुरुषो दृश्यते सैवर्वत्तत्साम तदुक्थं तद्यजुस्तद्ब्रह्म तस्यैतस्य तदेव रूपं यदमुष्य रूपं यावमुष्य गेष्णौ तौ गेष्णौ यन्नाम तन्नाम ॥ ५ ॥

---

भा॰ अथ यदेतदक्ष्णः शुक्लं भाः सैवर्क् अथ यन्नीलं परः कृष्णमादित्य इव दृक्शक्त्यधिष्ठानं तत्साम। अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते पूर्ववत् सैवर्गध्यात्मं वागाद्या पृथिव्याद्या चाधिदैवतं। प्रसिद्धा च ऋक् पादबद्धाऽक्षरात्मिका। तथा सामोक्थसाहचर्य्याद्वा स्तोत्रं साम ऋक्कृत्स्नं उक्थादन्यत्। तथा यजुः स्वाहास्वधावषडादि। सर्व्वमेव वाग्यजुस्तत्स एव।

---

आ॰ आध्यात्मिकानि कानिचिदङ्गोपासनान्युक्त्वानन्तरं प्रकारान्तरेणाङ्गोपासनमेव किञ्चिदुपदिशति। अथेति॥ अक्ष्णोर्यदेतद्रूपं शुक्लं दृश्यते ऋचि तद्दृष्टिः कर्त्तव्येत्यर्थः॥ तदेव रूपं विशिनष्टि। भा इति॥ ऋचि पूर्व्वोक्तरूपदृष्टिवदक्ष्यमाणरूपदृष्टिरपि साम्नि कर्त्तव्येत्याह। अथेति॥ यथादित्यमण्डले समधिगम्यमतिकृष्णरूपमुक्तं तथा चक्षुःष्वपि दृक्शक्तेरधिष्ठानं तादृग्रूपमुपलभ्यते तद्दृष्टिः साम्नि कर्त्तव्येत्यर्थः। आध्यात्मिकप्रधानोपासनशेषत्वेनाङ्गोपासनान्युक्त्वानन्तरं प्रधानोपासनाविषयं दर्शयति। अथेति॥ दृश्यत इति प्रयोगाच्छायात्माऽयमित्याशङ्क्याह। पूर्व्ववदिति॥ यथा पूर्व्वस्मिन्नाधिदैविके वाक्ये समाहितचेतोभिरादित्यपुरुषस्य दृश्यत्वमुक्तं तथा चाक्षुषपुरुषस्यापि विशिष्टाधिकारिभिरेव दृश्यत्वमेष्टव्यमित्यर्थः। छायात्मपक्षे वाक्यशेषविरोधमभिप्रेत्याह। सैवेति॥ येयमृगयथा व्याख्याता सा सर्व्वा स एव पुरुष इत्यर्थः॥ ऋच्युक्तं न्यायं साम्न्यतिदिशति। तथेति॥ यत्किञ्चित्साम तत्सर्व्वं स एव पुरुष इत्यर्थः॥ ऋक्सामशब्दयोरर्थान्तरमाह। उकथेति॥ ऋक्साम यददिति दृष्टान्तस्तथाशब्दार्थः॥

उ॰ स एष ये चैतस्मादर्वाञ्चो लोकास्तेषां चेष्टे

---

भा॰ सर्व्वात्मकत्वात्सर्व्वयोनित्वाच्चेति ह्यवोचाम ऋगादिप्रकरणात् । तद्ब्रह्मेति त्रयो वेदाः । तस्यैतस्य चाक्षुषस्य पुरुषस्य तदेव रूपमतिदिश्यते । किन्तद्यदमुष्यादित्यपुरुषस्य हिरण्मय इत्यादि यदधिदैवतमुक्तं यावमुष्य गेष्णौ पर्व्वणी तावेवास्यापि चाक्षुषस्य गेष्णौ । यच्चामुष्य नामोदित्युद्गीथ इति च तदेवास्य नामस्थानभेदात् रूपगुणनामातिदेशादीशितृत्वविषयभेदव्यपदेशाच्चादित्यचाक्षुषयोर्भेद इति चेत् । न । अमुना अनेनैवेत्येकस्योभयात्मप्राप्त्यनुपपत्तेः । द्विधाभावेनोपपद्यत इति चेत् । वक्ष्यति हि स एकधा भवति द्विधा भवति इत्यादि । न । चेतनस्यैकस्य निरवयवत्वाद्द्विधा-

---

व्या॰ कथमृगाद्यात्मत्वं परस्येत्याशङ्क्याह । सर्व्वात्मकत्वादिति ॥ ब्रह्मशब्दस्य परमात्मविषयं व्यावर्त्तयन्प्रकरणादित्युक्तन्यायेन त्रयो वेदाः स एव पुरुष इत्युपसंहारः ॥ छायात्मनो जडस्य व्यावृत्त्यर्थं रूपातिदेशं दर्शयति । तस्येति ॥ किन्तदादित्यपुरुषस्य रूपमित्यपेक्षायामाह । हिरण्मय इत्यादीति ॥ इतश्च नायं छायात्मेत्याह । यावमुष्येति ॥ नामातिदेशोऽप्येतमुपोद्बलयतीत्याह । यच्चेति ॥ आदित्यचाक्षुषयोरुपास्ययोर्भेदादुपासनापि भिन्नेति शङ्कते । स्थानेति ॥ आदित्यमण्डलं चक्षुश्चेति स्थाने भिद्येते रूपं हिरण्मयो हिरण्यश्मश्रुरित्यादि ऋगादिगेष्णत्वादिर्गुणः । उदित्यादि नाम तेषामतिदेशस्तस्यैतस्य तदेव रूपमित्यादिः । ये चामुष्मात्पराञ्चो लोकास्तेषां चेष्टे देवकामानां चेत्यधिदैवतं । ये चैतस्मादर्वाञ्चो लोकास्तेषां चेष्टे मनुष्यकामानां चेत्यध्यात्मं । इत्ययमीशितृत्वविषयो भेदव्यपदेशः । अतश्चैतयोर्भेदादुपासनमपि भिन्नमेवेत्यर्थः ॥

उ॰ मनुष्यकामानाश्नोति तद्य इमे वीणायां गायन्त्येतं ते गायन्ति तस्मात्ते धनसनयः । ६ ।

---

भा॰ भावानुपपत्तेः। तस्मादध्यात्माधिदैवतयोरेकत्वमेव। यत्तु रूपाद्यतिदेशो भेदकारणमवोचो न तद्भेदावगमाय। किं तर्हि स्थानभेदाद्भेदाशङ्का माभूदित्येवमर्थः। स एष चाक्षुषः पुरुषो ये चैतस्मादाध्यात्मिकादात्मनोऽर्वाञ्चोऽर्वाग्गता लोकास्तेषां चेष्टे मनुष्यसम्बन्धिनाञ्च कामानां तत्तस्माद्य इमे वीणायां गायन्ति गायकास्त एतमेव गायन्ति। यस्मादीश्वरं गायन्ति तस्मात्ते धनसनयो धनलाभयुक्ता धनवन्त इत्यर्थः॥

---

व्या॰ नोपास्यभेदादुपासनाभेदोऽस्तीति दूषयति। नेति॥ उपासकस्तावदमुनाऽऽदित्यात्मना पराचो लोकान्देवकामांश्चाप्नोति। स एवानेन चाक्षुषरूपेणार्वाचीनलोकान्मनुष्यकामांश्चाप्नोतीति श्रूयते। न चैकस्य वस्तुतोऽभिन्नोभयरूपत्वप्राप्तिरुपपद्यते। तस्माद्भेदकल्पना न युक्तेत्यर्थः॥ उभयात्मकत्वमेकस्यापि विद्यामाहात्म्यादेवभावोपगमादुपपन्नमिति शङ्कते। द्विधेति॥ एकस्य विद्यावशादनेकरूपत्वे वाक्यशेषं प्रमाणयति। वक्ष्यति हीति॥ एकस्यानेकशरीरपरिग्रहेऽपि न स्वरूपभेदोपपत्तिरिति परिहरति। न चेतनस्येति॥ एकत्वसाधकसद्भावस्तच्छब्दार्थः॥ परोक्तं भेदकमनुवदति। यत्त्विति॥ भेदकारणमित्यस्मादुपरिष्टादिति शब्दो द्रष्टव्यः॥ दूषयति। न तदित्यादिना॥ तदित्यतिदिश्यमानरूपाद्युक्तं। आधिदैविकपुरुषवदध्यात्मिकेऽपि पुरुषे निरतिशयैश्वर्य्यश्रवणाच्च तयोरैक्यमित्याह। स एष इति॥ तयोर्भेदाभावे हेत्वन्तरमाह। तत्तस्मादिति॥ ईश्वरस्यैव प्रागुक्तहेतोर्गानविषयत्वयोग्यत्वादित्यर्थः॥ तच्छब्दार्थं स्फुटयति। यस्मादिति॥ स्थानभेदेन यथोक्तोपासनवतः फलान्तरार्थं पातनिकां करोति।

उ० अथ य एतदेवं विद्वान्साम गायत्युभौ स गायति सोऽमुनैव स एष ये चामुष्मात्पराञ्चो लोकास्ताꣳश्चाप्नोति देवकामाꣳश्च ।७। अथानेनैव ये चैतस्मादर्वाञ्चो लोकास्ताꣳश्चाप्नोति मनुष्यकामाꣳश्च तस्मादु हैवंविदुद्गाता ब्रूयात् ।८। कं ते काममागायानीत्येष ह्येव कामागानस्येष्टे य एतदेवं विद्वान्साम गायति साम गायति ।९।

तृतीयस्य सप्तमः खण्डः ॥ ७ ॥

---

भा० अथ य एतदेवं विद्वान् यथोक्तं तदेवमुद्गीथं विद्वान् साम गायति उभौ स गायति चक्षुषमादित्यञ्च तस्यैवं विदः फलमुच्यते । सोऽमुनैवादित्येन स एष ये चामुष्मात्पराञ्चो लोकास्तांश्चाप्नोति आदित्यान्तर्गतदेवो भूत्वेत्यर्थो देवकामांश्च । अथानेनैव चाक्षुषेणैव ये चैतस्मादर्वाञ्चो लोकास्तांश्चाप्नोति मनुष्यकामांश्च चाक्षुषो भूत्वेत्यर्थः । तस्मादु हैवं विदुद्गाता ब्रूयाद्यजमानं कमिष्टन्ते तव काममागायानीति । एष हि यस्मादुद्गाता कामागानस्योद्गानेन कामं

---

आ० अथेति ॥ एतत्सामेति सम्बन्धः ॥ एवं विद्वानित्येतदेव विभजते । यथोक्तमिति ॥ विद्वानित्यस्मादुपरिष्टादथशब्दः सम्बध्यते ॥ सोऽमुनैव लोकान् कामांश्चाप्नोतीति सम्बन्धः ॥ आप्तिप्रकारं विवृणोति । स एष इति ॥ उपास्यवदुपासकस्यापि कुतो निरतिशयमैश्वर्य्यं । न हि द्वयोर्निरङ्कुशमैश्वर्य्यं युक्तमित्याशङ्क्याह । आदित्येति ॥ अमुनैवादित्येनेत्युक्तमेवात्र व्यक्तीकृतं । अथशब्दस्तथापर्य्यायश्चाक्षुषो भूत्वाऽनेनैव चाक्षुषेणैवेति सम्बन्धः ॥ उक्तफलस्य याज-

उ॰ त्रयो होद्गीथे कुशला बभूवुः शिलकः शालावत्य-श्चैकितायनो दाल्भ्यः प्रवाहणो जैवलिरिति ते होचुरुद्गीथे वै कुशलाः स्मो हन्तोद्गीथे कथां वदाम इति ॥ १ ॥

---

भा॰ सम्पादयितुमीष्टे समर्थ इत्यर्थः। कोऽसौ य एवं विद्वान् साम गायति साम गायति। द्विरुक्तिरुपासनसमाप्त्यर्था ॥ ७ ॥

अनेकधोपास्यत्वादक्षरस्य प्रकारान्तरेण परोवरीयस्त्व-गुणफलमुपासनान्तरमानिनाय। इतिहासस्तु सुखावबोध-नार्थः। त्रयस्त्रिसङ्ख्याकाः। ह इति ऐतिह्यार्थः। उद्गीथे उद्गी-थज्ञानं प्रति कुशला निपुणा बभूवुः कस्मिंश्चिद्देशे काले च निमित्ते वा समेतानामित्यभिप्रायः। न हि सर्व्वस्मिन् जगति त्रयाणामेव कौशलमुद्गीथादिविज्ञाने। श्रूयन्ते ह्युष-स्तिजानश्रुतिकैकेयप्रभृतयः सर्व्वज्ञकल्पाः। के ते त्रय इत्याह। शिलको नामतः शलावतोऽपत्यं शालावत्यः। चिकितायन-स्यापत्यं चैकितायनः। दल्भ्यगोत्रो दाल्भ्यो द्व्यामुष्यायणो वा

---

आ॰ मानत्वं दर्शयति। तस्मादिति॥ तच्छब्दार्थमेव कथयति। एष हीति॥ उद्गातारं विशिनष्टि। कोऽसाविति॥ उद्गीथे परस्य सम्पाद्योपासनं विभागेनोक्तमुपसंहरति। द्विरुक्तिरिति॥ ७॥

अध्यात्माधिदैवतत्स्थानभेदावच्छिन्नपरमात्मदृष्ट्योद्गीथोपास-नमखिलपाप्मापगमफलमुक्तं॥ सम्प्रति स्थानभेदावच्छेदं हित्वा परोवरीयस्त्वगुणकपरमात्मदृष्ट्योद्गीथोपासनं परोवरीयस्त्वप्रा-प्तिफलकमानीतवानाम्नाय इति प्रकरणतात्पर्य्यमाह। अनेकधेति॥ तर्हि विवक्षितमुपासनमेवोच्यतां किमाख्यायिकयेत्याशङ्क्याह। इतिहासस्त्विति॥ इतिहासः पूर्व्ववृत्तं। इतिहस्य भाव ऐतिह्यं।

उ॰ तथेति ह समुपविविशुः स ह प्रवाहणो जैवलिरुवाच भगवन्तावग्रे वदतां ब्राह्मणयोर्वदतोर्वाचꣳ श्रोष्यामीति ॥ २ ॥ स ह शिलकः शालावत्यश्चैकितायनं दाल्भ्यमुवाच हन्त त्वा पृच्छानीति पृच्छेति होवाच ॥ ३ ॥

---

भा॰ प्रवाहणो नामतो जीवलस्यापत्यं जैवलिरित्येते त्रयस्ते होचुरन्योन्यमुद्गीथे वै कुशला निपुणा इति प्रसिद्धाः स्मः। अतो हन्त यद्यनुमतिर्भवतामुद्गीथे उद्गीथज्ञाननिमित्तां कथां विचारणां पक्षप्रतिपक्षोपन्यासेन वदामो वादं कुर्म्म इत्यर्थः॥

तथाच तद्विद्यसंवादे विपरीतग्रहणनाशोऽपूर्व्वविज्ञानोपजनः संशयनिवृत्तिश्चेति। अतस्तद्विद्यसंयोगः कर्त्तव्य इति चेतिहासप्रयोजनं दृश्यते हि शिलकादीनां। तथेत्युक्त्वा ते समुपविविशुर्होपविष्टवन्तः किल। तत्र राज्ञः प्रागल्भ्योप-

---

आ॰ समेतानामिति निर्द्धारणे षष्ठी। ननु सर्व्वस्मिञ्जगति त्रयाणामेवोद्गीथादिज्ञाने कौशलमिति किं नोच्यते किमिति तेषां मध्ये त्रयाणामेव तन्नैपुण्यं प्रतिज्ञायते तत्राह। न हीति॥ अमुष्य प्रसिद्धस्यापत्यमामुष्यायणो द्वयोरामुष्यायणः द्व्यामुष्यायणः। तव मम चायमिति परिभाषया धर्म्मतः परिगृहीत इति यावत्॥

किमर्थो वादारम्भ इत्यत आह। तथा चेति॥ प्रवृत्ते वादे तस्मिन्विवक्षितेऽर्थे विद्या येषां तैः सह संवादे दृष्टमेव फलमित्यर्थः। इतिशब्दस्य प्रयोजनमित्येतेन सम्बन्धः। वादारम्भस्य दृष्टफलत्वे फलितमाह। अत इति॥ इतिहासस्तु सुखावबोधार्थ इत्युक्तेन समुच्चयार्थश्चकारः। कथं यथोक्तफलं दृष्टमित्याशङ्क्याह। दृश्यते हीति॥ शिलकादीनां तद्विद्यसंयोगे विपरीतधीध्वंसादिकं फलमिति शेषः। तत्रेति निर्द्धारणार्था सप्तमी। राज्ञः

उ॰ का साम्नो गतिरिति स्वर इति होवाच स्वरस्य का गतिरिति प्राण इति होवाच प्राणस्य का गतिरित्यन्नमिति होवाचान्नस्य का गतिरित्याप इति होवाच । ४ । अपां का गतिरित्यसौ लोक इति होवाच अमुष्य लोकस्य का गतिरिति

भा॰ पत्तेः । स ह प्रवाहणो जैवलिरुवाचेतरौ भगवन्तौ पूजावन्तावग्रे पूर्व्वं वदतां । ब्राह्मणयोरिति लिङ्गाद्राजाऽसौ युवयोर्ब्राह्मणयोर्वदतोर्वाचं श्रोष्यामि । अर्थरहितामित्यपरे वाचमिति विशेषणात् । उक्तयोः स ह शिलकः शालावत्यश्चैकितायनं दाल्भ्यमुवाच । हन्त यद्यनुमंस्यसे त्वा त्वां पृच्छानीत्युक्त इतरः पृच्छेति होवाच लब्धानुमतिराह ॥

का साम्नो गतिः । प्रकृतत्वादुद्गीथस्य । उद्गीथो ह्यत्रोपास्यत्वेन प्रकृतः । परोवरीयांसमुद्गीथमिति च वक्ष्यति । गतिराश्रयः परायणमित्येतत् । एवं पृष्टो दाल्भ्य उवाच स्वर इति । स्वरात्मकत्वात्साम्नो यो यदात्मकः स तद्गतिः

आ॰ प्रागल्भ्योपपत्तेरित्ययुक्तं तस्य राजत्वे हेत्वभावादित्याशङ्क्याह । ब्राह्मणयोरितीति ॥ पक्षान्तरं विशेषणसामर्थ्यादुत्थाप्याङ्गीकरोति । अर्थेति ॥ राज्ञा यथोक्तेन प्रकारेणोक्तयोर्ब्राह्मणयोर्मध्ये शालावत्यो दाल्भ्यं प्रत्युवाचेति सम्बन्धः । साम्नो गतिरित्यन्वयः ॥

सामशब्दार्थमाह । प्रकृतत्वादिति । तस्य पूर्व्वोत्तरग्रन्थयोः प्रकृतत्वं प्रकटयति । उद्गीथो हीति ॥ गतिशब्दस्य क्रियाविषयत्वं व्यावर्त्तयति । आश्रय इति ॥ औपचारिकमाश्रयं निरस्यति । परायणमित्येतदिति ॥ स्वरो ध्वनिभेदः स कथमुद्गीथस्य गतिरित्याशङ्क्याह । स्वरात्मकत्वादिति ॥ तद्व्यञ्जकतया तदा-

उ॰ न स्वर्गं लोकमति नयेदिति होवाच स्वर्गं वयं लोकꣳ सामाभिसंस्थापयामः स्वर्गसꣳस्तावꣳ हि सामेति ॥ ५ ॥ तꣳ ह शिलकः शालावत्यश्चै-

---

भा॰ तदाश्रयस्य भवतीति युक्तं मृदाश्रय इव घटादिः। स्वरस्य का गतिरिति प्राण इति होवाच। प्राण-निष्पाद्यो हि स्वरस्तस्मात्स्वरस्य प्राणो गतिः। प्राणस्य का गतिरित्यन्नमिति होवाच। अन्नावष्टम्भो हि प्राणः। शुष्यति वै प्राण ऋतेऽन्नादिति हि श्रुतेः। अन्नं दामेति च। अन्नस्य का गतिरित्याप इति होवाच। अप्सम्भवत्वादन्नस्य। अपां का गतिरित्यसौ लोक इति होवाच॥

अमुष्माल्लोकाद्वृष्टिः सम्भवति। अमुष्य लोकस्य का गतिरिति पृष्टो दाल्भ्य उवाच। स्वर्गममुं लोकमतीत्याश्रयान्तरं साम न नयेत् कश्चिदिति होवाच आह। अतो वयमपि स्वर्गं लोकं सामाभिसंस्थापयामः। स्वर्गलोकप्रतिष्ठं साम

---

आ॰ अयत्वेन तत्तादात्म्याद्भवति स्वरस्तस्य गतिरित्यर्थः॥ साम्नः स्वरा-त्मकत्वेऽपि कथं तद्गतित्वमित्याशङ्क्य दृष्टान्तेन परिहरति। यो यदात्मक इति॥ प्राणस्यान्नावष्टम्भकत्वे वाजसनेयश्रुतिं प्रमा-णयति। शुष्यतीति॥ वत्सस्थानीयस्य प्राणस्यान्नं दाम बन्धनमिति च श्रुतेरित्यर्थः। ता अन्नमसृजन्तेति श्रुतेरन्नस्याप्सम्भवत्वं द्रष्टव्यं॥ कथमपामसौ लोको गतिस्तत्राह। अमुष्मादिति॥ इति पृष्टो दाल्भ्य उवाच। होति सम्बन्धः॥ तत्र छन्दसि कालनियमा-भावमभिप्रेत्य क्रियापदं व्याकरोति। आहेति॥ यद्यपि परो नास्त्याश्रयान्तरं प्रतिपद्यते तथापि त्वया तदाश्यमेवेत्याशङ्क्याह। अत इति॥ अतःशब्दार्थमेव स्फोटयति। स्वर्गेति॥ तस्मा-

उ॰ कितायनं दाल्भ्यमुवाचाप्रतिष्ठितं वै किल ते दाल्भ्य साम यस्त्वेतर्हि ब्रूयान्मूर्द्धा ते विपतिष्यतीति मूर्द्धा ते विपतेदिति ॥ ६ ॥ हन्ताहमेतद्भ-

भा॰ जानीम इत्यर्थः । स्वर्गसंस्तावं स्वर्गत्वेन संस्तवनं संस्तावो यस्य तत्साम स्वर्गसंस्तावं हि यस्मात्स्वर्गो वै लोकः साम वेद इति श्रुतिः । तमितरः शिलकः शालावत्यश्चैकितायनं दाल्भ्यमुवाच । अप्रतिष्ठितमसंस्थितं परोवरीयस्तेनासमाप्तगतिः सामेत्यर्थः । वै इत्यागमं स्मारयति किलेति च दाल्भ्य ते तव साम । यस्त्वसहिष्णुः सामविदेतर्ह्येतस्मिन् काले ब्रूयात्कश्चिद्विपरीतविज्ञानं अप्रतिष्ठितं साम प्रतिष्ठितमित्येवं वादापराधिनं मूर्द्धा शिरस्ते विपतिष्यति विस्पष्टं पतिष्यति इति । एवमुक्तस्यापराधिनस्तथैव तद्विपतेन्न संशयो न त्वहं ब्रवीमीत्यभिप्रायः । ननु मूर्द्धपाताहं चेदप-

आ॰ त्स्वर्गलोकप्रतिष्ठं सामेति पूर्व्वेण सम्बन्धः ॥ स्वर्गसंस्तावं सामेत्यत्र प्रमाणमाह । स्वर्ग इति ॥ उपदेशपारम्पर्य्यमागमः ॥ यत्कृतकं तदनित्यमिति स्वर्गस्यान्तवत्त्वान्न परायणत्वं सम्भवतीत्याशयेनाह । किलेति ॥ यथोक्तं न्यायं सूचयतीति शेषः ॥ न्यायागमाभ्यामप्रतिष्ठितं सामेत्युपसंहरति । दाल्भ्येति ॥

स्वर्गप्रतिष्ठितं सामेति ज्ञाने दोषं दर्शयति । यस्त्विति ॥ असहिष्णुर्मिथ्यावचनमसहमानः सन्निति यावत् । एतस्मिन्काले मिथ्यावचनावस्थायामित्यर्थः । विपरीतं विज्ञानं यस्य स तथोक्तस्तं प्रति इति विग्रहः ॥ तदेव विपरीतज्ञानमभिनयति । अप्रतिष्ठितमिति ॥ साम प्रतिष्ठितमिति विपरीतज्ञानं प्रति कश्चिद्ब्रूयादिति सम्बन्धः ॥ तदीयवचनमेव दर्शयति । एवमिति ॥ स

उ॰ गवतो वेदानीति विद्धीति होवाचामुष्य लोकस्य का गतिरित्ययं लोक इति होवाच अस्य लोकस्य का गतिरिति न प्रतिष्ठां लोकमति नयेदिति

---

भा॰ राधं कृतवानतः परेणानुक्तस्यापि पतेन्मूर्द्धा न चेदपराध्युक्तस्यापि नैव तत्पततु। अन्यथा अकृताभ्यागमः कृतनाशश्च स्यातां। नैष दोषः। कृतस्य कर्मणः शुभाशुभस्य फलप्राप्तेर्देशकालनिमित्तापेक्षत्वात्॥ तत्रैवं सति मूर्द्धपातनिमित्तस्याप्यज्ञानस्य पराभिव्याहारनिमित्तापेक्षत्वमिति। एवमुक्तो दाल्भ्य आह हन्ताहमेतद्भगवत्तो वेदानि यत्प्रतिष्ठं सामेत्युक्तः प्रत्युवाच शालावत्यो विद्धीति होवाच। अमुष्य लोकस्य का गतिरिति पृष्टो दाल्भ्येन

---

व्या॰ तथा कथयतु मम तु किं स्यादित्याशङ्क्याह। एवमुक्तस्येति॥ तथैव विदुषः शापवाक्यानुसारेणेति यावत्॥ तदिति शिरोनिरुक्तिः॥ शापदानाय प्रवृत्तस्त्वयमिति शङ्कां वारयति। न त्विति॥ मूर्द्धपातोपन्यासानर्थक्यमाशङ्कते। न त्विति॥ अपराधाभावेऽपि परोक्तिवशान्मूर्द्धपाते दोषमाह। अन्यथेति॥ सति चापराधिनि परोक्तिवैधुर्य्यान्मूर्द्धपाताभावे दोषं कथयति। अकृतेति॥ अपराधस्य मूर्द्धपातहेतोरपि सहकार्य्यपेक्षत्वादभिव्याहरणं नानर्थकमित्युत्तरमाह। नैष दोष इति॥

कर्म्मणः शुभादेराचरितस्य निमित्तापेक्षया फलहेतुत्वेऽपि प्रकृतेऽपराधिनि कुतो व्याहरणापेक्षेत्याशङ्क्याह। तत्रेति॥ तत्र शुभादौ कर्म्मण्येव निमित्तापेक्षया फलप्रदे सतीत्यर्थः। इति पराभिव्याहरणमर्थवदिति शेषः॥ हन्तेत्यादि व्याकरोति। एवमिति॥ कथममुष्य लोकस्यैतल्लोकप्रतिष्ठत्वं तदाह। अयं लोक इति॥ आदिशब्दः श्रद्धादिसङ्ग्रहार्थः॥ तत्रैव श्रुतिं प्रमाणयति।

उ॰ होवाच प्रतिष्ठां वयं लोकꣳ सामाभिसꣳस्थापयामः प्रतिष्ठा सꣳस्तावꣳ हि सामेति ॥ ७ ॥ तꣳ ह प्रवाहणो जैवलिरुवाचान्तवद्वै किल ते शालावत्य साम यस्त्वेतर्हि ब्रूयान्मूर्द्धा ते विपतिष्यतीति मूर्द्धा

---

भा॰ शालावत्योऽयं लोक इति होवाच। अयं हि लोको यागदानहोमादिभिरमुं लोकं पुष्यतीति। अतः प्रदानं देवा उपजीवन्तीति हि श्रुतयः। प्रत्यक्षं हि सर्व्वभूतानां धरणी प्रतिष्ठेति। अतः साम्नोऽप्ययं लोकः प्रतिष्ठैवेति युक्तं। अस्य लोकस्य का गतिरित्युक्त आह शालावत्यः। न प्रतिष्ठां इमं लोकमतीत्य न नयेत्साम कश्चित्॥ अतो वयं प्रतिष्ठां लोकं सामाभिसंस्थापयामः। यस्मात् प्रतिष्ठासंस्तावं हि प्रतिष्ठात्वेन संस्तुतं सामेत्यर्थः। इयं वै रथन्तरमिति च श्रुतिस्तमेवमुक्तवन्तं ह प्रवाहणो जैवलिरुवा-

---

आ॰ अत इति ॥ अस्माल्लोकात्प्रदीयमानं चरुपुरोडाशाद्यमिदारोपजीवन्ति देवा इति श्रौती प्रसिद्धिरित्यर्थः॥ भवतु परं लोकं प्रति प्रतिष्ठात्वमस्य लोकस्य तथापि कथमयं लोकः साम्नः प्रतिष्ठेत्याशङ्क्याह। प्रत्यक्षं हीति ॥ पृथिव्याः सर्व्वाणि भूतानि प्रति प्रतिष्ठात्वे फलितमाह। अत इति॥ साम्नोऽपि सर्व्वान्तर्भावादित्यर्थः॥

तथापि प्रतिष्ठान्तरं त्वया वाच्यमित्याशङ्क्याह। अतो वयमिति॥ यस्मादेतल्लोकप्रतिष्ठात्वेन संस्तुतं साम, तस्मादिदं साम प्रत्येतमेव लोकं प्रतिष्ठां जानीम इति योजना॥ कथं प्रतिष्ठात्वेन सामत्वाविशेषात्पृथिव्यां साम स्तुतमित्याशङ्क्याह। इयमिति॥ इयं वै रथन्तरशब्दवाच्यस्य सामविशेषस्य पृथिवीत्वेन स्तुतत्वादुद्गीथस्यापि सामत्वाविशेषात्पृथिव्यात्मत्वं सम्भाव्यत इत्यर्थः।

उ० ते विपतेदिति हन्ताहमेतद्भगवतो वेदानीति विद्धीति होवाच ॥ ८ ॥ तृतीयस्याष्टमः खण्डः ॥ ८ ॥

अस्य लोकस्य का गतिरित्याकाश इति होवाच सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त आकाशं प्रत्यस्तं यन्त्याकाशो ह्येवैभ्यो ज्यायानाकाशः परायणं ॥ १ ॥ स एष परो वरीयानुद्गीथः

---

भा० चान्तवद्वै किल ते शालावत्य सामेत्यादि पूर्ववत्। ततः शालावत्य आह हन्ताहमेतद्भगवत्तो वेदानीति विद्धि इति होवाच ॥ ८॥

इतरोऽनुज्ञात आह अस्य लोकस्य का गतिरिति आकाश इति होवाच प्रवाहणः। आकाश इति च पर आत्मा आकाशो वै नामेत्याकाशशब्दश्रुतेः ॥ तस्य हि कर्म भूतोत्पादकत्वं । तस्मिन्नेव हि भूतप्रलयः । तत्तेजोऽसृजत । तेजःपरस्यां देवतायामिति हि वक्ष्यति। सर्व्वाणि ह वै इमानि भूतानि स्थावरजङ्गमानि आका-

---

आ० हन्ताहमेतदित्यचानन्तं सामैतदित्युच्यते ॥ आकाशशब्दवाच्यस्य भूताकाशविषयत्वं व्यावर्त्त्य परमात्मविषयत्वं वाक्यशेषवशाद्दर्शयति। आकाश इति चेति ॥ किञ्च परस्यात्मनः सर्व्वभूतोत्पादकत्वं कर्म्मेति वेदान्तमर्य्यादा तदिहाकाशे श्रुतं ॥

तथा च परमात्मैवाकाशशब्द इत्याह। तस्य हीति ॥ किञ्च परस्मिन्नेव भूतानां प्रलयः स चाकाशे श्रुतस्तस्मात्पर एवात्माकाश इत्याह। तस्मिन्नेवेति ॥ सर्व्वोत्पादकत्वं परस्य कर्म्मेत्यत्र मानमाह। तत्तेजोऽसृजतेति ॥ परस्मिन्नेव लयो भूतानामित्यत्रापि मानमाह। तेज इति॥ भवतु परस्यात्मनः सर्व्वोत्पाद-

उ॰ स एषोऽनन्तः परोवरीयो हास्य भवति परोवरीयसो ह लोकान् जयति य एतदेवं विद्वान्परोवरीयाꣳसमुद्गीथमुपास्ते ॥ २ ॥ तꣳ हैतमति-

---

भा॰ शादेव समुत्पद्यन्ते । तेजोबलादिक्रमेण सामर्थ्यादाकाशं प्रत्यस्तं यन्ति प्रलयकाले तेनैव विपरीतक्रमेण हि यस्मादाकाश एवैभ्यः सर्व्वेभ्यो भूतेभ्यो ज्यायान्महत्तरोऽतः सर्व्वेषां भूतानां परायणं प्रतिष्ठा त्रिष्वपि कालेष्वित्यर्थः । यस्मात्परम्परं वरीयः वरीयसोऽप्येषः परश्च परोवरीयानुद्गीथः परमात्मसम्पन्न इत्यर्थः । अत एव स एषोऽनन्तोऽविद्यमानान्तस्तमेतं परोवरीयांसं परमात्मभूतमनन्तमेवं

---

आ॰ कत्वं कर्म्म तथापि किमायातमाकाशस्येति चेत्तत्राह । सर्व्वाणीति ॥ कथमयं क्रमो लभ्यते । अविशेषेण हि ततः सर्व्वोत्पत्तिः श्रुतेत्याशङ्क्याह । सामर्थ्यादिति ॥ आत्मन आकाशः सम्भूतस्तत्तेजोऽसृजतेत्यादिश्रुतिबलादित्यर्थः ॥ तथापि कथमाकाशे सर्व्वभूतलयस्तत्राह । आकाशं प्रतीति ॥ विपर्य्ययेण तु क्रमोऽत इति न्यायेनाह । विपरीतेति ॥ आकाशस्य परमात्मत्वे हेत्वन्तरमाह । यस्मादिति ॥ परायणत्वमपि तत्रैव लिङ्गमित्याह । अत इति ॥ आकाशस्तल्लिङ्गादिति न्यायेनाकाशस्य परमात्मत्वमुक्तमिदानीं तस्योद्गीथे सम्पादितस्य परोवरीयस्त्वं गुणमुपदिशति । यस्मादिति ॥ उत्तरमुत्तरं श्रेष्ठादपि श्रेष्ठोऽयमित्येतत् ॥

सामभात्रस्य कथमयं गुणः स्यादित्याशङ्क्याह । परमात्मेति ॥ आकाशस्य परमात्मत्वे लिङ्गान्तरमाह । अत एवेति ॥ परमात्मसम्पन्नत्वादिति यावत् । आकाशो हि प्रकृतोद्गीथे सम्पादितोऽनन्तः श्रुतः । न चानन्त्यं ब्रह्मणोऽन्यत्र युक्तं । सत्यं ज्ञानमनन्तं ब्रह्मेति श्रुतेः । तस्मादाकाशो ब्रह्मेत्यर्थः । सम्प्रत्याकाशशब्दितस्य परस्योद्गीथे सम्पादितस्य परोवरीयस्त्वगुणविशिष्टस्योपास्तिं

उ॰ धन्वा शौनक उदरशाण्डिल्यायोक्त्वोवाच यावत्त एनं प्रजायामुद्गीथं वेदिष्यन्ते परोवरीयो हैभ्यस्तावदस्मिँल्लोके जीवनं भविष्यति ॥ ३ ॥ तथामुष्मिँल्लोके लोक इति स य एतमेवं विद्वानुपास्ते परोवरीय एव हास्यास्मिँल्लोके जीवनं भवति तथामुष्मिँल्लोके लोक इति लोके लोक इति ॥ ४ ॥ ९ ॥ तृतीयस्य नवमः खण्डः ॥

---

भा॰ विद्वान् परोवर्यीयांसमुद्गीथमुपास्ते तस्यैतत्फलमाह। परोवरीयः परम्परं विशिष्टतरं जीवनं हास्य विदुषो भवति दृष्टं फलमदृष्टञ्च परोवरीयस उत्तरोत्तरविशिष्टतरानेव ब्रह्माकाशान्ताँल्लोकाञ्जयति य एतदेवं विद्वानुद्गीथमुपास्ते॥ किञ्च तमेतमुद्गीथं विद्वानतिधन्वा नामतः शुनकस्यापत्यं शौनक उदरशाण्डिल्याय शिष्यायैतमुद्गीथदर्शनमुक्त्वोवाच। यावत् ते तव प्रजायां प्रजासन्तताविह्यर्थः । एतमुद्गीथं त्वत्सन्ततिजा वेदिष्यन्ते ज्ञास्यन्ते तावन्तं कालं परोवरीयो ह एभ्यः प्रसिद्धेभ्यो लौकिकजीवनेभ्य उत्तरोत्तरविशिष्टतरं जीवनतेभ्यो भविष्यति । तथादृष्टेऽपि परलोकेऽमुष्मिन्परोवरीयाँल्लोको भविष्यतीत्युक्तवान् शाण्डिल्या-

---

व्या॰ विदधाति । तमेतमिति ॥ परम्परमुपर्युपरीति यावत् । तस्मादेवमुपासीतेति भावः ॥ विधिशेषमर्थवादं दर्शयति । किञ्चेति ॥ इतश्चात्र विधिरस्तीत्येतत्तेभ्यस्तत्सन्ततिजा ये यथोद्गीथे वेदितारस्तदर्थमित्यर्थः । तथा दृष्टविशिष्टतरजीवनवदित्यर्थः ।

उ० मटचीहतेषु कुरुष्वाटिक्या सह जाययोषस्तिर्ह चाक्रायण इभ्यग्रामे प्रद्राणक उवास ॥१॥ स हेभ्यं कुल्माषान् खादन्तं बिभिक्षे तंर्ह होवाच ।

भा० यातिधन्वा शौनकः । स्यादेतत्फलं पूर्व्वेषां महाभाग्यानां नैदंयुगीनानामित्याशङ्कानिवृत्तये आह । स यः कश्चिदेतदेवं विद्वानुद्गीथमेतर्ह्युपास्ते तस्याप्येवमेव परोवरीय एव ह्यास्मिँल्लोके जीवनं भवति तथामुष्मिँल्लोके लोक इति ॥ ९ ॥

उद्गीथोपासनप्रसङ्गेन प्रस्तावप्रतिहारविषयमप्युपासनं कर्त्तव्यमितीदमारभ्यते । आख्यायिका तु सुखावबोधार्था । मटचीहतेषु मटच्योऽशनयस्ताभिर्हतेषु नाशितेषु कुरुषस्येष्वित्यर्थः । ततो दुर्भिक्षे जाते आटिक्याऽनुपजातयोधारादिस्त्रीव्यञ्जनया सह जाययोषस्तिर्ह नामतश्चक्रस्यापत्यं चाक्रायणः । इभो हस्ती तमर्हतीतीभ्यः ईश्वरो

आ० अदृष्टेऽपीति छेदः ॥ स य एतमित्याद्युत्तरवाक्यं शङ्कोत्तरत्वेनोत्थाप्य व्याचष्टे । स्यादित्यादिना ॥ अस्मिन्युगे भवन्तीत्यैदंयुगीनास्तेषामैदंयुगीनानां लोकः परोवरीयानिति शेषः । पुनरुक्तिरुद्गीथोपास्तिसमाप्त्यर्था ॥ ९ ॥

अथोद्गीथाद्यवयवोपासनस्यानेकधोक्तत्वाद्दक्तव्यानवशेषात्प्रपाठकपरिसमाप्तिरेव युक्तेत्याशङ्काह । उद्गीथेति ॥ इदमाखण्डान्तं परामृश्यते ॥ प्रस्तावाद्युपासनं विवक्षितं चेत्तदेवोच्यतां किमनया कथयेत्याशङ्काह । आख्यायिका त्विति ॥ मटच्यो मर्दनहेतवोऽशनयः पाषाणवृष्टयो वा ततः शस्यनाशादित्येतत्सर्व्वतः खेरसञ्चारेऽपि न व्यभिचारशङ्केति दर्शयितुमाटिक्येति विशेषणं । प्रद्राणकपदस्य

उ॰ नेतोऽन्ये विद्यन्ते यच्च ये म इम उपनिहिता इति ।
२ । एतेषां मे देहीति होवाच तानस्मै प्रददौ हन्तानुपानमित्युच्छिष्टं वै मे पीतꣳ स्यादिति होवाच । ३ । न स्विदेतेऽप्युच्छिष्टा इति न वा अजीविष्यमिमानखादन्निति होवाच कामो म

---

भा॰ हस्त्यारोहो वा तस्य ग्राम इभ्यग्रामस्तस्मिन्प्रद्राणकोऽन्नालाभात्। द्रा कुत्सायां गतौ। कुत्सितां गतिं गतोऽन्त्यावस्थां प्राप्त इत्यर्थः। उवास उषितवान् कस्यचिद्गृहमाश्रित्य। सोऽन्नार्थमटन्निभ्यं कुल्माषान् कुत्सितान्माषान् खादन्तं भक्षयन्तं यदृच्छयोपलभ्य बिभिक्षे याचितवान्। तमुषस्तिं ह उवाचेभ्यः। नेतोऽस्मान्मया भक्ष्यमाणादुच्छिष्टराशेः कुल्माषा अन्ये न विद्यन्ते। यच्च ये राशौ मे मम उपनिहिताः प्रक्षिप्ता इमे भाजने किं करोमीत्युक्तः प्रत्युवा-

---

व्या॰ क्रियापदेन सम्बन्धः। कुत्सितगतिप्राप्तौ हेतुरन्नालाभादिति॥ प्रद्राणकशब्दार्थं धातूपन्यासद्वारा कथयति। द्रा कुत्सायामिति॥ यदृच्छया सहसेत्यर्थः॥ नेत इति वाक्योपादानं तद्व्याकरोति। अस्मादिति॥ यदित्यव्ययं बहुवचनान्तं। उपनिहिताः कुल्माषा इति शेषः। तेषां खल्विमे भाजने प्रक्षिप्ता इति योजना। हन्त कुल्माषा भक्षितास्त्वेदित्यर्थः॥ किं प्रत्युवाचेत्याकाङ्क्षापूर्वकमाह। किमित्यादिना॥ अनुपानाभावेऽपि तुल्यं जीवनराहित्यमित्याशङ्क्याह। काम इति॥

अन्योच्छिष्टकुल्माषभक्षणमृषेर्वदन्त्याः श्रुतेस्तात्पर्यमाह। अतस्त्वेति॥ चाक्रायणस्य विदुषोऽभक्ष्यभक्षणदर्शनादिति यावत्। एतामवस्थां प्राप्तस्य जीवितसन्देहमापन्नस्येत्यर्थः। विद्याधर्मयशोवतो ज्ञानादिप्रयुक्तख्यातिं प्रपन्नस्येत्येतत्। स्वात्मोपकारे

उ० उदपानमिति । ४ । स ह खादित्वाऽतिशेषान्
जायाया आजहार साग्र एव सुभिक्षा बभूव

---

भा० चोषस्तिः। एतेषामेतानित्यर्थः। मे मह्यं देहीति होवाच। तान् स इभ्योऽस्मा उषस्तये प्रददौ प्रदत्तवान्। अनुपानीयं समीपस्थमुदकं च। हन्त गृहाणानुपानमित्युक्तः प्रत्युवाच। उच्छिष्टं मे ममेदमुदकं पीतं स्याद्यदि पास्यामीत्युक्तवन्तं प्रत्युवाचेतरः। किं न स्विदेते कुल्माषा अप्युच्छिष्टा इत्युक्त आहोषस्तिर्न वै अजीविष्यं न जीविष्यामीमान् कुल्माषानखादन्नभक्षयन्निति होवाच। काम इच्छातो मम उदकपानं लभ्यत इत्यर्थः। अतश्चैतामवस्थां प्राप्तस्य विद्याधर्म्मयशोवतः स्वात्मपरोपकारसमर्थस्यैतदपि कर्म्म कुर्व्वतो नागःस्पर्श इत्यभिप्रायः। तस्यापि जीवितं प्रत्युपायान्तरे अजुगुप्सिते सति जुगुप्सितमेतत्कर्म्म दोषाय। ज्ञानावलेपेन कुर्व्वतो नरकपातः स्यादेवेत्यभिप्रायः ॥

प्रद्राणकशब्दश्रवणात्तांश्च स खादित्वाऽतिशेषानतिशिष्टान् जायायै कारुण्यादाजहार। साटिक्यग्र एव कुल्माष-

---

आ० परोपकारे च सामर्थ्यं निग्रहानुग्रहशक्तिमत्त्वमेतत्कर्म्म जीवनमात्रकारणं कुत्सितचेष्टितमित्यर्थः ॥ उच्छिष्टोदकपानप्रतिषेधश्रुतेरभिप्रायमाह। तस्यापीति ॥ एतत्कर्म्मेत्यभक्ष्यभक्षणोक्तिः ॥ ननु ज्ञानिनो यथेष्टचेष्टाभ्यनुज्ञायते। मैवं। सर्व्वान्नानुमतिश्चेत्यादिन्यायविरोधादित्याह। ज्ञानेति ॥

तस्मिन्नभिप्राये लिङ्गं दर्शयति। प्रद्राणकेति ॥ चाक्रायणो प्रद्राणकप्रयोगात्परमापदमापन्नः सन्कुल्माषानुच्छिष्टान् खनु भक्षि-

मू० तान्प्रतिगृह्य निदधौ ॥ ५ ॥ स ह प्रातः सञ्जिहान उवाच यद्बतान्नस्य लभेमहि लभेमहि धनमात्राꣳ राजाऽसौ यक्ष्यते स मा सर्वैरार्त्विज्यैर्वृणीतेति ॥ ६ ॥ तं जायोवाच हन्त पत इम एव कुल्माषा इति तान् खादित्वाऽमुं यज्ञं

---

भा० प्राग्नेः सुभिक्षा शोभनभिक्षा लब्धान्ना इत्येतद्बभूव संवृत्ता। तथापि स्त्रीस्वाभाव्यादनवज्ञाय तान् कुल्माषान्पत्युर्हस्तात् प्रतिगृह्य निदधौ निक्षिप्तवती। स तस्याः कर्म जानन्प्रातरुषःकाले सञ्जिहानः शयनं निद्रां वा परित्यजन्नुवाच। पत्न्याः शृण्वन्त्याः यद्यदि बतेति खिद्यमानोऽन्नस्य स्तोकं लभेमहि। तद्भुक्त्वान्नं समर्थो गत्वा लभेमहि धनमात्रां धनस्याल्पं। ततोऽस्माकं जीवनं भविष्यतीति ॥ धनलाभे च

---

टी० तवानिति प्रतिभाति। तथा च ज्ञानिनो यथेष्टाचरणे प्रमाणाभावादनेकप्रमाणविरोधाच्च नासावत्र विवक्षित इत्यर्थः। स्त्रीस्वाभाव्यं पत्युराज्ञाकरणं। तस्याः कर्म्म कुल्माषाणां परिरक्षणं ॥ यक्ष्यतीति कस्मान्नोक्तं तत्राह। यजमानत्वादिति ॥ राज्ञो यजमानत्वाद्यागफलस्यात्मगामित्वाद्यक्ष्यत इत्यात्मनेपदं प्रयुक्तमित्यर्थः ॥ अन्येषामुपद्रष्टृत्वसम्भवे कुतस्त्वामेव राजा मानयिष्यतीत्याशङ्क्याह। स चेति ॥ हन्तेत्यन्नलेशलाभस्येदेवं धनलब्धिद्वारा जीवद्धेतुरित्यर्थः। राज्ञो यज्ञस्तत्रेत्युच्यते ॥ उद्गातुरेकत्वे कुतो बहूक्तिरित्याशङ्क्याह। उद्गातृपुरुषानिति ॥ स्तुवन्त्यस्मिन्निति सप्तम्या संवाददेशो निर्दिश्यते ॥ किमर्थमामन्त्रणं तदाह। अभिमुखीकरणायेति ॥ विदुषः समीपे देवतामविद्वान्प्रस्तोष्यसि चेन्मूर्द्धा ते विपतिष्यतीत्ययं सम्बन्धः ॥ नन्वविद्वन्निन्दाया विवक्षितत्वाद्विद्वत्समीपवचनमकिञ्चित्करमिति चेन्नेत्याह। तत्परोक्षेऽपीति ॥ तस्येत्थविद्वान्प्रस्तो-

उ॰ विततमेयाय । ७ । तत्रोद्गातॄनास्तावे स्तोष्यमा-
णानुपोपविवेश स ह प्रस्तोतारमुवाच । ८ ।
प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता तां चेदविद्वा-
न्प्रस्तोष्यसि मूर्द्धा ते विपतिष्यतीति । ९ । एव-
मेवोद्गातारमुवाचोद्गातर्या देवतोद्गीथमन्वायत्ता

---

भा॰ कारणमाह। राजासौ नातिदूरस्थाने यक्ष्यते। यजमानत्वा-
त्तस्यात्मनेपदं। स च राजा मा मां पात्रमुपलभ्य सर्व्वै-
रार्त्विज्यैर्ऋत्विक्कर्म्मभिर्ऋत्विक्कर्म्मप्रयोजनायेत्यर्थो वृणीते-
त्येवमुक्तवन्तं जायोवाच। हन्त गृहाण हे पते इम एव ये
मद्धस्तविनिक्षिप्तास्त्वया कुल्माषा इति। तान् खादित्वामुं यज्ञं
राज्ञो विततं विस्तारितं ऋत्विग्भिरेयाय। तत्र च गत्वोद्गातॄ-
नुद्गातृपुरुषानागत्य आस्तुवन्त्यस्मिन्निति आस्तावस्तस्मिन्ना-

---

आ॰ तोच्यते॥ माभूत्कर्म्ममात्रविदां कर्म्मण्यधिकार इति चेन्नेत्याह।
तच्चेति॥ तेनोभौ कुरुत इत्यादिश्रुताविति शेषः॥ अविदुषामपि
कर्म्माधिकारे हेत्वन्तरमाह। दक्षिणेति॥ तदेव व्यतिरेकद्वारा
स्फोरयति। अनधिकारे चेति॥ तस्यैव समुच्चयफलत्वादित्यर्थः।
ननु दक्षिणमार्गस्य वापीकूपतडागादिस्मार्त्तकर्म्मप्रयुक्तत्वाद्वैदि-
ककर्म्मणि विद्वानेवाधिक्रियते नेत्याह। न चेति॥ यज्ञेन दानेन
लोकाञ्जयतीति वैदिककर्म्मनिष्ठानामज्ञानामेव दक्षिणमार्गश्रव-
णादिति हेतुमाह। यज्ञेनेति॥ इतश्चाविदुषां विद्वत्समीपे
कर्म्माधिकारो नास्तीत्याह। तथोक्तस्येति॥ देवताविज्ञानशून्यस्य
न मूर्द्धा विपतिष्यतीत्यनेन प्रकारेण मयोक्तस्य मूर्द्धा व्यपतिष्य-
दिति विशेषश्रवणाद्विद्वत्समीपे तदनुज्ञामन्तरेण कर्म्म कुर्व्वतोऽप-
राधित्वात्तस्य कर्म्मण्यनधिकार एवेत्यर्थः॥ विद्वत्समीपे पुनरवि-
दुषोऽपि कर्म्मण्यधिकारोऽस्तीत्याह। न सर्व्वत्रेति। अस्मिद्धो-

उ॰ तांश्चेदविद्वानुद्गास्यसि मूर्द्धा ते विपतिष्यतीति ।
१० । एवमेव प्रतिहर्त्तारमुवाच प्रतिहर्त्तर्या देवता प्रतिहारमन्वायत्ता तांश्चेदविद्वान्प्रतिहरिष्यसि मूर्द्धा ते विपतिष्यतीति ते ह समारतास्तूष्णीमासाञ्चक्रिरे ॥ ११ । दशमः खण्डः । १० ॥

---

भा॰ स्तावे स्तोष्यमाणानुपोपविवेश समीप उपविष्टस्तेषामित्यर्थः । उपविश्य स ह प्रस्तोतारमुवाच । हे प्रस्तोतरित्यामन्त्र्याभिमुखीकरणाय प्रस्तोतर्या देवता प्रस्तावं प्रस्तावभक्तिमनुगताऽन्वायत्ता तांश्चेद्देवतां प्रस्तावभक्तेरविद्वान् सन् प्रस्तोष्यसि विदुषो मम समीपे तत्परोक्षेऽपि चेद्विपतेत्तस्य मूर्द्धा कर्म्ममात्रविदामपि अनधिकार एव कर्म्मणि स्यात् ॥ तच्चानिष्टमविदुषामपि कर्म्मदर्शनात् । दक्षिणमार्गश्रुतेश्च । अनधिकारे चाविदुषामुत्तर एवैको मार्गः श्रूयेत । न च स्मार्त्तकर्म्मनिमित्त एव दक्षिणः पन्था । यज्ञेन दानेनेत्या-

---

व्या॰ चादौ श्रौते कर्म्मणि स्मार्त्तेषु च वापीकूपतडागादिकर्म्मस्वध्ययनजपादिषु च विद्वत्सन्निधिमन्तरेणापि सर्व्वस्मिन् काले कर्म्ममात्रविदो नाधिकारोऽस्तीत्यशक्यं वक्तुमित्यर्थः ॥ तत्र हेतुमाह । यनुज्ञेति । भगवन्तं वा अहं विविदिषाणीत्यादिना राज्ञां स्वकीयकर्म्मनिर्व्वर्त्तने प्रार्थनादर्शनादेत एव मया समतिसृष्टा स्तुवतामिति चानुज्ञोपलम्भादस्त्येवाविदुषामपि कर्म्मण्यधिकार इत्यर्थः ॥ उक्तमर्थमुपसंहरति । कर्म्ममात्रेति ॥ विद्वत्समीपे तदनुज्ञामलब्ध्वा नास्ति कर्म्मानुष्ठानमित्येतन्निगम-

उ॰ अथ हैनं यजमान उवाच भगवन्तं वा अहं विविदिषाणीत्युषस्तिरस्मि चाक्रायण इति होवाच ॥ ९ ॥ स होवाच भगवन्तं वा अहमेभिः सर्व्वैरार्त्विज्यैः पर्य्यैशिषं भगवतो वा अहम-

भा॰ दिश्रुतेः। तथोक्तस्य मयेति च विशेषणादिदत्तमचमेव कर्म्मण्यनधिकारो न सर्व्वत्राग्निहोत्रस्मार्त्तकर्म्माध्यापनादिषु च। अनुज्ञायास्तत्र दर्शनात्। कर्म्ममात्रविदामप्यधिकारः सिद्धः कर्म्मणीति ॥ मूर्द्धा ते विपतिष्यतीत्येवमेवोद्गातारं प्रतिहर्त्तारमुवाचेत्यादि समानमन्यत्। ते प्रस्तोत्रादयः कर्म्मभ्यः समारता उपरताः सन्तो मूर्द्धपातभयात्तूष्णीमासाञ्चक्रिरे अन्यच्चाकुर्वन्तः। अर्थित्वात् ॥ १० ॥

अथानन्तरं ह एनमुषस्तिं यजमानो राजोवाच। भगवन्तं वै पूजावन्तं अहं विविदिषाणि वेदितुमिच्छामीत्युक्त उषस्तिरस्मि चाक्रायणस्तवापि श्रोत्रपथमागतो यदीति

था॰ यितुमितिशब्दः ॥ मूर्द्धा ते विपतिष्यतीत्येतदन्तं प्रस्तोतृविषयं वाक्यं व्याख्यातमित्यनुवदति। मूर्द्धेति ॥ तूष्णीमित्यर्थस्यार्थमाह। अन्यच्चेति ॥ तत्र हेतुमाह। अर्थित्वादिति ॥ तत्तद्देवताविषयविज्ञानार्थित्वेन कर्म्मान्तरमकुर्वन्तश्चाक्रायणाभिमुखाः स्थिता इत्यर्थः ॥ १० ॥

अथ हैनमित्यादि व्याकरोति। अथेति ॥ प्रस्तोतृप्रभृतीनां तुष्णींभावादिति शेषः ॥ चाक्रायणस्य वचनमङ्गीकरोति। सत्यमिति ॥ अङ्गीकारमेव स्फोरयति। एवमिति ॥ आर्त्विज्यैरित्यस्य व्याख्यानं ऋत्विक्कर्म्मभिरिति। तदर्थमिति यावत् ॥ यदि मामार्त्विज्यार्थमनुसंहितवानसि किमितीमानन्यान्वृतवानित्या-

उ० वित्यान्यानवृषि ॥ २ ॥ भगवाꣳस्त्वेव मे सर्वैरार्त्विज्यैरिति तथेत्यथ तर्ह्येत एव समतिसृष्टाः स्तुवतां यावत्त्वेभ्यो धनं दद्यास्तावन्मम दद्या इति तथेति ह यजमान उवाच ॥ ३ ॥ अथ हैनं प्रस्तोतोपससाद प्रस्तोतर्या देवता प्रस्ताव-

---

भा० होवाचोक्तवान्। स ह यजमान उवाच सत्यमेवमहं भगवन्तं बहुगुणमशेषं सर्व्वैश्च ऋत्विक्कर्म्मभिरार्त्विज्यैः पर्य्यैषिषं पर्य्येषणं कृतवानस्मि। अन्विष्य भगवतो वा अहमवित्त्याऽलाभेनान्यानिमानवृषि वृतवानस्मि। अद्यापि भगवांस्त्वेव मे मम सर्व्वैरार्त्विज्यैर्ऋत्विक्कर्म्मार्थमस्त्वित्युक्तस्तथेत्याहोषस्तिः। किन्त्वथैवं तर्ह्येत एव त्वया पूर्व्वं वृता मया समतिसृष्टाः मया सम्यक् प्रसन्नेनानुज्ञाताः सन्तः स्तुवतां। त्वया त्वेतत्कार्य्यं। यावत्तु एभ्यः सर्व्वेभ्यो धनं दद्याः प्रयच्छसि तावन्मम दद्या इत्युक्तस्तथेति ह यजमान उवाच। अथ हैनमौषस्त्यं वचः श्रुत्वा प्रस्तोतोपससादोषस्तिं विनयेनोपज-

---

व्या० प्रश्नाह। अन्विष्येति॥ एवं गते किमधुना कर्त्तव्यमित्याशङ्क्याह। अद्यापीति॥ चाक्रायणानुमतिं श्रुत्वा किमिदमिति व्याकुलितेषु प्रस्तोतृप्रभृतिषु ब्रूते। किन्त्विति॥ उभयानुमत्यपेक्षयाऽनन्तर्य्यमथशब्दः। ममालाभेनामीषां वृतत्वस्य निवृत्त्यवस्थायामित्याह॥ तर्ह्येति॥ अनुज्ञाताः सन्तः प्रस्तुतिं कुर्वतामित्याह। स्तुवतामिति॥ अस्त्वेवं तदर्थं पुनर्मया किं विधेयमित्याशङ्क्याह। त्वया त्विति॥ यजमानं प्रत्युषस्तिप्रोक्तं वचः श्रुत्वानन्तरमेवमुषस्तिं प्रस्तोता त्यक्त्वा व्याकुलत्वं शिष्यत्वेनोपसन्नवा-

उ॰ मन्वायत्ता तां चेदविद्वान्प्रस्तोष्यसि मूर्द्धा ते विपतिष्यतीति मा भगवानवोचत्कतमा सा देवतेति ॥ ४ ॥ प्राण इति होवाच सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते सैषा देवता प्रस्तावमन्वायत्ता तां चेदविद्वान्प्रास्तोष्यो मूर्द्धा ते व्यपतिष्यत्तथोक्तस्य मयेति ॥ ५ ॥ अथ हैनमुद्गातोपससादोद्गातर्या देवतोद्गीथमन्वायत्ता तां चेदविद्वानुद्गास्यसि मूर्द्धा

---

भा॰ गाम। प्रस्तोतर्या देवतेत्यादि मा मां भगवानवोचत् पूर्व्वं। कतमा सा देवता या प्रस्तावभक्तिमन्वायत्तेति पृष्टः प्राण इति होवाच। युक्तं प्रस्तावस्य प्राणो देवतेति। कथं सर्व्वाणि स्थावरजङ्गमानि प्राणमेवाभिसंविशन्ति प्रलयकाले प्राणमभिलक्षयित्वा प्राणात्मनैवोज्जिहते प्राणादेवोद्गच्छन्तीत्यर्थ उत्पत्तिकाले। अतः सैषा देवता प्रस्तावमन्वायत्ता तां चेदविद्वान् त्वं प्रास्तोष्यः प्रस्तवनं प्रस्तावभक्तिं

---

आ॰ नित्याह। व्यथेति॥ उपगतिप्रकारमभिनयति। प्रस्तोतरिति॥ प्रतिवचनमादाय प्रशब्दसामान्यं गृहीत्वा तात्पर्य्यमाह। पृष्ट इति॥ कथमिह प्राणशब्दार्थो निश्चीयतामित्याशङ्क्य, त एव प्राण इति न्यायेनाह। कथमिति॥ प्राणात्मनैव संविशन्तीति पूर्व्वेण सम्बन्धः। प्राणशब्दार्थस्य परमात्मत्वेन निर्णीतत्वमतः शब्दार्थस्वेच्छव्दार्थो यदीत्युक्तः। मया तथोक्तस्य मूर्द्धा ते विपतिष्यतीत्येवमुक्तस्य तव तत्काले स्वापराधावस्थायां मूर्द्धा व्यपतिष्यदेवेति योजना। प्रमादस्य महत्त्वया परिहृतत्वादित्यतः शब्दार्थः।

उ॰ ते विपतिष्यतीति मा भगवानवोचत्कतमा सा
देवतेति ॥ ६ ॥ आदित्य इति होवाच सर्वाणि ह
वा इमानि भूतान्यादित्यमुच्चैः सन्तं गायन्ति सैषा
देवतोद्गीथमन्वायत्ता तां चेदविद्वानुदगास्यो मूर्द्धा
ते व्यपतिष्यत्तथोक्तस्य मयेति ॥ ७ ॥ अथ हैनं
प्रतिहर्त्तोपससाद प्रतिहर्त्तर्या देवता प्रतिहार-
मन्वायत्ता तां चेदविद्वान् प्रतिहरिष्यसि मूर्द्धा ते
विपतिष्यतीति मा भगवानवोचत्कतमा सा देव-
तेति ॥ ८ ॥ अन्नमिति होवाच सर्वाणि ह वा

---

भा॰ कृतवानसि यदि मूर्द्धा शिरस्ते व्यपतिष्यद्विपतितमभविष्य-
त्तथोक्तस्य मया तत्काले मूर्द्धा ते विपतिष्यतीति। अत-
स्त्वया साधु कृतं। मया निषिद्धः कर्मणो यदुपरमसकार्षी-
रित्यभिप्रायः। तथोद्गाता पप्रच्छ कतमा सोद्गीथभक्तिमनु-
गताऽन्वायत्ता देवतेति पृष्ट आदित्य इति होवाच। सर्व्वाणि
ह वा इमानि भूतानि आदित्यमुच्चैरूर्द्धं सन्तं गायन्ति
शब्दयन्ति स्तुवन्तीत्यभिप्रायः। उच्छब्दसामान्यात्प्रशब्दसा-
मान्यादिव प्राणोऽतः सैषा देवतेत्यादि पूर्व्ववत्। एवमेवाथ
हैनं प्रतिहर्त्तोपससाद कतमा सा देवता प्रतिहारमन्वा-

---

ष्टा॰ यथा प्रशब्दसामान्यात्प्राणः प्रस्तावदेवतेत्युक्तं तथादित्योद्गीथ-
योरुच्छब्दसामान्यादुद्गीथदेवता चादित्य इत्याह। उच्छब्देति ॥
उक्तसामान्यपरामर्शार्थोऽतःशब्दः। सर्व्वमेव प्रस्तोटवदुद्गाटव-
च्चेत्यर्थः। ऋत्विग्भ्यां प्रस्तावोद्गीथदेवतयोर्विज्ञानानन्तर्य्यमथ-

उ॰ इमानि भूतान्यन्नमेव प्रतिहरमाणानि जीवन्ति सैषा देवता प्रतिहारमन्वायत्ता तां चेदविद्वान्प्रत्यहरिष्यो मूर्धा ते व्यपतिष्यत्तथोक्तस्य मयेति तथोक्तस्य मयेति । ९ । एकादशः खण्डः । ११ ।

अथातः शौव उद्गीथस्तद्ध बको दाल्भ्यो ग्लावो वा मैत्रेयः स्वाध्यायमुद्वव्राज । १ । तस्मै श्वा

---

भा॰ यत्ता इति पृष्टोऽन्नमिति होवाच। सर्वाणि ह वा इमानि भूतान्यन्नमेवात्मानं प्रति सर्वतः प्रतिहरमाणानि जीवन्ति। सैषा देवता प्रतिशब्दसामान्यात्प्रतिहारभक्तिमनुगता। समानमन्यत्। तथोक्तस्य मयेति। प्रस्तावोद्गीथप्रतिहारभक्तीः प्राणादित्यान्नदृष्ट्योपासीतेति समुदायार्थः। प्राणाद्यापत्तिः कर्मसमृद्धिर्वा फलमिति॥ ११॥

अतीते खण्डेऽन्नानाप्तिनिमित्ता कष्टावस्थोच्छिष्टपर्युषितभक्षणलक्षणा सा मा भूदित्यन्नलाभायाथानन्तरं

---

आ॰ शब्दार्थः॥ कथमन्नस्य प्रतिहारत्वं तदाह। सर्वाणीति। तां चेदविद्वानित्याद्यन्यदित्युच्यते। तथोक्तस्य मयेत्येतदन्तमिति शेषः॥ कीदृगुपासनमस्मिन् प्रकरणे विवक्षितमित्याशङ्क्याह। प्रस्तावेति॥ उपास्तित्रयस्य फलं दर्शयति। प्राणादीति॥ ११॥

पूर्वोत्तरखण्डयोः सङ्गतिं दर्शयन्नुपासनान्तरं प्रस्तौति। अतीत इति॥ अन्नलाभस्यापेक्षितत्वमतःशब्दार्थः॥ प्रकारान्तरेणोद्गीथोपासनमन्नकामस्य प्रस्तुत्य प्रतिपत्तिसौकर्यार्थमाख्यायिकामा-

उ॰ श्वेतः प्रादुर्बभूव तमन्ये श्वान उपसमेत्योचुरन्नं नो भगवानागायतु अशनायाम वा इति १ २ १

---

भा॰ शौवः श्वभिर्दृष्ट उद्गीथ उद्गानं सामातः प्रस्तूयते। तत्र किल वको नामतो दल्भस्यापत्यं दाल्भ्यो ग्लावो वा नामतः मित्रायास्यापत्यं मैत्रेयो । वाशब्दश्चार्थे । द्व्यामुष्यायणो ह्यसौ। वस्तुविषये क्रियास्विव विकल्पानुपपत्तेः। द्विनाम द्विगोत्र इत्यादि हि स्मृतिः। दृश्यते च उभयतः पिण्ड-भाक्त्वं॥ उद्गीथे बद्धचित्तत्वादृषावनादराद्वा वाशब्दः स्वाध्यायार्थः। स्वाध्यायं कर्त्तुं ग्रामाद्बहिरुदव्रजोद्गतवान्

---

व्या॰ दत्ते। तत्रेति ॥ न केवलं दल्भस्यापत्यं किन्तु मित्रायाश्चेति चार्थः। न च सा दल्भस्य पत्नी इति युक्तं। तथा सति मैत्रेयपदस्य वैयर्थ्यात्। पत्न्यन्तरापत्यत्वव्यावृत्त्यर्थमिति चेन्न। प्रयोजनाभावात्॥ नन्वत्र वाशब्दात् द्वावृषी विवक्षिताविति चेन्नेत्याह। वाशब्द इति॥ कथं पुनर्दल्भस्यापत्यं वकस्तद्भार्य्या मित्रायास्यापत्यं भवितु-मुत्सहते तत्राह। द्व्यामुष्यायणो ह्येति॥ चैकितायनो दाल्भ्य इत्यत्रोक्तमेतदिति सूचयितुं हिशब्दः। उदितानुदितहोम-वत्क्रियास्विव्द्ध्या वकोऽसावन्येषां ग्लाव इत्येकस्मिन्नपि विकल्पो भविष्यति नेत्याह। वस्तुविषय इति ॥ कथं पुनर्विना मान-मेकस्यैव द्विनामत्वाद्यङ्गीक्रियते तत्राह। द्विनामेति॥ इत्यादि-वाक्यं स्मृतिरूपं धर्म्मशास्त्रे प्रसिद्धमित्यर्थः॥ द्विगोत्रत्वमेकस्य लौकिकेऽपि प्रसिद्धमित्याह। दृश्यते चेति॥ यतः सुतो जायते येन चायं धर्म्मतो गृह्यते तयोरुभयोरित्याह। उभयत इति॥ उभयोरप्यसौ श्राद्धकर्त्ता पिण्डदाता च धर्म्मत इति स्मरन्तीत्यर्थः।

दाल्भ्यादन्यो मैत्रेय इत्यङ्गीकृत्याह। उद्गीथ इति। तदुपास्तौ तात्पर्य्यमृषावनादरे हेतुः। तस्मादृषिद्वयमृषिद्वयं वा विवक्षित-

उ॰ तान्होवाचेहैव मा प्रातरुपसमीयातेति तद्ध

---

भा॰ विविक्तदेशश्चोदकाभ्यासं। उद्गाज प्रतिपालयाञ्चकारेति चैकवचनाल्लिङ्गादेकोऽसावृषिः। श्वोद्गीथकालप्रतिपालनादृषेः स्वाध्यायकरणमन्नकामनयेति लक्ष्यत इत्यभिप्रायतः स्वाध्यायेन तोषिता देवता ऋषिर्वा श्वरूपं गृहीत्वा श्वा श्वेतः सन् तस्मै ऋषये तदनुग्रहार्थं प्रादुर्बभूव प्रादुश्चकार तमन्ये शुक्लं श्वानं क्षुल्लकाः क्षुद्रकाः श्वान उपसमेत्योचुरुक्तवन्तोऽन्नं नोऽस्मभ्यं भगवानागायत्वागानेन निष्पादयत्वित्यर्थः। मुख्यप्राणवागादयो वा प्राणमन्वन्नभुजः स्वाध्यायपरितोषिताः सन्तोऽनुगृह्णीयुरेनं श्वरूपमादायेति युक्तमेवं प्रतिपत्तुं। अशनायाम वै बुभु-

---

व्या॰ मित्यर्थः। पक्षान्तरद्योतनार्थो वाशब्दः। श्वेतो वाशब्दस्तर्हि किमर्थमित्याशङ्क्य पाठादन्यत्र तस्य फलमित्याह। वाशब्द इति॥ मैत्रेयान्तवाक्यं व्याख्याय स्वाध्यायमित्यादि व्याचष्टे। स्वाध्यायमिति॥ यदुक्तमृषिरेको बकादिशब्दैरुच्यते इति तत्र लिङ्गमाह। उद्गाजेति॥ श्वनामुद्गीथः श्वोद्गीथस्तत्कालस्य प्रतिपालनं प्रतिक्षणमृषेर्दृश्यते तेषाञ्चोद्गानमन्नार्थं तदृषेरपि स्वाध्यायकरणं तदर्थमित्याह। श्वोद्गीथेति॥ यथोक्तार्थवाचिशब्दाभावेऽपि सामर्थ्यादयमर्थो भवतीत्याह। अभिप्रायत इति॥ तस्मा इत्यादि व्याचष्टे। स्वाध्यायेनेति॥ क्षुल्लकाः क्षुद्रकाः शिशव इति यावत्। श्वेतश्वा कश्चिदृषिर्देवता वा। अन्ये च श्वानो देवता ऋषयो वेत्युक्तं॥

सम्प्रति विवक्षितं पक्षमाह। मुख्येति॥ तमूचुरिति सम्बन्धः॥ तानेव विशिनष्टि। प्राणमन्विति॥ मुख्यप्राणसहितवागादिग्रहे

उ० वको दाल्भ्यो ग्लावो वा मैत्रेयः प्रतिपालयाञ्च-
कार ॥ ३ ॥ ते ह यथैवेदं वहिष्पवमानेन
स्तोष्यमाणाः सꣳरब्धाः सर्पन्तीत्येवमाससृपुस्ते
ह समुपविश्य हिञ्चक्रुः । ४ । ओम्मदा३मों

---

भा० चिताः स्मो वै इत्येवमुक्तवन्तः। स श्वा श्वेतस्तान् क्षुल्ल-
कान् शुन इहैवास्मिन्नेव देशे मा मां प्रातःकाल
उपसमीयातेति। दैर्घ्यं छान्दसं समीयातेति प्रमाद-
पाठो वा। प्रातःकालकरणं तत्काल एव कर्त्तव्यार्थं।
अन्नदस्य वा सवितुरपराह्णेनाभिमुख्यात्तत्रैव ह वको
दाल्भ्यो ग्लावो वा मैत्रेय ऋषिः प्रतिपालयाञ्चकार
प्रतीक्षणं कृतवानित्यर्थः॥

ते श्वानस्तत्रैवागत्य ऋषेः समक्षं यथैवेह कर्म्मणि
वहिष्पवमानेन स्तोत्रेण स्तोष्यमाणा उद्गातृपुरुषाः संरब्धाः

---

व्या० हेतुमाह। स्वाध्यायेति॥ अन्यथा वाक्यमनिर्द्धारितं स्यादिति
भावः। किमित्यन्नं भवद्भ्यो मया सम्पाद्यते। न हि भवतामभोक्तॄणां
तेन कृतमस्तीत्याशङ्क्य त्वन्निष्ठचेतनद्वारेणास्माकमपि भोगसिद्धे-
र्मैवमित्याह। अशनायाम वा इत्यादिना॥ किमिति प्रातःकाल-
प्रतीक्षणं कृतं तत्राह। प्रातरिति। उद्गानस्येति शेषः॥ प्रातः-
कालप्रतीक्षणकरणे कारणान्तरमाह। अन्नदस्येति॥ तस्य वृष्टि-
द्वारान्नदत्वमेष्टव्यं॥ तद्धेत्यादि व्याचष्टे। तत्रेति॥ ऋषेरन्न-
कामत्वमितोऽवगतं॥

ते हेत्यादि व्याकरोति। ते श्वान इति। समक्षमाससृपुरिति
सम्बन्धः। उद्गातृपुरुषा इत्यध्वर्य्युप्रमुखा यजमानपर्य्यन्ता गृह्यन्ते

उ॰ पिबा२मों देवो वरुणः प्रजापतिः सविता२ऽ-
न्नमिहा२ऽहरद्ऽ२न्नपते२ऽन्नमिहाहरा२ऽऽहरो३-
मिति १ ५ १ द्वादशः खण्डः ॥ १२ ॥

---

भा॰ संलग्नाः अन्योऽन्यमेव सर्पन्ति। एवं मुखेनान्योन्यस्य पुच्छं गृहीत्वा आसस्रुपुरास्रुप्तवन्तः परिभ्रमणं कृतवन्त इत्यर्थः। त एवं संसृप्य समुपविश्योपविष्टाः सन्तो हिङ्चक्रुर्हिङ्कारं कृतवन्तः। ओमदामों पिबामों। देवो द्योतनात्। वरुणो वर्षणाज्जगतः। प्रजापतिः पालनात्प्रजानां। सविता प्रसवितृत्वात्सर्व्वस्यादित्य उच्यते। एतैः पर्य्यायैः स एवम्भूत आदित्योऽन्नमस्मभ्यमिहाहरत् आहरत्विति। त एवं हिं कृत्वा पुनरप्यूचुः। स त्वं हे अन्नपते। स हि सर्व्वस्यान्नस्य प्रसवितृत्वात्पतिः। न हि तत्पाकेन विना प्रसूतमन्नमणुमात्रमपि जायते प्राणिनां। अतोऽन्नपतिः। हेऽन्नपते ऽन्नमस्मभ्यमिहाहरेति। अभ्यास आदरार्थः। ओमिति ॥ १२ ॥

---

व्या॰ अन्योऽन्यसंलग्नाः सर्पन्तीति शेषः॥ हिङ्काररूपमाह। ओमित्यादिना॥ त्रिवारमोंकारो गानार्थमुच्चारितः। अदाम अशनं करवाम। पिबाम पानं करवामेत्येतत्। इति शब्दो हिङ्कारसमाप्त्यर्थः॥ अत्र प्रसवितृत्वमादित्यस्य साधयति। न हीति॥ इहेति प्रकृतदेशोक्तिः। ओंकारः सवितृप्रार्थनामन्त्रसमाप्त्यर्थः। भक्तिवशयोपात्तिसमाप्त्यर्थमितिपदं॥ १२॥

उ॰ अयं वाव लोको हाउकारो वायुर्हाइकार-
श्चन्द्रमा अथकारः १

---

भा॰ भक्तिविषयोपासनं सामावयवसम्बन्धमित्यतः सामावय-
वान्तरस्तोभाक्षरविषयाण्युपासनान्तराणि संहतान्युपदि-
श्यन्ते। अनन्तरं सामावयवसम्बद्धत्वाविशेषादयं वा वायमेव
लोको वा हाउकारः स्तोभो रथन्तरे साम्नि प्रसिद्धः। इयं
वै रथन्तर इति। अस्मात्सम्बन्धसामान्याद्धाउकारस्तोभो-
ऽयं लोक इत्येवमुपासीत। वायुर्हाइकारः। वामदेव्ये सामनि
हाइकारः प्रसिद्धः। वाय्वप्सम्बन्धस्य वामदेव्यस्य साम्नो

---

व्या॰ ननु भक्तिसम्बन्धानामुपासनानां ज्ञातत्वात्समस्तस्येत्यादि वक्तव्ये
किमनन्तरखण्डेनेत्याशङ्क्याह। भक्तीति॥ इत्यतोऽस्मात्प्रसङ्गा-
दिति यावत्॥ ऋगक्षराणि गीयन्ते तद्व्यतिरिक्तानि वाच्यशू-
न्यानि गीतिसिद्धार्थानि स्तोभाक्षराणि परिभाष्यन्ते तानि च
कर्म्मापूर्व्वनिवृत्तिद्वारेण फलवत्त्वादुपास्यानि तदुपास्तिविधिप-
रमुत्तरवाक्यमित्यर्थः॥ वक्ष्यमाणोपासनानां प्रत्येकं स्वातन्त्र्यं
नास्तीत्याह। संहतानीति॥ तेषामनन्तरमुपदेशे हेतुमाह।
सामावयवेति॥ न चैवंविधस्तोभो नास्तीति वाच्यमित्याह। रथ-
न्तर इति॥ तथापि कथं पृथिवीदृष्ट्या यथोक्तस्तोभस्योपास्यत्वं
तत्राह। इयं रथन्तर इति॥ इयं रथन्तर इत्यत्र पृथिव्या रथन्त-
रत्वं श्रुतं। प्रस्तुतस्य स्तोभो रथन्तरेऽस्तीत्युक्तं। तथा च यथोक्ता-
त्सम्बन्धरूपात्साहश्यात्पृथिवीदृष्ट्या हाउकार उपास्य इत्यर्थः॥ कथं
पुनर्वायुदृष्ट्या हाइकारस्योपास्यत्वं तत्राह। वाय्वप्सम्बन्धस्येति॥
हाइकारो वामदेव्ये साम्नि प्रसिद्धः। तस्य च वायोरपाञ्च सम्बन्धः।
योनिर्मिथुनेच्छावतीनामपां वायुः पृष्ठेऽप्यवर्त्तत ततो वामदेव्यं

उ॰ आत्मेहकारोऽग्निरीकारः ॥ ११ ॥ आदित्य
ऊकारः निहव एकारो विश्वे देवा औहो-
इकारः प्रजापतिर्हिंकारः प्राणः स्वरोऽन्नं या
वाग्विराट् ॥ १२ ॥ अनिरुक्तस्त्रयोदशस्तोभः
सञ्चारो हुंकारः ॥ १३ ॥

---

भा॰ योनिरिति। अस्मात्सामान्याद्धाउकारं वायुदृष्ट्योपासीत।
चन्द्रमा अथकारः। चन्द्रदृष्ट्याऽथकारमुपासीत। अन्ने
ह्यीदं स्थितं अन्नात्मा चन्द्रः। थकाराकारसामान्याच्च।
आत्मा इहकारः। इहेति स्तोभः। प्रत्यचो ह्यात्मा
इहेति व्यपदिश्यते। इहेति च स्तोभः। तत्सामान्यादग्निरी-
कार इति। ईनिधनानि चाग्नेयानि सर्व्वाणि सामानीति।
अतस्तत्सामान्यादादित्य ऊकारः। ऊच्चैरूर्द्ध्वं सन्तमादित्यं

---

व्या॰ सामाभवदिति श्रुतेः। तस्माद्यथोक्तादामदेव्यसामसम्बन्धसामा-
न्याद्वायुदृष्ट्या हाउकारमुपासीतेत्यर्थः॥

कथमथकारस्य चन्द्रदृष्ट्योपासनं तत्राह। अन्ने हीति॥ तथा
च थकारसामान्याद्यथोक्तोपास्तिसिद्धिरिति शेषः। थकारवद-
कारसामान्याच्च चन्द्रदृष्ट्याऽथकारमुपासीतेत्याह। थकारेति॥
अथकारे तावद्व्यक्तोऽकारोऽन्नात्मनि चन्द्रमस्यपि सोऽस्तीति
तद्युक्तं यथोक्तमुपासनमित्यर्थः। प्रथममप्रत्यक्तः पश्चात्प्रत्यक्ती-
भवन्निति शेषः। तत्सामान्यमिहेति व्यपदिश्यमानत्वं। तस्मादात्म-
दृष्टिरिहेति स्तोभे कर्त्तव्येत्याह। तत्सामान्यादिति॥ अग्निदृष्टिरी-
काराख्ये स्तोभान्तरे कर्त्तव्येत्यत्र हेतुमाह। ईनिधानानीति॥
ईकारो निधीयते येषु सामसु तान्याग्नेयानि प्रसिद्धानि। तथा च
तेष्वग्निरीकारश्चेत्युभयोर्भावादस्मात्सादृश्यादीकारमग्निदृष्ट्योपा-

उ॰ दुग्धेऽस्मै वाग्दोहं यो वाचो दोहोऽन्नवानन्नादो भवति य एतामेवꣳ साम्नामुपनिषदं वेदोपनिषदं वेद इति ॥ ४ ॥ तृतीयस्य त्रयोदशः खण्डः ॥ १३ ॥ इति छान्दोग्योपनिषद्ब्राह्मणे प्रथमः प्रपाठकः समाप्तः ॥ १ ॥

---

भा॰ गायन्तीत्यूकारश्चायं स्तोभः। आदित्यदैवत्ये साम्नि स्तोभ इत्यादित्य ऊकारः ॥ निहव इत्याह्वानमेकारः स्तोभः। एहीति चाह्वयन्तीति तत्सामान्यात्। विश्वे देवा औहोइकारो वैश्वदेव्ये साम्नि स्तोभस्य दर्शनात्। प्रजापतिर्हिंकारः। अनिरुक्त्याद्धिंकारस्य चाव्यक्तत्वात्। प्राणः स्वरः। स्वर इति स्तोभः। प्राणस्य च स्वरहेतुत्वसामान्यात्। अन्नं या। या इति स्तोभोऽन्नं। अन्नेन हीदं यातीतस्तत्सामान्याद्वागिति

---

व्या॰ सीतेत्यर्थः ॥ ऊकारमादित्यदृष्ट्या कथमुपासीतेत्याशङ्क्याह। उच्चैरिति ॥ ऊकारादित्ययोर्विधान्तरेण सादृश्यमाह। आदित्येति ॥ एकारसामान्यान्निहवदृष्टिरेकारे स्तोभे कार्य्येत्याह। निहव इत्यादिना ॥ औहोइकारस्य विश्वेदेवदृष्ट्योपास्तौ हेतुमाह। वैश्वदेव्य इति ॥ प्रजापतिदृष्ट्या हिङ्कारोपास्यत्वे हेतुः। अनिरुक्तत्वादिति ॥ नीलपीतादिरूपेण निरुक्तयविषयत्वात्प्रजापतेरित्यर्थः। अव्यक्तत्वाद्रूपादिरहितत्वादित्यर्थः। प्राणस्य चेति चकारात्स्वरस्य चेत्यर्थः ॥ स्वरहेतुत्वं तन्निर्वर्त्तकत्वेन तदात्मकत्वं। वाक्यं व्याचष्टे। या इतीति ॥ अन्नदृष्टिर्या इति स्तोभे कर्त्तव्येत्यत्र हेतुमाह। अन्नेनेति ॥ विराड्दृष्टिर्वागिति स्तोभे कार्य्येत्यत्र हेतुमाह। वैराज इति ॥ अनिरुक्तः कारणात्मा॥ तस्यानिरुक्तत्वं साधयति। अव्यक्तत्वादिति ॥ स चानेकधा कार्य्यरूपेण सञ्च-

भा° स्तोभो विराडन्नं देवताविशेषो वा। वैराजे साम्नि स्तोभदर्शनात्। अनिरुक्तोऽव्यक्तत्वादिदं चेदञ्चेति निर्वक्तुं न शक्यत इत्यतः सञ्चरो विकल्प्यमानस्वरूप इत्यर्थः॥ कोऽसावित्याह। हुङ्कारः। अव्यक्तो ह्ययमतोऽनिरुक्तविशेष एवोपास्य इत्यभिप्रायः। स्तोभाक्षरोपासनाफलमाह। दुग्धेऽस्मै वाग्दोहमित्याद्युक्तार्थं। य एतामेवं यथोक्तलक्षणां साम्नां सामावयवस्तोभाक्षरविषयामुपनिषदं दर्शनं वेद तस्यैतद्यथोक्तं फलमित्यर्थः॥ द्विरभ्यासोऽध्यायसमाप्त्यर्थः। सामावयवविषयोपासनाविशेषपरिसमाप्त्यर्थ इतिशब्दः॥ १३॥ इति श्रीमद्गोविन्दभगवत्पूज्यपादशिष्यपरमहंसपरिव्राजकाचार्यश्रीमच्छङ्करभगवत्पादकृतौ छान्दोग्योपनिषद्विवरणे प्रथमः प्रपाठकः समाप्तः॥ १॥

---

आ° रतीति सञ्चरः। हुङ्कारोऽपि शाखाभेदेन विकल्प्यमानस्वरूपस्त्रयोदशस्तोभोऽयं वावेत्यारभ्य गण्यमानस्ततश्च कारणदृष्ट्या हुङ्कारमुपासीतेत्यर्थः॥ उक्तमेवोपपादयति। अव्यक्तो हीति॥ तत्र विकल्प्यमानत्वं हेतुः। नैतानि व्यस्तान्युपासनानि प्रत्येकं फलाश्रवणात्। समस्तं पुनरेकमिदमुपासनमेकफलत्वादित्यभिप्रेत्याह। स्तोभाक्षरेति॥ उपनिषदं वेदोपनिषदं वेदेत्यावृत्तेस्तात्पर्यमाह। द्विरभ्यास इति॥ प्रथमप्रपाठकव्याख्यानसमाप्तावितिशब्दः॥ १३॥ इति श्रीमत्परमहंसपरिव्राजकशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानकृतायां छान्दोग्यभाष्यटीकायां प्रथमोऽध्यायः समाप्तः॥ १॥

उ॰ ॥ ॐ ॥ समस्तस्य खलु साम्न उपासनꣳ साधु यत्खलु साधु तत्सामेत्याचक्षते यदसाधु तदसामेति ॥ १ ॥ तदुताप्याहुः साम्नैनमुपागादिति साधुनैनमुपागादित्येव तदाहुरसाम्नैनमुपागादित्यसाधु-

---

भा॰ ओमित्येतदक्षरमित्यादिना सामावयवविशेषमुपासनमनेकफलमुपदिष्टं। अनन्तरञ्च लोभाक्षरविषयमुपासनमुक्तं। सर्व्वथापि सामैकदेशसम्बद्धमेव तदिति। अथेदानीं समस्ते साम्नि समस्तसामविषयाण्युपासनानि वक्ष्यामीत्यारभते श्रुतिः। युक्तं ह्येकदेशोपासनानन्तरमेकदेशिविषयमुपासनमुच्यत इति। समस्तस्य सर्व्वावयवविशिष्टस्य पाञ्चभक्तिकस्य साप्तभक्तिकस्य चेत्यर्थः। खल्विति वाक्यालङ्कारार्थः। साम्न उपासनं साधु। समस्ते साम्नि साधुदृष्टिविधिपरत्वान्न

---

व्या॰ ॥ ॐ ॥ पूर्व्वोत्तरप्रपाठकयोः सङ्गतिं दर्शयति। ओमित्येतदित्यादिना ॥ सर्व्वथापि सामावयवविषयत्वे लोभाक्षरविषयत्वे चेत्यर्थः। इतिशब्दो हेत्वर्थः ॥ यस्मादेकदेशविषयाण्युपासनानि उक्तानि तस्मात्तानि समस्तविषयाणि वक्तव्यानीत्यर्थः। एकदेशोपास्तिव्याख्यानन्तर्य्यमथशब्दार्थः ॥ कथमुक्तवक्ष्यमाणोपासनयोरिदं पौर्व्वापर्य्यं तत्राह। युक्तं हीति ॥ समस्तस्योपासनं साध्विति वचनादवयवोपासनं निन्दितत्वादननुष्ठेयमित्याशङ्क्याह। समस्त इति ॥ अर्थादस्ति निन्देति शङ्कते। नन्विति ॥ पूर्व्वत्रापि साधुत्वस्य विद्यमानस्यैव विशेषणत्वेनानुपादानान्नार्थादपि निन्देति परिहरति। न साध्विति ॥ यत्खल्वित्यादिव्याख्यातुं पातनिकामाह। साधुशब्द इति ॥ वाक्यमवतार्य्य व्याचष्टे। कथमित्यादिना ॥

उ॰ नैनमुपागादित्येव तदाहुः ॥२॥ अथोताप्याहुः साम नो बतेति यत्साधु भवति साधु बतेत्येव तदाहुरसाम नो बतेति यदसाधु भवत्यसाधु

---

भा॰ पूर्व्वोपासननिन्दार्थत्वं साधुशब्दस्य। ननु लोके पूर्व्वत्राविद्यमानं साधुत्वं समस्ते साम्न्यभिधीयते। न साधु सामेत्युपास्त इत्युपसंहारात्। साधुशब्दः शोभनवाची। कथमवगम्यत इत्याह। यत्खलु लोके साधुशोभनमनवद्यं प्रसिद्धं तस्मात्सामेत्याचक्षते कुशलाः। यदसाधु विपरीतं तदसामेति।

तत्रैव साध्वसाधुविवेककरणे उताप्याहुः। साम्ना एनं राजानं सामन्तश्चोपागादुपगतवान्। कोऽसौ। यतोऽसाधुत्वप्राप्त्याशङ्का स इत्यभिप्रायः। शोभनाभिप्रायेण साधुनैनमुपागादित्येव तत्राहुस्ताकिका बन्धनाद्यसाधुकार्य्यमपश्यन्तः। यत्र पुनर्विपर्य्यये बन्धनाद्यसाधुकार्य्यं पश्यन्ति तत्रासाम्नैनमुपागादित्यसाधुनैनमुपागादित्येव

---

व्या॰ किं पुनरेवं विवेककरणे कारणमित्याशङ्क्याह। तत्रेति॥ विवेककरणोपायभेदविकल्पार्थमुतेत्युभयत्र पदं साम्नैनमित्यादिना साधुनेत्यादिवाक्यस्य पौनरुक्त्यमाशङ्क्य व्याख्यात्व्याख्येयभावान्मैवमित्याह। शोभनेति॥ शोभनकार्य्यदर्शने सतीति यावत्॥ तत्रैव हेत्वन्तरमाह। बन्धनादीति॥ असामेत्यादि व्याचष्टे। यत्रेति॥

कार्य्यगम्यं साधुत्वमसाधुत्वञ्चोक्त्वा स्वानुभवगम्यं तदुपन्यस्यति। अथेति॥ कार्य्यात्तस्य साधुत्वादिविवेकानन्तर्य्यमथशब्दार्थः॥ स्वसंवेद्यं साधुत्वमसाधुत्वञ्चेति शेषः॥ तत्र साधुत्वं स्वानुभवसिद्धमित्येतद्युत्पादयति। सामेति॥ यत्साध्वित्यादिवाक्यस्य

उ॰ वतेत्येव तदाहुः ॥३॥ स य एतदेवं विद्वान्साधु सामेत्युपास्तेऽभ्याशो ह यदेनꣳ साधवो धर्म्मा आ च गच्छेयुरुपचनमेयुः ॥४॥ चतुर्थस्य प्रथमः खण्डः ॥ १ ॥.

---

भा॰ तदाहुः ॥ २ ॥ अथोताप्याहुः स्वसंवेद्यं साम नोऽस्माकं वनेत्यनुकम्पयतः संवृत्तमित्याहुः। एतत्तैरुक्तं भवति यत्साधु भवति साधु वतेत्येव तदाहुः। विपर्य्यये जातेऽसाम नोवतेति। यदसाधु भवत्यसाधु वनेत्येव तदाहुः। तस्मात्सामसाधुशब्दयोरेकार्थत्वं सिद्धं ॥

अतः स यः कश्चित्साधु सामेति साधुगुणवत्सामेत्युपास्ते समस्तं साम साधुगुणवद्विद्वांस्तस्यैतत्फलमभ्याशो ह क्षिप्रं यदिति क्रियाविशेषणार्थमेनमुपासकं साधवः शोभनधर्माः श्रुतिस्मृत्यविरुद्धा आ च गच्छेयुरागच्छेयुश्च न केवलमागच्छेयुरुपचनमेयुरुपनमेयुश्च भोग्यत्वेनोपतिष्ठेयुरित्यर्थः ॥ १ ॥

---

व्या॰ पूर्व्वेण पौनरुक्त्यमाशङ्क्याह। एतदिति ॥ असामेत्यादि व्याचष्टे। विपर्य्यय इति ॥ वतेत्याहुरिति सम्बन्धः ॥ किन्तैरुक्तं भवति तदाह। यदसाध्विति ॥ साधुशब्दः शोभनवाचीत्युक्तमुपसंहरति। तस्मादिति॥ तयोरेकार्थत्वमतःशब्दार्थः॥ उपासकमेव विशिनष्टि। समस्तमिति॥ आगच्छेयुरिति वत्तत्क्षिप्रमेवेति क्रियाविशेषणत्वं यदित्यस्य द्रष्टव्यं॥ १ ॥

उ० लोकेषु पञ्चविधꣳ सामोपासीत पृथिवी हि-ङ्कारः ।

---

भा० कानि पुनस्तानि साधुदृष्टिविशिष्टानि समस्तानि सामान्युपास्यानीति । इमानि तान्युच्यन्ते लोकेषु पञ्चविधमित्यादीनि । ननु लोकादिदृष्ट्या तान्युपास्यानि साधुदृष्ट्या चेति विरुद्धं । न । साध्वर्थस्य लोकादिकार्य्येषु कारणस्यानुगतत्वात् । मृदादिवद्घटादिविकारेषु । साधुशब्दवाच्योऽर्थो धर्म्मो ब्रह्म वा सर्व्वथापि लोकादिकार्य्येष्वनुगतं । अतो यथा यत्र घटादिदृष्टिर्मृदादिदृष्ट्यनुगतैव सा । तथा साधुदृष्ट्यनुगतैव लोकादिदृष्टिः । धर्म्मादिकार्य्यत्वाल्लोकादीनां ॥

यद्यपि कारणत्वमविशिष्टं ब्रह्मधर्म्मयोः । धर्म्म एव साधुशब्दवाच्य इति युक्तं साधुकारी साधुर्भवतीति । धर्म्मवि-

---

व्या० एकस्योभयदृष्टिविषयत्वमयुक्तं ॥ नहि घटे दृष्टिगोचरः सन् पटदृष्टेरपि गोचरः स्यादिति शङ्कते । नन्विति ॥ एकस्मिन्नपि प्रस्तुतं दृष्टिद्वयमविरुद्धमिति समाधत्ते । न साध्वर्थस्येति ॥ यथा घटादिषु मृदाद्यनुगतं तथा साधुशब्दार्थस्य कारणस्य लोकादिषु कार्य्येष्वनुगतत्वात्तद्दृष्टौ साधुदृष्टेरनुगमान्न दृष्टिद्वयस्यैकत्र विरोधोऽस्तीत्यर्थः ॥ तदेव स्फुटयति । साधुशब्देति ॥ साध्वर्थस्य लोकेष्वनुगतिरपिशब्दार्थः । यत्रेति देवदत्तोक्तिः । सा घटादिदृष्टिस्तत्रेति शेषः ॥

ननु साधुशब्दार्थयोर्धर्म्मब्रह्मणोस्तुल्यं कारणत्वं । तथा चात्र साधुशब्दार्थो न व्यवस्थितः स्यादन्याय्यश्चानेकार्थत्वमित्याशङ्क्याह ।

भा० षये साधुशब्दप्रयोगात्। ननु लोकादिकार्य्येषु कारणस्या-
नुगतत्वादर्थप्राप्त्यैव तद्दृष्टिरिति साधु सामेत्युपास्त इति
न वक्तव्यं।न। शास्त्रगम्यत्वात्तद्दृष्टेः। सर्व्वत्र हि शास्त्रप्रापिता
एव धर्म्मा उपास्या न विद्यमाना अप्यशास्त्रीयाः। लोकेषु
पृथिव्यादिषु पञ्चविधं पञ्चभक्तिभेदेन पञ्चप्रकारं साधु
समस्तं सामोपासीत। कथं। पृथिवी हिङ्कारः। लोकेष्विति
या सप्तमी तां प्रथमात्वेन विपरिणम्य पृथिव्यादिदृष्ट्या
हिङ्कारे पृथिवी हिङ्कार इत्युपासीत॥

---

व्या० यद्यपीति॥ धर्म्म एवेत्यत्र तथापीति च वक्तव्यं। ब्रह्मणि तु पर-
मानन्दे साधुशब्दो भक्त्या गमयितव्यः। न च धर्म्मस्य निमि-
त्तकारणत्वान्न कार्य्यानुगतिरिति वाच्यं। कर्म्मापूर्व्वसहितदधिप-
यःप्रभृत्यवयवसमुदायस्य धर्म्मत्वात् तत्परिणामत्वाच्च कार्य्यस्य।
तत्र तदनुगतिसिद्धेरिति द्रष्टव्यं॥ अपूर्व्वत्वाभावेन विधिमाक्षि-
पति। नन्विति॥ कारणानुगमस्यानुमानिकत्वेऽपि तद्दृष्टिकत्वम-
पूर्व्वमेवेति परिहरति। न शास्त्रगम्यत्वादिति॥ यस्यार्थादर्थो न स
चोदनार्थ इति न्यायेनोक्तं विवृणोति। सर्व्वेति॥ लोकेष्वित्यादि-
वाक्ये पञ्चविधसामदृष्ट्या लोकानामुपास्यत्वप्रतीतेरन्यापि हिङ्कार-
दृष्ट्या पृथिव्या ध्येयत्वे प्राप्ते प्रत्याह। लोकेष्वितीति॥ लोकाः
पञ्चविधं सामोपासीतेति विभक्तिविपरिणामेन प्रथमवाक्या-
र्थपर्य्यवसानात् तदनुसारेणान्यापि पृथिवीदृष्ट्या हिङ्कारे ध्येये
सति पृथिवी हिङ्कार इति पृथिवीदृष्टिमारोप्य हिङ्कारमुपा-
सीतेति द्वितीयवाक्यं पर्य्यवस्यतीत्यर्थः। लोकसम्बद्धा सप्तमी
हिङ्कारादिषु तत्सम्बन्धा च द्वितीया लोकेषु नेतव्या। तथा च
लोकविषया सप्तमी श्रुतिर्हिङ्कारादिषु तत्सम्बद्धा च द्वितीया
लोकेषु व्यत्यस्य पृथिव्यादिदृष्टिं हिङ्कारादिषु कृत्वोपासीतेति
पक्षान्तरमाह॥

उ० अग्निः प्रस्तावोऽन्तरिक्षमुद्गीथ आदित्यः प्रतिहारो द्यौर्निधनमित्यूर्द्धेषु ॥ १ ॥ अथावृत्तेषु द्यौर्हिङ्कार आदित्यः प्रस्तावोऽन्तरिक्षमुद्गीथोऽग्निः प्रति-

---

भा० व्यत्यस्य वा सप्तमीं श्रुतिं लोकविषयां हिङ्कारादिषु पृथिव्यादिदृष्टिं कृत्वोपासीत। तत्र पृथिवी हिङ्कारः। प्राथम्यसामान्यात्। अग्निः प्रस्तावः। अग्नौ हि कर्म्माणि प्रस्तूयन्ते। प्रस्तावश्च भक्तिः। अन्तरिक्षमुद्गीथः। अन्तरिक्षं हि गगनं। गकारविशिष्टश्चोद्गीथः। आदित्यः प्रतिहारः। प्रतिप्राण्यभिमुखत्वान्मां प्रति मां प्रतीति। द्यौर्निधनं। दिवि निधीयन्ते हि इतो गता इत्यूर्द्धेषु ऊर्द्धं गतेषु लोकदृष्ट्या सामोपासनं॥

अथाऽऽवृत्तेष्ववाङ्मुखेषु पञ्चविधमुच्यते सामोपासनं।

---

आ० व्यत्यस्येति॥ ब्रह्मदृष्टिरुत्कर्षादिति न्यायेन पक्षद्वयमुक्त्वा प्रति-वाक्यं व्याचष्टे। तत्रेति। उक्तरीत्याऽन्योपासने प्रस्तुते सतीति यावत्॥ अध्यासस्य सादृश्यनिबन्धनत्वाद्युक्तसादृश्याभावेऽपि यथा कथञ्चित्कल्पनीयं मत्वाह। प्राथम्येति॥ लोकेषु पृथिव्याः सामसु च हिङ्कारस्य प्राथम्यमस्ति तस्मात्सामान्यादिति यावत्॥ अग्निदृष्ट्या प्रस्तावोपासने प्रस्तावत्वसामान्यमाह। अग्नौ हीति॥ अन्तरिक्षदृष्ट्योद्गीथोपासने गकारसम्बन्धसादृश्यं दर्शयति। अन्तरिक्षं हीति॥ आदित्यदृष्ट्या प्रतिहारोपास्तौ प्रतिशब्द-सामान्यं हेतुमाह। प्रतिप्राणीति॥ द्युदृष्ट्या निधनोपासने निधनत्वसामान्यमाह। दिवीति॥ उक्तमुपासनमुपसंहरति। इत्यूर्द्धेष्विति॥

अथाऽऽवृत्तेष्विति वाक्यं व्याकरोति। अथेति॥ पृथिवीमुख्येषु द्युपर्य्यन्तेषु पञ्चविधसामोपासनकथनानन्तर्य्यमथशब्दार्थः॥

उ० रिक्षमुद्गीथोऽग्निः प्रतिहारःपृथिवी निधनं ॥२॥ कल्पन्ते हास्मै लोका ऊर्ध्वाश्चावृत्ताश्च य एतदेवं विद्वाँल्लोकेषु पञ्चविधं सामोपास्ते ॥३॥ द्वितीयः खण्डः ॥ २ ॥

---

भा० गत्यागतिविशिष्टा हि लोकाः। यथा ते तथादृष्ट्यैव सामोपासनं विधीयते यतोऽत आवृत्तेषु लोकेषु। द्यौर्हिंकारः प्राथम्यात्। आदित्यः प्रस्तावः। उदिते हि आदित्ये प्रस्तूयन्ते कर्म्माणि प्राणिनां। अन्तरिक्षमुद्गीथः पूर्व्ववत्। अग्निः प्रतिहारः। प्राणिभिः प्रतिहरणादग्नेः। पृथिवीनिधनं। तत आगतानामिह निधनात्।

उपासनफलं कल्पन्ते समर्था भवन्ति हास्मै लोका ऊर्द्ध्वाश्चावृत्ताश्च गत्यागतिविशिष्टा भोग्यत्वेन व्यवतिष्ठन्त इत्यर्थः। य एतदेवं विद्वाँल्लोकेषु पञ्चविधं

---

घा० पूर्व्वोत्तरग्रन्थयोर्मिथो विरोधं शङ्कित्वा परिहरति। गत्यागतीति॥ यथा वा ते गतिविशिष्टास्तथादृष्ट्यैव हिङ्काराद्युपासनं विहितं। यथा चागतिविशिष्टास्ते तथादृष्ट्यैव तदुपासनं विधीयते। तथा च शास्त्रानुसारेण क्रियमाणयोरुपासनयोर्न विरोधोऽस्तीत्यर्थः॥ द्विविधोपास्तिविषयसन्दर्भयोर्विरोधाभावमनूद्य फलितमुपासनं दर्शयति। यत इति॥ द्युलोकदृष्ट्या हिङ्कारस्योपास्यत्वे हेतुमाह। प्राथम्यादिति॥ घावृत्तौ द्युलोकस्यारम्भे च हिङ्कारस्य प्राथम्यं द्रष्टव्यं॥ आदित्यदृष्ट्या प्रस्तावस्योपास्यत्वे हेतुमाह। उदित इति। पूर्व्ववदिति गकारसामान्यं विवक्षितं॥ अग्निदृष्ट्या प्रतिहारोपास्तौ हेतुमाह। प्राणिभिरिति॥ प्रतिहरणमितस्ततो नयनं॥

उ॰ वृष्टौ पञ्चविधꣳ सामोपासीत पुरोवातो हिङ्कारो मेघो जायते स प्रस्तावो वर्षति स उद्गीथो विद्योतते स्तनयति स प्रतिहारः ॥१॥ उद्गृह्णाति तन्निधनं वर्षति हास्मै वर्षयति ह य एतदेवं विद्वान् वृष्टौ पञ्चविधꣳ सामोपास्ते ॥२॥ ॥३॥

---

भा॰ समस्तं साधु सामेत्युपास्त इति सर्व्वत्र योजना पञ्चविधे सप्तविधे च ॥ २ ॥

वृष्टौ पञ्चविधं सामोपासीत । लोकस्थितेर्वृष्टिनिमित्तत्वादानन्तर्य्यं पुरोवातो हिङ्कारः पुरोवाताद्युद्ग्रहणान्ता हि वृष्टिः । यथा साम हिङ्कारादिनिधनान्तं अन्तःपुरोवातो हिङ्कारः । प्राथम्यात् । मेघो जायते स प्रस्तावः । प्रावृषि मेघोपजनने वृष्टेः प्रस्ताव इति हि प्रसिद्धिः । वर्षति स उद्गीथः । श्रैष्ठ्यात् । विद्योतते स्तनयति स प्रतिहारः । प्रतिहृतत्वात् । उद्गृह्णाति तन्निधनं समाप्तिसामा-

---

आ॰ साध्वितिपदं सर्व्वत्र द्रष्टव्यमित्याह । इति सर्व्वत्रेति ॥ सर्व्वत्रेत्यस्य व्याख्या । पञ्चविधे इत्यादि ॥ २ ॥

ननु लोकदृष्ट्या सामोपास्त्यनन्तरं किमिति वृष्टिदृष्ट्या तदुपास्तिरुपन्यस्यते तत्राह । लोकस्थितेरिति ॥ पुरोवातदृष्ट्या हिङ्कारोपासने हेतुमाह । पुरोवातादीति ॥ उद्ग्रहणं वर्षोपसंहरणं ॥ अतःशब्दार्थमाह । प्राथम्यादिति ॥ मेघजन्मदृष्ट्या प्रस्तावोपास्तौ हेतुमाह । प्रावृषीति ॥ वर्षणदृष्ट्योद्गीथोपासनहेतुमाह । श्रैष्ठ्यादिति ॥ विद्योतनस्तनयित्नुदृष्ट्या प्रतिहारोपासने कारणमाह । प्रतिहृतत्वादिति ॥ विद्युतां स्तनयित्नूनाञ्च प्रतिहृतत्वं विप्रकीर्णत्वं तेन प्रतिशब्दसादृश्याद्विद्योतनादि-

उ० सर्वास्वप्सु पञ्चविधꣳ सामोपासीत मेघो यत् सम्प्लवते स हिङ्कारो यद्वर्षति स प्रस्तावो याः प्राच्यः स्यन्दन्ते स उद्गीथो याःप्रतीच्यःस प्रतिहारः समुद्रो निधनं ॥ १ ॥ न हाप्सु प्रैत्यप्सुमान् भवति य एतदेवं विद्वान् सर्वास्वप्सु पञ्चविधꣳ सामोपास्ते ॥ २ ॥ ॥ ४ ॥

---

भा० न्यात्। फलमुपासनस्य वर्षति हास्मा इच्छातः। तथा वर्षयति ह असत्यामपि वृष्टौ य एतदित्यादि पूर्व्ववत्॥ २ ॥

सर्व्वास्वप्सु पञ्चविधं सामोपासीत। वृष्टिपूर्व्वकत्वात्सर्व्वासामपामानन्तर्य्यं। मेघो यत्सम्प्लवते एकीभावेनेतरेतरं घनी भवति मेघो यदा उन्नतो वा तदा सम्प्लवत इत्युच्यते। मेघस्तदाऽपामारम्भः स हिङ्कारः। यद्वर्षति प्रस्तावः। आपः सर्व्वतो व्याप्तुं प्रस्तुताः। प्राच्यः स्यन्दन्ते स उद्गीथः। श्रैष्ठ्यात्। याः प्रतीच्यः स प्रतिहारः प्रतिहारसामान्यात्।

---

व्या० दृष्ट्या कर्त्तव्या प्रतिहारोपास्तिरित्यर्थः। उदयद्दृष्ट्या निधनोपासने निदानमाह। समाप्तीति॥ वर्षति पर्य्यन्ये तदनुमन्तृत्वमकिञ्चित्करमित्याशङ्क्याह। असत्यामपीति ॥ २ ॥

किमिति वृष्टिदृष्टेरनन्तरमपां दृष्टिः साम्नि क्षिप्यते तत्राह। वृष्टिपूर्व्वकत्वादिति ॥ मेघसम्प्लवदृष्ट्या हिङ्कारमारम्भसामान्यादुपासीतेत्याह। मेघ इति॥ वर्षद्दृष्ट्या प्रस्तावस्योपास्यत्वे हेतुमाह। आप इति॥ प्राच्यो नद्यो गङ्गाद्याः। प्रतीच्यस्तु नर्मदाद्या इति भेदः। तर्हि गङ्गादावमेच्छितमपि मरणं न स्यादिति चेत्त-

उ॰ ऋतुषु पञ्चविधꣳ सामोपासीत वसन्तो हिङ्कारो ग्रीष्मः प्रस्तावो वर्षा उद्गीथः शरत्प्रतिहारो हेमन्तो निधनं ॥ १ ॥ कल्पन्ते हास्मा ऋतव ऋतुमान्भवति य एतदेवं विद्वानृतुषु पञ्चविधꣳ सामोपास्ते ॥ २ ॥ ५ ॥

---

भा॰ समुद्रो निधनं। तन्निधनत्वादपां। न हाप्सु प्रैति। नेच्छति चेत्। अप्सुमान् भवति फलं ॥ ४ ॥

ऋतुषु पञ्चविधं सामोपासीत। ऋतुव्यवस्थाया यथोक्तान्निमित्तत्वादानन्तर्य्यं। वसन्तो हिङ्कारः प्राथम्यात्। ग्रीष्मः प्रस्तावः। यवादिसङ्ग्रहः प्रस्तूयते हि प्रावृडर्थं। वर्षा उद्गीथः प्राधान्यात्। शरत्प्रतिहारो रोगिणां मृतानाञ्च प्रतिहरणात्। हेमन्तो निधनं निवाते निधानात्प्राणिनां फलं कल्पन्ते च ऋतुव्यवस्थानुरूपं भोग्यत्वेना। स्मा उपासकायर्त्तवः। ऋतुमानार्त्तवैर्भोगैश्च सम्पन्नो भवतीत्यर्थः ॥ ५ ॥

---

नाह। नेच्छति चेदिति ॥ यसावुपासको मरुस्थलीष्वपि यथेच्छमुदकवान्भवतीत्यर्थः ॥ ४ ॥

आ॰ किमिति सलिलदृष्ट्यानन्तरमृतुदृष्टिः साम्न्यारोप्यते तत्राह। ऋतुव्यवस्थाया इति ॥ ऋतुव्यवस्थानुरूपं तत्र क्रियाविशेषणं ॥ कस्यचिदनुपासितुरपि क्रमेण तत्तदृतुफलभोगभागितोपपत्तेर्नेदमुपासनानुरूपं फलमित्याशङ्क्याह। ऋतुमानिति ॥ सम्पन्नो सर्व्वदा स्वेच्छावशादिति शेषः ॥ ५ ॥

उ० पशुषु पञ्चविधꣳ सामोपासीताजा हिङ्कारो ऽवयः प्रस्तावो गाव उद्गीथो ऽश्वाः प्रतिहारः पुरुषो निधनं ॥ १ ॥ भवन्ति हास्य पशवः पशुमान् भवति य एतदेवं विद्वान्पशुषु पञ्चविधꣳ सामो-पास्ते ॥ २ ॥ ६ ॥

---

भा० पशुषु पञ्चविधं सामोपासीत । सम्यग्वृष्टेष्वृतुषु पशव्यः काल इत्यानन्तर्य्यः । अजा हिङ्कारः प्राधान्यात्प्राथम्याद्वा । अजः पशूनां प्रथम इति श्रुतेः । अवयः प्रस्तावः साह-चर्य्यदर्शनादजावीनां । गाव उद्गीथः श्रैष्ठ्यात् । अश्वाः प्रतिहारः प्रतिहरणात्पुरुषाणां । पुरुषो निधनं पुरुषा-श्रयत्वात्पशूनां । फलं भवति हास्य पशवः पशुमान्भवति । पशुफलैश्च भोगत्यागादिभिर्युज्यत इत्यर्थः ॥ ६ ॥

---

आ० ऋतुदृष्ट्यनन्तरं साम्नि पशुदृष्ट्यारोपकारणमाह । सम्यगिति ॥ अजादृष्ट्या हिङ्कारोपासने हेतुद्वयमाह । प्राधान्यादित्यादिना ॥ अजाया यज्ञसम्बन्धात्प्राधान्यं । प्राथम्यन्तु प्रथमपाठादिति द्रष्टव्यं । ब्राह्मणो मनुष्याणामजः पशूनां तस्मात्ते मुख्या मुखतो ह्यसृ-ज्यन्तेति श्रुतिमजाप्राधान्ये प्रमाणयति । अज इति ॥ तस्माज्जाता अजावय इति श्रुतेरजानामवीनाञ्च साहचर्य्यं हिङ्कारप्रस्ता-वयोश्च साहचर्य्यं प्रसिद्धं । पशुमान् भवतीत्यस्य पूर्व्वेण पौनरुक्त्यं परिहरति । पशुफलैश्चेति ॥ ६ ॥

उ॰ प्राणेषु पञ्चविधꣳ परोवरीयः सामोपासीत प्राणो हिङ्कारो वाक्प्रस्तावश्चक्षुरुद्गीथः श्रोत्रं प्रतिहारो मनो निधनं परोवरीयाꣳसि वैतानि॥ १॥

भा॰ प्राणेषु पञ्चविधं परोवरीयः सामोपासीत। परम्परं परोवरीस्त्वगुणवत्प्राणदृष्टिविशिष्टं सामोपासीतेत्यर्थः। प्राणो घ्राणो हिङ्कारः। उत्तरोत्तरवरीयसां प्राथम्यात्। वाक्प्रस्तावः। वाचा हि प्रस्तूयते सर्व्वं। वाग्वरीयसी प्राणादप्राप्तमप्युच्यते। वाचा प्राप्तस्यैव तु गन्धस्य ग्राहकः प्राणः। वाचो बहुतरविषयं प्रकाशयति। चक्षुरतो वरीयो वाच उद्गीथः श्रैष्ठ्यात्। श्रोत्रं प्रतिहारः। प्रतिहृतत्वात्। वरीयश्चक्षुषः सर्व्वतः श्रवणात्। मनो निधनं। मनसि हि निधीयन्ते पुरुषस्य भोग्यत्वेन सर्व्वेन्द्रियाहृतविषयाः। वरीयस्त्वं च श्रोत्रान्मनसः सर्व्वेन्द्रियविषयव्यापकत्वात्। अतीन्द्रियविषयोऽपि मनसो गोचर एवेति यथोक्तहेतुभ्यः

आ॰ पशुप्रसूतपयोहृतादिनिमित्तत्वात्प्राणस्थितेस्तदृष्ट्यनन्तरं प्राणदृष्ट्या सामोपास्तिं प्रस्तौति। प्राणेष्विति॥ प्राणशब्दस्य मुख्यप्राणविषयत्वं व्यावर्त्तयति। घ्राण इति॥ मुख्यप्राणादुत्तरेषां वरीयस्त्वासम्भवात्तस्य सर्व्वश्रेष्ठतया निर्द्धारितत्वात्परम्परं वरीयसां वागादीनां मध्ये प्रथमभावित्वेनोक्तत्वाद्घ्राण एवात्र प्राणशब्दइत्यर्थः॥ कथं प्राणाद्वाचो वरीयस्त्वं तत्राह। वाचेति॥ अप्राप्तत्वं व्यवहितत्वं॥ चक्षुषो वरीयस्त्वं साधयति। वाच इति॥ शब्दस्येति यावत्। वाचः शब्दात्सकाशादित्यर्थः॥ उद्गीथत्वे चक्षुषो हेतुमाह। श्रैष्ठ्यादिति॥

उ॰ परोवरीयो हास्य भवति परोवरीयसो ह लोकाञ्जयति य एतदेवं विद्वान्प्राणेषु पञ्चविधं परोवरीयः सामोपास्त इति तु पञ्चविधस्य ॥ २ ॥ ७ ॥

अथ सप्तविधस्य वाचि सप्तविधꣳ सामोपासीत यत्किञ्च वाचो हुं इति स हिङ्कारो यत्प्रेति स प्रस्तावो यदेति स आदिः ॥ १ ॥

---

भा॰ परोवरीयांसि प्राणादीनि वै एतानि। एतद्दृष्ट्या विशिष्टं यः परोवरीयः सामोपास्ते परोवरीयो हास्य जीवनं भवतीति उक्तार्थमिति तु पञ्चविधस्य साम्न उपासनमुक्तमिति सप्तविधे वक्ष्यमाणविषये बुद्धिसमाधानार्थं। निरपेक्षो हि पञ्चविधे वक्ष्यमाणे बुद्धिं समाधित्सति॥ ७॥

अथानन्तरं सप्तविधस्य समस्तस्य साम्न उपासनं साध्विदमारभ्यते। वाचीति सप्तमी पूर्ववत्। वाग्दृष्टिविशिष्टं सप्तविधं सामोपासीतेत्यर्थः। यत्किञ्च वाचः शब्दस्य हुं इति यो विशेषः स हिङ्कारो हकारसामान्यात्। यत्प्रेतिशब्दरूपं स प्रस्तावः प्रसामान्यात्। यदा इति स आदिः। आकारसामान्यात्। आदिरित्योंकारः। सर्व्वादित्वात्।

---

घ्या॰ मनसो वरीयस्त्वे हेत्वन्तरमाह। अतीन्द्रियेति॥ इति वरीयस्त्वमिति पूर्व्वेण सम्बन्धः। अप्राप्तमप्युच्यते वाचेत्यादयो यथोक्तहेतवः॥ उक्तोपसंहारविरहेऽपि वक्ष्यमाणे बुद्धिसमाधानं किं न स्यादित्याशङ्क्याह। निरपेक्षो हीति॥ ७॥

उ॰ यदुदिति स उद्गीथो यत्प्रतीति स प्रतिहारो यदुपेति स उपद्रवो यन्नीति तन्निधनं ॥ २ ॥ दुग्धेऽस्मै वाग्दोहं यो वाचो दोहोऽन्नवानन्नादो भवति य एतदेवं विद्वान्वाचि सप्तविधꣳ सामोपास्ते ॥ ३ ॥ ८ ॥

अथ खल्वमुमादित्यꣳ सप्तविधꣳ सामोपासीत सर्व्वदा समस्तेन साम मां प्रति मां प्रतीति सर्व्वेण समस्तेन साम ॥ १ ॥

---

भा॰ यदुदिति स उद्गीथः । उत्पूर्व्वत्वादुद्गीथस्य । यत्प्रतीति स प्रतिहारः । प्रतिसामान्यात् । यदुपेति स उपद्रव उपोपक्रमत्वादुपद्रवस्य । यन्नीति तन्निधनं । निशब्दसामान्यात् । दुग्धेऽस्मा इत्याद्युक्तार्थं ॥ ८ ॥

अवयवमात्रे साम्नि आदित्यदृष्टिः पञ्चविधेषु उक्ता प्रथमे चाध्याये । अथेदानीं खल्वमुमादित्यं समस्ते साम्न्यव-

---

आ॰ अधिकसङ्ख्याध्यानस्याल्पसङ्ख्याध्यानपूर्व्वकत्वात्पञ्चविधोपासनानन्तरं सप्तविधोपासनं प्रस्तौति । अथेति ॥ पूर्व्ववल्लोकेष्विति वत्सप्तमी च नेतव्येत्यर्थः ॥ वाक्शब्देन शब्दसामान्यमुच्यते तत्सप्तधा प्रविभक्तसामावयवेष्वारोप्योपासनं कर्त्तव्यमिति वाक्यार्थमाह । वागदृष्टीति ॥ यत्किञ्च वाच इति वाक्योपादानं तस्यार्थमाह । शब्दस्येति ॥ ८ ॥

वागदृष्टेरनन्तरमादित्यदृष्टिर्विधीयते । तस्य वाङ्मयत्वात् । न च तद्विधानं युक्तं ॥ पूर्व्वमप्यादित्यदृष्टिविशिष्टोपासनस्योपदिष्टत्वादित्याशङ्क्याह । अवयवमात्र इति ॥ तस्य सामत्वे हेतुं पृच्छति ॥

उ॰ तस्मिन्निमानि सर्वाणि भूतान्यन्वायत्तानीति विद्यात्तस्य यत्पुरोदयात्स हिङ्कारस्तदस्य पशवोऽन्वायत्तास्तस्मात्ते हिङ्कुर्वन्ति हिङ्कारभाजिनो

---

भा॰ यववयविभागशोऽप्यस्य सप्तविधं सामोपासीत। कथं पुनः सामत्वमादित्यस्येत्युच्यते। उद्गीथ हेतुवदादित्यस्य सामत्वे हेतुः। कोऽसौ सर्व्वदा समो वृद्धिक्षयाभावात्तेन हेतुना सामादित्यो मां प्रति मां प्रतीति तुल्यां बुद्धिमुत्पादयति। अतः सर्व्वेण समोऽतः साम समत्वादित्यर्थः। उद्गीथभक्तिसामान्यवचनादेव लोकादिषूक्तसामान्याद्धिङ्कारादित्वं गम्यत इति हिङ्कारादित्वे कारणं नोक्तं। सामत्वे पुनः सवितुरनुक्तं कारणं न सुबोधमिति समत्वमुक्तं। तस्मिन्नादित्येऽवयवविभागश इमानि वक्ष्यमाणानि सर्व्वाणि भूतान्यन्वायत्तान्यनुगतान्यादित्यमुपजीव्यत्वेनेति विद्यात्।

---

व्या॰ कथमिति॥ सर्व्वदेत्यादिवाक्यमुत्तरत्वेनादत्ते। उच्यत इति॥ उच्चैःसन्तमादित्यं गायन्तीत्यादित्यस्योद्गीथत्वे हेतुः श्रुत्योक्तः। तथा सामत्वेऽपि तस्य हेतुरुच्यत इत्यर्थः॥ तमेव प्रश्नपूर्व्वकं विवृणोति। कोऽसाविति॥ नोदेता नास्तमेतेत्यादिदर्शनादित्यर्थः॥ मां प्रतीत्यादि व्याचष्टे। मां प्रतीति॥ अन्यशब्दस्यान्यत्रवृत्तिर्नान्तरेण किञ्चिन्निमित्तमित्यादित्यस्य सामत्वे हेतुरुच्यते चेदिदानीं हिङ्कारादित्वेऽपि कुतो निमित्तं श्रुत्या नोक्तमित्याशङ्क्याह। उद्गीथेति॥ आदित्यस्योद्गीथेन सहोर्द्धत्वं सामान्यं श्रुत्योक्तं। तदनुसारेणास्मदुक्तप्राथम्यादिसामान्यं यथा पृथिव्यादिषु हिङ्कारादित्वं गम्यते तथादित्यप्रभेदानामपि हिङ्कारादित्वं शक्यावगम्यमितिश्रुत्या तेषां सद्भावेनोक्तं कारणमित्यर्थः॥ तर्हि सामत्वेऽपि कारणा-

उ० ह्येतस्यसाम्नः ॥ ३ ॥ अथ यत्प्रथमोदिते स प्रस्तावस्तदस्य मनुष्या अन्वायत्तास्तस्मात्ते प्रस्तुतिकामाः प्रशꣳसाकामाः प्रस्तावभाजिनो ह्येतस्य

---

भा० कथं तस्यादित्यस्य यत्पुरोदयाद्धर्म्मरूपं स हिङ्कारो भक्तिस्तत्रेदं सामान्यं। यत्तस्य हिङ्कारभक्तिरूपं तदस्यादित्यस्य साम्नः पशवो गवादयोऽन्वायत्ता अनुगतास्तद्भक्तिरूपमुपजीवन्तीत्यर्थः ॥

यस्मादेवं तस्मात्ते हिङ्कुर्व्वन्ति पशवः प्रागुदयात्। तस्माद्धिङ्कारभाजिनो ह्येतस्यादित्याख्यस्य साम्नस्तद्भक्तिभजनशीलत्वाद्धि ते एवं वर्त्तन्ते। अथ यत्प्रथमोदिते सवितृरूपं तदस्यादित्याख्यसाम्नः स प्रस्तावस्तदस्य मनुष्या अन्वायत्ताः पूर्व्ववत्। तस्मात्ते प्रस्तुतिं प्रशंसां कामयन्ते।

---

आ० त्रेधासम्भवान्न वक्तव्यं कारणमित्याशङ्क्याह। सामत्वे पुनरिति ॥ समत्वं तत्र निमित्तमिति यावत् ॥ समः सर्व्वेणेत्युक्तं व्यक्तीकरोति। तस्मिन्निति ॥ वेदनप्रकारं प्रश्नपूर्व्वकं प्रकटयति। कथमित्यादिना ॥ धर्म्मरूपत्वं सुखकरत्वात् धर्म्मकार्य्यात्मकं रूपमिति यावत्। तद्दृष्ट्या हिङ्कारोपासने प्राथम्यं हेतुः ॥

पशवो यथोक्तमादित्यरूपमुपजीवन्तीत्यत्र किं प्रमाणं तदाह। यस्मादिति ॥ तेषां हिङ्करणं साधयति। तस्मादित्यादिना ॥ तद्भक्तिभजनशीलत्वादित्यस्मात्प्रागेव तस्यादित्यस्य सम्बन्धः। सवितरि प्रथमोदिते सति यत्तस्य रूपं तद्दृष्ट्या प्रस्तावस्योपास्यत्वे पूर्व्वस्मादानन्तर्य्यं हेतुः। यथोदयात्प्राचीनरूपं पशुभिरुपजीव्यन्ते तथेत्याह। पूर्व्ववदिति ॥ उदयात्पराचीनमादित्यरूपं मनुष्या उपजीवन्तीत्यत्र लिङ्गमाह। तस्मादिति ॥ प्रत्यक्षपरोक्षभावेन

उ॰ साम्नः ॥ ४ ॥ अथ यत्सङ्गववेलायाꣳ स आदित्य स्तदस्य वयाꣳस्यन्वायत्तानि तस्मात्तान्यन्तरिक्षेऽनारम्बणान्यादायात्मानं परिपतन्त्यादिभाजीनि ह्येतस्य साम्नः ॥ ५ ॥ अथ यत्सम्प्रति मध्यन्दिने स उद्गीथस्तदस्य देवा अन्वायत्तास्तस्मात्ते सत्तमाः प्राजापत्या नामुद्गीथभाजिनो ह्येतस्य

---

भा॰ तस्मात्प्रस्तावभाजिनो ह्येतस्य साम्नः । अथ यत्सङ्गववेलायां गवां रश्मीनां सङ्गमनं सङ्गवो यस्यां वेलायां गवां वत्सैः सह सङ्गववेला तस्मिन्काले यत्सावित्रं रूपं स आदिभक्तिविशेष ओङ्कारस्तदस्य वयांसि पक्षिणोऽन्वायत्तानि ॥

यत एवं तस्मात्तानि वयांसि अन्तरिक्षेऽनारम्बणान्यनालम्बनान्यात्मानमादायात्मानमेवालम्बनत्वेन गृहीत्वा परिपतन्ति गच्छन्त्यत आकारसामान्यादादिभक्तिभाजीनि ह्येतस्य साम्नः॥ अथ यत्सम्प्रति मध्यन्दिने ऋजुमध्यन्दिने इत्यर्थः । स उद्गीथभक्तिस्तदस्य देवा अन्वायत्ताः ।

---

व्या॰ प्रस्तुतिप्रशंसयोर्भेदः । गोशब्दवाच्यानां रश्मीनां जगन्मण्डलेन सङ्गमनं सम्बन्धगमनमित्यर्थः । वत्सैः सङ्गमनमिति सम्बन्धः । सङ्गवकालीनमादित्यरूपमारोप्यादिभक्तेरोङ्कारस्योपास्यत्वे द्वयोराकारसामान्यं हेतुः । पक्षिणां यथोक्तमादित्यरूपमुपजीव्यमित्यत्र हेतुमाह ।

यत इति ॥ ऋजुमध्यन्दिने यदादित्यस्य रूपं तदुद्गीथोपासने श्रेष्ठं हेतुः । तत्कालीनादित्यरूपस्य देवोपजीव्यत्वे हेतुमाह । द्योतनेति ॥ तथापि तस्य देवैरुपजीव्यत्वं कथमि-

उ० साम्नः ॥ ६ ॥ अथ यदूर्द्ध्वं मध्यन्दिनात्प्रागपराह्णात्स प्रतिहारस्तदस्य गर्भा अन्वायत्तास्तस्मात्ते प्रतिहृता नावपद्यन्ते प्रतिहारभाजिनो ह्येतस्य साम्नः ॥ ७ ॥

अथ यदूर्द्ध्वमपराह्णात्प्रागस्तमयात्स उपद्रवस्तदस्यारण्या अन्वायत्तास्तस्मात्ते पुरुषं दृष्ट्वा

---

भा० द्योतनातिशयात्तत्काले। तस्मात्ते सत्तमा विशिष्टतमाः प्राजापत्यानां। प्रजापत्यपत्यानामुद्गीथभाजिनो ह्येतस्य साम्नः॥ अथ यदूर्द्ध्वं मध्यन्दिनात्प्रागपराह्णाद्यद्रूपं सवितुः स प्रतिहारस्तदस्य गर्भा अन्वायत्ताः। अतस्ते सवितुः प्रतिहारभक्तिरूपेणोर्द्ध्वं प्रतिहृताः सन्तो नावपद्यन्ते नाधः पतन्ति द्वारे सत्यपीत्यर्थः। यतः प्रतिहारभाजिनो ह्येतस्य साम्नो गर्भाः॥

अथ यदूर्द्ध्वमपराह्णात्प्रागस्तमयात् स उपद्रवस्तदस्यारण्याः पशवोऽन्वायत्ताः। तस्मात्ते पुरुषं दृष्ट्वा भीताः

---

आ० तिचेत्तत्राह। तस्मादिति॥ अथ यदूर्द्ध्वमितिवाक्यमादाय व्याचष्टे। मध्यन्दिनादिति॥ तद्दृष्ट्या प्रतिहारोपासने प्रतिशब्दसाम्यं हेतुस्तस्मिन् काले सवितुरस्तं गिरिं प्रति हरणाद्ययोक्तमादित्यरूपं गर्भैरुपजीव्यमित्यत्र गमकमाह। यत इति॥ ऊर्द्ध्वं योनेरुपरिष्टाज्जठरं प्रतीत्यर्थः। यतो गर्भाः पूर्व्वोक्तविशेषवन्तोऽत इति यावत्॥

तद्द्वारं पतनद्वारं तत्र तत्कालीनादित्यदृष्ट्योपद्रवमुपासीत तस्य तदाऽस्ताचलं प्रत्युपद्रवणादित्याह। अथेति॥ अरण्यानां पशूनां

उ॰ कक्षꣳश्वभ्रमित्युपद्रवन्त्युपद्रवभाजिनो ह्येतस्य साम्नः ॥ ८ ॥ अथ यत्प्रथमास्तमिते तन्निधनं तदस्य पितरोऽन्वायत्तास्तस्मात्तान्निदधति निधनभाजिनो ह्येतस्य साम्न एवं खल्वमुमादित्यꣳ सप्तविधꣳ सामोपास्ते ॥ ९ ॥ ९ ॥

अथ खल्वात्मसम्मितमतिमृत्यु सप्तविधꣳ

---

भा॰ कक्षमरण्यं श्वभ्रं भयशून्यमित्युपद्रवन्त्युपगच्छन्ति दृष्ट्वोपद्रवभाजिनो ह्येतस्य साम्नः॥ अथ यत्प्रथमास्तमितेऽदर्शनं जिगमिषति सवितरि तन्निधनं तदस्य पितरोऽन्वायत्तास्तस्मात्तान्निदधति पितृपितामहप्रपितामहरूपेण दर्भेषु निक्षिपन्ति तांस्तदर्थपिण्डान्वा स्थापयन्ति । निधन सम्बन्धान्निधनभाजिनो ह्येतस्य साम्नः पितरः । एवमवयवशः सप्तधा विभक्तं खल्वमुमादित्यं सप्तविधं सामोपास्ते यस्तस्य तदापत्तिः फलमिति वाक्यशेषः ॥ ९ ॥

मृत्युरादित्यः । अहोरात्रादिकालेन जगतः प्रमापयितृत्वात्तस्यातितरणायेदं सामोपासनमुपदिश्यते । अथ

---

व्या॰ यथोक्तरूपेोपजीवनमुपपादयति । तस्मादिति ॥ श्वभ्रं गर्त्तं गुहेति यावत् । तत्स्वितृरूपमिति शेषः । तद्दृष्ट्वा निधनोपासने समाप्तिसामान्यं हेतुः । यथोक्तमादित्यरूपं पितृभिरुपजीव्यमित्यत्र गमकमाह । तस्मादित्यादिना ॥ तत्र तत्राथशब्दस्तदुपासनानन्तर्यार्थो व्याख्येयः ॥ एवं खल्वित्यादिवाक्यमपेक्षितं पूरयन् व्याकरोति । एवमिति ॥ ९ ॥

अथ खल्वात्मसम्मितमित्यादेस्तात्पर्यमाह । मृत्युरिति ॥ अन-

उ॰ सामोपासीत हिङ्कार इति त्र्यक्षरं प्रस्ताव इति त्र्यक्षरं तत्समं ॥ १ ॥ आदिरिति द्व्यक्षरं प्रतिहार इति चतुरक्षरं तत इहैकं तत्समं ॥ २ ॥ उद्गीथ इति त्र्यक्षरमुपद्रव इति चतुरक्षरं त्रिभिस्त्रिभिः समं भवत्यक्षरमतिशिष्यते त्र्यक्षरं तत्समं ॥ ३ ॥ निधनमिति त्र्यक्षरं तत्सममेव भवति

---

भा॰ खल्वनन्तरं । आदित्यमृत्युविषयसामोपासनस्यात्मसम्मितं स्वावयवतुल्यतया मितं परमात्मतुल्यतया वा सम्मितं अतिमृत्यु मृत्युजयहेतुत्वात् । यथा प्रथमेऽध्याये उद्गीथभक्तिनामाक्षराण्युद्गीथ इत्युपास्यत्वेनोक्तानि । तथेह साम्नः सप्तविध भक्तिनामाक्षराणि समाहृत्य त्रिभिस्त्रिभिः समतया सामत्वं परिकल्प्योपास्यत्वेनोच्यते । तदुपासनं मृत्युगोचराक्षरसङ्ख्यासामान्येन मृत्युं प्राप्य तदतिरिक्ताक्षरेण तस्मादित्यमृत्योरतिक्रमणायैव सङ्क्रमणं कल्पयति । अतिमृत्यु सप्तविधं सामोपासीत मृत्युमतिक्रान्तमतिरिक्ताक्षरसङ्ख्येति अतिमृत्यु साम । तस्य प्रथमभक्तिनामाक्षराणि

---

आ॰ न्तरमित्यस्यापेक्षितं निक्षिपति । आदित्येति ॥ स्वशब्देन सामोच्यते । तस्यावयवा हिङ्कारादयस्तन्नामाक्षराणां त्रित्वेन त्रित्वेन तुल्यतया मितं सामेत्यर्थः ॥ यथा परमात्मावगमो मृत्योर्मोक्षणहेतुस्तथेदमुपासनमपीत्यर्थान्तरमाह । परमात्मेति ॥ कीदृगत्रोपासनं विवक्षितमित्यपेक्षायां सदृष्टान्तमुत्तरमाह । यथेत्यादिना ॥ उद्गीथ इत्युद्गीथभक्तिर्नाम तदक्षराणीति यावत् ॥ सामत्वं तेषां नामाक्षराणामित्यध्याहार्य्यं । तदुपासनं तेषामक्षराणा-

उ॰ तानि ह वा एतानि द्वाविꣳशतिरक्षराणि ॥ ४ ॥ एकविꣳशत्यादित्यमाप्नोत्येकविꣳशो वा इतोऽसावादित्यो द्वाविꣳशेन परमादित्याज्जयति

भा॰ हिङ्कार इत्येतत्। अक्षरं भक्तिनाम प्रस्ताव इति च। भक्तेस्त्र्यक्षरमेव नाम। तत्पूर्वेण समामादिरिति द्व्यक्षरं सप्तविधस्य साम्नः सङ्ख्या पूरणे। ओङ्कार आदिरित्युच्यते। प्रतिहार इति चतुरक्षरं। तत इह एकमक्षरमवच्छिद्याद्यक्षरयोः प्रक्षिप्यते। तेन तत्सममेव भवत्युद्गीथ इति त्र्यक्षरमुपद्रव इति चतुरक्षरं त्रिभिस्त्रिभिः समं भवत्यक्षरमतिशिष्यतेऽतिरिच्यते। तेन वैषम्ये प्राप्ते साम्नः समत्वकरणायाह। तदेकमपि सदक्षरमिति त्र्यक्षरमेव भवति। अतस्तत्समं निधनमिति त्र्यक्षरं तत्सममेव भवति॥

एवं त्र्यक्षरसमतया सामत्वं सम्पाद्य यथा प्राप्तान्येवाक्षराणि सङ्ख्यायन्ते। तानि ह वा एतानि सप्तभक्तिनामा-

---

व्या॰ मादित्यादिदृष्ट्योपासनमित्यर्थः। मृत्युगोचरात्तरसङ्ख्यैकविंशतित्वलक्षणा सास्त्येकानेकेष्वक्षरेषु तत्सामान्येन तेष्वक्षरेष्वादित्यदृष्ट्या मृत्युमादित्यमित्यर्थः। अतिक्रमाय तत्साधनमुपासनमिति शेषः॥ अतिमृत्यु मृत्योरत्ययहेतुत्वादित्युक्तमेव स्पष्टयति। मृत्युमिति॥ नामाक्षराणि कथ्यन्त इति शेषः। आद्यक्षरयोरादिभक्तिनामाक्षरयोरिति यावत्। तेन प्रक्षेपेन तदादिभक्तिनाम प्रतिहारनाम्ना तुल्यमेवेत्यर्थः॥

ननु यथोक्तरीत्या चतुर्विंशत्यक्षराणि तत्कथं तानि ह वा एतानि द्वाविंशतिरक्षराणीति तत्राह। एवमिति॥ आदित्यस्यास्माल्लोकादेकविंशत्वे श्रुत्यन्तरं प्रमाणयति। द्वादशेति॥ हेमन्त-

उ० तन्नाकं तद्विशोकं ॥ ५ ॥ आप्नोतीहादित्यस्य जयं परो हास्यादित्यजयाज्जयो भवति य एतदेवं विद्वानात्मसम्मितमतिमृत्यु सप्तविधꣳ सामो-पास्तेसामोपास्ते ॥ ६ ॥ १० ॥

---

भा० चराणि द्वाविंशतिस्तत्रैकविंशत्यचरसङ्ख्ययाऽऽदित्यमाप्नोति मृत्युं। यस्मादेकविंश इतोऽस्माल्लोकादसावादित्यः सङ्ख्यया। द्वादशमासाः पञ्चर्त्तवस्त्रय इमे लोका असावादित्य एक-विꣳ श इति श्रुतेरिति शिष्टेन द्वाविंशेनाचरेण परं मृत्यो-रादित्याज्जयत्याप्नोतीत्यर्थः॥ यच्च तदादित्यात्परं किन्तत्। नाकं कमिति सुखं तस्य प्रतिषेधोऽकं तन्न भवतीति नाकं कमेवेत्यर्थः॥ अमृत्युविषयत्वात्तद्दुःखस्य विशोकं च तद्विगतशोकं मानसदुःखरहितमित्यर्थः। तदाप्नोती-त्युक्तस्यैव पिण्डितार्थमाहैकविंशतिसङ्ख्ययादित्यस्य जय-माप्नोति। परो हास्य एवं विद आदित्यजयान्मृत्युगोच-रात्परो जयो भवति द्वाविंशत्यचरसङ्ख्ययेत्यर्थः॥ य

---

व्या० शिशिरावेकीकृत्य पञ्चर्त्तव इत्युक्तं। आदित्यस्याहोरात्राभ्यां पौनः-पुन्येन मृत्युहेतुत्वमस्मिंल्लोके दृश्यते। तदयं लोको मृत्युविषयत्वात्त-द्दुःखात्मकस्तदभावाद्द्युलोकः सुखात्मक इति मत्वाह। मृत्युवि-षयादिति॥ पूर्व्वेणोत्तरस्य पौनरुक्त्यमाशङ्क्याह। उक्तस्यैवेति॥ व्याख्यातस्यैव ग्रन्थस्य समुदायार्थः सङ्क्षिप्य बुद्धिसौकार्य्यार्थमनन्त-रग्रन्थेनोच्यते। तत्र पौनरुक्त्यमित्यर्थः। जयमनुपरोजयो भव-तीति सम्बन्धः॥ परो हास्येत्युपात्तं वाक्यं व्याकरोति। एवं विद

उ० मनो हिङ्कारो वाक्यस्तावश्चक्षुरुद्गीथः श्रोत्रं प्रतिहारः प्राणो निधनमेतद्गायत्रं प्राणेषु प्रोतं ॥ १ ॥

---

भा० एतदेवं विद्वानित्यादि उक्तार्थं तस्यैतद्यथोक्तं फलमिति द्विरभ्यासः साप्तविध्यसमाप्त्यर्थः ॥ १० ॥

विना नामग्रहणं पञ्चविधस्य सप्तविधस्य च साम्न उपासनमुक्तं। अथेदानीं गायत्रादिनामग्रहणपूर्व्वकं विशिष्टफलानि सामोपासनान्तराण्युच्यन्ते। यथाक्रमं गायत्रादीनां कर्म्मणि प्रयोगस्तथैव मनो हिङ्कारो मनसः सर्व्वकरणप्रवृत्तीनां प्राथम्यात्। तदानन्तर्य्याद्वाक् प्रस्तावश्चक्षुरुद्गीथः श्रैष्ठ्यात्। श्रोत्रं प्रतिहारः प्रतिहृतत्वात्। प्राणो निधनं यथोक्तानां प्राणे निधनात्स्वापकाले। एतद्गायत्रं साम प्राणेषु प्रोतं॥

---

आ० इति॥ फलमिति शेष इति यावत्। साप्तविध्यं सप्तविधत्वं तदुपेतसामोपासनस्य समाप्त्यर्थोऽभ्यास इत्यर्थः॥ १०॥

ननु पञ्चविधस्य सप्तविधस्य च साम्नो ध्यानं व्याख्यातं। तथा च प्रातविषये वक्तव्याभावादलमनन्तरग्रन्थेनेत्याशङ्क्य पूर्व्वोत्तरग्रन्थयोरर्थभेदमाह। विनेत्यादिना॥ गायत्रं रथन्तरमित्यादि नामग्रहणेन विशिष्टानि विशिष्टफलानि चेत्यर्थः॥ कथं पुनर्वक्ष्यमाणेषूपासनेषु निर्द्दिष्टक्रमसिद्धिस्तत्राह। यथाक्रममिति॥ यादृष्टक्रममाश्रित्य तेषां कर्म्मणि प्रयोगः कर्म्मणामिष्टस्तेनैव क्रमेण तदुपासनोक्तिरित्यर्थः॥ तत्राप्राणस्य क्रियाज्ञानयोः संरम्भात् प्राणस्य प्रधानत्वात्तद्दृष्ट्या गायत्रोपास्तिमादौ दर्शयति। मनो हिङ्कार इत्यादिना॥ प्राणं तर्हि वागप्येतीत्यादिश्रुत्या स्वापकाले प्राणे वागादीनां निधनमवधेयं प्रोतं प्रगतं प्रतिष्ठितमिति यावत्॥

स य एवमेतद्गायत्रं प्राणेषु प्रोतं वेद प्राणी
उ० भवति सर्वमायुरेति ज्योग्जीवति महान्प्रजया
पशुभिर्भवति महान्कीर्त्या महामनाः स्यात्तद्व्रतं ॥
२ ॥ ११ ॥

अभिमन्थति स हिङ्कारो धूमो जायते स प्रस्ता-
वो ज्वलति स उद्गीथोऽङ्गारा भवन्ति स प्रतिहार

---

भा० गायत्र्याः प्राणसंस्तुतत्वात्स य एवमेतद्गायत्रं प्राणेषु प्रोतं वेद प्राणी भवति अविकलकरणो भवतीत्येतत्। सर्व्वमायुरेति। शतं वर्षाणि सर्व्वमायुः पुरुषस्येति श्रुतेः। ज्योगुज्ज्वल जीवति। महान्भवति प्रजादिभिर्महांश्च कीर्त्या। गायत्रोपासकस्यैतद्व्रतं भवति यन्महामनास्त्वचुद्रचित्तः स्यादित्यर्थः॥ ११ ॥

अभिमन्थति स हिङ्कारः प्राथम्यात्। अग्नेर्धूमो जायते स प्रस्ताव आनन्तर्य्यात्। ज्वलति स उद्गीथो हविः सम्बन्धाच्छ्रैष्ठ्यं ज्वलनस्य। अङ्गारा भवन्ति स प्रतिहा-

---

श्रा० गायत्रस्य प्राणेषु प्रतिष्ठितत्वे हेतुमाह। गायत्र्या इति॥ प्राणो वै गायत्रीति हि श्रुतिः। अविदुषोऽपि प्राणित्वसिद्धेर्नेदं विद्याफलमित्याशङ्क्याह। अविकलेति॥ कथं पुनर्नानाजनीनं सर्व्वमायुरेको ध्याता गन्तुमलमित्याशङ्क्याह। शतमिति॥ शतायुर्वै पुरुष इति श्रुतेरित्युच्यते। ज्योक्शब्दो निपातः। स चोज्ज्वलनार्थः। उज्ज्वलः स्वपरोपकारसमर्थ इति यावत्॥ ११॥

समग्रप्राणवतो मन्थनकर्तृत्वसम्भवात्प्राणदृष्ट्यनन्तरं मन्थनादिदृष्टिमवतारयति। अभिमन्थतीत्यादिना॥

उ० उपशाम्यति तन्निधनꣳ सꣳशाम्यति तन्निधन-
मेतद्रथन्तरमग्नौ प्रोतं ॥ १ ॥ स य एवमेतद्रथन्तर-
मग्नौ प्रोतं वेद ब्रह्मवर्चस्यन्नादो भवति सर्वमा-
युरेति ज्योग्जीवति महान्प्रजया पशुभिर्भ-
वति महान्कीर्त्या न प्रत्यङ्ङग्निमाचामेन्न निष्ठीवे-
त्तद्व्रतं ॥ २ ॥ १२ ॥

---

भा० रोऽङ्गाराणां प्रतिष्ठितत्वात् । उपशमः सावशेषत्वादग्नेः
संशमो निःशेषोपशमः समाप्तिसामान्यान्निधनमेतद्रथन्त-
रमग्नौ प्रोतं। मन्थने ह्यग्निर्गीयते। स य इत्यादिपूर्ववद्ब्रह्म-
वर्चसी वृत्तस्वाध्यायनिमित्तं तेजो ब्रह्मवर्चसं। तेजस्तु केवल-
न्त्विड्भावः । अन्नादो दीप्ताग्निर्न प्रत्यङ्ङग्नेरभिमुखो
नाचामेन्न भक्षयेत्किञ्चिन्न निष्ठीवेच्छ्लेष्मनिरसनञ्च न
कुर्य्यात्तद्व्रतं॥ १२ ॥

---

घा० उपशमः संशमस्चेत्यर्थभेदाभावात्पुनरुक्तिमाशङ्क्य सावशेष-
निरवशेषत्वाभ्यां विशेषमाह। उपशम इति ॥ कथं पुनो रथन्तर-
साम्नोऽग्नौ प्रतिष्ठितत्वं। न हि तत्र किञ्चिन्निमित्तमुपलभ्यत इत
आह । मन्थने हीति ॥ मन्थनं निमित्तीकृत्याग्नेरुत्पत्तौ रथन्तर-
साम्नोद्गीयमानत्वदर्शनादग्नौ तस्य प्रतिष्ठितत्वसिद्धिरित्यर्थः ।
नन्वत्र ब्रह्मवर्चसीति फलमुक्तं बृहदुपासनेतु तेजस्वी भवतीति
वक्ष्यते। न च ब्रह्मवर्चसतेजसोर्भेदस्तथा च बृहद्रथन्तरोपा-
सनयोर्न फलवैषम्यमत आह । तेजस्त्विति ॥ १२ ॥

उ॰ उपमन्त्रयते स हिङ्कारो ज्ञपयते स प्रस्तावः स्त्रिया सह शेते स उद्गीथः प्रतिस्त्री सह शेते स प्रतिहारः कालं गच्छति तन्निधनं पारं गच्छति तन्निधनमेतद्वामदेव्यं मिथुने प्रोतं ॥ १ ॥ स य एवमेतद्वामदेव्यं मिथुने प्रोतं वेद मिथुनी भवति मिथुनान्मिथुनात्प्रजायते सर्वमायुरेति ज्योग्जी-

---

भा॰ उपमन्त्रयते सङ्केतं करोति प्राथम्यात्स हिङ्कारः। ज्ञपयते तोषयति स प्रस्तावः। सहशयनमेकपर्य्यङ्के गमनं स उद्गीथः श्रैष्ठ्यात्। प्रतिस्त्रीशयनं स्त्रीयोऽभिमुखीभावः स प्रतिहारः कालं गच्छति मैथुनेन पारं समाप्तिं गच्छति। तन्निधनमेतद्वामदेव्यं मिथुने प्रोतं। वाय्वम्बुमिथुनसम्बन्धात्। स य इत्यादि पूर्व्ववत्। मिथुनी भवत्यविधुरो भवतीत्यर्थः। मिथुनान्मिथुनात्प्रजायत इत्यमोघरेतस्त्वमुच्यते।

---

आ॰ उत्तराधरारणिस्थानीययोः स्त्रीपुरुषयोरवाच्यकर्म्मणि प्रवृत्तयोर्मन्थनसामान्यान्मन्थनादिदृष्ट्यनन्तरं मैथुनदृष्टिं विदधाति ॥ उपमन्त्रयत इत्यादिना ॥ पुरुषो हि पशुकर्म्मार्थं स्त्रियं वस्त्रादिना प्रीणयति। तस्मिन्प्रारम्भसामान्यात्प्रस्तावदृष्टिरित्याह। ज्ञपयत इति॥ कुतो वामदेव्यस्य साम्नो मिथुने प्रोतत्वं तत्राह। वाय्वम्बुमिथुनेति ॥ वायोरपाञ्च मिथुनं तथा सम्बन्धाद्वामदेव्योत्पत्तेरुक्तत्वात्तस्य मिथुने प्रतिष्ठितत्वं युक्तमित्यर्थः ॥ न काञ्चनेतिवाक्यमादाय व्याचष्टे ॥ काञ्चिदपीति पराङ्गनां नोपगच्छेदिति स्मृतिविरोधमाशङ्क्याह। वामदेव्येति ॥ विधिनिषेधयोः सामान्यविशेषविषयत्वेन व्यवस्थासिद्धेति भावः। किञ्च शास्त्रप्रामाण्यादत्र धर्म्मोऽवगम्यते न काञ्चन परिहरेदिति च शास्त्रा-

उ० वति महान्प्रजया पशुभिर्भवति महान्कीर्त्या न काञ्चन परिहरेत्तद्व्रतं ॥ २ ॥ १३ ॥

उद्यन्हिङ्कार उदितः प्रस्तावो मध्यन्दिन उद्गीथोऽपराह्णः प्रतिहारोऽस्तं यन्निधनमेतद्बृहदादित्ये प्रोतं ॥ १ ॥ स य एवमेतद्बृहदादित्ये प्रोतं वेद तेजस्व्यन्नादो भवति सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या तपन्तं न निन्देत्तद्व्रतं ॥ २ ॥ १४ ॥

भा० न काञ्चन काञ्चिदपि स्त्रियं स्वात्मतल्पप्राप्तां न परिहरेत्समागमार्थिनीं। वामदेव्यसामोपासनाङ्गत्वेन विधानात्। एतस्मादन्यत्र प्रतिषेधस्मृतयो वचनप्रामाण्याच्च धर्मावगतेर्न प्रतिषेधशास्त्रेणास्य विरोधः॥ १३ ॥

उद्यन्सविता स हिङ्कारः प्राथम्याद्दर्शनस्य। उदितः प्रस्तावः प्रस्तवनहेतुत्वात्कर्मणां। मध्यन्दिन उद्गीथः श्रैष्ठ्यात्। अपराह्णः प्रतिहारः पश्वादीनां गृहान् प्रतिहरणात्। अस्तं निधनं रात्रौ गृहे निधानात्प्राणिनां। एतद्बृहदादित्ये प्रोतं बृहतः आदित्यदैवत्यत्वात्। स य इत्यादि पूर्व्ववत्। तपन्तं न निन्देत्तद्व्रतं॥ १४ ॥

व्या० वगतत्वादवाच्यमपि कर्म्म धर्म्मो भवितुमर्हति॥ तथाच श्रौतेऽर्थे दुर्बलायाः स्मृतेर्न प्रतिस्पर्द्धित्वमित्याह। वचनेति॥ यथोक्तोपासनावतो ब्रह्मचर्य्यनियमाभावो व्रतत्वेन विवक्षितस्तन्न प्रतिषेधशास्त्रविरोधाशङ्केति भावः॥ १३॥

आदित्यस्य प्रजाप्रसवहेतुत्वात्तद्धेतुमैथुनदृष्ट्यनन्तरमादित्यदृष्टिमुत्थापयति। उद्यन्नित्यादिना॥ १४॥

उ० अभ्राणि सम्प्लवन्ते स हिङ्कारो मेघो जायते स प्रस्तावो वर्षति स उद्गीथो विद्योतते स्तनयति स प्रतिहार उद्गृह्णाति तन्निधनमेतद्वै रूपं पर्जन्ये प्रोतं ॥ १ ॥ स य एवमेतद्वै रूपं पर्जन्ये प्रोतं वेद विरूपाꣳश्च सुरूपाꣳश्च पशूनवरुन्धे सर्व्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्त्या वर्षन्तं न निन्देत्तद्व्रतं ॥ २ ॥ १५ ॥

वसन्तो हिङ्कारो ग्रीष्मः प्रस्तावो वर्षा उद्गीथः शरत्प्रतिहारो हेमन्तो निधनमेतद्वैराजमृतुषु प्रोतं ॥ १ ॥ स य एवमेतद्वैराजमृतुषु प्रोतं वेद विराजति प्रजया पशुभिर्ब्रह्मवर्च्चसेन सर्व्वमायु-

---

भा० अभ्राण्यब्भरणान्मेघ उदकसेक्तृत्वादुक्तार्थमन्यदेतद्वै रूपं नाम साम पर्जन्ये प्रोतं अनेकरूपत्वात्। अभ्रादिभिः पर्जन्यस्य विरूपांश्च सुरूपांश्च अजाविप्रभृतीन्पशूनवरुन्धे प्राप्नोतीत्यर्थः। वर्षन्तं न निन्देत्तद्व्रतं ॥ १५ ॥

वसन्तो हिङ्कारः प्राथम्यात्। ग्रीष्मः प्रस्ताव इत्यादि-पूर्व्ववत्। एतद्वैराजमृतुषु प्रोतं वेद विराजति ऋतुव-

---

आ० आदित्याज्जायते वृष्टिरिति स्मृतेरादित्यकार्य्यत्वात्पर्जन्यस्यादित्यदृष्ट्यनन्तरं पर्जन्यदृष्टिं दर्शयति। अभ्राणीति ॥ कथं वैरूपं साम तस्मिन्प्रतिष्ठितं तत्राह। अनेकेति ॥ १५ ॥

पर्जन्यायत्तत्वादृतुव्यवस्थायास्तदृष्ट्यनन्तरमृतुदृष्टिमाचष्टे वसन्त इत्यादिना ॥ वैराजस्य साम्नो यथा ऋतुषु प्रोतत्वं तेषां स्वधर्म्मै-

उ० रेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्यर्तून्न निन्देत्तद्व्रतं ॥ २ ॥ १६ ॥

पृथिवी हिङ्कारोऽन्तरिक्षं प्रस्तावो द्यौरुद्गीथो दिशः प्रतिहारः समुद्रो निधनमेताः शक्वर्यो लोकेषु प्रोताः॥ १ ॥स य एवमेताः शक्वर्यो लोकेषु प्रोता वेद लोकी भवति सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या लोकान्न निन्देत्तद्व्रतं ॥ २॥ १७ ॥

---

भा० य एवं वेद आर्त्तवैर्धर्म्मैर्विराजन्त एवं प्रजादिभिर्विद्वानित्युक्तमन्यत्। ऋतून्न निन्देत्तद्व्रतं॥ १६ ॥

पृथिवी हिङ्कार इत्यादि पूर्व्ववत्। शक्वर्य्य इति नित्यं बहुवचनं। रेवत्य इव लोकेषु प्रोताः। लोकी भवति लोकफलेन युज्यत इत्यर्थः। लोकान्न निन्देत्तद्व्रतं॥१७॥

---

व्या० विराजनादित्याह। एतदिति। यद्वा ऋतूनामन्नोत्पत्तिनिमित्तत्वाद्विराडात्मनश्चान्नत्वात्तस्य तेषु प्रतिष्ठितत्वात्तद्द्वारा वैराजमपि साम तेषु प्रोतमिति भावः॥ १६ ॥

ऋतुषु सम्यग्वृत्तेषु लोकस्थितेः प्रसिद्धत्वादृतुदृष्ट्यनन्तरं लोकदृष्टिमाह। पृथिवीति॥ कथं शाक्वर्य्य इत्येकस्यैव साम्नो नामधेयं। बहुवचनाद्धि बहूनि सामानि प्रतीयन्ते तत्राह। शाक्वर्य इतीति॥ नित्यबहुवचनत्वमुभयत्र तुल्यमिति द्योतनाय वक्ष्यमाणं दृष्टान्तयति। रेवत्य इवेति॥ महानाम्नीषु ऋक्षु शाक्वर्य्यो गीयन्ते। तासाश्चापो वै महानाम्नीरित्यद्भिः सम्बन्धः स्मृतः। अप्सु लोकाः प्रतिष्ठिता इति श्रुतं। तथा च अस्मात्सम्बन्धाल्लोकेषु शाक्वर्य्यः प्रतिष्ठिता इत्याह। लोकेष्विति॥ १७॥

उ० अजा हिङ्कारोऽवयः प्रस्तावो गाव उद्गीथो ऽश्वाः प्रतिहारः पुरुषो निधनमेता रेवत्यः पशुषु प्रोताः ॥१॥स य एवमेता रेवत्यं पशुषु प्रोता वेद पशुमान् भवति सर्व्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्त्या पशून्न निन्देत्तद्व्रतं ॥२॥ १८॥

लोम हिङ्कारस्त्वक्प्रस्तावो माꣳसमुद्गीथोऽस्थि प्रतिहारो मज्जा निधनमेतद्यज्ञायज्ञीयमङ्गेषु प्रोतं ॥ १ ॥ स य एवमेतद्यज्ञा यज्ञीयमङ्गेषु प्रोतं वेदाङ्गी भवति नाङ्गेन विहूर्छति सर्व्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्

---

भा० अजा हिङ्कार इत्यादि पूर्व्ववत्। पशुषु प्रोताः पशून्न निन्देत्तद्व्रतं ॥ १८ ॥

लोम हिङ्कारो देहावयवानां प्राथम्यात्। त्वक् प्रस्ताव आनन्तर्य्यात्। मांसमुद्गीथः श्रेष्ठ्यात्। अस्थि प्रतिहारः प्रतिहृतत्वात्। मज्जा निधनं। एतद्यज्ञायज्ञीयं नाम साम देहावयवेषु प्रोतमङ्गी भवति समग्राङ्गो भवतीत्यर्थो नाङ्गेन

---

व्या० पशूनां लोककार्य्यत्वाल्लोकदृष्ट्यनन्तरं पशुदृष्टिमुपन्यस्यति। अजेति॥ रेवत्य इति साममामधेयं पूर्व्ववन्नित्यबहुवचनान्तं। पशवो वै रेवतीरिति श्रुत्यन्तरमाश्रित्याह। पशुष्विति॥१८॥

पशुविकारपयोदध्यादिना पुष्टिरङ्गानां दृष्टेति पशुदृष्ट्यनन्तर

उ० कीर्त्या संवत्सरं मज्ज्ञो नाश्नीयात्तद्व्रतं मज्ज्ञो नाश्नीयादिति वा ॥ २ ॥ १९ ॥

अग्निर्हिङ्कारो वायुः प्रस्ताव आदित्य उद्गीथो नक्षत्राणि प्रतिहारश्चन्द्रमा निधनमेतद्राजनं देवतासु प्रोतं ॥ १ ॥ स य एवमेतद्राजनं देवतासु प्रोतं वेदैतासामेव देवतानाꣳ सलोकताꣳ सार्ष्टिताꣳ सायुज्यं गच्छति सर्वमायुरेति ज्योग्जी-

---

भा० हस्तपादादिना विह्वर्छति न कुटिलीभवति पङ्गुः कुणी वेत्यर्थः। संवत्सरं संवत्सरमात्रं मज्ज्ञो मांसानि नाश्नीयान्न भक्षयेत्। बहुवचनं मत्स्योपलक्षणार्थं। मज्ज्ञो नाश्नीयात्सर्व्वदैव नाश्नीयादिति वा तद्व्रतं॥ १८ ॥

अग्निर्हिङ्कारः प्रथमस्थानत्वात्। वायुः प्रस्ताव आनन्तर्य्यसामान्यात्। आदित्य उद्गीथः श्रैष्ठ्यात्। नक्षत्राणि प्रतिहारः प्रतिहृतत्वात्। चन्द्रमा निधनं कर्म्मिणां तन्निधनात्। एतद्राजनं देवतासु प्रोतं देवतानां दीप्तिमत्त्वात्।

---

व्या० मङ्गष्टयिमाह। लोमेति॥ रसो वै यज्ञायज्ञीयमिति श्रुतेरन्नरसविकारत्वा लोमादीनां सम्बन्धाद्यज्ञायज्ञीयं सामाङ्गेषु प्रतिष्ठितमित्याह। एतदिति॥ कुणिः प्रसभ्रंरहितः॥ १९॥

अग्न्यादीनामङ्गेषु प्रतिष्ठितत्वादङ्गदृष्ट्यनन्तरमग्न्यादिदृष्टिमुत्थापयति। अग्निरित्यादिना॥ राजनस्य साम्नो देवतासु प्रोतत्वे हेतुमाह। देवतानामिति॥ फलविकल्पार्थं वाशब्दस्याचासत्त्वे कथं वाक्यं स्यादित्याशङ्क्याह। सलोकतां वेत्यादीति॥ कथं पुनरेकस्मिन्नुपासने फलत्रयं विकल्प्यते तत्राह। भावनेति॥

उ॰ वति महान्प्रजया पशुभिर्भवति महान्कीर्त्या ब्राह्मणान्न निन्देत्तद्व्रतं ॥ २ ॥ २० ॥

त्रयी विद्या हिङ्कारस्त्रय इमे लोकाः स प्रस्तावो ऽग्निर्वायुरादित्यः स उद्गीथो नक्षत्राणि वयाꣳसि

---

भा॰ विद्वत्फलमेतासामेवाग्न्यादीनां देवतानां सलोकतां समानलोकतां सार्ष्टितां समानर्द्धित्वं सायुज्यं सयुग्भावमेकदेहदेहित्वमित्येतत्। वाशब्दोऽत्र लुप्तो द्रष्टव्यः। सलोकतां वेत्यादिभावनाविशेषतः फलविशेषोपपत्तेर्गच्छति प्राप्नोति। समुच्चयानुपपत्तेश्च। ब्राह्मणान्न निन्देत्तद्व्रतं। एते वै देवाः प्रत्यक्षं यद्ब्राह्मणा इति श्रुतेर्ब्राह्मणनिन्दा देवनिन्दैवेति ॥ २० ॥

त्रयी विद्या हिङ्कारः। अग्न्यादिसाम्न आनन्तर्यं त्रयीविद्याया अग्न्यादिकार्य्यत्वश्रुतेः। हिङ्कारः प्राथम्यात्सर्व्वकर्त्तव्यानां। त्रय इमे लोकास्तत्कार्य्यत्वादनन्तरा इति प्रस्तावः। अग्न्यादीनामुद्गीथत्वं श्रैष्ठ्यात्। नक्षत्रादीनां प्रतिहृतत्वात्प्र-

---

आ॰ ननु फलत्रयमत्र समुच्चितमिष्यतां किमिति वाशब्दं गृहीत्वा विकल्प्यते तत्राह। समुच्चयेति ॥ न हि मिथो विरुद्धं फलत्रयमेकत्र समुच्चेतुं शक्यमतो विकल्पसिद्धिरित्यर्थः॥ ननु देवतादृष्ट्या राजनस्य साम्नोऽध्यानाद्देवता न निन्देदिति वक्तव्ये कथमन्यथोच्यते तत्राह। एत इति ॥ २० ॥

अग्न्यादिदृष्ट्यनन्तरं त्रयीविद्यादृष्टिविधाने कारणमाह। अग्न्यादीति॥ यदग्न्याद्यात्मकं सामोपास्यमुक्तं तस्मादानन्तर्य्यमुपास्यायास्त्रयीविद्याया युज्यते। ऋग्वेदोऽग्नेर्यजुर्वेदो वायोरादि-

उ० मरीचयः स प्रतिहारः सर्पा गन्धर्वाः पितर-
स्तन्निधनमेतत्साम सर्वस्मिन्प्रोतं ॥ १ ॥ स य एव-
मेतत्साम सर्वस्मिन्प्रोतं वेद सर्वँ ह भवति ॥ २ ॥
तदेष श्लोको यानि पञ्चधा त्रीणि तेभ्यो न
ज्यायः परमन्यदस्ति ॥ ३ ॥ यस्तद्वेद स वेद सर्वँ

---

भा० तिहारत्वं । सर्पादीनां धकारसामान्यान्निधनत्वमेतत्साम-
नामविशेषाभावात्सामसमुदायः सामशब्दः सर्व्वस्मिन्प्रोतं।
त्रयीविद्यादि हि सर्व्वं । त्रयीविद्यादिदृष्ट्या हिङ्का-
रादिसामभक्तय उपास्याः । अतीतेष्वपि सामोपासनेषु येषु
येषु प्रोतं यद्यत्साम तद्दृष्ट्या तदुपास्यमिति। कर्म्माङ्गानां
दृष्टिविशेषेणाज्यस्य संस्कार्य्यत्वात्सर्व्वविषयसामविदः फलं
सर्व्वं भवति सर्व्वेश्वरो भवतीत्यर्थः ॥

निरुपचरितसर्व्वभावे हि दिक्स्थेभ्यो बलिप्राप्त्युप-
पत्तेस्तदेतस्मिन्नर्थे एष श्लोको मन्त्रोऽप्यस्ति। यानि पञ्चधा
पञ्चप्रकारेण हिङ्कारादिविभागैः प्रोक्तानि त्रीणि त्रीणि
त्रयीविद्यादीनि तेभ्यः पञ्चत्रिकेभ्यो ज्यायो महत्तरं परञ्च
व्यतिरिक्तमन्यद्वस्त्वन्तरं नास्ति न विद्यत इत्यर्थः । तत्रैव

---

व्या० त्वात्सामवेद इति श्रुतेः। त्रय्यास्तत्कार्य्यत्वावगमादित्यर्थः। तत्का-
र्य्यत्वात्त्रयीसाध्यकर्म्मफलत्वादित्यर्थः ॥ कथं सर्व्वस्मिन्प्रोतमित्युक्तं
त्रयीविद्यादौ प्रोतमिति वक्तव्यत्वादत आह । त्रयीविद्यादीति ॥
कथं पुनरत्र त्रयीविद्यादिदृष्ट्या साम्नो ध्येयत्वं गम्यते तत्राह ।
त्रयीति ॥ न चास्यां प्रतिज्ञायां पूर्व्वेण सन्दर्भेण विरोधशङ्का-
मर्हतीत्याह । अतीतेष्वपीति ॥ तत्र हेतुमाह। कर्म्माङ्गानामिति॥

उ० सर्वा दिशो बलिमस्मै हरन्ति सर्वमस्मीत्युपासीत तद्व्रतं तद्व्रतं ॥ ४ ॥ २१ ॥

विनर्दि साम्नो वृणे पशव्यमित्यग्नेरुद्गीथोऽनिरुक्तः प्रजापतेर्निरुक्तः सोमस्य मृदु श्लक्ष्णं वायोः श्लक्ष्णं

---

भा० हि सर्व्वस्यान्तर्भावः। यस्त्वद्वयोक्तं सर्व्वात्मकत्वं साम वेद सर्व्वं स सर्व्वज्ञो भवतीत्यर्थः। सर्व्वा दिशः सर्व्वदिक्स्था अस्मा एवम्विदे वलिं भोगं हरन्ति प्रापयन्तीत्यर्थः। सर्व्वमस्मि भवामीत्येवमेतत्सामोपासीत तस्यैतदेव व्रतं। द्विरुक्तिः सामोपासनसमाप्त्यर्था ॥ २१ ॥

सामोपासनप्रसङ्गेन गानविशेषादिसम्पदुद्गातुरुपदिश्यते। फलविशेषसम्बन्धाद्विनर्दि विशिष्टो नर्दः स्वरविशेष ऋषभकूजितसमोऽस्यास्तीति विनर्दि गानमिति वाक्यशेषः। तच्च साम्नः सम्बन्धि पशुभ्यो हितं पशव्यमग्नेरग्निदैवत्यञ्चोद्गीथ उद्गानं। तदहमेनं विशिष्टं वृणे प्रार्थय इति

---

श्या० दर्शपूर्णमासाधिकारे पत्न्यवेक्षितमाज्यं भवतीति दृष्टिविशेषणमाज्यं संस्क्रियते। तथा सामभेदानां दृष्टिविशेषणत्वाविशेषात्तेषां कर्म्माङ्गानां तत्तदङ्गदृष्ट्या संस्कर्त्तव्यत्वादित्यर्थः ॥

अथ यथा श्रुतं सर्व्वात्मत्वमेव किं न स्यादत आह। निरुपचरितेति ॥ सर्व्वविषयसामविदः सार्व्वेश्वरत्वमित्यत्र मन्त्रं संवादयति। तदेतदृषिर्णेति ॥ परमित्यस्यैव व्याख्यानमन्यदिति वस्त्वन्तराभावे हेतुमाह। तत्रैवेति ॥ सर्व्वज्ञत्वं सर्व्वेश्वरत्वञ्च तच्छब्दार्थः ॥ २१ ॥

सामोपासनं समाप्तञ्चेत्किमुत्तरग्रन्थेनेत्याशङ्क्याह। सामेति ॥ आदिशब्देन स्वरादयो वर्णा गृह्यन्ते ॥ किमित्युद्गातुर्यथोक्तोपास्ति-

उ० बलवदिन्द्रस्य क्रौञ्चं बृहस्पतेरपध्वान्तं वरुणस्य तान्सर्वानेवोपसेवेत वारुणन्त्वेव वर्जयेत् ॥ १ ॥ अमृतत्वं देवेभ्य आगायानीत्यागायेत्स्वधां पितृभ्य आशां मनुष्येभ्यस्तृणोदकं पशुभ्यः स्वर्गं लोकं यजमानायान्नमात्मन आगायानीत्येतानि मनसा

---

भा० कश्चिद्यजमान उद्गाता वा मन्यते । अनिरुक्तोऽमुकमम इत्यविशेषितः प्रजापतेः प्रजापतिदैवत्यः स गानविशेषः । अनिरुक्तत्वात्प्रजापतेर्निरुक्तः स्पष्टः । सोमस्य सोमदैवत्यः स उद्गीथ इत्यर्थः । मृदु श्लक्ष्णञ्च गानं वायोर्वायुदैवत्यं तत् श्लक्ष्णं बलवच्च प्रयत्नाधिक्योपेतं । इन्द्रस्यैन्द्रं तद्गानं क्रौञ्चं क्रौञ्चपक्षिनिनादसमं । बृहस्पतेर्बार्हस्पत्यं तदपध्वान्तं भिन्नकांस्यस्वरसमं । वरुणस्यैतद्गानं । तान्सर्वानेवोपसेवेत वारुणन्त्वेवैकं वर्जयेत् ॥

अमृतत्वं देवेभ्य आगायानि साधयानि । स्वधां पितृभ्य आगायान्याशां मनुष्येभ्य आशां प्रार्थनां प्रार्थितमित्येतत् । तृणोदकं पशुभ्यः स्वर्गं लोकं यजमानायान्नमात्मने

---

व्या० रुच्यते तत्राह । फलेति ॥ मृत्युपरिहारादिफलविशेषस्तत्सम्बन्धादेधः । उपास्तिरनुष्ठेयेत्यर्थः ॥ पशुभ्यो हितमस्य वचनादूमयितव्यं ॥ वाक्यस्थमितिशब्दं व्याचष्टे । इति कश्चिदिति ॥ इत्यविशेषितः । अनेन प्रकारेणायमिति विशेषितो व्यवच्छिद्य ज्ञातो न भवतीत्यर्थः ॥ तस्य प्राजापत्यत्वे हेतुमाह । अनिरुक्त इति ॥ नीलपीतादिभिर्निश्चित्यावचनादित्यर्थः ॥

स्वरविशेषज्ञानपूर्व्वकमुद्गानकाले ध्यातव्यार्थमाह । अमृतत्व-

उ० ध्यायन्नप्रमत्तः स्तुवीत ॥ २ ॥ सर्वे स्वरा इन्द्रस्यात्मानः सर्व ऊष्माणः प्रजापतेरात्मानः सर्वे स्पर्शा मृत्योरात्मानस्तं यदि स्वरेषूपालभेतेन्द्रꣳ शरणं प्रपन्नोऽभूवं स त्वा प्रति वक्ष्यतीत्येनं ब्रूयात् ॥ ३ ॥ अथ यद्येनमूष्मसूपालभेत प्रजापतिꣳ शरणं प्रपन्नोऽभूवं स त्वा प्रति पेक्ष्यतीत्येनं ब्रूयादथ यद्येनꣳ स्पर्शेषूपालभेत मृत्युꣳ शरणं प्रपन्नोऽभूवं स त्वा प्रति धक्ष्यतीत्येनं ब्रूयात् ॥ ४ ॥

---

भा० मह्यमागायानीत्येतानि मनसा चिन्तयन्ध्यायन्नप्रमत्तः स्वरोष्मव्यञ्जनादिभ्यः स्तुवीत। सर्वे स्वरा अकारादय इन्द्रस्य बलकर्मणः प्राणस्यात्मानो देहावयस्थानीयाः। सर्व ऊष्माणः शषसहादयः प्रजापतेर्विराजः कश्यपस्य वात्मानः। सर्वे स्पर्शाः कादयो व्यञ्जनानि मृत्योरात्मानस्तमेवं विदमुद्गातारं यदि कश्चित्स्वरेषूपालभेदस्वरस्त्वया दुष्टः प्रयुक्त इत्येवमुपालब्ध इन्द्रं प्राणमीश्वरं शरणमाश्रयं प्रपन्नोऽभूवं स्वरान्प्रयुञ्जानोऽहं स इन्द्रो यत्तव वक्तव्यं त्वा त्वां प्रति वक्ष्यति स एव देव उत्तरं दास्यतीत्येनं ब्रूयात् ॥ यद्येनमूष्मसु तथैवोपालभेत प्रजापतिं शरणं प्रपन्नोऽभूवं स त्वा प्रति पेक्ष्यति सञ्चूर्णयिष्यतीत्येनं ब्रूयात्।

---

व्या० मिति ॥ स्वरोष्मव्यञ्जनादिभ्य इत्यत्रादिशब्देन स्थानप्रयत्नादिसङ्ग्रहः॥ केनाप्यार्त्विज्यस्योद्गातुरुद्गानकाले प्रतिहारज्ञानाय स्वरादिदेवताज्ञानमुपन्यस्यति। सर्वे स्वरा इति ॥ शषसहादय इत्या-

उ० सर्वे स्वरा घोषवन्तो बलवन्तो वक्तव्या इन्द्रे बलं
ददानीति सर्व ऊष्माणोऽग्रस्ता निरस्ता विवृ-
ता वक्तव्याः प्रजापतेरात्मानं परिददानीति
सर्वे स्पर्शा लेशेनाभिनिहिता वक्तव्या मृत्योरा-
त्मानं परिहराणीति ॥ ५ ॥ २२ ॥

---

भा० अथ यद्येनं स्पर्शेषूपालभेत मृत्युं शरणं प्रपन्नोऽभूवं स त्वा
प्रति धक्ष्यति भस्मीकरिष्यतीत्येनं ब्रूयात् ॥

यत इन्द्राद्यात्मानः स्वरादयोऽतः सर्वे स्वरा घोषवन्तो
वक्तव्या बलवन्तस्तथाहमिन्द्रे बलं ददानि बलमाददा-
नीति । तथा सर्वे ऊष्माणोऽग्रस्ता अन्तरप्रवेशिता अनिरस्ता
अबहिराक्षिप्ता विवृत्ता विवृतप्रयत्नोपेताः प्रजापते-
रात्मानं परिददानि प्रयच्छानीति । सर्वे स्पर्शा लेशेन
शनकैरनभिनिहिता अनभिनिक्षिप्ता वक्तव्या मृत्योरात्मानं

---

व्या० दिशब्दस्तदवान्तरभेदाभिप्रायः । यत्तव वक्तव्यमित्यस्मादूर्द्ध्वं
तच्छब्दो द्रष्टव्यः । तथैव स्वरेष्विवेति यावत् ॥

देवताज्ञानबलेनोद्गात्रा न प्रमत्तेन भवितव्यं स्वरादीनामन्य-
थोच्चारणे देवताभेदप्रसङ्गादतः स्वराद्युच्चारणे तात्पर्यं कर्त्तव्य-
मित्युद्गातारं शिक्षयति । यत इति ॥ प्रयोगकाले चिन्तनीय-
मर्थं कथयति । तथेति ॥ यथोक्तरीत्या स्वराणां प्रयोगावस्था-
यामित्यर्थः । आददानीति चिन्तयेदिति शेषः । तथेत्यूष्मणां प्रयो-
गावस्थामिति यावत् ॥ विवृतप्रयत्नोपेताः प्रयोक्तव्या इति शेषः ॥
तत्रापि ध्यातव्यं दर्शयति । प्रजापतेरिति ॥ व्यतिद्रुतोच्चारणेन
वर्णान्तरे यथाभिक्षिप्तो न भवति तथा प्रयुज्यमानत्वमनभि-
क्षिप्तत्वं । मृत्योरात्मानमितिवाक्योपादानं तस्य तात्पर्यमाह ।
बालानिवेति ॥ यथा लोकः शनकैर्जलादिभ्यो बालान्परिहरति

उ० त्रयो धर्म्मस्कन्धा यज्ञोऽध्ययनं दानमिति ।

भा०बालानिव शनकैः परिहरद्भिर्मृत्योरात्मानं परिहराणीति ॥ २२ ॥

ओङ्कारस्योपासनविध्यर्थं त्रयो धर्म्मस्कन्धा इत्याद्यारभ्यते। नैवं मन्तव्यं सामावयवभूतस्यैवोद्गीथादिलक्षणस्योंकारस्योपासनात्फलं प्राप्यत इति । किं तर्हि यत्सर्वैरपि सामोपासनैः कर्म्मभिश्चाप्राप्यं तत्फलममृतत्वं केवलादोंकारोपासनात्प्राप्यत इति तत्स्तुत्यर्थं सामप्रकरणे तदुपन्यासः । त्रयस्त्रिसङ्ख्याका धर्म्मस्य स्कन्धाः । धर्म्मस्कन्धा धर्म्मप्रविभागा इत्यर्थः । के त इत्याह । यज्ञोऽग्निहोत्रादिः। अध्ययनं सनियमस्य ऋगादेरभ्यासः । दानं बहिर्वेदि-यथाशक्तिद्रव्यसंविभागोऽभिक्षमाणेभ्यः । इत्येष प्रथमो

आ० तथा मृत्योरात्मानमहं परिहराणीति ध्यात्वा स्पर्शानां प्रयोगः कर्त्तव्य इत्यर्थः ॥ २२ ॥

अधिकृताधिकारान्यङ्गावबद्धान्युपासनान्युक्तानि । सम्प्रति स्वतन्त्राधिकारगोचरमोंकारोपासनं विधातुमारभते । ओंकारेति ॥ अङ्गावबद्धोपासनाधिकारे यथोक्तस्वतन्त्रोपासनविधाने कोऽभिप्रायः श्रुतेरित्याशङ्क्याह । नैवमिति॥ न स्वतन्त्रस्य तस्योपासनादित्येवकारार्थः। कथं तर्हि मन्तव्यमित्यपेक्षायामाह। किन्तर्हीति ॥ सनियमस्य प्राङ्मुखत्वादिनियमसहितस्य पुरुषस्येति यावत् । अभ्यासश्चाकरणं विचारो जपः शिष्येभ्यो दानमावृत्तिश्चेति पञ्चविधः ॥ वेद्यां यद्दीयते तस्य यज्ञाङ्गत्वात्-पृथक् फलवत्त्वं नास्तीति मन्वानो विशिनष्टि । बहिर्वेदीति ॥ गृहस्थेन तदात्मनेत्यर्थः। कथं गृहस्थस्य प्राथम्यं ब्रह्मचारिणस्तथात्वादित्याशङ्क्याह। एक इत्यर्थ इति ॥ उक्तव्याख्याने वाक्य-

उ॰ प्रथमस्तप एव द्वितीयो ब्रह्मचार्य्याचार्य्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्य्यकुलेऽवसादयन्सर्वे एते पुण्यलोका भवन्ति ब्रह्मसꣳस्थोऽमृतत्वमेति ॥ २ ॥

---

भा॰ धर्म्मस्कन्धः । गृहस्थसमवेतत्वात्तन्निवर्त्तकेन गृहस्थेन निर्दिश्यते प्रथम एक इत्यर्थो द्वितीयतृतीयश्रवणात् ॥ नाद्यर्थस्तप एव । द्वितीयस्तप इति कृच्छ्रचान्द्रायणादि तद्वांस्तापसः परिव्राड्वा न ब्रह्मसंस्थः । आश्रमधर्म्ममात्रसंस्थे ब्रह्मसंस्थस्य त्वमृतत्वश्रवणात् । द्वितीयो धर्म्मस्कन्धः । ब्रह्मचार्य्याचार्य्यकुले वस्तुं शीलमस्येत्याचार्य्यकुलवासी । अत्यन्तं यावज्जीवमात्मानं नियमैराचार्य्यकुले ऽवसादयन्क्षपयन्देहं तृतीयो धर्म्मस्कन्धः । अत्यन्तमित्यादिविशेषणान्नैष्ठिक इति गम्यते । उपकुर्वाणस्य स्वाध्यायग्रहणार्थत्वान्न पुण्यलोकत्वं ब्रह्मचर्य्येण । सर्व्व एते त्रयोऽप्याश्रमिणो यथोक्तधर्म्मैः पुण्यलोका भवन्ति । पुण्यो लोको येषां त इमे पुण्यलोका

---

व्या॰ प्रैयस्य गमकत्वमाह । द्वितीयेति ॥ प्राथम्यमेव प्रथमशब्दस्य नार्थो ब्रह्मचारिप्राथम्यप्रसिद्धिविरोधादित्याह । नाद्यर्थ इति ॥ कीदृगत्र परिव्राड्गृह्यते तत्राह । नेति ॥ कुतो ब्रह्मसंस्थो न गृह्यते तत्राह । ब्रह्मसंस्थस्येति ॥ वानप्रस्थग्रहणममुख्यस्य परिव्राजोऽपि प्रदर्शनार्थं ॥ ब्रह्मचारीत्यादिवाक्यस्य नैष्ठिकविषयत्वं विशेषणसामर्थ्याद्दर्शयति । अत्यन्तमित्यादीति ॥ यथोपकुर्वाणस्यात्र ब्रह्मचारित्वाविशेषात्किमित्युपादानं न भवेत्तत्राह । उपकुर्वाणस्येति ॥ ननु ब्रह्मचारिणो ब्रह्मचर्य्येण पुण्यलोको न श्रूयते तत्राह । सर्व्व इति ॥ कथमाश्रमिणां पुण्यलोकत्वविशेषवता तदात्मत्वगम्यते तत्राह । पुण्य इति ॥ आश्र-

भा॰ आश्रमिणो भवन्ति। अवशिष्टस्त्वनुक्तः परिव्राट् ब्रह्मसंस्थो ब्रह्मणि सम्यगवस्थितः सोऽमृतत्वं पुण्यलोकविलक्षणममरणभावमात्यन्तिकमेति नापेक्षिकं देवाद्यमृतत्ववत्॥

पुण्यलोकात्पृथगमृतत्वस्य विभागकरणात्। यदि च पुण्यलोकातिशयमात्रममृतत्वमभविष्यत्ततः पुण्यलोकत्वाद्विभक्तं नावक्ष्यत्। विभक्तोपदेशत्वादात्यन्तिकममृतत्वमिति गम्यते। अत्र चाश्रमधर्मफलोपन्यासः प्रणवसेवास्तुत्यर्थं न तत्फलविध्यर्थं। स्तुतये च प्रणवसेवाया आश्रमधर्मफलविधये चेति हि भिद्येत वाक्यं। तस्मात्स्मृतिप्रसिद्धाश्रमफलानुवादे प्रणवसेवाफलममृतत्वं ब्रुवन्प्रणवसेवां स्तौति॥

---

व्या॰ मिषु प्रदर्श्यमानेषु किं परिव्राट् मुख्यो न प्रदर्श्यते तत्राह। अवशिष्टस्त्विति॥ कुतो हि पुण्यलोकवैलक्षण्यममृतस्येत्याशङ्क्योक्तं। आत्यन्तिकमिति॥

तस्यापेक्षितत्वाभावे हेतुमाह। पुण्यलोकादिति॥ अमृतत्वस्य पुण्यलोकात्पृथग्विभागकरणात्ततोऽन्यत्वादात्यन्तिकत्वसिद्धिरिति योजना॥ उक्तमेवार्थं व्यतिरेकमुखेन साधयति। यदि चेत्यादिना॥ ब्रह्मशब्दस्य यथाश्रुतं मुख्यमर्थं गृहीत्वा परब्रह्मात्मना साक्षात्कारवतो निरङ्कुशममृतत्वमुक्तं प्रकरणालोचनया तु प्रणवप्रतीके ब्रह्मोपासनस्य क्रमेणामृतत्वं भेदबुद्धेरनपायाद्द्रष्टव्यं। कर्मिणामन्तवत्फलत्वाभिधानेन तन्निन्दया ब्रह्मसंस्थतास्तुतिदर्शनात्तस्याश्च विध्यर्थत्वादमृतत्वकामो ब्रह्मसंस्थः स्यादित्येकार्थपरत्वादेकमिदं वाक्यमित्याह। अत्र चेदित्यादिना॥ स्तुतये फलसिद्धये चेदं वाक्यं किं न स्यादित्याशङ्क्याह। स्तुतये चेति॥ अर्थैकत्वादेकवाक्यं तद्भेदे तद्भेदनियमादित्यर्थः। किं परं तर्हीदं वाक्यं तत्राह। तस्मादिति॥ स्मृतिसिद्धेति श्रुतः स्मृत्यर्थानुवादत्वे वैपरीत्यात्तदनुमितिः श्रुतिसिद्धेति योज्यं। स्तुतिमेव दृष्टान्तावष्टम्भेन स्पष्टयति॥

भा॰ यथा पूर्णवर्म्मणः सेवा भक्तपरिधानमात्रफला राजवर्म्मणस्तु सेवा राज्यतुल्यफलेति तद्वत्। प्रणवश्च तत्त्वं परं ब्रह्म तत्प्रतीकत्वात्। एतद्ध्येवाक्षरं परमित्याद्याम्नायात्। काठकेऽप्युक्तं तत्सेवातोऽमृतत्वं। अत्राहुः केचिच्चतुर्णामाश्रमिणामविशेषेण स्वकर्मानुष्ठानात्पुण्यलोकतेत्युक्ता ज्ञानवर्जितानां सर्व्वे एते पुण्यलोका भवन्तीति। नात्र परिव्राडवशेषितः। परिव्राजकस्यापि ज्ञानं यमा नियमाश्च तप एवेति। तप एव द्वितीय इत्यत्र तपःशब्देन परिव्राट्तापसौ गृहीतौ॥ अतस्तेषामेव चतुर्णां यो ब्रह्मसंस्थः प्रणवसेवकः सोऽमृतत्वमेतीति। चतुर्णामधिकृतत्वाविशेषात्। ब्रह्मसंस्थत्वे प्रतिषेधाच्च। स्वकर्मच्छिद्रे

---

व्या॰ यथेत्यादिना॥ इतिशब्दोऽध्याहृतस्तुतये इत्यनेन सम्बध्यते॥ ननु ब्रह्मतत्त्वसेवातोऽमृतत्वं भवति न प्रणवसेवातस्तत्किमिति तस्य स्तुतिरित्याशङ्क्याह। प्रणवश्चेति॥ तत्र प्रमाणं दर्शयन् फलितमाह। एतद्ध्येवेति॥ स्वव्याख्यानं वर्जितदोषमुक्त्वा ब्रह्मसंस्थोऽमृतत्वमेतीत्यत्र वृत्तिकारीयं व्याख्यानमुत्थापयति। अत्रेति॥ ये खल्वाश्रमिणश्चत्वारो ज्ञानवर्जितास्तेषां सर्व्वेषामप्यविशेषेण स्वाश्रमविहितधर्म्मानुष्ठानेन पुण्यलोका भवन्तीत्युक्त्वा। न तु पूर्व्वस्मिन्ग्रन्थे परिव्राडनुक्तः सन्नवशेषितोऽस्तीति योजना॥ ननु पूर्व्वस्मिन्ग्रन्थे वाचकपदं परिव्राजो नोपलभ्यते तथाचासाववशेषितस्तत्राह। परिव्राजकस्यापीति॥ ज्ञानं यमा नियमाश्चोपायभूता इति यावत्॥

परिव्राडपि पूर्व्वत्राभिहितश्चेद्ब्रह्मसंस्थवाक्यस्य कोऽर्थः स्यादित्याशङ्क्याह। अत इति॥ परिव्राजकस्यानवशिष्टत्वेन चतुर्णामुपदिष्टत्वाविशेषोऽतःशब्दार्थः। सामान्यनिर्देशे हेतुमाह। चतुर्णामिति॥ अप्रतिषेधाच्चेति च्छेदः। नन्वाश्रमान्तराणां कर्म्मार्थत्वा-

भा० च ब्रह्मसंस्थतायाः सामर्थ्योपपत्तेः। न च यववराहादि-शब्दवद्ब्रह्मसंस्थशब्दः परिव्राजके रूढः। ब्रह्मणि संस्थिति-निमित्तमुपादाय प्रवृत्तत्वात्। न हि रूढिशब्दे निमि-त्तमुपादद्द्यते। सर्व्वेषाञ्च ब्रह्मणि स्थितिरुपपद्यते। यच्च यच्च निमित्तमस्ति ब्रह्मणि संस्थितिस्तस्य तस्य निमित्तवतो वाचकं सन्तं ब्रह्मसंस्थशब्दं परिव्राडेक-विषये सङ्कोचकारणाभावान्निरोद्धमयुक्तं॥

न च पारिव्राज्याश्रमधर्म्ममात्रेणामृतत्वं। ज्ञानानर्थक्य-प्रसङ्गात् पारिव्राज्यधर्म्मयुक्तमेव ज्ञानममृतत्वसाधन-

---

व्या० तत्रैव व्यापृतत्वान्न ब्रह्मसंस्थायां सामर्थ्यमस्ति परिव्राजकस्य तु निर्व्यापारस्य ब्रह्मसंस्थता सुकरेत्यत आह। स्वकर्म्मेति॥ ननु परि-व्राजके ब्रह्मसंस्थशब्दो रूढो यवादिशब्दवत्। तन्न। असायाश्रमा-न्तरमास्कन्दति तत्राह। न चेति॥ निमित्तमादाय प्रवृत्तत्वेऽपि किमिति रूढिर्न स्यादित्याशङ्क्याह। न हीति॥ नन्वेष शब्दो नैमित्तिकोऽपि परिव्राजकमात्रमधिकरोति। तत्रैव निमित्तस्य सत्त्वात्तत्राह। सर्व्वेषाञ्चेति॥ ननु पङ्कजादिशब्दा निमित्तमस्तो-त्येतावता नेन्दीवरादौ वर्त्तन्ते किन्तु तामरसादिमात्रं विषयी-कुर्व्वन्ति। तथा ब्रह्मसंस्थशब्दो निमित्तवत्यपि गृहस्थादावनव-स्थितः परिव्राजकमेव परं गोचरयेदत आह। यच्चेति॥ ब्रह्मसंस्थशब्दं निरोद्धमयुक्तमिति सम्बन्धः॥

रूढ़िपक्षे दोषान्तरमाह। न चेति॥ धर्म्मसहितस्य ज्ञानस्य ज्ञानसहितस्य वा धर्म्मस्यामृतत्वसाधनत्वान्न ज्ञानानर्थक्यमित्या-शङ्क्याद्यपक्षमनुवदति। पारिव्राज्येति॥ पारिव्राज्यधर्म्मेणैवेति नायं नियमो गृहस्थादिधर्म्माणामपि आश्रमधर्म्मत्वेन तुल्यत्वात्तद्वि-शिष्टज्ञानममृतत्वहेतुरित्यपि वक्तुं सुकरत्वादित्याह। नाश्रमेति॥ द्वितीयं दूषयति। धर्म्मो वेति॥ यदि परिव्राजकधर्म्मो ज्ञान-विशिष्टो मुक्तिहेतुरित्युच्यते तदेतदपि मुक्तिहेतुत्वं सर्व्वाश्रम-

भा० मिति चेन्न। आश्रमधर्म्मत्वाविशेषात्। धर्मो वा ज्ञानविशिष्टोऽमृतत्वसाधनमित्येतदपि सर्व्वाश्रमधर्माणामविशिष्टं। न च वचनमस्ति परिव्राजकस्यैव ब्रह्मसंस्थस्य मोक्षो नान्येषामिति। ज्ञानान्मोक्ष इति च सर्व्वोपनिषदांसिद्धान्तः। तस्माद्य एव ब्रह्मसंस्थः स्वाश्रमविहितकर्म्मवतां सोऽमृतत्वमेतीति न कर्म्मनिमित्तविद्याप्रत्यययोः। विरोधात्॥

कर्त्रादिकारकक्रियाफलभेदप्रत्ययवत्त्वं हि निमित्तमुपादायेदं कुर्विदं मा कार्षीरिति कर्म्मविधयः प्रवृत्ताः। तच्च निमित्तं न शास्त्रकृतं। सर्व्वप्राणिषु दर्शनात्। सदेकमेवाद्वितीयमात्मैवेदं सर्व्वं ब्रह्मैवेदं सर्व्वमिति शास्त्रजन्यः प्रत्ययो विद्यारूपः स्वाभाविकं क्रियाकारकफलभेदप्रत्ययं कर्म्मविधिनिमित्तमनुपमृद्य न जायते। भेदाभेदप्रत्यययो-

---

व्या० धर्म्माणां ज्ञानविशिष्टानामविशिष्टं। तथा च न रूढ़िपक्षेऽपि परिव्राजकस्यैव ज्ञानान्मुक्तिरित्यर्थः। इतश्च परिव्राजकस्यैव मुक्तिभाक्त्वमसिद्धमित्याह। न चेति॥ मा तर्हि कस्यचिदपि मुक्तिर्भूयादिति तत्राह। ज्ञानादिति॥ ब्रह्मसंस्थवाक्यार्थमुपसंहरति। तस्मादिति॥ परिव्राजकस्यैवामृतत्वमित्यनियमाज्ज्ञानादेव तदिति नियमादित्यर्थः॥ ब्रह्मसंस्थः समुच्चयानुष्ठायीति वृत्तिकारमतं निराकरोति। न कर्म्मेति॥ कर्म्मनिमित्तप्रत्ययस्य शुद्धब्रह्मात्मना साक्षात्कारस्य च मिथो विरोधान्न समुच्चयसिद्धिरिति॥

वस्तुसङ्ग्रहवाक्यं विवृणोति। कर्त्रादीति॥ कर्म्मविधयो निषिद्धार्थेति द्रष्टव्यं। तथापि प्रत्ययत्वाविशेषात्कारकाकारकविधिनिषेधयोर्न विरोधोऽस्तीत्याशङ्क्याह। तच्चेति॥ प्रत्ययत्वेऽपि शास्त्रीयाशास्त्रीयतया विद्याविद्याभावेन विरोधोऽस्तीत्यर्थः॥

भा॰ विरोधात्। न हि तैमिरिकद्विचन्द्रादिभेदप्रत्ययमनुपमृद्य तिमिरापगमे चन्द्राद्येकत्वप्रत्यय उपजायते। विद्याविद्याप्रत्यययोर्विरोधात्। तत्रैवं सति यं भेदप्रत्ययमुपादाय कर्मविधयः प्रवृत्ताः स यस्योपमर्दितः सदेकमेवाद्वितीयं तत्सत्यं विकारभेदोऽनृतमित्येतद्वाक्यप्रमाणजनितेनैकत्वप्रत्ययेन यः सर्वकर्मभ्यो निवृत्तो निमित्तनिवृत्तेः स च निवृत्तकर्मा ब्रह्मसंस्थ उच्यते स च परिव्राडेवान्यस्यासम्भवात्॥ अन्यो हि अनिवृत्तभेदप्रत्ययः सोऽन्यत्पश्यन् शृण्वन्मन्वानो विजानन्निदं कृत्वेदं प्राप्नुयामिति हि मन्यते। तस्यैवं कुर्वतो न ब्रह्मसंस्थता वाचारम्भणमात्रविकारानृताभिसन्धिप्रत्ययवत्त्वात्। न चासत्यमिति। उपमर्दिते भेद-

---

व्या॰ सति विरोधे किं स्यादत आह। स्वाभाविकमिति॥ विद्यारूपः प्रत्यय इतिपूर्व्वेण सम्बन्धः॥ तत्रोक्तमेव हेतुं स्मारयति। भेदेति॥ तत्र लोकप्रसिद्धमुदाहरणमाह। न हीति॥ भेदाभेदप्रत्यययोर्विद्याविद्यात्मनोर्विरोधेन समुच्चयासम्भवात्तदनुष्ठायी ब्रह्मसंस्थो न भवति चेत्कस्तर्हि ब्रह्मसंस्थः स्यादत आह। तत्रेति॥ उक्तरीत्या समुच्चयायोगे सतीति यावत्॥

अन्यस्य गृहस्थादेर्ब्रह्मसंस्थतासम्भवमुक्तं साधयति। अन्यो हीति॥ वाचारम्भणमात्रे विकारेऽनृते शरीरादौ अहमिदं ममेदमित्याद्यभिसन्धानरूपो मिथ्याभिनिवेशात्मको यः प्रत्ययस्तद्वत्त्वादिति हेत्वर्थः। ननु ब्रह्मविदोऽपि संस्कारवशादनृतसत्यत्वाभिनिवेशपूर्व्वकं कर्म्मप्रवृत्तिसम्भवान्न ब्रह्मसंस्थता सुप्रतिपाद्येत्यत आह। न चेति॥ असत्यमिदमिति विवेकेन सत्यत्वाभिनिवेशे शिथिलीकृते पुनः सत्यत्वाभिनिवेशेन न प्रवृत्तिरुपपद्यते। आभासरूपा तु भेदबुद्धिर्न कर्म्मप्रवृत्तिहेतुरित्यर्थः। अद्वैतज्ञानवतो निमित्तनिवृत्त्या कर्म्मनिवृत्तिरवश्यम्भाविनीत्युक्तं। विपक्षे-

भा० प्रत्यये सत्यमिदमनेन कर्त्तव्यं मयेति प्रमाणप्रमेयबुद्धिरुत्पद्यते। आकाशे इव तलमलबुद्धिर्विवेकिन उपमर्दितेऽपि भेदप्रत्यये कर्म्मभ्यो न निवर्त्तते चेत्प्रागिव भेदप्रत्ययोपमर्दनादेकत्वप्रत्ययविधायकं वाक्यमप्रमाणीकृतं स्यादभक्ष्यभक्षणादिप्रतिषेधवाक्यानां प्रामाण्यवद्युक्तमेकत्ववाक्यस्यापि प्रामाण्यं। सर्व्वोपनिषदां तत्परत्वात्कर्म्मविधीनामप्रामाण्यप्रसङ्ग इति चेत्। न। अनुपमर्दितभेदप्रत्ययवत्पुरुषविषये प्रामाण्योपपत्तेः स्वप्नादिप्रत्यय इव प्राक्प्रबोधाद्विवेकिनामकरणात्कर्म्मविधिप्रामाण्योच्छेद इति चेन्न। काम्यवि-

---

व्या० दोषमाह। उपमर्दितेऽपीति॥ एकत्वप्रत्ययजनकं शास्त्रं न भवत्येव प्रमाणपूर्व्वप्रवृत्तभेदप्रत्ययविरोधादिति मतमाशङ्क्याह। अभक्ष्येति॥ यथा न कलञ्जं भक्षयेदित्यादि शास्त्रं पूर्व्वप्रवृत्तकलञ्जादिभक्षणप्रत्ययविरोधेऽपि प्रमाणं रागादिदोषात्तस्य प्रत्ययस्याप्रमाणत्वात्तथैव भेदप्रत्ययस्याविद्योत्थत्वात्प्रामाण्यासम्भवात्तद्विरोधेऽप्यद्वैतशास्त्रस्य युक्तमेव प्रामाण्यमित्यर्थः॥

कार्य्यपरत्वादद्वैते तात्पर्य्याभावात्कुतस्तच्छास्त्रस्य प्रामाण्यमित्याशङ्क्याह। सर्व्वोपनिषदामिति॥ उपक्रमोपसंहारैकरूप्यादिषड्विधतात्पर्य्यलिङ्गदर्शनादद्वैते तात्पर्य्यं तासामवसीयते तद्युक्तं अद्वैतशास्त्रस्य स्वार्थे प्रामाण्यमित्यर्थः॥ भेदालम्बनकर्म्मविधिविरोधान्नाद्वैतशास्त्रं स्वार्थमानमिति शङ्कते। कर्म्मविधीनामिति॥ यथा स्वप्नप्रत्ययो गन्धर्वनगरादिप्रत्ययश्च प्राक्तत्त्वज्ञानादज्ञं पुरुषमधिकृत्य प्रमाणं। तथा कर्म्मविधीनामप्यविदुषि पुरुषे प्रामाण्यसम्भवान्नाद्वैतशास्त्रस्य तद्विरोधोऽस्तीति परिहरति। नानुपमर्दितेति॥ यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जन इति स्मृतेः। तत्त्वदर्शिनां कर्म्मभ्यः सकाशादुपरमे सत्यन्येऽप्युपरंस्यन्ते। तथा च कर्म्मविधिविरोधतादवस्थ्यमिति शङ्कते। विवेकिनामिति॥ प्रकृतिपरवशत्वाल्लोकस्य नासौ विवेकी प्रवृत्तिमनुवर्त्तते। प्रकृतिं यान्ति

भा० व्युच्छेददर्शनात् । न हि काम्यात्मता न प्रशस्तैवं विज्ञानवद्भिः काम्यानि कर्म्माणि नानुष्ठीयन्त इति काम्यकर्म्मविधय उच्छिद्यन्तेऽनुष्ठीयन्त एव कामिभिरिति । तथा ब्रह्मसंस्थैर्ब्रह्मविद्भिर्नानुष्ठीयन्ते कर्म्माणीति न तद्विधय उच्छिद्यन्तेऽब्रह्मविद्भिरनुष्ठीयन्त एवेति । परिव्राजकानां भिक्षाचरणादिवदुत्पन्नैकत्वप्रत्ययानामपि शूद्रस्यादीनामग्निहोत्रादिकर्म्मानिवृत्तिरिति चेन्न । प्रामाण्यचिन्तायां पुरुषप्रवृत्तेरदृष्टान्तत्वात् । न हि नाभिचरेदिति प्रतिषिद्धमप्यभिचरणं कश्चित्कुर्वन्दृष्ट इति शत्रौ द्वेषरहितेनापि विवेकेनाभिचरणं क्रियते । न च कर्म्मविधिप्रवृत्ति

---

व्या० भूतानि निग्रहः किं करिष्यतीति स्मृतेः ॥ ततो ब्रह्मविदां नैष्कर्म्येऽपि न कर्म्मविधीनामप्रामाण्यप्रसिद्धिरित्युत्तरमाह । न काम्येति ॥ तदेव प्रपञ्चयति । न हीति ॥ इति नोच्छिद्यन्त इति शेषः ॥

अस्तु प्रकृते किमायातं तदाह । तथेति ॥ अनुष्ठीयन्त एवेति । तद्विधीनामनुच्छित्तिरिति वाक्यशेषः ॥ अद्वैतवादिनोऽवश्यम्भाविनी कर्म्मनिवृत्तिरित्युक्तां दृष्टान्तेन विघटयन्नाशङ्कते । परिव्राजकानामिति ॥ अद्वैतधीस्वभावानालोचनायां भिक्षाटनादिप्रवृत्तिरप्यघटमानैवेति मन्वानः समाधत्ते । न प्रामाण्येति ॥ समुच्चयस्य प्रामाणिकत्वनिरूपणायां प्रत्ययाभासमूलस्य प्रवृत्त्याभासस्य नोदाहरणत्वं । अग्निहोत्रादिप्रवृत्तेरप्याभासत्वे प्रामाणिकसमुच्चयसिद्ध्यभावादानिरुक्तो नैतत्पादनमित्यर्थः ॥ एतदेव दृष्टान्तेन स्पष्टयति । न हीति ॥ तद्वदविवेकिनां कर्म्म क्रियमाणं दृष्टमिति विवेकिभिरपि तन्न क्रियते । भिक्षाटनादिप्रवृत्त्याभासस्याप्रामाणिकोऽग्निहोत्रादिप्रवृत्तेर्नोदाहरणमिति शेषः । इतश्च नेदमुदाहरणमित्याह । न चेति ॥ अग्निहोत्रादावपि प्रवर्त्तकमस्तीति शङ्कते । इच्छापीति ॥

भा० निमित्ते भेदप्रत्यये बाधितेऽग्निहोत्रादौ प्रवर्त्तकं निमित्तमस्ति। परिव्राजकस्येव भिक्षाचरणादौ बुभुक्षादि प्रवर्त्तकं। इहाऽप्यकरणे प्रत्यवायभयं प्रवर्त्तकमिति चेत्। न। भेदप्रत्ययवतोऽधिकृतत्वात्। भेदप्रत्ययवाननुपमर्दितभेदबुद्धिर्विद्यया यः स कर्मण्यधिकृत इत्यवोचाम। यो ह्यधिकृतः कर्मणि तस्य तदकरणे प्रत्यवायो न निवृत्ताधिकारस्य गृहस्थस्येव ब्रह्मचारिणो विशेषधर्मानुष्ठाने। एवं तर्हि सर्व्वः स्वाश्रमस्थ उत्पन्नैकप्रत्ययः परिव्राडिति चेत्। न। स्वस्वामित्वभेदबुद्ध्यनिवृत्तेः। कर्म्मार्थत्वाच्चेतराश्रमाणां। अथ कर्म्म कुर्वीयेति श्रुतेः। तस्माच्च स्वस्वामित्वाभावाद्भिक्षुरेक एव परिव्राट् न

---

व्या० अकरणकृतं प्रत्यवायाख्यं भयमविवेकिनो विवेकिनो वेति विकल्प्याद्यमङ्गीकरोति। न भेदेति॥ कर्म्मणि भेदबुद्धिमतोऽधिकृतत्वेऽपि तस्य तदकरणे किं स्यादित्याशङ्क्याह। यो हीति॥ द्वितीयं दूषयति। न निवृत्तेति॥ विवेकिनो निवृत्ताधिकारस्य प्रत्यवायाप्राप्त्या कर्म्मसु प्रवर्त्तकाभावात्कर्म्मभ्यो निवृत्तिरूपं पारिव्राज्यमेवेदतिप्रसङ्गस्तर्हीति शङ्कते। एवं तर्हीति॥ कर्म्मसाधनं स्वयज्ञोपवीतादि त्यज्यते न वा। त्यज्यते चेन्न स्वाश्रमधर्म्मः। ततो यज्ञोपवीताद्यन्तरेण गार्हस्थ्यादिभावासम्भवात्। न त्यज्यते चेन्न पारिव्राज्यप्राप्तिः॥ साधनसङ्ग्रहस्य साध्यार्थत्वादिति परिहरति। स्वस्वामित्वेति॥ इतश्चाश्रमान्तरेषु न पारिव्राज्यमित्याह। कर्म्मार्थत्वादिति॥ जायापुत्रवित्तसम्पत्त्यानन्तर्य्ये श्रुतावथशब्दार्थः॥ गृहस्थादिषु स्वाश्रमस्थेष्वेव पारिव्राज्यस्य दुर्वचत्वे फलितमाह। तस्मादिति॥ विवेकवशाद्यज्ञोपवीतादौ स्वशब्दार्थे स्वामित्वबुद्ध्यभावादिति यावत्॥ यत्तु परिव्राजकस्य निवृत्ताधिकारस्य प्रत्यवायानभिप्राप्तिरिति तत्रानिष्टापत्तिमाशङ्कते। एकत्वेति॥ तद्विषयप्रत्ययस्य विधेरुत्पादकं तत्त्वमस्यादिवाक्यं। तज्जनितेनैकत्वविषयेण प्रत्ययेनेति

भा० बुभुक्षादिः। एकत्वप्रत्ययविधिजनितः ... न विधिनिमित्तभेदप्रत्ययस्योपमर्दितत्वाद्यमनियमाद्यनुपपत्तिः परिव्राजकस्येति चेत्। न। बुभुक्षादिनैकत्वप्रत्ययात्। प्रच्यावितस्योपपत्तेर्निवृत्त्यर्थत्वात्। न च प्रतिषिद्धसेवाप्राप्तिः। एकत्वप्रत्ययोत्पत्तेः प्रागेव प्रतिषिद्धत्वात्। न हि रात्रौ कूपे कण्टके वा पतिते उदितेऽपि सवितरि पतति तस्मिन्नेव। तस्मात्सिद्धं निवृत्तकर्म्मा भिक्षुक एव ब्रह्मसंस्थ इति। यत्पुनरुक्तं सर्वेषां ज्ञानवर्जितानां पुण्यलोकतेति। सत्यमेतत्। यच्चोक्तं तपःशब्देन परिव्राडप्युक्त इत्येतत्। तदसत्॥

कस्मात्परिव्राजकस्यैव ब्रह्मसंस्थता सम्भवात्। स एव त्ववशेषित इत्यवोचाम। एकत्वविज्ञानवतोऽग्निहोत्रादिवत्तपो

---

व्या० यावत्। तथाच यथेष्टचेष्टाप्रसक्तिरिति शेषः। ज्ञानिनो वैधं यमादि नास्ति तत्प्रवृत्तिस्तु संस्कारवशादित्याशयेनाह। बुभुक्षादिनेति॥ यो हि दृष्टेन दोषेण तत्त्वज्ञानात्प्रच्यावितश्च्युतिमापादितस्तस्य संस्कारवशाद्यमनियमानुष्ठानमुपपद्यते। तस्य दोषक्षतत्वप्रच्युतिप्रसक्ताभिमतचेष्टानिवृत्त्यर्थत्वेनावश्यानुष्ठेयत्वात्। तथाच न यथेष्टचेष्टापत्तिरित्यर्थः॥ इतश्च विदुषो वैधप्रवृत्त्यभावेऽपि यथेष्टचेष्टा नास्तीत्याह। न चेति॥ अविदुषोऽपि न यथेष्टचेष्टा विदुषस्तु सा कुतस्त्येति दृष्टान्तेन स्फुटयति। न हीति॥ अन्येषां ब्रह्मसंस्थत्वासम्भवे फलितमुपसंहरति। तस्मादिति॥ परोक्तमनूद्याङ्गीकरोति। यत्पुनरिति॥ उक्तमर्थान्तरमनुवदति। यच्चेति॥ किं परिव्राजकस्य ज्ञानहीनस्याश्रममात्रनिष्ठस्य तपःशब्देनोपादानमाहोस्विज्ज्ञानवतोऽपीति विकल्प्याद्यमङ्गीकृत्य द्वितीयं दूषयति। तदसदिति॥

ज्ञानवतोऽपि तपोरूपत्वात्तपःशब्देनोपादानमुचितमिति शङ्कित्वा प्रत्याह। कस्मादित्यादिना॥ तपःशब्देन नासौ गृह्यते

भा० निवृत्तेश्च। भेदबुद्धिमत एव हि तपःकर्त्तव्यता स्यात्। एतेन कर्म्मच्छिद्रे ब्रह्मसंस्थतासामर्थ्यं। अप्रतिषेधश्च प्रत्युक्तः। तथाज्ञानवानेव निवृत्तकर्म्मा परिव्राडिति ज्ञानवैयर्थ्यं प्रत्युक्तं। यत्पुनरुक्तं यववराहादिशब्दवत्परिव्राजके न रूढो ब्रह्मसंस्थशब्द इति तत्परिहृतमेतत्। तस्यैव ब्रह्मसंस्थतासम्भवान्नान्यस्येति। यत्पुनरुक्तं रूढशब्दानिमित्तं नोपाददत इति। तत्तद्गृहस्थतक्षपरिव्राजकादिशब्ददर्शनात गृहस्थितिपारिव्राज्यतक्षणादिनिमित्तोपादाना अपि गृहस्थपरिव्राजका वाश्रमविशेषे विशिष्टजातिमति च गृहस्थ इति परिव्राजक इति च तक्षेति रूढा दृश्यन्ते शब्दाः। न यत्र यत्र तानि निमित्तानि तत्र तत्र वर्त्तन्ते॥ सिद्धभा-

---

व्या० इति शेषः॥ तस्य च ज्ञानवतोऽविशिष्टत्वं प्रागेवोपदिष्टमित्याह। स एवेति॥ इतश्च परमहंसपरिव्राजको न तपःशब्देन परामृष्ट इत्याह। एकत्वेति॥ तदेव स्फोरयति। भेदेति॥ यत्तु कर्म्मच्छिद्रे गृहस्थादेरपि ब्रह्मसंस्थतासामर्थ्यमिति तत्प्रत्याह। एतेनेति॥ अनिवृत्तभेदप्रत्ययस्य ब्रह्मसंस्थत्वासम्भवेनेति यावत्॥ सामर्थ्यं प्रत्युक्तमिति सम्बन्धः॥ यत्तु चतुर्णामपि ब्रह्मसंस्थताया अप्रतिषेध इति तत्राह। अप्रतिषेधश्चेति॥ एकत्वोपदेशेन भेदप्रत्ययनिरासादनिवृत्तभेदप्रत्ययस्यार्थाद्ब्रह्मसंस्थता प्रतिषिद्धेत्यर्थः॥ पारिव्राज्यमात्रेणाम्टतत्वे ज्ञानवैयर्थ्यमुक्तं परिहरति। तथेति॥ चोद्यान्तरमनूद्योक्तं परिहारं स्मारयति। यत्पुनरुक्तमिति॥ तत्र रूढोऽयं शब्द इति शेषं पञ्चम्या सूचयति। चोद्यान्तरमनूद्य दूषयति। यत्पुनरित्यादिना॥ आदिपदेन पङ्कजादिशब्दा गृह्यन्ते॥ उक्तं प्रपञ्चयति। गृहस्थितीति॥ इहापीति प्रकृतवाक्योपादानं प्रकृते परमहंसे परिव्राजके ब्रह्मसंस्थपदमित्यत्र हेतुमाह। मत्येति॥ इतश्च

भा॰ वात्। तथेहापि ब्रह्मसंस्थशब्दो निवृत्तसर्व्वकर्मतत्साधनपरिव्राडेकविषयेऽत्याश्रमिणि परमहंसाख्ये वृत्त इह भवितुमर्हति। मुख्यामृतत्वफलश्रवणात्। अतश्चेदमेवैकं वेदोक्तं पारिव्राज्यं। न यज्ञोपवीतचिदण्डकमण्डल्वादिपरिग्रहवान्मुण्डोऽपरिग्रहोऽसङ्ग इति च। श्रुतिरत्याश्रमिभ्यः परमं पवित्रमित्यादि च श्वेताश्वतरीये। न स्तुतिर्न नमस्कार इत्यादिस्मृतिभ्यश्च। तस्मात्कर्म्म न कुर्व्वन्ति यतयः पारदर्शिनः। तस्मादलिङ्गो धर्मज्ञः अव्यक्तलिङ्ग इत्यादिस्मृतिभ्यश्च। यत्तु साङ्ख्यैः कर्मत्यागोऽभ्युपगम्यते। क्रियाकारकफलभेदबुद्धेः सत्यत्वाभ्युपगमात्। तन्मृषा। यच्च बौद्धैः शून्य-

---

व्या॰ पारमहंस्यमेव श्रौतमित्याह। अतश्चेति॥ एवकारार्थं कथयति॥ न यज्ञोपवीतेति॥ इतिशब्दः सन्न्यासप्रकरणतथाविधश्रुत्यभावप्रदर्शनार्थः॥ ब्रह्मसंस्थशब्दस्य परमहंसविषयत्वे श्रुत्यन्तरं संवादयति। श्रुतिरिति॥ अत्याश्रमिभ्यः पूर्व्वाश्रमत्रयमतीत्य सर्व्वकर्म्म त्यक्त्वा स्थितेभ्यः परमहंसपरिव्राजकेभ्य इति यावत्। परमं पवित्रं निरतिशयपरिशुद्धिकारणं परमपुरुषार्थसाधनं सम्यग्ज्ञानं प्रोवाचेत्यर्थः। स्मृतिभ्यश्च यथोक्तपारिव्राज्यं सिद्धतीति शेषः॥ अनाशिषमनारम्भमित्यादि वाक्यसङ्ग्रहार्थमादिपदं। कर्म्मणो बन्धहेतुत्वं तच्छब्दार्थः॥ लिङ्गस्य धर्म्मकारणत्वराहित्यं तस्मादित्युक्तं। अलिङ्गो धर्म्मध्वजित्वरहितः। धर्म्मज्ञो यथावद्धर्म्मानुष्ठाता। अधर्म्मज्ञ इति वा पाठः। धर्म्मविचारनिष्ठारहितस्तत्रासारत्वप्रत्ययवानित्यर्थः। अलिङ्ग इत्युक्तेऽनाश्रमित्वमाशङ्क्याह। अव्यक्तेति॥ न व्यक्तं दम्भेन गृहीतं लिङ्गमाश्रमित्वमस्यास्तीत्यव्यक्तलिङ्गः। किन्त्वदम्भेन श्रुतिस्मृत्युक्तप्रकारेण तदस्यास्तीत्यर्थः। आदिपदं त्यज धर्म्ममधर्म्मञ्चेत्यादि ग्रहीतुं। अत्रापि पूर्व्वपदान्वयः। ननु कर्म्मनिवृत्तिमुपदिशता त्वया साङ्ख्यमतमेवाश्रितं। तेनापि शरीरादि

भा॰ ताभ्युपगमादकर्त्तृत्वमभ्युपगम्यते। तदप्यसत्। तदभ्युपगन्तुः सत्त्वाभ्युपगमात्। यच्चाज्ञैरक्षमतया अकर्त्तृत्वाभ्युपगमः सोऽप्यसत्कारकबुद्धेरनिवर्त्तितत्वादप्रमाणेन। तस्माद्वेदान्तप्रमाणजनितैकत्वप्रत्ययवत एतत्कर्म्मनिवृत्तिलक्षणं पारिव्राज्यं ब्रह्मसंस्थत्वञ्चेति सिद्धं। एतेन गृहस्थस्यैकत्वविज्ञाने सति पारिव्राज्यमर्थसिद्धं। नन्वग्न्युत्सादनदोषभाक् स्यात्परिव्रजन्। वीरहा वा एष देवानां योऽग्निमुद्वासयत

---

आ॰ व्यापारोपरमद्वारा ध्याननिष्ठायाः स्वीकृतत्वात्तचाह। यत्त्विति॥ न हि तन्मते कूटस्थात्मधीबलेन नैष्कर्म्म्यं युक्तं। क्रियाकारकादिबुद्धेरविवेकस्य च सत्यत्वेन ज्ञानमात्रापनेयत्वायोगात्। न च सर्व्वव्यापारोपरमसम्भवो मनोबुद्ध्यादीनां। तच्छीलत्वात्। न हि कश्चित्क्षणमपीत्यादि स्मृतेः। अतः साङ्ख्यवचो मिथ्यैवेत्यर्थः। ननु बौद्धेनापि नैरात्म्यमिच्छता नैष्कर्म्म्यमिष्टं तथाच कर्म्मत्यागमुपदिशता त्वयापि तन्मतमेवानुमोदितं नेत्याह। यच्चेति॥ तदभ्युपगन्तुरित्यत्राकर्त्तृत्वं तच्छब्दार्थः। दुःखमित्येव यत्कर्म्म कायक्लेशभयात्त्यजेदिति स्मृतेः॥ आलस्योपहतैरज्ञैरकर्त्तृत्वमुपेयते॥ भवतापि कर्म्म त्यजता तन्मतमादृतमित्याशङ्क्याह। यच्चाज्ञैरिति॥ अकर्त्तृत्वाभ्युपगम इति च्छेदः। ते हि मोहादेव कर्म्म त्यजन्तो न तत्फलं लभन्ते। स कृत्वा राजसन्त्यागं नैव त्यागफलं लभेदिति स्मृतेः। वयं तु प्रमाणवशादेव कर्म्म त्यजन्तो न व्यामोहमूढपक्षमाश्रियामहे। तस्मान्नैष्कर्म्म्यं श्रुतिस्मृतिप्रसिद्धमप्रत्याख्येयमिति भावः॥ पक्षान्तरे नैष्कर्म्म्योक्तेरमूलत्वे स्थिते फलितमुपसंहरति। तस्मादिति॥ यत्तु कैश्चिदैकाश्रम्यमाश्रितं तत्प्रत्यादिशति। एतेनेति॥ एकत्वविज्ञानेन भेदप्रत्ययस्योपमर्दितत्वोपपादनेनेति यावत्। एकत्वविज्ञानं परोक्षं विवक्षितं। अपरोक्षस्य पारिव्राज्यमन्तरेणायोगात्तस्योपरतिशब्दितस्य शमादिवत्साधनत्वश्रुतेरिति द्रष्टव्यं॥ गृहस्थस्य पारिव्राज्यश्रुतिविरोधं शङ्कते। नन्विति॥ एकात्म्यमेव सत्यं द्वैतमसत्यमिति विवेके जाते सत्यग्न्यादेरवस्तु-

उ॰ प्रजापतिर्लोकानभ्यतपत् तेभ्योऽभितप्तेभ्य-
स्त्रयी विद्या सम्प्रास्रवत्तामभ्यतपत्तस्या अभित-
प्ताया एतान्यक्षराणि सम्प्रास्रवन्त भूर्भुवः स्वरि-
ति ॥ ३ ॥ तान्यभ्यतपत्तेभ्योऽभितप्तेभ्य ॐकारः

---

भा॰ इतिश्रुतेः। न दैवेनैवोत्पादितत्वादुत्पन्न एव हि स एक-
त्वदर्शने जाते। अपागादग्नेरग्नित्वमिति श्रुतेः। अतो न
दोषभाग्गृहस्थः परिव्रजन्निति।

यत्संस्थोऽमृतत्वमेति तन्निरूपणार्थमाह। प्रजापतिर्विराट्
कश्यपो वा लोकानुद्दिश्य तेषु सारजिघृक्षयाऽभ्यतपद-
भितापं कृतवान् ध्यानं तपः कृतवानित्यर्थः। तेभ्यो
ऽभितप्तेभ्यः सारभूता त्रयी विद्या सम्प्रास्रवत् प्रजापतेर्म-
नसि प्रत्यभादित्यर्थः। तामभ्यतपत्। पूर्ववत्तस्या
अभितप्ताया एतान्यक्षराणि सम्प्रास्रवन्त भूर्भुवः स्वरिति

---

आ॰ त्वाध्यवसायात्तदभिनिवेशशैथिल्यान्न तत्त्यागे दोषप्राप्तिरिति
दूषयति। न दैवेति॥ सम्यग्ज्ञाने सत्यग्न्यादेरुत्पन्नत्वे मानमाह।
अपागादिति॥ गृहस्थस्यापि विवेकवतो वैराग्यद्वारा युक्तं
पारिव्राज्यमित्याह। अत इति॥ इतिशब्दो ब्रह्मसंस्थवाक्य-
व्याख्यानसमाप्त्यर्थः॥

किन्तद्ब्रह्मेत्याकाङ्क्षायामाह। यत्संस्थ इति॥ लोकानामभितो
दग्धतयाभितापप्रतिभासं व्यवच्छिनत्ति। ध्यानमिति॥ द्रवा-
त्मत्वाभावे कथं प्रस्रवणं त्रय्याः स्यादित्याशङ्क्याह। पूर्व-
वदिति॥ त्रयी विद्या सारजिघृक्षयाऽऽलोचितवानित्यर्थः।
कथं तस्य ब्रह्मशब्दवाच्यत्वमित्याशङ्क्य महत्तरत्वादित्याह।
कीदृशमित्यादिना॥ तत्र ब्रह्मशब्दप्रवृत्तौ हेत्वन्तरं सूच-

मू० सम्प्रास्रवत्तद्यथा शङ्कुना सर्व्वाणि पर्णानि सन्तृणान्येवमोङ्कारेण सर्वा वाक् सन्तृणा ॐ ओ[ङ्कार ए]वेदँ सर्वमोङ्कार एवेदँ सर्व्वं ॥

भा० व्याहृतयः । तान्यक्षराण्यभ्यतपत्तेभ्योऽभितप्तेभ्यः सारभूत ॐकारः सम्प्रास्रवत्तद्ब्रह्म । कीदृशं किंरूपमित्याह । तद्यथा । शङ्कुना पर्णनालेन सर्व्वाणि पर्णानि पत्रावयवजातानि संन्तृणानि निबद्धानि व्याप्तानीत्यर्थः । एवमोङ्कारेण ब्रह्मणः परमात्मनः प्रतीकभूतेन सर्व्वा वाक् शब्दजातं सन्तृणा । अकारो वै सर्व्वा वागित्यादि श्रुतेः । परमात्मविकारस्य नामधेयमात्रमित्यत ॐकार एवेदँ सर्व्वमिति द्विरभ्यास आदरार्थः । लोकादिनिष्पादनकथनमप्योंकारस्तुत्यर्थमिति ॥ २३ ॥

व्या० यति । परमात्मन इति ॥ ॐकारावयवस्याकारस्यापि सर्व्ववाग्व्याप्तिरस्ति किमु वक्तव्यमोङ्कारस्येति मन्वानः श्रुत्यन्तरमुदाहरति । अकार इति ॥ ओमितीदं सर्व्वमित्यादिवाक्यमादिपदार्थः॥ ॐकारव्याप्तत्वेऽपि वाग्जातस्य न तस्य सर्व्वात्मत्वमाकाशादिपरमात्मविकारस्य पृथगेव विद्यमानत्वादित्याशङ्क्याह । परमात्मेति ॥ सकलमपि जगत्परमात्मविकारत्वात्तदतिरेकेण नास्ति। स च प्रकृतादोंकारान्नातिरिच्यते। एतद्वै सत्यकाम परश्चापरश्च ब्रह्म यदोंकार इति श्रुतेः। तस्माद्युक्तमोङ्कारस्य सर्व्वात्मत्वमित्यर्थः। ॐकारं सर्व्वात्मकं ब्रह्मरूपमुपासीतेति विधिसमाप्त्यर्थमितिशब्दः ॥ किमित्योङ्कारस्य लोकादिद्वारा निष्पत्तिरुच्यते तत्राह । लोकादीति ॥ स्तुतिश्चोपास्त्यर्था। यत्स्तूयते तद्विधीयत इति स्थितेः। तथा च सिद्धमोङ्कारोपासनममृतत्वफलमितिशब्दः ॥ २३ ॥

उ० ब्रह्मवादिनो वदन्ति यद्वसूनां प्रातःसवनꣳ रुद्राणां माध्यन्दिनꣳ सवनमादित्यानाञ्च विश्वेषाञ्च देवानां तृतीयसवनं ॥ १ ॥ क्व तर्हि

भा० सामोपासनप्रसङ्गेन कर्म्मगुणभूतत्वान्निर्वर्त्त्योङ्कारं परमात्मप्रतीकत्वाद्यामृतत्वहेतुत्वेन महीकृत्य प्रकृतस्यैव यज्ञस्याङ्गभूतानि सामहोममन्त्रोत्थानान्युपदिदिक्षन्नाह ॥ ब्रह्मवादिनो वदन्ति । यत्प्रातःसवनं प्रसिद्धं तद्वसूनां । तैश्च प्रातःसवनसम्बन्धो ऽयं लोको वशीकृतः सवनेशानैः । तथा रुद्रैर्माध्यन्दिनेशानैरन्तरिक्षलोकः । आदित्यैश्च विश्वैर्देवैश्च तृतीयसवनेशानै स्तृतीयो लोको वशीकृतः । इति यजमानस्य लोकोऽन्यः परिशिष्टो न विद्यते । अतः क्व तर्हि यजमानस्य लोको यदर्थं यजते । न क्वचिल्लोकोऽस्तीत्यभिप्रायः । लोकाय वै यजते यो यजत इति

---

व्या० प्रासङ्गिकं हित्वा प्रकृतमनुसन्धत्ते । सामेति ॥ पञ्चविधं सप्तविधञ्च यज्ञाङ्गीभूतं साम तस्योपासनवचनादोङ्कारस्य तद्रूपस्य सुतरामेव कर्म्मगुणत्वे प्राप्ते ततस्तं व्यावर्त्त्य ब्रह्मप्रतीकत्वात्कैवल्यहेतुत्वेन तमेव महीकृत्य प्रस्तुतयज्ञाङ्गभूतसामादिविज्ञानविधानार्थमुत्तरवाक्यमित्यर्थः ॥

सामहोममन्त्रोत्थानसामादिज्ञानविधितया तदपरिज्ञाने दोषमाह । ब्रह्मेत्यादिना ॥ तेषां प्रातःसवनेशानत्वेऽपि यजमानस्य का हानिरित्याशङ्क्याह । तैश्चेति । यथा पृथिवीलोको वसुभिस्तथेति यावत् । अन्तरिक्षलोको वशीकृत इति पूर्व्वेण सम्बन्धः । तृतीयो लोको द्युलोकाख्यः ॥ अस्तु तत्तद्देवानां तत्तल्लोकवशीकारस्तथापि यजमानस्य लोकित्वे किमायातमित्याशङ्क्याह । इति यजमानस्येति ॥ परिशिष्टलोकाभावोऽतःशब्दार्थः । तर्हि

उ॰ यजमानस्य लोक इति स यस्तं न विद्यात्कथं कुर्य्यादथ विद्वान्कुर्य्यात् ॥ २ ॥ पुरा प्रातरनुवाकस्योपाकरणाज्जघनेन गार्हपत्यस्योदङ्मुख उपविश्य स वासवꣳ सामाभिगायति ॥ ३ ॥ लोकद्वारमपावार्णू२३३पश्येम त्वा वयꣳ रा ३३३३ऽ३हुं ३आ २३३ जा३ यो३ आ १२४५

---

भा॰ श्रुतेः। लोकाभावे च स यो यजमानस्तं लोकस्वीकरणोपायं सामहोममन्त्रोत्थानलक्षणं न विजानीयात्सोऽज्ञः कथं कुर्य्याद्यज्ञं न कथञ्चन तस्य कर्तृत्वमुपपद्यत इत्यर्थः ॥ सामादिविज्ञानस्तुतिपरत्वान्नाविदुषः कर्तृत्वं कर्म्ममात्रविदः प्रतिषिध्यते। स्तुतये च सामादिविज्ञानस्याविद्वत्कर्तृत्वप्रतिषेधाय चेति चेन्निद्येत वाक्यं। आद्ये चौपस्त्ये काण्डेऽविदुषोऽपि कर्म्मास्तीति हेतुमवोचाम। अथैतद्वक्ष्यमाणं सामाद्युपायं विद्वान् कुर्य्यात् ॥

किन्तदेद्यमित्याह। पुरा पूर्व्वं प्रातरनुवाकस्य शस्त्रस्य

---

व्या॰ देव्यपातादूर्द्धमित्येतत् ॥ लोकापेक्षां विनापि विधिवशाद्यागो भविष्यतीत्याशङ्क्याह। लोकायेति ॥ लोकत्त्रयस्य वस्वाद्यधीनतया यजमानानधीनत्वे तस्य तदधीनत्वार्थं यज्ञाद्यनुष्ठानमित्याशङ्क्याह। लोकाभावे चेति ॥ यज्ञो यज्ञं स्वर्गादिसाधनीभूतं कथं कुर्य्यादित्याक्षेपादविद्वत्कर्म्मानुष्ठाननिन्दापरं वाक्यमित्याशङ्क्याह। सामादीति ॥ यथेदं वाक्यं स्तुत्यर्थं निषेधार्थं च भविष्यति नेत्याह। स्तुतये चेति ॥ इतस्याविद्वत्कर्तृत्वं निरोद्धुमशक्यमित्याह। आद्ये

उ॰ इति ॥ ४ ॥ अथ जुहोति नमोऽग्नये पृथिवीक्षिते लोकक्षिते लोकं मे यजमानाय विन्देष वै यजमानस्य लोक एतास्मि ॥ ५ ॥ अत्र यजमानः परस्तदायुषः स्वाहाऽपजहि परिघमित्युक्त्वोत्तिष्ठति तस्मै वसवः प्रातःसवनꣳ सम्प्रयच्छन्ति

---

भा॰ प्रारम्भाज्जघनेन गार्हपत्यस्य पश्चादुदङ्मुखः सन्नुपविश्य स वासवं वसुदैवत्यं सामाभिगायति ॥ लोकद्वारमस्य पृथिवीलोकस्य प्राप्तये द्वारमपावृणु हे अग्ने तेन द्वारेण पश्येम त्वा त्वां राज्यायेति ॥ अथानन्तरं जुहोत्यनेन मन्त्रेण नमोऽग्नये प्रह्वीभूतास्तुभ्यं वयं पृथिवीक्षिते पृथिवीनिवासाय लोकक्षिते लोकनिवासाय पृथिवीलोकनिवासायेत्यर्थः। लोकं मे मह्यं यजमानाय विन्द लभस्व। एष वै मम यजमानस्य लोक एता गन्तास्मि ॥ अत्रास्मिन् लोके यजमानोऽहमायुषः परस्तादूर्द्ध्वं मृतः सन्नित्यर्थः।

---

व्या॰ चेति ॥ मटचीहतेष्वित्यादौ विदुषः सन्निधाने तदनुज्ञामन्तरेणाविदुषः कर्म्म कर्त्तुमयुक्तं। प्रत्यवायप्रसङ्गात्। तदसन्निधौ तु तेनापि क्रियमाणं कर्म्म न दुष्यतीत्युपपादितमित्यर्थः॥ अथशब्दो हेत्वर्थः। सामाद्यविज्ञाने यस्माद्यज्ञाकरणमेव प्राप्तं तस्मादित्यर्थः॥ ज्ञातव्यं सामादि प्रश्नपूर्व्वकं विवृणोति। किन्तदित्यादिना॥ अप्रगीतमृग्जातं शस्त्रं यत्प्रातःकाले शस्यते प्रातरनुवाकस्तस्येति यावत्। उपाकरणादित्यस्यार्थमाह। प्रारम्भादिति॥ जघनेनेत्येतद्व्याचष्टे। पश्चादिति॥ स गार्हपत्यस्य पृष्ठत उदग्भागे स्थित्वा वसुदेवताकं सामगानं कृतवानित्यर्थः। स वासवमित्यत्र सशब्दो यजमानविषयः। राज्याय त्वद्दर्शनेन त्वदनुज्ञया पृथिवीप्रयुक्तभोगाये-

उ० ॥ ६ ॥ पुरा माध्यन्दिस्य सवनस्योपाकारणाज्ज-
घनेनाग्नीध्रीयस्योदङ्मुख उपविश्य स रौद्रꣳ
सामाभिगायति ॥ ७ ॥ लोकद्वारमपावार्णू २३३
पश्येम त्वा वयं वि रा ३३३३ हुं आ ३३ ज्या
यो आ ३३३४५ इति ॥ ८ ॥ अथ जुहोति नमो
वायवेऽन्तरिक्षक्षिते लोकक्षिते लोकं मे यजमानाय
विन्दैष वै यजमानस्य लोक एतास्मि ॥ ९ ॥ अत्र
यजमानः परस्तादायुषः स्वाहाऽपजहि परिघ-
मित्युक्त्वोत्तिष्ठति तस्मै रुद्रा माध्यन्दिनꣳ सवनꣳ
सम्प्रयच्छन्ति ॥ १० ॥ पुरा तृतीयसवनस्योपा-

---

भा० स्वाहेति जुहोति। अपजह्यपनय परिघं लोकद्वारार्गल-
मित्येतं मन्त्रमुक्त्वोत्तिष्ठति। एवमेतैर्वसुभ्यः प्रातःसवन-
सम्बन्धी लोको निष्क्रीतः स्यात्ततस्ते प्रातःसवनं वसवो
यजमानाय सम्प्रयच्छन्ति ॥

तथाग्नीध्रीयस्य दक्षिणाग्नेर्जघनेनोदङ्मुख उपविश्य स
रौद्रं सामाधिगायति यजमानो रुद्रदैवत्यं वैराज्याय ॥

---

व्या० त्यर्थः। पृथिव्यां क्षयति वसतीति पृथिवीक्षिदस्मिस्तस्मैपृथिवी-
क्षिते ॥ पृथिवीलोको मया लब्धे किं स्यादित्याशङ्क्याह। एष वै
मम यजमानस्येति ॥ स्वाहाशब्दो मन्त्रसमाप्त्यर्थो होमद्योतकः ॥
सर्व्वेषु मन्त्रेष्वेतैः सामहोममन्त्रोत्थानैरित्यर्थः ॥

यथा पृथिवीलोकजयोपायो दर्शितस्तथान्तरिक्षलोकज-
योपायोऽपि प्रदर्श्यत इत्याह। तथेति ॥ अन्तरिक्षे क्षयती-

उ॰ करणाज्जघनेनाहवनीयस्योदङ्मुख उपविश्य स आदित्यꣳ स वैश्वदेवꣳ सामाभिगायति ॥११॥

लोकद्वारमपावार्णू २३३ पश्येम त्वा वयꣳ स्व रा ३३३३ हुं आ २३३ जा ३ यो ३ आ ३४५ इति ॥१२॥ आदित्यमथ वैश्वदेवं लोकद्वारमपावार्णू २३३ पश्येम त्वा वयꣳ साम्रा ३३३३ हुं ३ आ २३३ जायो ३ आ ३१११ इति ॥१३॥ अथ जुहोति नम आदित्येभ्यश्च विश्वेभ्यश्च देवेभ्यो दिविक्षिद्भ्यो लोकक्षिद्भ्यो लोकं मे यजमानाय विन्दत ॥ १४ ॥

एष वै यजमानस्य लोक एतास्म्यत्र यजमानः

---

भा॰ अन्तरिक्षक्षिते इत्यादि समानं ॥ तथाऽऽहवनीयस्योदङ्मुख उपविश्य स आदित्यदैवत्यं वैश्वदेवञ्च सामाभिगायति क्रमेण स्वाराज्याय साम्राज्याय दिविक्षिद्भ्य इत्येवमादिसमानमन्यत्। विन्दताऽपहतेति बहुवचनमात्रं विशेषः। याजमानन्त्वेतत्। एतास्म्यत्र यजमान इत्यादि लिङ्गात्। एष ह वै यजमान एवंवित्। यथोक्तस्य सामादेर्विद्वान्यज्ञस्य

---

व्या॰ त्यन्तरिक्षक्षिद्वायुस्तस्मै वायवे। यथा पृथिव्यन्तरिक्षयोराप्युपायस्तथाद्युलोकाप्युपायोऽप्युच्यत इत्याह। तथेति॥ स्वाराज्यमन्तरिक्षे स्वतन्त्रं आदित्यानामिव स्वातन्त्र्यमिह विवक्षितं॥

किमिदं सामाद्यार्त्विज्यमाहो याजमानिकमिति विवक्षायामाह॥ याजमानन्त्विति॥ आदिपदेन लोकं मे यजमानायेति-

उ॰ परस्तादायुषः स्वाहाऽपहतपरिघमित्युक्त्वोत्ति-
ष्ठति ॥ १५ ॥ तस्मा आदित्याश्च विश्वे च देवास्तृ-
तीयसवनꣳ सम्प्रयच्छन्त्येष ह वै यज्ञस्य मात्रां
वेद य एवं वेद य एवं वेद ॥ १६ ॥ २४ ॥
इति द्वितीयप्रपाठकः ॥ २ ॥

---

भा॰ मात्रां यज्ञयाथात्म्यं वेद यथोक्तं । य एवं वेद य एवं वेदेति द्विरुक्तिरध्यायसमाप्त्यर्था ॥ २४ ॥ इति श्रीगोविन्द-भगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्य्यश्रीमच्छङ्करभगवतः कृतौ छान्दोग्यविवरणे द्वितीयः प्रपाठकः ॥ २ ॥

---

आ॰ निर्देशो गृह्यते ॥ सामादिज्ञानफलं कथयति । एष इति ॥ य एवंविदित्यस्य व्याख्या । यथोक्तस्येति ॥ यथोक्तं सामादीत्येतदेव-मित्युक्तप्रकारोक्तिस्तस्य यज्ञयाथात्म्यविदस्तदनुष्ठानद्वारा तत्फलं सम्भवतीत्यर्थः ॥ २४ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्य्य-श्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानकृतायां छान्दोग्योप-निषद्भाष्यटीकायां द्वितीयः प्रपाठकः समाप्तः ॥ २ ॥

उ०　　तृतीयप्रपाठकप्रारम्भः ।

हरिः । ॐ । असौ वा आदित्यो देवमधु

भा०　॥ॐ॥ असौ वा आदित्य इत्याद्यध्यायारम्भे सम्बन्धो ऽतीतानन्तराध्यायान्ते उक्तः। यज्ञस्य मात्रां वेदेति यज्ञविषयाणि च सामहोममन्त्रोत्थानानि विशिष्टफलप्राप्तये यज्ञाङ्गभूतानि उपदिष्टानि। सर्व्वयज्ञानाञ्च कार्य्यनिर्वृतिरूपः सविता महत्या श्रिया दीप्यते। स एष सर्व्वप्राणिकर्म्मफलभूतप्रत्यक्षं सर्व्वैरुपजीव्यते। अतो यज्ञस्य व्यपदेशानन्तरं तत्कार्य्यभूतसवितृविषयमुपासनं सर्व्वपुरुषार्थेभ्यः श्रेष्ठतमं फलं विधास्यामीत्येवमारभते श्रुतिरसौ वा आदित्यो देवमध्वित्यादि। देवानां मोदनान्मध्विव मध्वसा-

---

व्या०　ॐ श्रीगणेशाय नमः। कर्म्माङ्गावबद्धं विज्ञानं परिसमाप्य कर्म्मफलस्यादित्यस्य स्वतन्त्रोपास्तिविध्यर्थमध्यायान्तरमारम्भमाणः सम्बन्धं प्रतिजानीते। असावितिः॥ पूर्व्वोत्तरग्रन्थयोः सम्बन्धं प्रतिज्ञातं प्रकटयितुं वृत्तं कीर्त्तयति। अतीतेति॥ विशिष्टफलं पृथिव्यादिलोकत्रयं समनन्तरसन्दर्भस्य तात्पर्य्यं वक्तुं पातनिकां करोति। सर्व्वेति॥ तस्य प्रेप्सितत्वं सूचयति। महत्येति॥ कथं पुनरादित्यस्य सर्व्वप्राणिकर्म्मफलभूतत्वमित्याशङ्क्य सर्व्वैरुपजीव्यतोपलम्भादित्याह। स एष इति॥ पातनिकां कृत्वोत्तरग्रन्थमुत्थापयति। अत इति॥ आदित्यस्य कर्म्मफलत्वादिति यावत्। तदुपदेशे हेत्वन्तरमाह। सर्व्वपुरुषार्थेभ्य इति॥ श्रेष्ठतमं फलं क्रमेण मुक्तिलक्षणमस्यास्तीति तथोक्तं। आदित्ये कर्म्मफलशब्दप्रवृत्तिनिमित्तमुक्तं व्यक्तीकर्त्तुमाह। वस्वादीनाञ्चेति॥ चकारो विद्वत्सङ्ग्रहार्थः। वक्ष्यत्यादित्यस्येति सम्बन्धः। तस्य सर्व्वेषां यज्ञानां फलरूपत्वादिति हेतुः। वस्वा-

उ॰ तस्य द्यौरेव तिरश्चीनवꣳशोऽन्तरिक्षमपूपो मरिचयः पुत्राः ॥ १ ॥ तस्य ये प्राञ्चो रश्मयस्ता एवास्य प्राच्यो मधुनाड्यः

भा॰ वादित्यो वस्वादीनाञ्च मोदनहेतुत्वं वक्ष्यति सर्व्वयज्ञफलरूपत्वादादित्यस्य। कथं मधुत्वमित्याह। तस्य मधुनो द्यौरेव भ्रमरस्येव मधुनस्तिरश्चीनश्चासौ वंशश्चेति तिरश्चीनवंशः। तिर्य्यग्गतेव हि द्यौर्लक्ष्यतेऽन्तरिक्षञ्च मध्वपूपो द्युवंशे लग्नः सन् लम्बत इवातो मध्वपूपसामान्यादन्तरिक्षं मध्वपूपो मधुनः सवितुराश्रयत्वात्। मरीचयो रश्मयो रश्मिस्था आपो भौमाः सवित्राकृष्टाः। एता वा आपः स्वराजो यन्मरीचय इति हि विज्ञायन्ते। ता अन्तरिक्षमध्वपूपस्थरश्म्यन्तर्गतत्वाद्भ्रमरबीजभूताः पुत्रा इव

आ॰ दयस्थ कर्म्मफलभोक्तारस्तत्फलमादित्यं दृष्ट्वा तृप्यन्तीति युक्तमित्यर्थः॥

आदित्यं मधुदृष्ट्योपासीतेत्युक्तं तत्र प्रसिद्धमधुसाम्यमादित्यस्य श्रुत्युक्तमाकाङ्क्षापूर्व्वकं दर्शयति। कथमित्यादिना॥ दिवि तिरश्चीनवंशदृष्टौ निमित्तमाह। तिर्य्यग्गतेति॥ अन्तरिक्षनिवासिभिरुपरि विसारितनयनैरिति शेषः॥ अन्तरिक्षे मध्वपूपदृष्टिं कथयति। अन्तरिक्षमिति॥ मधुन इत्युभयत्र सम्बन्धः॥ मरीचयः पुत्रा इति वाक्यं व्याचष्टे। मरीचय इति॥ आपो भूमेराकृष्टा रश्मिस्थाः सन्तीत्यत्र प्रमाणमाह। एता इति॥ स्वराजः स्वतो भासमानस्य सवितुरिति यावत्। तासां पुत्रत्वं प्रकटयति। ता इति॥ लोके हि भ्रमरबीजभूताः पुत्रा मध्वपूपच्छिद्रस्था दृश्यन्ते एतास्वापोऽन्तरिक्षलक्षणमध्वपूपान्तर्गतरश्मिस्था

उ० ऋच एव मधुकृतः ऋग्वेद एव पुष्पं ता अमृता आपः

---

भा० हिता लक्ष्यन्त इति पुत्रा इव पुत्रा मध्वपूपनाड्यन्तर्गता हि भ्रमरपुत्रास्तस्य सवितुर्मध्वाश्रयस्य मधुनो ये प्राञ्चः प्राच्यां दिशि गता रश्मयस्ता एवास्य प्राञ्चः प्रागञ्चनान्मधुनो नाड्यो मधुनाड्य इव मध्वाधारच्छिद्राणीत्यर्थः॥

तत्रर्च एव मधुकृतो लोहितरूपं सविताश्रयं मधु कुर्व्वन्तीति मधुकृतो भ्रमरा इव यतो रसानादाय मधु कुर्व्वन्ति तत्पुष्पमिव पुष्पमृग्वेद एव । तत्र ऋग्ब्राह्मणसमुदायस्यर्ग्वेदाख्यत्वाच्छब्दमात्राच्च भोग्यरूपरसनिस्रावासम्भवात् । ऋग्वेदशब्देनात्र ऋग्वेदविहितं कर्म्म । ततो हि कर्म्मफलभूतमधुरसनिस्रावसम्भवात् । मधुकरैरिव पुष्प-

---

आ० भवन्ति ततश्चैतास्वपु भ्रमरवीजदृष्टिः कर्त्तव्येत्यर्थः । प्राचीदिगन्तेष्वादित्यरश्मिषु प्राचीनमधुनाड़ीदृष्टिर्विधेयेत्याह । तस्येति॥ मध्वाश्रयस्य लोहितादिरूपं मधु वक्ष्यमाणं तदाधारस्येत्यर्थः ॥ ऋक्षु मन्त्ररूपासु भ्रमरदृष्टिमारोपयति । तत्रेति॥ प्रकृतं मधु सप्तम्यर्थः । तासां मधुकर्तृत्वं साधयति । लोहितेति ॥ ऋग्वेदविहिते कर्म्मणि पुष्पदृष्टिं सम्पादयति । यत इति॥ ऋचो मधुकृत इति मन्त्राणां पृथक्कृतत्वादृग्वेदः पुष्पमित्यृग्वेदशब्देन ब्राह्मणसमुदायस्य वक्तव्यत्वात्कथमृग्वेदविहिते कर्म्मणि तच्छब्देन लक्षिते पुष्पदृष्ट्याध्यासेऽपि कुतस्ततो मधुनिष्पत्तिरित्याशङ्क्याह । ततो हीति॥ तदेवोपपादयति । मधुकरैरिति ॥ लोके तावदपः पुष्पाश्रयाः समुदायमधुकरैर्मधु निर्वर्त्यते तथेहापि मधुकरस्थानीयैर्ऋङ्मन्त्रैस्तद्वेदविहितात्पुष्पस्थानीयात्कर्म्मणः सकाशादपो गृहीत्वा मधु निष्पाद्यते

उ॰ स्ता वा एता ऋचः ॥ २ ॥ एतमृग्वेदमभ्य-

भा॰ स्थानीयादृग्वेदविहितात्कर्म्मण आप आदाय ऋग्भिर्मधु निर्वर्त्यते । कास्ता आप इत्याह ताः कर्म्मणि प्रयुक्ताः सोमाज्यपयोरूपा अग्नौ प्रक्षिप्तास्तत्पाकाभिर्निर्वृत्ताः । अमृतार्थत्वादत्यन्तरसवत्य आपो भवन्ति । तद्रसाना-दाय ता वा एता ऋचः पुष्पेभ्यो रसमाददाना इव भ्रमरा ऋच एतमृग्वेदविहितं कर्म्म पुष्पस्थानीयमभ्यत-पन्नभितापञ्च कृतवत्य इव एता ऋचः कर्म्मणि प्रयुक्ताः। ऋग्भिर्हि मन्त्रैः शस्त्राद्यङ्गभावमुपगतैः क्रियमाणं कर्म्म मधु निर्वर्त्तकं रसं मुञ्चतीत्युपपद्यते पुष्पाणीव भ्रम-रैराचोष्यमाणानि । तदेतदाह तस्यर्ग्वेदस्याभितप्तस्य । कोऽसौ रसो य ऋङ्मधुकराभितापनिःसृत इत्युच्यते। यशो विश्रुतत्वं तेजो देहगता दीप्तिरिन्द्रियं सामर्थ्योपेतैरिन्द्रियै-रवैकल्यं वीर्य्यं सामर्थ्यं बलमित्यर्थः। अन्नाद्यमन्नञ्च तदाद्यञ्च

व्या॰ तस्मात्कर्म्मणः स्वफलभूतमधुनिष्पत्तेरुपपत्तेस्तस्मिन्पुष्पदृष्टिरि-त्यर्थः । ता अमृता आप इति वाक्यं प्रश्नपूर्व्वकं व्याचष्टे । कास्ता इत्यादिना ॥ कर्म्मणि प्रयुक्तत्वमभिनयति। अग्नाविति ॥ अग्निपाकादिभिर्निर्वृत्तत्वमपूर्व्वात्मत्वं परम्परया मुक्तार्थत्वममृ-तार्थत्वं। यद्वा रोहितरूपामृतनिर्वर्त्तकत्वं तदर्थत्वं। उत्कृष्टफल-वत्त्वमत्यन्तरसवत्त्वं ॥

ता वा एता इत्यादि व्याचष्टे। तद्रसानिति॥ यथा हि पुष्पेभ्यो भ्रमराः रसानाददानास्तान्यभितपन्ति तथैते मन्त्रास्तस्मिन् कर्म्मणि स्थितानम्मयान्रसानादाय मधु निर्वर्त्तयन्तो यथोक्तं कर्म्माभिमतं समालोचयन्ति सेत्यर्थः। कथं पुनर्मन्त्राणां भ्रमर-

उ॰ तपꣳस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्य्य-
मन्नाद्यꣳ रसोऽजायत ॥ ३ ॥ तद्व्यक्षरत्तदादित्य-
मभितोऽश्रयत्तद्वा एतद्यदेतदादित्यस्य रोहितꣳ
रूपं ॥ ४ ॥ १ ॥ अथ येऽस्य दक्षिणा रश्मयस्ता

भा॰ येनोपयुज्यमानेनाहन्यहनि देवानां स्थितिः स्यात्तदन्नाद्य-
मेष रसोऽजायत यागादिलक्षणात्कर्म्मणः। यश आद्यन्ना-
द्यपर्य्यन्तं तद्व्यक्षरद्विशेषेणाक्षरदगमत्। गत्वा च तदादि-
त्यमभितः पार्श्वतः पूर्व्वभागं सवितुरश्रयदाश्रितवदित्यर्थः॥
अमुष्मिन्नादित्ये सञ्चितं कर्म्मफलाख्यं मधु भोक्ष्यामहे
इत्येवं हि यश आदिलक्षणप्राप्तये कर्म्माणि क्रियन्ते मनुष्यैः
केदारनिष्पादनमिव कर्षकैः। तत्प्रत्यक्षं प्रदर्श्यते श्रद्धा-
हेतोः। किन्तद्यदेतदादित्यस्योद्यतो दृश्यते रोहितं रूपं॥ १॥
अथ येऽस्य दक्षिणा रश्मय इत्यादि समानं। यजूंष्येव

आ॰ स्थानीयानां पुष्पस्थानीयमृग्वेदविहितं कर्म्माभितप्तवतां फल-
वत्त्वमित्याशङ्क्याह। एता ऋच इति॥ तासां कर्म्मणि प्रयुक्तत्वेऽपि
किमायातं तदाह। ऋग्भिरिति॥ अभितप्तस्य रसोऽजायतेति
सम्बन्धः॥ तं प्रश्नपूर्व्वकं विशदयति। कोऽसाविति॥ तच्छब्दार्थ-
माह। यश आदीति॥ यथानुष्ठितकर्म्मजनितफलं कथमादित्य-
माश्रयतीत्याशङ्क्याह। अमुष्मिन्निति॥ दृष्टान्ते भोक्ष्यामहे व्रीह्या-
दिजनितं फलमित्यभिप्रायेण व्रीह्यादिप्राप्त्यर्थमिति शेषः।
किन्तत्कर्म्मफलं यदादित्यमाश्रित्य तिष्ठतीत्याशङ्क्याह। तत्प्रत्य-
क्षमिति॥ कर्म्मफले प्रत्यक्षे तत्साधने कर्म्मणि कर्म्मिणां श्रद्धा-
सिद्ध्यर्थमिति यावत्॥ तदेव फलं प्रश्नपूर्व्वकं विशदयति।
किमित्यादिना॥ १॥
मध्वन्तरं दर्शयति। अथेति॥ वक्तव्यविशेषं कथयति। यजूं-

उ॰ एवास्य दक्षिणा मधुनाड्यो यजूꣳष्येव मधुकृतो यजुर्वेद एव पुष्पं ता अमृता आपः ॥ १ ॥ तानि वा एतानि यजूꣳष्येतं यजुर्वेदमभ्यतपꣳस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्य्यमन्नाद्यꣳ रसोऽजायत ॥ २ ॥ तद्व्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वा एतद्यदेतदादित्यस्य शुक्लꣳ रूपं ॥ ३ ॥ २ ॥ अथ येऽस्य प्रत्यञ्चो रश्मयस्ता एवास्य प्रतीच्यो मधुनाड्यः सामान्येव मधुकृतः सामवेद एव पुष्पं ता अमृता आपः ॥ १ ॥ तानि वा एतानि सामान्येतꣳ सामवेदमभ्यतपꣳस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्य्यमन्नाद्यꣳ रसोऽजायत ॥ २ ॥ तद्व्यक्षरत्त-

---

भा॰ मधुकृतो यजुर्वेदविहिते कर्म्मणि प्रयुक्तानि। पूर्व्ववन्मधुकृत इव। यजुर्वेदविहितं कर्म्म पुष्पस्थानीयं पुष्पमित्युच्यते। ता एव सोमाद्या अमृता आपस्तानि वा एतानि यजूंष्येतं यजुर्वेदमभ्यतपन्नित्येवमादि सर्व्वं समानं मधु। एतदादित्यस्य दृश्यते शुक्लं रूपं ॥ २ ॥ अथ येऽस्य प्रत्यञ्चो रश्मय

---

व्या॰ षीति ॥ कथं तेषां मधुकृत्त्वं तदाह। पूर्व्ववदिति ॥ ऋङ्मन्त्राणां ऋग्वेदविहिते कर्म्मणि प्रयुक्तानां यथापूर्व्वं मधुकरत्वमुक्तं। तथा यजुषामपीत्यर्थः ॥ यजुर्वेदविहिते कर्म्मणि पुष्पदृष्टिमाचष्टे। यजुर्वेदेति ॥ ता अमृता आप इत्यस्य पूर्व्ववद्व्याख्यानमित्याह। ता एवेति ॥ यजुषामादित्यसम्बन्धि मधु प्रत्यक्षं दर्शयति। एतदिति ॥ २॥

उ॰ दादित्यमभितोऽश्रयन्नद्वा एतद्यदेतदादित्यस्य कृष्णꣳ रूपं ॥ ३ ॥ ३ ॥

अथ येऽस्योदञ्चो रश्मयस्ता एवास्योदीच्यो मधुनाड्योऽथर्वाङ्गिरस एव मधुकृत इतिहासपुराणं पुष्पं ता अमृता आपः ॥ १ ॥ ते वा एतेऽथर्वाङ्गिरस एतदितिहासपुराणमभ्यतपꣳस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्य्यमन्नाद्यꣳ

---

भा॰ इत्यादि समानं। तथा साम्नां मधु। एतदादित्यस्य कृष्णं रूपं ॥ ३ ॥

अथ येऽस्योदञ्चो रश्मय इत्यादि समानं। अथर्वाङ्गिरसोऽथर्वाङ्गिरसाश्च दृष्टा मन्त्रा अथर्वाङ्गिरसः कर्म्मणि प्रयुक्ता मधुकृतः। इतिहासपुराणं पुष्पं ॥ तयोश्चेतिहासपुराणयोरश्वमेधे पारिप्लवासु रात्रिषु कर्म्माङ्गत्वेन विनि-

---

व्या॰ तृतीयं मधु कथयति। अथेति॥ ऋचां यजुषाञ्च मधु यथा कथितं तथेति यावत्॥ तस्य शास्त्रप्रत्यक्षत्वं दर्शयति। एतदिति॥ ३॥

चतुर्थं मधु दर्शयति। अथेति॥ किन्तत्कर्म्म इत्याशङ्क्याह। इतिहासेति॥ तद्धाथर्वणानामाङ्गिरसस्य प्रसिद्धं ब्राह्मणं तद्विहितं कर्म्म पुष्पं पुष्पस्थानीयमित्यर्थः॥

यदा प्रसिद्धयोरितिहासपुराणयोरुपादानं तदापि न दूषणमित्याह। तयोश्चेति॥ अश्वमेधे कर्म्मणि जामितापरिहारार्थं पारिप्लवो नानाविधोपाख्यानसमुदायो यत्र तत्पारिप्लवमाचक्षीतेति विधिवशात्प्रयुज्यते। तासु रात्रिषु तस्यैव कर्म्मणोऽङ्गत्वेन मनुर्वैवस्वतो राजेत्येवम्प्रकारयोरितिहासपुराणयोर्विनियोगस्य पूर्व्वतन्त्रे पारिप्लवार्थाधिकरणेनैव सिद्धत्वात्तत्सम्बन्धिकर्म्म

उ० रसोऽजायत ॥ २ ॥ तद्यक्षरत्तदादित्यमभितो ऽश्रयत्तद्वा एतद्यदेतदादित्यस्य परः कृष्णꣳ रूपं ॥ ३ ॥ ४ ॥

अथ येऽस्योर्ध्वा रश्मयस्ता एवास्योर्ध्वा मधुनाड्यो गुह्या एवादेशा मधुकृतो ब्रह्मैव पुष्पं ता अमृता आपः ॥ १ ॥ ते वा एते गुह्या आदेशा एतद्ब्रह्माभ्यतपꣳस्तस्याभितप्तस्य यश इन्द्रियं

---

भा० योगः सिद्धो मध्येतदादित्यस्य परः कृष्णं रूपमतिशयेन कृष्णमित्यर्थः ॥ ४ ॥

अथ येऽस्योर्द्ध्वा इत्यादि पूर्व्ववत्। गुह्या गोप्या रहस्या एवादेशा लोकद्वारीयादिविधयः। उपासनानि च कर्म्माङ्गविषयाणि मधुकृतो ब्रह्मैव। शब्दाधिकारात् प्रणवाख्यं पुष्पं॥

समानमन्यत्। मध्येतदादित्यस्य मध्ये क्षोभत इव समाहितदृष्टेर्दृश्यते सञ्चलन्तीव। ते वा एते यथोक्ता रोहितादिरूपविशेषा रसानां रसाः। केषां रसानामित्याह।

---

व्या० पुष्पमित्यर्थः॥ अस्यापि मधुनः शास्त्रप्रत्यक्षतामाह । मध्येतदिति ॥ ४ ॥

पञ्चमं मधु दर्शयति । अथेति ॥ लोकद्वारीयादिविधयो लोकद्वारमपावृणु पश्येम त्वा वयमित्यादयः॥ ब्रह्मशब्दार्थमाह । शब्दाधिकारादिति ॥ ऋगादिशब्दानां प्रकृतत्वादित्यर्थः ॥

अस्यापि मधुनः शास्त्रवशात्प्रत्यक्षतामाह । मध्येतदिति ॥ समाहितदृष्टेः शास्त्रार्थे समाहितचित्तस्येत्यर्थः ॥ पञ्च मधूनि व्याख्याय तेषां सर्व्वेषां ध्येयत्वसिद्ध्यर्थं स्तुतिं प्रकुरुते। ते वा एते इति ॥ तस्मात्तेषामिति सम्बन्धः। कर्म्मणि विनियुक्तत्वेन तदङ्गत्वा-

उ० वीर्य्यमन्नाद्यꣳ रसोऽजायत ॥ २ ॥ तद्व्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वा एतद्यदेतदादित्यस्य मध्ये क्षोभत इव ॥ ३ ॥ ते वा एते रसानाꣳ रसा वेदा हि रसास्तेषामेते रसास्तानि वा एतान्यमृतानाममृतानि वेदा ह्यमृतास्तेषामेतान्यमृतानि ॥ ४ ॥ ५ ॥

तद्यत्प्रथमममृतं तद्वसव उपजीवन्त्यग्निना

---

भा० वेदा हि यस्माल्लोकनिष्यन्दित्वात्सारा इति रसास्तेषां रसानां कर्म्मभावापन्नानामप्येते रोहितादिविशेषा रसा अत्यन्तसारभूता इत्यर्थः । तथा अमृतानाममृतानि । वेदा ह्यमृता नित्यत्वात्तेषामेतानि रोहितादीनि रूपाण्यमृतानि । रसानां रसा इत्यादिकर्म्मस्तुतिरेषा । यस्यैवं विशिष्टानि अमृतानि फलमिति ॥ ५ ॥

तत्तत्र यत्प्रथमममृतं रोहितरूपलक्षणं तद्वसवः प्रातःसवनेशाना उपजीवन्त्यग्निना मुखेनाग्निना प्रधानभूतेनाग्निप्रधानाः सन्त उपजीवन्तीत्यर्थः । अन्नाद्यं रसोऽजायत

---

व्या० तद्भावापत्तिः । वेदानां कार्य्यत्वेऽपि प्रयत्नपूर्व्वकत्वाभावान्नित्यत्वं या मधुनि स्तुतिः सा कर्म्मस्तुतिरित्याह । रसानामिति ॥ कर्म्मस्तुतिमभिनयति । यस्यैवमिति ॥ रसानां रसाः । अमृतानाममृतानीत्येवं विशिष्टान्यमृतानि यस्य फलं कर्म्मणस्तस्य महाभाग्यं किं वक्तव्यमिति स्तूयते कर्म्मेत्यर्थः ॥ ५ ॥

अमृतानि ध्येयान्युक्ता तदुपजीविनो देवतागणाननुचिन्तनीयानुपदिशति । तत्तत्रेति ॥ कवलग्राहं कवलं गृहीत्वा यथा

उ० मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥

त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादु-

---

भा० इति वचनात्कवलग्राहमश्नन्तीति प्राप्तं तत्प्रतिषिध्यते। न वै देवा अश्नन्ति न पिबन्तीति कथं तर्ह्युपजीवन्तीत्युच्यते। एतदेव हि यथोक्तममृतं रोहितरूपं दृष्ट्वोपलभ्य सर्व्व-करणैरनुभूय तृप्यन्ति। दृशेः सर्व्वकरणद्वारोपलब्ध्यर्थ-त्वात्। ननु रोहितं रूपं दृष्ट्वेत्युक्तं। कथमन्येन्द्रियविषयत्वं रूपस्येति। न। यश आदीनां श्रोत्रादिगम्यत्वात्। श्रोत्रग्राह्यं यशः। तेजोरूपश्चाक्षुषमिन्द्रियं विषयग्रहणकार्य्यानुमेयं करणसामर्थ्यं। वीर्य्यं बलं देहगतं। उत्साहः प्राणवत्ता। अन्नाद्यं प्रत्यहमुपजीव्यमानं शरीरस्थितिकरं यद्भवति। रसो ह्येवमात्मकः सर्व्वः। यं दृष्ट्वा तृप्यन्ति सर्व्वे।

देवा दृष्ट्वा तृप्यन्तीत्येतत्सर्व्वं स्वकरणैरनुभूय तृप्यन्ती-त्यर्थः। आदित्यसंश्रयाः सन्तो वैगन्ध्यादिदेहकरणदो-

---

व्या० लाकोऽश्नातीति तद्वदित्येतत् ॥ ननु अशनपानाभावे न युक्तमुप-जीवनवचनमित्याशङ्क्य परिहरति। कथमित्यादिना॥ चक्षुषेति वक्तव्ये कथं सर्व्वकरणैरित्यधिकमुच्यते तत्राह। दृशेरिति॥ चक्षुषैव रूपग्रहणमिति नियममाश्रित्य शङ्कते। नन्विति॥ कर्म्मफलभूतस्य रसस्य लोहितामृतात्मकस्य नास्ति चक्षुर्मात्रग्रा-ह्यत्वमिति परिहरति। नेत्यादिना ॥ किमेतावता रसस्यायातं तदाह ॥ रसो हीति ॥ तस्यापि श्रोत्रादिग्राह्यत्वेति शेषः ॥

एतदेवेत्यादिवाक्यमुपसंहरति। देवा इति ॥ किं तेषां स्वत-न्त्राणां तृप्तिर्नेत्याह। आदित्येति ॥ वैगन्ध्यं दौर्गन्ध्यं। आदिपदेन

उ० द्यन्ति॥२॥स य एतदेवममृतं वेद वसूनामेवैको
भूत्वाऽग्निनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स
य एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति
॥३॥स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता
वसूनामेव तावदाधिपत्यꣳ स्वाराज्यं पर्य्येता॥

---

भा० परहिताश्च। किन्तो निरुद्यमा अमृतमुपजीवन्ति न कथं। तर्ह्येतदेव रूपमभिलक्ष्याधुना भोगावसरो नास्माकमिति बुद्ध्वाभिसंविशन्त्युदासते। यदा वै तस्यामृतस्य भोगावसरो भवेत्तदैतस्मादमृतादमृतभोगनिमित्तमित्यर्थः। एतस्माद्रूपादुद्यन्त्युत्साहवन्तो भवन्तीत्यर्थः। न ह्यनुत्साहवतामननुतिष्ठतामलसानां भोगप्राप्तिर्लोके दृष्टा॥

स यः कश्चिदेतदेवं यथोदितमृङ्मधुकरतापरससङ्क्षरणमृग्वेदविहितं कर्म्म पुष्पात्तस्य चादित्यसंश्रयणं रोहितरूपलक्षणममृतस्य प्राचीदिग्गतरश्मिनाडीसंस्थतां वसुदेवभोग्यतां। तद्विदश्च वसुभिः सहैकतां गत्वा अग्निना मुखेनोपजीवनं दर्शनमात्रेण तृप्तिञ्च स्वभोगावसरमुद्यमनं तत्कालापाये च संवेशनं वेद सोऽपि वसुवत्सर्व्वं तथैवा-

---

व्या० सम्भाविताः सर्व्वेऽपि देहकरणदोषा गृह्यन्ते। एतस्माद्रूपादिति॥ व्याख्यातस्यानुवादमात्रं। उत्साहवतां देवानां यथोक्तामृतोपजीवित्वमित्यत्र लोकप्रसिद्धिमनुकूलयति। न हीति॥

पाठक्रमेणोक्तं ध्येयस्वरूपमनूद्य स्वाधिकारे ध्यानविधिं दर्शयति। स य इति॥ वसुदेवभोग्यता वसुभिर्देवैरुपजीव्यत्वमिति यावत्। एतदित्यस्माकं मधु निदर्शयति। एवं शब्दार्थं

उ॰ ॥ ४ ॥ ६ ॥ अथ यद्द्वितीयममृतं तद्रुद्रा उपजीवन्तीन्द्रेण मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥ त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ति ॥ २ ॥ स य एतदेवममृतं वेद रुद्राणामेवैको भूत्वेन्द्रेणैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति ॥ ३ ॥ स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता द्विस्तावद्दक्षिणत उदेतोत्तरतोऽस्तमेता रुद्राणामेव तावदाधिपत्यꣳ

भा॰ नुभवति। कियन्तं कालं विद्वांस्तदमृतमुपजीवतीत्युच्यते स विद्वान् यावदादित्यः पुरस्तात्प्राच्यां दिश्युदेता पश्चात्प्रतीच्यामस्तमेता तावद्वसूनां भोगकालस्तावन्तमेव कालं वसूनामाधिपत्यं पर्य्येता परितो गन्ता भवतीत्यर्थः। न यथा चन्द्रमण्डलस्थः केवलकर्म्मपरतन्त्रो देवानामन्नभूतः। किन्तर्ह्ययमाधिपत्यं स्वाराज्यं स्वराड्भावञ्चाधिगच्छति॥६॥

अथ यद्द्वितीयममृतं तद्रुद्रा उपजीवन्तीत्यादि समानं। स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता द्विस्तावत्ततो

व्या॰ विशदयति। यथोदितमिति॥ तथैव श्रुत्युक्तक्रमेणैवेत्यर्थः। भोगकालपरिमाणं प्रश्नपूर्व्वकं निर्द्धारयति। कियन्तमिति॥ आधिपत्यं स्वाराज्यमिति विशेषणयोस्तात्पर्य्यमाह। न यथेति॥६॥

प्रथममम्रुतमधिकृत्य चिन्तनीयमुक्त्वा द्वितीयममृतमाश्रित्य तद्दर्शयति। अथेति॥ विद्याफलं कथयति। स यावदिति॥ यावद्वसूनां भोगकालस्ततो द्विगुणो रुद्राणां भोगकालः। यथा प्रथ-

उ॰ स्वाराज्यं पर्य्येता ॥ ४ ॥ ७ ॥ अथ यत्तृतीयममृतं तदादित्या उपजीवन्ति वरुणेन मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥ त एतदेव रूपमभिसंविशन्त्यतस्माद्रूपादुद्यन्ति ॥ २ ॥ स य एतदेवममृतं वेदादित्यानामेवैको भूत्वा वरुणेनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति ॥ ३ ॥ स यावदादित्यो दक्षिणत उदेतोत्तरतोऽस्तमेता द्विस्तावत्पश्चादुदेतापुरस्तादस्तमेताऽऽदित्यानामेव तावदाधिपत्यꣳ स्वाराज्य पर्य्येता ॥ ४ ॥ ८ ॥ अथ यच्चतुर्थममृतं तन्मरुत उपजीवन्ति सोमेन मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा

---

भा॰ द्विगुणं कालं दक्षिणत उदेतोत्तरतोऽस्तमेता रुद्राणां तावद्भोगकालः ॥ ७ ॥

---

आ॰ मामृतध्यायिनां वसुभिस्तुल्यो भोगकालस्तथा द्वितीयामृतध्यायिनामपि रुद्रैस्तुल्यो भोगकाल इत्यर्थः ॥ ७ ॥

इतरामृतध्यायिनां फलानि निर्द्दिशति । तथेति ॥ विपर्य्ययेण पुरस्ताद्दक्षिणतोऽधस्ताच्चेत्यर्थः । यथा पुरस्तादुदेता पश्चादस्तमेता ततो दक्षिणतो द्विगुणेन कालेनोदेता उत्तरतश्चास्तमेतेत्युक्तं । तथा ततो द्विगुणेन कालेन पश्चादुदेता पुरस्ताच्चास्तमेता तावानादित्यानां भोगकालः । तृतीयामृतध्यायिनामपि तावानेव भोगकालः । ततो द्विगुणेन कालेन यावदादित्य उत्तरत उदेता दक्षिणतोऽस्तमेता तावान्मरुतां भोगकालः । चतुर्थामृतध्यायिनामपि

उ॰ तृप्यन्ति ॥ १ ॥ त एतदेव रूपमभिसंविश-
न्त्येतस्माद्रूपादुद्यन्ति ॥ २ ॥ स य एतदेवममृतं
वेद मरुतामेवैको भूत्वा सोमेनैव मुखेनैतदेवा-
मृतं दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशन्त्ये-
तस्माद्रूपादुदेति ॥ ३ ॥ स यावदादित्यः पश्चा-
दुदेता पुरस्तादस्तमेता द्विस्तावदुत्तरत उदेता
दक्षिणतोऽस्तमेता मरुतामेव तावदाधिपत्यꣳ
स्वाराज्यं पर्य्येता ॥ ४ ॥ ९ ॥ अथ यत्पञ्च-
ममृतं तत्साध्या उपजीवन्ति ब्रह्मणा मुखेन न वै
देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति
॥ १ ॥ त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपा-
दुद्यन्ति ॥ २ ॥ स य एतदेवममृतं वेद साध्याना-
मेवैको भूत्वा ब्रह्मणैव मुखेनैतदेवामृतं दृष्ट्वा
तृप्यति स एतदेव रूपमभिसंविशत्येतस्मा-
द्रूपादुदेति ॥ ३ ॥ स यावदादित्य उत्तरत

---

भा॰ तथा पश्चादुत्तरत ऊर्द्ध्वमुदेता विपर्य्ययेणास्तमेता। पूर्व्व-
स्मात्पूर्व्वस्माद्द्विगुणोत्तरोत्तरेण कालेनेत्यपौराणं दर्शनं।
सवितुश्चतुर्दिशमिन्द्रयमवरुणसोमपुरीषूदयास्तमयकालस्य

---

व्या॰ तावानेव भोगकालः। ततो द्विगुणेन कालेनोर्द्ध्वमुदेता ह्यधस्तादस्त-
मेता तावान्साध्यानां भोगकालः। पञ्चमामृतचिन्तकानामपि तावा-
नेवेत्यर्थः। यत्पूर्व्वपूर्व्वोदयास्तमयकालापेक्षया द्विगुणेन कालेनो-
त्तरोत्तरोदयास्तमयावित्युक्तं। तत्पुराणविरुद्धमिति शङ्कते। पूर्व्व-

उ॰ उदेता दक्षिणतोऽस्तमेता द्विस्तावदूर्द्ध उदेताऽर्वागस्तमेता साध्यानामेव तावदाधिपत्यꣳ स्वाराज्यं पर्य्येता ॥ ४ ॥ १० ॥

---

भा॰ तुल्यत्वं हि पौराणिकैरुक्तं ॥ मानसोत्तरस्य मूर्द्धनि मेरोः प्रदक्षिणावृतेस्तुल्यत्वादिति ॥

---

आ॰ स्मात्पूर्व्वस्मादिति ॥ कथं श्रुत्युक्तं स्यात् अथास्य पुराणविरुद्धतेत्याशङ्क्याह । सवितुश्चेति ॥

उक्तमेव सङ्क्षिपति । मानसोत्तरस्येति ॥ महागिरेर्मेरोः प्राकारवत्परितः स्थितस्य मूर्द्धनि संलग्नस्य चक्राख्यस्य सवितुर्मेरोः प्रदक्षिणावृतेस्तुल्यत्वात् । कालाधिक्ये कारणाभावाच्च । चतसृष्वपि पुरीषु उदयास्तमयकालस्य तुल्यत्वं ॥ उक्तं हि विष्णुपुराणे । शक्रादीनां पुरे तिष्ठन्स्पृशत्येष पुरत्रयं । विकर्णौ द्वौ विकर्णस्थस्त्रीन्कोणान् द्वे पुरे तथेति ॥ लैङ्गे चोक्तं । मानसोपरि माहेन्द्री प्राच्यां मेरोः स्थिता पुरी । दक्षिणे भानुपुत्रस्य वरुणस्य तु वारुणे । सौम्ये सोमस्य विपुला तासु दिग्देवताः स्थिताः । अमरावती संयमिनी सुखा चैव विभा क्रमात् । लोकपालोपरिष्टात्तु सर्व्वतो दक्षिणायने । काष्ठांगतस्य सूर्य्यस्य गतिर्या तां निबोधत । दक्षिणां प्रक्रमेद्भानुः क्षिप्तेषुरिव धावति । पुरान्तगो यदा भानुः शक्रस्य भवति प्रभुः । सर्व्वः सांयामनैः सौरो ह्युदयो दृश्यते द्विजाः । स एवं सुखवत्यान्तु निशान्तस्थः प्रदृश्यते । अस्तमेति तदा सूर्य्यो विभायां विश्वदृग्विभुः ॥ मया प्रोक्तोऽमरावत्यां यथाऽसौ वारितस्करः । तथा संयमिनीं प्राप्य सुखाञ्चैव विभां खगः ॥ यदा पराह्नस्त्वाग्नेय्यां पूर्व्वाह्णो नैर्ऋते द्विजाः । तदा त्वपररात्रश्च वायुभागे सुदारुणः ॥ ऐशान्यां पूर्व्वरात्रस्तु गतिरेषास्य सर्व्वत इति ॥ तथा चोपरिष्टादमरावत्यास्तिष्ठन्मध्याह्नं तत्रैशकोणस्थानां तृतीययाममाग्नेयकोणस्थानामाद्ययामं संयमिन्यां उदयं चकारेति । सविता एवं यदा याम्ये मध्याह्ने तिष्ठति तदैन्द्रे अस्तमयः । आग्नेये तृतीययामः । नैर्ऋतिकोणे प्रथमो यामः । वारुणे उदयः । यदा च वारुणे मध्याह्नस्तदा याम्येऽस्तमयः । निर्ऋतिकोणे तृतीयो यामः । वायव्ये प्रथमयामः ।

भा० अत्रोक्तः परिहार आचार्य्यैरमरावत्यादीनां पुरीणां द्विगुणोत्तरोत्तरेण कालेनोद्वासः स्यात् । उदयश्च नाम सवितुस्तन्निवासिनां प्राणिनां चक्षुर्गोचरापत्तिस्तदत्यय-श्चास्तमयं न परमार्थत उदयास्तमये स्तः। तन्निवासिनाञ्च प्राणिनामभावे तान् प्रति तेनैव मार्गेण गच्छन्नपि नैवो-देता नास्तमेतेति चक्षुर्गोचरापत्तेस्तदत्ययस्य चाभावात्॥

---

व्या० सौम्ये उदयः। यदा च सौम्ये मध्याह्नस्तदा वारुणेऽस्तमयः। वायव्ये तृतीययामः। ईशानकोणे प्रथमो यामः। ऐन्द्रे उदयः। तथाग्नेये कोणे वर्त्तमानस्तत्रस्थानां मध्यं दिनं। यमेन्द्रपुर्य्योराद्यतृतीययामौ। नैर्ऋतीशानकोणयोरुदयास्तमयौ चकारेत्येवं सर्व्वासु दिक्षु चेति पौराणिके दर्शने तद्विरुद्धमिदं श्रुत्योक्तमित्यर्थः॥

यद्यपि श्रुतिविरोधे स्मृतिरप्रमाणं तथापि यथाकथञ्चिद्विरो-धपरिहारं द्रविडाचार्य्योक्तमुपपादयति। अत्रेति॥ यदाऽमरा-वती शून्या स्यात्तदा हि तां प्रति पुरस्तादुदेतीति प्रयोगशून्यत्वा-द्वसूनां भोगान्तः। एवमुत्तराणां पुरीणां विनाशे द्विगुणकालेन रुद्रादीनां भोगच्युतिः॥ अत इमां वचनव्यक्तिमाश्रित्य तमेव परि-हारमाह। अमरावत्यादीनामिति॥ तथापि कथं विरोध-समाधिस्तत्राह। उदयश्चेति॥ यैर्यत्र दृश्यते भास्वान्स तेषामुदयः स्मृतः। तिरोधानञ्च यत्रैति तदेवास्तमयं रवेः॥ नैवास्तमयमर्कस्य नोदयः सर्व्वदा सतः। उदयास्तमये नाम दर्शनादर्शने रवेरिति॥ अमरावत्यादिपुरीषु पूर्व्वपूर्व्वापेक्षयोत्तरोत्तरोचोद्वासकालद्वैगु-ण्यमस्तु। आस्ताञ्च दर्शने सवितुरुदयास्तमयौ। स वा एष न कदाचनास्तमेति नोदेतीति श्रुतेर्वस्तुतो नोदयास्तमयौ स्तस्तथाच पुरीषु तुल्यत्वेन. गच्छतः सवितुरुदयास्तमयकालवैषम्यमयुक्त-मित्याशङ्क्याह। तन्निवासिनाञ्चेति॥ भोगकालद्वैगुण्यं सवितृगते-राधिक्यापेक्षया न श्रुत्योच्यते येन पुराणविरोधः किन्त्वमराव-त्यादीनां पुरीणां दैत्योपद्रुतानां पूर्व्वपूर्व्वापेक्षयोत्तरोत्तरपुरीणां द्विगुणेन कालेनोद्वासात्तदपेक्षयोत्तरोत्तरस्थानेषु भोगकाले द्वैगुण्यं श्रुत्योक्तमिति भावः॥

भा० तथाऽमरावत्याः सकाशाद्द्विगुणकालं सांयमिनी पुरी वसत्यतस्तन्निवासिनः प्राणिनः प्रति दक्षिणत इवोदेत्युत्तरतोऽस्तमेतीत्युच्यतेऽस्मद्बुद्धिस्थापेक्ष्य तथोत्तरास्वपि पुरीषु योजना । सर्व्वेषाञ्च मेरुरुत्तरो भवति । यदामरावत्यां मध्याह्नगतः सविता तदा सांयमिन्यामुद्यन्दृश्यते तत्र मध्याह्नगोचरो वारुण्यामुद्यन्दृश्यते ॥

---

व्या० अथोदासकालाधिक्याद्भोगच्युतिकालाधिक्यं न भोगकालाधिक्यमत आह । तथेति ॥ यथोदासकालद्वैगुण्यमुक्तं तद्वदिति यावत् । अमरावतीनिवासिप्राणिवर्गापेक्षया संयमिनीनिवासिनः प्राणिनः प्रति द्विगुणेन कालेन सवितुरुदयास्तमयाविति युक्तं वक्तुं । दर्शनादर्शनयोर्द्विगुणकालभावित्वात् । न च तन्निवासिदृष्ट्यपेक्षया दक्षिणोत्तरयोरुदयास्तमयौ । तत्तद्दृष्ट्या पूर्व्वपश्चिमयोरेव तद्भावात् । अस्मद्बुद्धिमपेक्ष्य तु दक्षिणत उदेति उत्तरतस्त्वास्तमेतीत्युच्यते । इवशब्दस्तयोस्तन्निवासिजनापेक्षया दक्षिणोत्तरस्थयोरसत्त्वं द्योतयतीत्यर्थः ॥ यथाऽमरावत्यपेक्षया संयमिन्यामुदासकालाधिक्यमुक्तं तथा तदपेक्षया वारुण्यां तदपेक्षया विभायां तत्कालाधिक्यमवधेयमित्याह । तथेति ॥ संयमिनीस्थान्तर्भाव्य बहुवचनं ॥ इतस्त्वास्मद्बुद्धिमपेक्ष्य दक्षिणगत्याऽऽदित्यास्तमयमित्याह । सर्व्वेषाञ्चेति ॥ उद्यन्तमादित्यं पुरतोऽवलोकयतां वामभागे स्थितत्वान्मेरुः सर्व्वेषामेवोत्तरतो भवति । तथाचोदयास्तमयाभ्यां पूर्व्वापरदिग्विभागान्न तत्पुरवासिदृष्ट्यपेक्षया दक्षिणत इत्यादिवचनं । किन्त्वस्मद्दृष्ट्यपेक्षयैवेत्यर्थः । उदासकालद्वैगुण्यापेक्षया भोगकालद्वैगुण्यमित्युक्तं ॥ सम्प्रति सवितृगत्याधिक्यापेक्षयैव भोगकालाधिक्यं किं न स्यादित्याशङ्क्य पुराणविरोधसमाधानासम्भवान्नैवमित्याह । यदेत्यादिना ॥

भा॰ तथोत्तरस्यां प्रदक्षिणावृत्तेस्तुल्यत्वात्। इलावृतवासिनां सर्व्वतः पर्व्वतप्राकारनिवारितादित्यरश्मीनां सवितोर्द्ध्व दृष्टोदेताऽर्वागस्तमेता दृश्यते। पर्व्वतोर्द्ध्वच्छिद्रप्रवेशात्स-वितृप्रकाशस्य। तथर्गाद्यमृतोपजीविनाममृतानाञ्च द्विगु-णोत्तरोत्तरवीर्य्यवत्त्वमनुमीयते भोगकालद्वैगुण्यलिङ्गेन।

---

व्या॰ यथा संयमिन्यां मध्याह्नगो वारुण्यामुद्यन् भवति तथा तस्यां मध्याह्नगो विभायामुद्यन्दृश्यत इत्याह। तथेति॥ उक्तञ्च वायु-प्रोक्ते। मध्यगस्त्वमरावत्यां यावद्भवति भास्करः। वैवस्वते संयमन उदयंस्तत्र दृश्यते॥ सुखायामर्द्धरात्रश्च विभायामस्तमेति चेति। कथं पुनः स यावदादित्य उत्तरत उदेता दक्षिणतोऽस्तमेता दिक्तावदूर्द्ध्व उदेताऽर्वागस्तमेतेत्युच्यते। न हि तत्रोद्यासकालस्य बाधितत्वमस्ति येनोदयास्तमयकालाधिक्याद्भागकालाधिक्यं स्या-दत आह। इलावृतेति॥ मेरोश्चतुर्दिशमिलावृतं नाम वर्षं प्रसिद्धं। तन्निवासिनां प्राणिनामुभयतः पर्व्वताभ्यां मानसोत्तरसु-मेरुभ्यां प्राकारस्थानीयाभ्यामुभयोर्द्ध्वस्थितमाद्यासीणाविनिवारि-तादित्यरश्मीनामूर्द्ध्वमुदेताऽर्वागस्तमेता च सविता दृश्यते। इव-शब्दस्तूदयास्तमययोर्वस्तुतोऽसत्त्वद्योतनार्थः॥ कथं सवितोर्द्ध्वः सन्नुदेत्यर्व्वागस्तमेति तत्राह। पर्व्वतेति॥ सर्व्वावृतप्रकाशस्य पर्व्वत-योरुपरितने छिद्रे प्रवेशादधोवर्त्तिनाम्प्राणिनामुपरि प्रसारित-नेत्राणां सावित्रं प्रकाशं पश्यतां तत्रोद्यन्नेव सवितोपलभ्यते प्रदेशान्तरे च दृश्यमानोऽधस्तादिवास्तमेति। यथोपरिष्टादत्र-स्थैरुपलभ्यमानो मेघस्ततो दूराद्दृश्यो भूतलमस्पृशत्येवावसीयते तथेहापीत्यर्थः॥ भोगकालस्याविरोधेनाधिक्यमापाद्य तेनैव लिङ्गेनातिशयवत्त्वममृतादेरपि कथयति। तथेति॥ भोगका-लाधिक्ये सतीति यावत्। अनुमीयते कल्प्यते। यत्तु भोगकाल-माकलय्योद्यमनानन्तरं तदभावं ज्ञात्वोपरमणामगन्धादिमुखत्वं दृष्टिमात्रेण दृप्तिमत्त्वं तत्सर्व्वं विदुषोऽपि कल्प्यते देवैः सम-

उ॰ अथ तत ऊर्द्ध्व उदेत्य नैवोदेता नास्तमेतैकल-
एव मध्यस्थाता तदेष श्लोकः ॥ १ ॥ न वै तत्र

भा॰ उद्यमनसंवेशनादि देवानां रुद्रादीनां विदुषश्च समानं ॥
८ ॥ ९ ॥ १० ॥

कृत्वैवमुदयास्तमनेन प्राणिनां स्वकर्म्मफलभोगनिमि-
त्तमनुग्रहं तत्कर्म्मफलोपभोगक्षये तानि प्राणिजातान्या-
त्मनि संहृत्याथ ततस्तस्मादनन्तरं प्राण्यनुग्रहकालादूर्द्धः
सन्नात्मन्युदेत्योद्गम्य यान्प्रत्युदेति तेषां प्राणिनामभावा-
त्स्वात्मस्थो नैवोदेता नास्तमेतैकलोऽद्वितीयोऽनवयवो मध्ये
स्वात्मन्येव स्थाता। तत्र कश्चिद्विद्वान् वस्वादिसमाचरणो
रोहिताद्यमृतभोगभागी यथोक्तक्रमेण स्वात्मानं सविता-
रमात्मत्वेनोपेत्य समाहितः सन्नेतं मन्त्रं दृष्ट्वोत्थितोऽन्यस्मै
पृष्टवते जगाद यतस्त्वमागतो ब्रह्मलोकात्किन्तत्राप्यहो-

आ॰ मित्याह । उद्यमनेति ॥ पञ्चभिः पर्य्यायैर्मधुविद्या यथाव-
दुक्ता ॥ ८ ॥ ९ ॥ १० ॥

क्रमेण मुक्तिफलपर्य्यवसायित्वं तस्य दर्शयितुमनन्तरवाक्य-
मवतार्य्याह। कृत्वेत्यादिना ॥ तस्मात्प्राण्यनुग्रहकालादनन्तरमिति
तच्छब्दार्थः। ऊर्द्धः सन्ब्रह्मीभूतो वर्त्तमान इति यावत्। आ-
त्मन्युदेत्यस्य महिम्नि प्रकाशं लब्ध्वेत्येतत्। स्थातेति प्रयोगात्क्रम-
मुक्तिरत्र विवक्षिता। तत्र विद्वदनुभवं प्रमाणयति। तत्रेति ॥
क्रममुक्तिः सप्तम्यर्थः। यथोक्तक्रमेणासौ वा आदित्यो देवमध्वि-
त्यादिना पञ्चामृतत्वेन स्थितमित्यर्थः। स्वमात्मानं वेद्यतया विद्व-
दात्मसम्भूतमित्यर्थः। आत्मत्वेनोपेत्याहंग्रहेण गृहीत्वेत्येतत्॥

उ॰ न निम्लोच नोदियाय कदाचन देवास्तेनाहᳬ
सत्येन मा विराधिषि ब्रह्मणेति ॥ २ ॥ न ह वा
अस्मा उदेति न निम्लोचति सकृद्दिवा हैवास्मै
भवति य एतामेवं ब्रह्मोपनिषदं वेद ॥ ३ ॥

---

भा॰ रात्राभ्यां परिवर्त्तमानः सविता प्राणिनामायुः क्षपयति यथेहास्माकमित्येवं पृष्टः प्रत्याह ॥

तत्तत्र यथा पृष्टे यथोक्ते चार्थे एष श्लोको भवति तेनोक्तो योगिनेति श्रुतेर्वचनमिदं। न वै तत्र यतोऽहं ब्रह्मलोकादागतस्तस्मिन् न वै तत्रैतदस्ति यत्पृच्छसि। न हि तत्र निम्लोचास्तमगमत्सविता न चोदीयायोद्गतः कुतश्चित्कदाचन कस्मिंश्चिदपि काले इति। उदयास्तमयवर्जितो ब्रह्मलोक इत्युपपन्नमित्युक्तः शपथमिव प्रतिपेदे। हे देवाः साक्षिणो यूयं शृणुत यथा मयोक्तं सत्यं वचस्तेन सत्येनाहं ब्रह्मणा ब्रह्मस्वरूपेण मा विराधिषि मा विरुद्धेयमप्राप्तिर्ब्रह्मणो माभूदित्यर्थः। सत्यं तेनोक्तमित्याह

---

व्या॰ कथं प्रश्न इत्याकाङ्क्षायामाह। यात इति॥ लब्धब्रह्मोपदेशो ब्रह्मविद्ब्रह्मणो वियुक्तावस्थायां केनचित्पृष्टः प्रत्युवाचेत्यर्थः॥

कथं प्रत्युक्तिरिति तत्राह। तत्तत्रेति॥ श्लोकमुपादाय व्याकरोति। न वै तत्रेति॥ न निम्लोचेति॥ निम्लोचत्यस्मिन्नर्थे छान्दसः प्रयोगः। इतिशब्दः पूर्व्वार्द्धव्याख्यासमाप्त्यर्थः॥ उत्तरार्द्धमुत्थापयति॥ उदयास्तमयेति॥ लोकत्वाविशेषादितरलोकवद्ब्रह्मलोकोऽपि नोदयास्तमयवर्जित इत्युक्तो विद्वानुत्तरार्द्धेन शपथं कुर्व्वन्परिहरतीत्यर्थः॥ एवं मन्त्रदृक् शपथद्वारा निर्णीतेऽर्थे न हेत्वाद्या किमर्था श्रुतिरित्याशङ्क्याह। सत्यमिति॥ न हेत्याद्यां

उ॰ तद्धैतद्ब्रह्मा प्रजापतय उवाच प्रजापतिर्मनवे मनुः प्रजाभ्यस्तद्धैतदुद्दालकायारुणये ज्येष्ठाय पुत्राय पिता ब्रह्म प्रोवाच ॥ ४ ॥ इदं वाव तज्ज्ये-

---

भा॰ श्रुतिर्न ह वा अस्मै। यथोक्तब्रह्मविदे नोदेति न निम्लोचति नास्तमेति किन्तु ब्रह्मविदेऽस्मै सकृद्दिवा हैव सदैवाहर्भवति स्वयं ज्योतिष्ट्वाद्य एतां यथोक्तां ब्रह्मोपनिषदं वेदगुह्यं वेद॥

एवं तन्त्रेण वंशादिचयं प्रत्यक्तसम्बन्धञ्च यच्चान्यद-वोचाम एवं जानातीत्यर्थः। विद्वानुदयास्तमयकाला-परिच्छेद्यं नित्यमजं ब्रह्म भवतीत्यर्थः॥ तद्धैतन्मधुज्ञानं ब्रह्मा हिरण्यगर्भो विराजे प्रजापतये उवाच। सोऽपि मनवे। मनुरिक्ष्वाक्वादिभ्यः प्रजाभ्यः प्रोवाचेति विद्यांस्तौति ब्रह्मादिविशिष्टक्रमागतेति। किञ्च। तद्धैतन्मधुज्ञानमुद्दाल-कायारुणये पिता ब्रह्मविज्ञानं ज्येष्ठाय पुत्राय प्रोवाच।

---

व्या॰ श्रुतिमादाय व्याचष्टे। यथोक्तेति॥ ब्रह्मोपनिषदमित्यस्यार्थमाह। वेदगुह्यमिति॥

एवंशब्दमादाय व्याकरोति। एवमित्यादिना॥ वंशादिचयं तिरश्चीनवंशो मध्वपूपो मधुनाड्यश्चेत्येवं रूपमित्यर्थः। प्रत्य-क्तसम्बन्धं च लोहितादयक्तेष्वेकैकवस्वादीनां सम्बन्धमित्यर्थः। अन्यदित्युद्यमनसंवेशनादि गृह्यते॥ उक्तविद्याफलमुपसंह-रति। विद्वानिति॥ ननु विद्या सफला चेदुक्ता तर्हि किमु-त्तरग्रन्थेनेत्याशङ्क्याह। तद्धैतदिति॥ स्तुतिमेवाभिनयति। ब्रह्मा-दीति॥ तद्धैतदुद्दालकायेत्यादिना विद्याया योग्यं पात्रं प्रदर्श्य तद्याचष्टे। किञ्चेति॥ इतश्चोत्कृष्टमेतद्विज्ञानमित्यर्थः॥ मधुवि-ज्ञानं व्याकरोति। ब्रह्मविज्ञानमिति॥ तस्य परोक्षत्वं व्यावर्त्त-

उ॰ ष्ठाय पुत्राय पिता ब्रह्म प्रब्रूयात् प्राणाय्याय वान्ते-
वासिने ॥ ५ ॥ नान्यस्मै कस्मैचन यद्यप्यस्मा इमा-
मद्भिः परिगृहीतां धनस्य पूर्णां दद्यादेतदेव
ततोभूय इत्येतदेव ततो भूय इति ॥ ६ ॥ ११॥

---

भा॰ इदं वाव तद्यथोक्तं। अन्योऽपि ज्येष्ठाय पुत्राय सर्वप्रिया-
र्हाय ब्रह्म प्रब्रूयात् ॥

प्राणाय्याय योग्यायान्तेवासिने शिष्याय। नान्यस्मै कस्मैच-
न प्रब्रूयात्तीर्थद्वयमनुज्ञातमनेकेषां प्राप्तानां तीर्थानामा-
चार्य्यादीनां। कस्मात्पुनस्तीर्थसङ्कोचनं विद्यायाः कृतमि-
त्याह। यद्यप्यस्मै आचार्य्याय इमां कश्चित्पृथिवीमद्भिः
परिगृहीतां समुद्रपरिवेष्टितां समस्तामपि दद्याद् अस्या
विद्याया निष्क्रयार्थमाचार्य्याय धनस्य पूर्णां सम्पन्नां
भोगोपकरणैर्नासावस्य निष्क्रयो यस्मात्ततोऽपि दानादेत-
देव यन्मधुविद्यादानं भूयो बहुतरफलमित्यर्थः द्विरभ्यास
आदरार्थः ॥ ११ ॥

---

व्या॰ यति। इदं वावेति॥ अथ ज्येष्ठाय पुत्राय ब्रह्म वक्तव्यमिति
पूर्व्वेषामयं नियमो नेदानीन्तनानामित्यत आह। अन्योऽपीति॥
पात्रान्तरमनुजानाति। प्राणाय्यायेति॥ पुत्रशिष्याभ्यां पात्रा-
न्तरं प्रत्याचष्टे। नेति॥ तीर्थद्वयं विद्याप्रदानेऽधिकारिद्वय-
मित्यर्थः। निर्द्धारणे षष्ठी। आचार्य्यो विद्यादाता। आदि-
पदाद्धनदायी श्रोत्रियो मेधावी च गृह्यते॥ सर्व्वेषामर्थिना-
मत्राधिकारमाशङ्क्य दूषयति। कस्मादित्यादिना॥ आचार्य्यायेति
पुनरुपादानं क्रियापदेन तस्यान्वयद्योतनार्थं विद्यायामादरो
वा। मुख्यमधिकारकारित्वं फलतीति भावः॥ ११॥

भा० यत एवमतिशयफलैषा ब्रह्मविद्या अतः सा प्रकारान्तरेणापि वक्तव्येति गायत्री वा इत्याद्यारभ्यते। गायत्रीद्वारेण चोच्यते ब्रह्म। सर्व्वविशेषरहितस्य नेति नेतीत्यादिविशेषप्रतिषेधगम्यस्य दुर्बोधत्वात्॥

सत्स्वनेकेषु छन्दःसु गायत्र्या एव ब्रह्मज्ञानद्वारतयो-

---

व्या० गतेन ग्रन्थेनोत्तरग्रन्थस्य गतार्थत्वं परिहरति। यत इति॥ सवितृद्वारकब्रह्मविद्यानन्तरं तद्देवतागायत्रीद्वारेण तद्विद्योपदिश्यत इत्यर्थः॥ ब्रह्मविद्याया विवक्षितत्वे ब्रह्मैवोपदिश्यतां किं गायत्र्युपदेशेनेत्याशङ्क्याह। गायत्रीति॥

तथापि छन्दोऽन्तराणि विहाय किमिति गायत्रीद्वारैव ब्रह्मोपदिश्यते तत्राह। सत्स्विति॥ ब्रह्मज्ञानद्वारतया तदुपायतयेत्यर्थः॥ प्राधान्ये हेतुमाह। सोमाहरणादिति॥ सोमस्याहरणमानयनं। तत्र साधनत्वं गायत्रीच्छन्दस्कानामृचां याजकैरिष्यते। तदुक्तं तस्या यज्ञे प्राधान्यमित्यर्थः। यद्वा देवैः सोमहरणमिच्छद्भिश्छन्दसां गायत्रीत्रिष्टुब्जगतीनां तादर्थ्येन नियोगे जगतीत्रिष्टुभौ मध्ये मार्गमशक्त्या निवृत्तौ। गायत्री सोमं प्राप्य रक्षिणस्तस्य विजित्य तं देवेभ्यः समाहरदिति। ऐतरेयकब्राह्मणे सोमो वै राजाऽमुष्मिँल्लोक आसीदित्यत्र प्रसिद्धमतस्तत्प्राधान्यमित्यर्थः। तत्रैव हेत्वन्तरमाह। इतरेति॥ उष्णिगनुष्टुप्प्रभृतीनीतराणि छन्दांसि तेषां पादशोऽक्षराणि सप्ताष्टादिसङ्ख्याकानि तेषामाहरणमुपादानं गायत्र्यक्षरैः पादशः षड्भिः क्रियते ऽधिकसङ्ख्याया न्यूनसङ्ख्यामन्तरेणासम्भवात्तस्मादितरेषु च्छन्दःसु गायत्र्या व्याप्तेश्च प्राधान्यमित्यर्थः। अथवा गायत्रीव्यतिरिक्तयोस्त्रिष्टुब्जगतीच्छन्दसोः सोमाहरणे उद्यतयोरशक्तयोर्मार्गमध्ये जगत्या त्यक्तानि त्रीण्यक्षराणि त्रिष्टुभा चैकमक्षरं। ततश्चाष्टाचत्वारिंशदक्षरा जगती पञ्चचत्वारिंशदक्षरा संवृत्ता। चतुश्चत्वारिंशदक्षरा त्रिष्टुप् त्रिचत्वारिंशदक्षरा संवृता। तत्र

उ० गायत्री वा इदꣳ सर्व्वं भूतं यदिदं किञ्च वाग्वै

---

भा०पादानं प्राधान्यात् । सोमाहरणादितरच्छन्दोऽक्षराहरणेन इतरच्छन्दो व्याप्त्या च सर्व्वसवनव्यापकत्वाच्च यज्ञे प्राधान्यं गायत्र्याः । गायत्रीसारत्वाच्च ब्राह्मणस्य । मातरमिव हित्वा गुरुतरां गायत्रीं ततोऽन्यद्गुरुतरं न प्रतिपद्यते यथोक्तं ब्रह्मापीति । तस्यामत्यन्तगौरवस्य प्रसिद्धत्वात् । अतो गायत्रीमुखेनैव ब्रह्मोच्यते गायत्री वै इत्यवधारणार्थो वैशब्दः । इदं सर्व्वं भूतं प्राणिजातं यत्किञ्च स्थावरं जङ्गमं वा तत्सर्व्वं गायत्र्येव ।

---

व्या० गायत्री सोममाहरति त्वक्षाणामक्षराणामाहरणेन पूर्णतां तयोरापद्यते । व्याप्य स्थिता तेन तत्प्राधान्यमित्यर्थः ॥

तत्रैव हेत्वन्तरमाह । सर्व्वसवनेति ॥ सर्व्वाणि प्रातःसवनं माध्यन्दिनं सवनं तृतीयसवनमित्येतानि तेषु गायत्र्या व्यापकत्वं मिश्रणं । गायत्रं प्रातःसवनं । त्रैष्टुभं माध्यन्दिनं सवनं । जागतं तृतीयसवनमिति स्थिते त्रिष्टुब्जगत्योर्गायत्रीव्याप्तिरुक्तत्वात्तस्याश्च पदाभ्यां मुखेन च सोमाहरणद्वारेण सवनत्रयसम्बन्धादतश्च तस्या अस्ति यज्ञे प्राधान्यमित्यर्थः ॥ कर्म्मणि तत्प्राधान्येऽपि कुतो ब्रह्मविद्यायां तत्प्राधान्यमित्याशङ्क्याह । गायत्रीति ॥ ब्रह्मविद्यायास्तत्प्राधान्यमिति शेषः ॥ गायत्रीमेवालम्बनत्वेन प्रतिपद्यते । ब्रह्मेत्यत्र लोकप्रसिद्धिमनुकूलयति । तस्यामिति ॥ गायत्र्या ब्रह्मज्ञानद्वारेणोपादानमुक्तहेतुभ्यः सिद्धमित्युपसंहरति । अत इति ॥ तथा चेतोऽर्पणनिगदादिति न्यायेन गायत्र्युपाधिकं ब्रह्मोपास्यमिति प्रतिजानीते । गायत्रीति ॥ निपातमादाय व्याचष्टे । वै इति ॥ अवधारणरूपमेवार्थं स्फुटयन्निदमित्यादि व्याकरोति । इदमिति ॥ तदिदं सर्व्वं गायत्र्येवेति योजना ॥ गायत्र्याः सर्व्वा-

उ० गायत्री वाग्वा इदꣳ सर्वं भूतं गायति च त्रायते च ॥ १ ॥ या वै सा गायत्री यं वा ऽवसा येयं पृथिव्यस्याꣳ हीदꣳ सर्वं भूतं प्रतिष्ठितमेतामेव

---

भा० तस्याश्छन्दोमात्राया: सर्व्वभूतत्वमनुपपन्नमिति गायत्री-कारणं वाचं शब्दरूपामापादयति गायत्रीं ॥

वाग्वै गायत्रीति। वाग्वा इदं सर्व्वं भूतं। तस्मात् वाक् शब्दरूपा सती सर्व्वं भूतं गायति च शब्दयति असौ गौरसावश्व इति त्रायते च रचत्यमुष्मान्माभैषीः किं ते भय-मुत्थितमित्यादि। सर्व्वतो भयान्निवर्त्यमानो वाचा त्रातः स्यात्। यद्वाग्भूतं गायति त्रायते च गायत्र्येव तद्गायति च वाचोऽनन्यत्वात् गायत्र्या गानात्त्राणाच्च गायत्र्या गायत्रीत्वं। या वै सैवंलक्षणा सर्व्वभूतरूपा गायत्री। इयं वाव सा येयं पृथिवी। कथं पुनरियं पृथिवी गायत्रीत्युच्यते। सर्व्वभूतसम्बन्धात्। कथं सर्व्वभूतसम्बन्धोऽस्यां पृथिव्यां हि।

---

व्या० त्मकत्वाद्ब्रह्मदृष्ट्योपास्तिर्युक्तेत्यत्रानुपपत्तिमाशङ्क्यानन्तरवाक्येनोत्त-रमाह। तस्या इति॥

कथं वाचो गायत्रीत्वमित्याशङ्क्य तस्याः सर्व्वभूतसम्बन्धं दर्श-यति। वागिति॥ कुतो गायत्रीत्वं तत्राह। यस्मादिति॥ भव-त्वेवं वाचःस्वरूपं गायत्र्यास्तु किमायातं तदाह। यद्वागिति॥ गायत्रीनामनिर्व्वचनादपि वाग्युक्तरूपं गायत्र्यामेवैष्टव्यमित्याह। गानादिति॥ अस्ति हि वाचः सर्व्वभूतात्मकत्वं तद्वाचकत्वाद्वाच्यस्य च वाचकातिरेकेण निरूपणात्तथा च वाग्भूता गायत्री सर्व्वभूता-त्मिकेत्युक्तं। इदानीं तस्या विधान्तरमाह। या वै सेति॥ एवं लक्ष-णत्वं व्याचष्टे। सर्व्वेति॥ गायत्रीमनूद्य पृथिवीत्वं तस्या विहितं

उ॰ नातिशीयते ॥ २ ॥ या वै सा पृथिवीयं वाऽव सा यदिदमस्मिन्पुरुषे शरीरमस्मिन्हीमे प्राणाः प्रतिष्ठिता एतदेव नातिशीयन्ते ॥ ३ ॥ यद्वैतत्पुरुषे शरीरमिदं वाऽव तद्यदिदमस्मिन्नन्तःपुरुषे हृदयमस्मिन्हीमे प्राणाः प्रतिष्ठिता एतदेव

---

भा॰ यस्मात्सर्व्वं स्थावरजङ्गमञ्च भूतं प्रतिष्ठितमेतामेव पृथिवीं नातिशीयते नातिवर्त्तत इत्येतत् ॥

यथा गानत्राणाभ्यां भूतसम्बन्धो गायत्र्या एवं भूतप्रतिष्ठानाद्भूतसम्बन्धाद्वा पृथिवी अतो गायत्री पृथिवी। या वै सा पृथिवी गायत्रीयं वाव सा इदमेव। तत्किं यदिदमस्मिन्पुरुषे कार्य्यकारणसङ्घाते जीवति शरीरं पार्थिवत्वाच्छरीरस्य। कथं शरीरस्य गायत्रीत्वमित्युच्यते। अस्मिन्हीमे प्राणा भूतशब्दवाच्याः प्रतिष्ठिताः। अन्तः पृथिवीवत् भूतशब्दवाच्यप्राणप्रतिष्ठानाच्छरीरं गायत्री। एतदेव यस्माच्छरीरं नातिशीयन्ते प्राणाः। यद्वैतत्पुरुषे

---

व्या॰ प्रश्नपूर्व्वकमुपपादयति। कथं पुनरिति ॥ गायत्र्याः सर्व्वभूतसम्बन्धस्योक्तत्वात्पृथिव्यास्तत्सम्बन्धोद्यपूर्व्वकं व्युत्पापयति। कथमिति ॥ सर्व्वस्य पृथिव्यां प्रतिष्ठितत्वं साधयति। एतामेवेति ॥

तथापि कथं पृथिव्या गायत्रीत्वं तदाह। यथेति ॥ सम्प्रति गायत्र्याः शरीररूपत्वं निरूपयति। या वा इति॥ गायत्र्यात्मिकां पृथिवीमनूद्य तस्या गायत्रीशरीरयोरभेदे हेतुमाह। पार्थिवत्वादिति ॥ इदानीं गायत्रीशरीरयोरेकत्वं प्रश्नपूर्व्वकं कथयति। कथमित्यादिना ॥ प्राणानां शरीरे प्रतिष्ठितत्वं प्रक-

उ॰ नातिशीयन्ते ॥ ४ ॥ सैषा चतुष्पदा षड्विधा गायत्री तदेतदृचाभ्यनूक्तं ॥ ५ ॥ तावानस्य महिमा ततो ज्यायाꣳश्च पुरुषः पादोऽस्य सर्व्वा

---

भा॰ शरीरं गायत्रीदं वाव तत्। यदिदमस्मिन्नन्तर्मध्ये पुरुषे हृदयं पुण्डरीकाख्यमेतद्गायत्री। कथमित्याह अस्मिन्हीमे प्राणाः प्रतिष्ठिता अतः शरीरवद्गायत्री हृदयं ॥

एतदेव च नातिशीयन्ते प्राणाः। प्राणो हि पिता। प्राणो माता। अहिंसन् सर्व्वभूतानीति श्रुतेः। भूतशब्दवाच्याः प्राणाः। सैषा चतुष्पदा षडक्षरपादा छन्दोरूपा सती भवति गायत्री षड्विधा। वाग्भूतपृथिवीशरीरहृदयप्राणरूपा सती षड्विधा भवति। वाक्प्राणयोरन्यार्थनिर्दिष्टयोरपि गायत्रीप्रकारत्वं। अन्यथा षड्विधसङ्ख्यापूरणानुप-

---

आ॰ टयति। एतदेवेति ॥ अथ गायत्र्या हृदयत्वमावेदयति। यद्वैतदिति ॥ हृदयस्य गायत्र्याश्चैकत्वं प्रश्नपूर्व्वकं विवृणोति। एतदित्यादिना ॥

हृदये प्राणानां प्रतिष्ठितत्वं प्रकटयति। तदेवेति ॥ प्राणानां भूतशब्दवाच्यत्वे तत्सम्बन्धे सति भूतसम्बन्धाद्गायत्र्याः शरीरादिभावः सम्भवति॥ तेषां भूतशब्दवाच्यत्वे तु किं मानमित्याशङ्क्याह। प्राणो हीति ॥ अहिंसावाक्येऽपि प्राणपरं मरणं प्रतिषिध्यते तथा भूतशब्दस्तत्र प्रतीतिगोचरो भवत्येवेत्याह। भूतेति ॥ आध्यानशेषत्वेन गायत्र्याश्चतुष्पादत्वं दर्शयति। सैषेति॥ लक्षयित्वा तस्याः षड्विधत्वमनूद्य साधयति। षड्विधेति॥ गायत्रीहृदययोः सर्व्वभूतसम्बन्धसिद्ध्यर्थमुपदिष्टयोर्वाक्प्राणयोर्गायत्रीप्रभेदत्वेन कथं व्याख्यानमित्याशङ्क्याह। वाक्प्राणयोरिति ॥ विधिपक्षे वाक्यशेषयोगात्तयोरपि गायत्रीभेदत्वमित्यर्थः।

उ० भूतानि त्रिपादस्यामृतं दिवीति ॥ ६ ॥ तद्वै-
तद्ब्रह्मेतीदं वाव तद्योऽयं वहिर्द्धा पुरुषादाकाशो
यो वै स वहिर्द्धा पुरुषादाकाशः ॥ ७ ॥ अयं

---

भा० पत्तेः। तदेतस्मिन्नर्थे एतद्गायत्र्याख्यं ब्रह्म गायत्र्यनुगतं गाय-
त्रीमुखेनोक्तं। ऋचापि मन्त्रेणाभ्यनुक्तं प्रकाशितं। तावानस्य
गायत्र्याख्यस्य ब्रह्मणः समस्तस्य महिमा विभूतिविस्तारः
यावांश्चतुष्पात् षड्विधश्च ब्रह्मणो विकारः पादो गाय-
त्रीति व्याख्यातः। अतस्तस्मादिकारलक्षणात् गायत्रा-
ख्याद्दा चारम्भणमात्रात्ततो ज्यायान्महत्तरश्च परमार्थस-
त्यरूपोऽविकारः पुरुषः सर्व्वपूरणात्पुरीशयनाच्च। तस्यास्य
पादः सर्व्वा सर्व्वाणि भूतानि तेजोऽबन्नादीनि सस्थावरज-
ङ्गमानि। त्रिपात्त्रयः पादा अस्य सोऽयं त्रिपात्। त्रिपादमृतं
पुरुषाख्यं समस्तस्य गायत्र्यात्मनो दिवि द्योतनवति स्वात्म-
न्यवस्थितमित्यर्थ इति। यद्वैतत्त्रिपादमृतं गायत्रीमुखे-
नोक्तं ब्रह्मेतीदं वाव तदिदमेव। तद्योऽयं प्रसिद्धो वहिर्द्धा
वहिः पुरुषादाकाशो भौतिको यो वै स वहिर्द्धा पुरुषा-

---

व्या० तस्मिन्नर्थे वाग्भूतपृथिवीशरीरहृदयप्राणभेदात्षड्विधां गायत्री-
मनुचिन्त्याजहल्लक्षणया तदवच्छिन्नब्रह्मत्वं तदनुचिन्तयेदिति
तच्छेषत्वेनैव पूर्व्वोक्ते स्थिते सतीत्यर्थः। समस्तस्य पादविभाग-
विशिष्टस्येति यावत् ॥ विस्तरमेव विवृणोति। यावानिति ॥
वाचारम्भणं विकारो नामधेयमिति वाक्यशेषमाश्रित्य विशि-
नष्टि। वाचारम्भणमात्रादिति ॥ परमार्थसत्यत्वे हेतुमाह।
विकार इति ॥ तावानस्येत्यादि स्पष्टयति। तस्येति ॥ आदिपदेन

उ० वाव स योऽयमन्तः पुरुष आकाशो यो वै सोऽन्तः-
पुरुष आकाशः ॥ ८ ॥ अयं वाव स योऽयमन्त-
र्हृदय आकाशस्तदेतत्पूर्णं अप्रवर्त्ति पूर्णमप्र-

---

भा० दाकाश उक्तः । अयं वाव स योऽयमन्तः पुरुषे शरीर आकाशः । यो वै सोऽन्तः पुरुष आकाशः । अयं वाव स योऽयमन्तर्हृदये पुण्डरीक आकाशः ॥ कथमेकस्य सत आकाशस्य त्रिधा भेद इति । उच्यते वाह्येन्द्रियविषये जागरितस्थाने नभसि दुःखवाहुल्यं दृश्यते । अतः शरीरे स्वप्नस्थानभूते मन्दतरं दुःखं भवति । स्वप्नान्पश्यतो हृदयस्थे पुनर्नभसि न कञ्चन कामयते न कञ्चन स्वप्नं पश्यति । अतः सर्व्वदुःखनिवृत्तिरूपमाकाशं सुषुप्तस्य स्थानं । अतो युक्तमेकस्यापि त्रिधा भेदानुव्याख्यानं । वहिर्द्धा पुरुषादारभ्याकाशस्य हृदये सङ्कोचकरणं चेतःसमाधानस्थानस्तुतये । यथा त्रयाणामपि लोकानां कुरु-

---

व्या० वायुराकाशस्त्वेत्युभयमुक्तं ॥ ततो ज्यायानित्यादि स्फुटयति । त्रिपादिति ॥ समस्तस्य सर्व्वप्रपञ्चात्मकस्येत्यर्थः ।, अुताविति शब्दो मन्त्रसमाम्न्यर्थः ॥ यद्ब्रह्म गायत्र्यवच्छिन्नमुपास्यमुक्तं हृदयाकाशे तद्ध्येयमिति वक्तुं क्रमेण हृदयाकाशमवतारयति। यदैतदित्यादिना॥ एकस्याकाशास्य कथं त्रैविध्यमुक्तमिति शङ्क्यते । कथमिति ॥ औपाधिकत्रैविध्यमविरुद्धमिति परिहरति । उच्यत इति ॥ वाह्येन्द्रियविषयत्वं तद्विषयशब्दाद्याश्रयत्वं स्वप्नस्थानभूते नभसीति सम्बन्धः ॥ न कञ्चनेत्यादिना निषेधद्वयेन पूर्व्वप्रकारमवस्थाद्वयं निषिध्यते ॥ निषेधफलमाह । अत इति ॥ सर्व्वन्दुःखं स्थूलं वासनामयञ्च तन्निवृत्त्या निरूप्यमाणं हृदयाकाशमित्यर्थः ॥ औपाधि-

उ॰ वर्त्तिनीᳬं श्रियं लभते य एवं वेद ॥ ९ ॥
१२ ॥

---

भा॰ क्षेत्रं विशिष्यते । अर्द्धतस्तु कुरुक्षेत्रमर्द्धतस्तु पृथूदकमिति तद्वत् । तदेतद्धार्द्दाकाशाख्यं ब्रह्म पूर्णं सर्व्वगतं न हृदयमात्रपरिच्छिन्नमिति मन्तव्यं । यद्यपि हृदयाकाशे चेतः समाधीयते अप्रवर्त्ति न कुतश्चित्प्रवर्त्तितुं शीलमस्येति अप्रवर्त्ति तदनुच्छित्तिधर्म्मकं । यथान्यानि भूतानि परिच्छिन्नान्युच्छित्तिधर्म्मकाणि न तथा हार्द्दं नभः पूर्णमप्रवर्त्तिनीमनुच्छेदात्मिकां श्रियं विभूतिं गुणफलं लभते दृष्टं । य एवं यथोक्तं पूर्णमप्रवर्त्तिगुणं ब्रह्म वेद जानातीहैव जीवंस्तद्भावं प्रतिपद्यत इत्यर्थः ॥ १२ ॥

---

व्या॰ कर्त्तैविध्यमुपसंहरति । अत इति ॥ तथापि किमित्यनेन क्रमेणाकाशस्य सङ्कोचो हृदये क्रियते तत्राह । वह्निर्द्धेति ॥ स्थानस्तुतिमुदाहरणेन स्फुटयति । यथेति ॥ अत्र कुरुक्षेत्रमर्द्धतोऽर्द्धस्थानीयं पृथूदकमपि तथेति द्विदलयुगलमिव तदुभयं लोकत्रयापेक्षयाविशिष्टतरमित्यर्थः ॥ हृदयाकाशे चेतः समाधीयते चेत्तत्रत्वात्र परिच्छिन्नं ब्रह्म प्राप्तमित्याशङ्क्याह । तदेतदिति ॥ पूर्णत्वेन जन्मनाशशून्यत्वं सिध्यतीत्याह । अप्रवर्त्तीति ॥ प्रधानफलत्वं व्यावर्त्तयति । गुणफलमिति ॥ दृष्टफलं स्वर्गाप्तिरिति दृष्टमित्युक्तं ॥ ज्ञानमेव विशिनष्टि । इहैवेति ॥ वर्त्तमानो देहः सप्तम्यर्थः । यो विद्वानेव स यथोक्तं फलं लभत इति सम्बन्धः ॥ १२ ॥

उ० तस्य ह वा एतस्य हृदयस्य पञ्च देवसुषयः स योऽस्य प्राङ्सुषिः स प्राणस्तच्चक्षुः स आदि-

---

भा० तस्य ह वा इत्यादिना गायत्र्याख्यस्य ब्रह्मण उपासनाङ्गत्वेन द्वारपालादिगुणविधानार्थमारभ्यते । यथा लोके द्वारपाला राज्ञ उपासनेन वशीकृता राजप्राप्त्यर्था भवन्ति तथेहापीति । तस्येति प्रकृतस्य हृदयस्येत्यर्थः । एतस्यानन्तरनिर्दिष्टस्य पञ्च पञ्चसङ्ख्याका देवानां सुषयो देवसुषयः स्वर्गलोकप्राप्तिद्वारच्छिद्राणि देवैः प्राणादित्यादिभीरक्ष्यमाणानीत्यतो देवसुषयस्तस्य स्वर्गलोकभवनस्य हृदयस्यास्य यः प्राङ्सुषिः पूर्वाभिमुखस्य प्राग्गतं यच्छिद्रं द्वारं स प्राणस्तत्स्थस्तेन द्वारेण यः सञ्चरति वायुविशेषः स प्रागनितीति प्राणः । तेनैव सम्बद्धमव्यतिरिक्तं तच्चक्षुस्तथैव स आदित्यः । आदित्यो ह वै वाह्यप्राण इति श्रुतेः ।

---

व्या० वक्ष्यमाणज्ञानस्य स्वातन्त्र्यं परिहृत्य प्रकरणभेदं व्यावर्त्तयितुमुत्तरग्रन्थस्य तात्पर्य्यमाह । तस्येति । द्वारपालादीत्यादिपदेन तद्गतो विशेषो गृह्यते ॥ ब्रह्मण्युपासनेनाप्रसिद्धतो द्वारपालोपास्तिरयुक्तेत्याशङ्क्याह । यथेति ॥ इति तदुपास्तिरर्थवतीति शेषः । स्वर्गलोकशब्दः परमात्मविषयः । स्वर्गलोकमित ऊर्द्धो विमुक्ता वेति श्रुत्यन्तरात् ॥

देवसुषित्वं साधयति । देवैरिति ॥ स्वर्गलोकस्य परस्यात्मनो भवनमायतनं तस्येति यावत् । प्राक्तेनावस्थामाशङ्क्योक्तं । पूर्वाभिमुखस्येति ॥ तत्स्थस्तेनेति ॥ तच्छब्दो हृदयविषयः । तेनैवेति प्राणविषयस्तच्छब्दः । तदव्यतिरिक्तं स्वातन्त्र्येण चक्षुषो किञ्चित्करत्वं । न हि चक्षुषा प्राणस्य सम्बन्धो न हि वाह्यस्य तत्सम्बन्धे निबन्धनमस्ति तत्राह । चक्षुरिति ॥ अधिष्ठातृत्वेनादित्य

उ० त्यस्तदेतत्तेजोऽन्नाद्यमित्युपासीत तेजस्व्यन्नादो भवति य एवं वेद ॥ १ ॥

---

भा० चक्षूरूपप्रतिष्ठाक्रमेण हृदि स्थितः । स आदित्यः कस्मिन्प्रतिष्ठित इति चक्षुषीत्यादि वाजसनेयके । प्राणवायुदेवतैव ह्येका चक्षुरादित्यश्च सहाश्रयेण । वक्ष्यति च । प्राणाय स्वाहेति हुतं हविः सर्व्वमेतत्तर्पयतीति । तदेतत्प्राणाख्यं स्वर्गलोकद्वारत्वाद्ब्रह्म ॥

स्वर्गलोकं प्रतिपित्सुस्तेजस्व्येतच्चक्षुरादित्यस्वरूपेणान्नादत्वाच्च सवितुस्तेजोऽन्नाद्यमित्याभ्यां गुणाभ्यामुपासीत। ततस्तेजस्व्यन्नादश्चामयाविलरहितो भवति य एवं वेद तस्यैतद्गुणफलं । उपासनेन वशीकृतो द्वारपः स्वर्गलोकप्राप्तिहेतुर्भवतीति मुख्यञ्च फलं ॥

---

धा० चक्षुषि प्रतिष्ठितश्चक्षुश्च ग्राहकतया रूपे प्रतिष्ठितं रूपदर्शनकरणीभवति । तथैव प्राणस्य चक्षुष्ट्वमित्यर्थः ॥ प्राणादित्ययोरैक्ये प्रमाणमाह । आदित्यो हेति ॥ कथं यथोक्तस्यादित्यस्य हृदयसुषिद्वारस्थानीयत्वं वासनात्मना हृदये प्रतिष्ठितानि तदाऽनेन क्रमेणादित्यो हृदये तिष्ठतीत्यर्थः ॥ तत्र श्रुत्यन्तरं प्रमाणयति । स आदित्य इति ॥ एकदेवताभिन्नत्वादपि प्राणभेदेन चक्षुरादित्ययोराध्यानं युक्तमित्याह । प्राणेति ॥ आश्रयशब्देन रूपाणि हृदयञ्चोच्यते द्युलोको वा आदित्यश्चक्षुषोर्देवस्तदधिष्ठितस्य सर्व्वस्य प्राणात्मत्वे वाक्यशेषमनुकूलयति । वक्ष्यति चेति ॥ न हि प्राणे हुते सर्व्वस्य तृप्तिस्तादात्म्यमन्तरेण सम्भवतीति भावः । तदेतत्प्राणाख्यं ब्रह्म स्वर्गलोकं प्रतिपित्सुः पुरुषस्तेजोऽन्नाद्यमित्याभ्यां गुणाभ्यां विशिष्टमुपासीतेति सम्बन्धः ॥

किमिति यथोक्तोऽधिकारी प्राणोपासने नियुज्यते तत्राह । स्वर्गेति ॥ तथापि कथं यथोक्तगुणद्वयवैशिष्ट्यं प्राणाख्यस्य ब्रह्मणः

उ० अथ योऽस्य दक्षिणः सुषिः स व्यानस्तच्छ्रोत्रꣳ स चन्द्रमास्तदेतच्छ्रीश्च यशश्चेत्युपासीत श्रीमान्यशस्वी भवति य एवं वेद ॥ २ ॥

---

भा० अथ योऽस्य दक्षिणः सुषिस्तत्स्थो वायुविशेषः स वीर्य्यवत्कर्म्म कुर्व्वन्विगृह्य वा प्राणापानौ नाना वाऽनितीति व्यानस्तत्सम्बद्धमेव च तच्छ्रोत्रमिन्द्रियं तथा स चन्द्रमाः ॥

श्रोत्रेण सृष्टा दिशश्चन्द्रमाश्चेति श्रुतेः। सश्राश्रयौ पूर्व्ववत्तदेतच्छ्रीश्च विभूतिः श्रोत्रचन्द्रमसोर्ज्ञानान्न हेतुत्वमतस्ताभ्यां श्रीत्वं ज्ञानान्नवतश्च यशः ख्यातिर्भवतीति यशोहेतुत्वाद्यशस्त्वमतस्ताभ्यां गुणाभ्यामुपासीतेत्यादि समानं ॥

---

व्या० सिध्यति॥ तत्र तेजःशब्दं व्याकुर्व्वन्नाह। तेजस्वीति ॥ एतत्प्राणाख्यं ब्रह्म। चभयरूपेण तेजस्वी तथाच तेजोगुणविशिष्टतया तदुपासनामर्हति। सवितुश्चान्नादत्वं वृष्टिद्वारेणादित्याज्जायते वृष्टिरित्यादौ दृष्टमतस्तान्नञ्च तदाद्यश्चेति गुणान्तरविशिष्टत्वेनापि सवितृरूपं प्राणाख्यं ब्रह्म ध्यानार्हमित्यर्थः॥ किन्तर्हि मुख्यं फलमिति तदाह। उपासनेनेति ॥ हृदयस्य पूर्व्वदिगवस्थितच्छिद्रसम्बन्धत्वेन प्राणमुक्ता व्यानः श्रोत्रं चन्द्रमाश्चेति त्रितयमितरसम्बद्धमुपास्यमित्याह । चथेति ॥ वीर्य्यवत्कर्म्म कुर्व्वन्व्यान इति सम्बन्धः। प्राणापानौ विगृह्य विरुध्य वा व्ययमनितीति पक्षान्तरं नानास्कन्धसन्धिमर्मसु विविधमनिति चेष्टत इति विकल्पान्तरं तेन सम्बन्धः श्रोत्रस्य श्रुत्युक्तत्वाद्ध्यानार्थो मन्तव्यः। यथा श्रोत्रस्य व्यानेन सम्बन्धस्तथा चन्द्रमसोऽपि तेन सम्बन्धस्य श्रुत्युक्तत्वादेव ध्यानार्थतया ग्राह्य इत्याह॥ तथेति॥

श्रोत्रचन्द्रमसोः सम्बन्धे श्रुत्यन्तरमनुकूलयति। श्रोत्रेणेति॥ यद्विराजः श्रोत्रं तदात्मना दिशश्चन्द्रमाश्चेत्येते सृष्टा इति श्रुते-

उ॰ अथ योऽस्य प्रत्यङ्सुषिः सोऽपानः सा वाक् सोऽग्निस्तदेतद्ब्रह्मवर्चसमन्नाद्यमित्युपासीत ब्रह्मवर्चस्यन्नादो भवति य एवं वेद ॥ ३ ॥ अथ योऽस्योदङ्सुषिः स समानस्तन्मनः स पर्जन्यः

---

भा॰ अथ योऽस्य प्रत्यङ् सुषिः पश्चिमस्तत्स्थो वायुविशेषः स मूत्रपुरीषाद्यपनयन्नधोऽनितीत्यपानः सा तथा सा वाक् ॥

तत्सम्बन्धात्तथाग्निस्तदेतद्ब्रह्मवर्चसं वृत्तस्वाध्यायनिमित्तं तेजो ब्रह्मवर्चसं। अग्निसम्बन्धाद्वृत्तस्वाध्यायस्य। अन्नग्र-

---

व्या॰ रित्यर्थः। मिथः सम्बन्धेऽपि कथमनयोर्ध्यानात्मत्वं ध्याने तृप्यतीत्यादिवाक्यशेषादवधेयमित्यर्थः। तदेतद्ध्यानाख्यं ब्रह्म श्रीश्च यशश्चेत्याभ्यां गुणाभ्यामुपासीतेति सम्बन्धः॥ कथं तस्य गुणद्वयवतो ध्यानमित्याशङ्क्य श्रोत्रस्य ज्ञानहेतुत्वाच्चन्द्रमसोऽन्नहेतुत्वात्तयोराश्रयत्वे तदात्मनो ध्यानस्यापि तद्गुणोपपत्तिरित्याह। श्रोत्रेति॥ ध्यानाख्यब्रह्मणि गुणान्तरं साधयति। ज्ञानेति॥ उक्तस्य ब्रह्मणो गुणद्वयसम्भवोऽतःशब्दार्थः। श्रीमानित्यादिवाक्यमादिशब्दार्थः। समानं तेजस्वीत्यादिवाक्येनेति शेषः॥ हृदयस्य पश्चिमदिगवस्थितसुषिसम्बन्धत्वेनापानो वागग्निश्चेति त्रितयमन्योऽन्यसम्बन्धं ध्येयमित्याह। अथ योऽस्येति॥ सोऽपान इत्यस्यार्थमाह। तत्स्थ इति॥ सोऽपान इति सम्बन्धः। अपानशब्दे वायुविशेषे व्युत्पादयति। मूत्रेति॥ आदिशब्देन शुक्रादि गृह्यते॥ यथा चक्षुषः श्रोत्रस्य प्राणत्वं व्यानत्वञ्चोक्तं तथा वागपानो भवत्यपाने तृप्यतीत्यादिश्रुतेरित्याह॥ सा तथेति॥

यथा चक्षुरादिद्वारेणादित्यादेः प्राणादिरूपत्वमुक्तं तथा वाचोऽधिष्ठातृत्वेन सम्बन्धादग्निस्तद्द्वारेणापानो भवतीत्याह। तत्सम्बन्धादिति॥ तदेतदपानाख्यं ब्रह्मवर्चसमन्नाद्यमित्याभ्यां

उ॰ तदेतत्कीर्त्तिश्च व्युष्टिश्चेत्युपासीत कीर्त्तिमान्व्युष्टिमान्भवति य एवं वेद ॥ ४ ॥

---

भा॰ मनहेतुत्वादपानस्यान्नाद्यत्वं । समानमन्यत् ॥ अथो योऽसौ हृदयस्य सुषिरस्तस्य । तत्सम्बन्धं मनोऽन्तःकरणं स पर्जन्यो वृष्ट्यात्मको देवः पर्जन्यनिमित्ताश्चाप इति ॥

मनसा सृष्टा आपश्च वरुणश्चेति श्रुतेस्तदेतत्कीर्त्तिश्च। मनसो ज्ञानस्य कीर्त्तिहेतुत्वात्। आत्मपरोक्षं विश्रुतत्वं कीर्त्तिर्यशः। स्वकरणसंवेद्यं विश्रुतत्वं व्युष्टिः कान्तिर्देहगतं

---

व्या॰ गुणाभ्यां विशिष्टमुपासीतेति सम्बन्धः॥ ब्रह्मवर्चसं व्याचष्टे। वृत्तेति॥ कथमपानाख्ये ब्रह्मणि यथोक्तो गुणः सिध्यतीत्याशङ्काग्निद्वारेत्याह। अग्निसम्बन्धादिति ॥ तथापि कथमन्नाद्यत्वमित्याशङ्कायामोदारेणेत्याह। अन्नेति ॥ ब्रह्मवर्चसीत्यादिफलवाक्ये श्रीमानित्यादित्यादिना तुल्यार्थत्वान्न व्याख्यानापेक्षमित्याह। समानमिति॥ हृदयस्योत्तरसुषिसम्बन्धत्वेन समानो मनः पर्जन्यश्चेति त्रितयं परस्परसम्बद्धमुपास्यमित्याह। अथेति ॥ समानशब्दं वायुविशेषे व्युत्पादयति। अशितेति ॥ मनसः समाने सम्बन्धः॥ समाने तृप्यतीति श्रुतेर्ग्राह्य इत्याह। तत्सम्बन्धमिति॥ मनसि तृप्यति पर्जन्यस्तृप्यतीति ॥ तदेव वाक्यशेषमाश्रित्य तयोः सम्बन्धमाह। पर्जन्य इति ॥ श्रुत्यन्तरादपि तयोः सम्बन्धं वक्तुं पातनिकामाह। पर्जन्येति ॥ शेषः प्रसिद्धपरामर्शार्थः ॥

तथापि कथं पर्जन्यमनसोः सम्बन्धसिद्धिरित्याशङ्क्य वायोरपि कारणत्वेनाद्भिः सम्बन्धात्तद्द्वारा मिथोऽपि तत्सिद्धिरित्याह। मनसेति ॥ तदेतत्समानाख्यं ब्रह्म कीर्त्तिश्च व्युष्टिश्चेत्याभ्यां गुणाभ्यामुपासीतेति सम्बन्धः ॥ तस्मिन्ब्रह्मणि कीर्त्तिरूपं गुणं

उ॰ अथ योऽस्योर्द्ध्वः सुषिः स उदानः स वायुः स आकाशस्तदेतदोजश्च महश्चेत्युपासीत ओजस्वी महस्वान्भवति य एवं वेद ॥ ५ ॥ ते वा एते पञ्च ब्रह्मपुरुषाः स्वर्गस्य लोकस्य द्वारपाः स य एतानेव पञ्च ब्रह्मपुरुषान्स्वर्गस्य लोकस्य द्वारपान्वेदास्य कुले वीरो जायते प्रतिपद्यते

---

भा॰ लावण्यं। ततश्च कीर्त्तिसम्भवात्कीर्त्तिश्चेति। समानमन्यत्॥ अथ योऽस्योर्द्ध्वः सुषिः स उदान आपादतलादारभ्योर्द्ध्वमुत्क्रमणादुत्कर्षार्थञ्च कर्म्म कुर्व्वन्नित्युदानः स वायुस्तदाधारश्चाकाशस्तदेतत् । वाय्वाकाशयोरोजोहेतुत्वादोजो बलं महत्त्वाच्च मह इति ॥

---

व्या॰ साधयति। मनस इति ॥ बुद्धेरर्थान्तरत्वं कीर्त्तेर्दर्शयति। ख्यातिमेति॥ ततो व्युष्टीराचष्टे। स्वकरणेति॥ तामेवानुभवरूढ़तया कथयति। कान्तिरिति॥ कथं पुनर्देहगतस्य लावण्यस्य कीर्त्तिता शक्यते तत्राह। ततश्चेति ॥ लावण्यं पञ्चम्यर्थः। इत्यसङ्कीर्णगुणद्वयविशिष्टमुपासनं सिद्धमित्यर्थः॥ कीर्त्तिमानित्यादिफलवाक्यस्य ब्रह्मवर्चसीत्यादिना तुल्यार्थत्वादव्याख्येयत्वमाह। समानमिति॥ हृदयस्योर्द्ध्वच्छिद्रवैशिष्ट्येनोदानो वायुराकाशश्चेति त्रितयमन्योन्यसम्बन्धमुपास्यमित्याह। अथ योऽस्येति॥ उत्क्रमणादुदान इति सम्बन्धः। उदाने तृप्यति वायुस्तृप्यतीति वाक्यशेषमाश्रित्याह। स वायुरिति॥ वायोराकाशत्वमाधाराधेयसम्बन्धाद्वायौ तृप्यत्याकाशस्तृप्यतीति श्रुतेश्चेत्याह। तदाधारश्चेति॥ तदेतदुदानाख्यं ब्रह्म पूर्व्ववदोजो महश्चेत्याभ्यां विशिष्टमुपासीतेति सम्बन्धः॥ उक्तगुणद्वयं निर्दिशति। वाय्वाकाशयोरिति॥

उ० स्वर्गं लोकं य एतानेवं पञ्च ब्रह्मपुरुषान्स्वर्गस्य लोकस्य द्वारपान्वेद॥ ६ ॥ अथ यदतः परो

भा० समानमन्यत्। ते वै एते यथोक्ताः पञ्च सुषिसम्बन्धात्पञ्च ब्रह्मणो हार्दस्य पुरुषा राजपुरुषा इव द्वारस्थाः स्वर्गस्य हार्दस्य लोकस्य द्वारपालाः। एतैर्हि चक्षुःश्रोत्रवाङ्मनःप्राणैर्बहिर्मुखप्रवृत्तैर्ब्रह्मणो हार्दस्य प्राप्तिद्वाराणि निरुद्धानि। प्रत्यक्षं ह्येतदजितकरणतया बाह्यविषयासक्त्याऽनृतप्ररूढत्वान्न हार्दे ब्रह्मणि मनस्तिष्ठति॥ तस्मात्सत्यमुक्तमेते पञ्च ब्रह्मपुरुषाः स्वर्गस्य लोकस्य द्वारपा इति। अतः स य एतानेवं यथोक्तगुणविशिष्टान्स्वर्गस्य लोकस्य द्वारपान्वेदोपास्ते उपासनया वशीकरोति स राजपालानिवोपासनेन वशीकृत्य तैरनिवारितः प्रतिपद्यते स्वर्गं लोकं राजानमिव हार्दं ब्रह्म॥

आ० ओजस्वीत्यादिवाक्यस्य कीर्त्तिमानित्यादिना तुल्यार्थत्वमाह। समानमिति॥ तस्य ह वा एतस्येत्यादिनोक्तमनुवदति। ते वा इति॥ कथं ब्रह्मपुरुषास्तत्राह। राजपुरुषा इति॥ व्यपदिश्यन्त इत्यर्थः॥ तेषां द्वारपालत्वं प्रपञ्चयति। एतैरिति॥ तत्र स्वानुभवं प्रमाणयति। प्रत्यक्षं हीति॥ विवेकवैराग्याभ्यां वशीकृतः श्रोत्रादिकरणग्रामो येन तत्त्वाभावात्परोक्षशब्दादिविषये आसङ्गरूपान्ताक्रान्तत्वादित्यर्थः। एतैरेव विषयविमुखैर्ब्रह्मप्राप्तिद्वाराणि समाध्यादिना विवृत्तानि इत्यभिप्रेत्योपसंहरति। तस्मादिति॥ ब्रह्मपुरुषानुक्ताननूद्य सफलमुपासनं दर्शयति। अत इति॥ अनियतानां चक्षुरादीनां ब्रह्मप्राप्तिप्रतिबन्धकत्वं नियतानां तु तत्प्राप्तिहेतुत्वमित्यतःशब्दार्थः। यथोक्तगुणविशिष्टत्वं चक्षुरादीनामादित्याद्यात्मकत्वं॥

उ॰ दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्व्वतः पृष्ठेषु अनुत्तमेषूत्तमेषु लोकेष्विदं वाव तद्यदि-

भा॰ किञ्चास्य विदुषः कुले वीरः पुत्रो जायते वीरपुरुषसेवनात् । तस्य चर्णापाकरणेन ब्रह्मोपासनप्रवृत्तिहेतुत्वं । ततश्च स्वर्गलोकप्रतिपत्तये पारम्पर्य्येण भवतीति स्वर्गलोकप्रतिपत्तिरेवैकं फलं ॥ अथ यदसौ विद्वान्स्वर्गं लोकं वीरपुरुषसेवनात्प्रतिपद्यते यच्चोक्तं त्रिपादस्यामृतं दिवीति तदिदं लिङ्गेन चक्षुःश्रोत्रेन्द्रियगोचरमापादयितव्यं। यथाग्न्यादिर्धूमादिलिङ्गेन ॥ तथा ह्येवमेवेदमिति यथोक्तेऽर्थे

व्या॰ अदृष्टं फलमुक्त्वा दृष्टफलमाह । किञ्चेति ॥ यथोक्तपुत्रोत्पत्तिर्विवक्षितब्रह्मप्राप्तावनुपयुक्तेत्याशङ्क्याह । तस्य चेति ॥ पुत्रस्य ध्यानानुसारित्वहेतुत्वं ततःशब्दार्थः । पारम्पर्य्येणोपासनाद्वारेणेति यावत् ॥ पुत्रस्य ध्यानद्वारा ब्रह्मप्राप्तिहेतुत्वे फलितमाह । इति स्वर्गेति ॥ गायत्र्युपाधिकं ब्रह्मोपास्यं तादर्थ्येन द्वारपालोपास्तिश्च कर्त्तव्या ततश्चाङ्गेषु श्रुतानि फलानि समुच्चित्य प्रधानोपासनादेव ब्रह्मप्राप्तिरित्युक्तं ॥ इदानीं विद्यान्तरं प्रस्तौति॥ अथ यदिति ॥ परस्ताद्दिवो दीप्यमानं ब्रह्म कौक्षेये ज्योतिषि प्रतीकेऽध्यस्य दृष्टत्वश्रुतत्वाभ्यामुपासितव्यमिति श्रौतमर्थं सिद्धवत्कृत्वाऽऽर्थिकमर्थमादाय तात्पर्य्यमाह । यदसौ विद्वानिति ॥ वीराणां वीर्य्यवतामादित्यादीनां पुरुषाणां सेवनादाध्यानादीति यावत् । लिङ्गेन स्पर्शविशेषेण श्रवणविशेषेण चेत्यर्थः । चक्षुःश्रोत्रेन्द्रियगोचरमिति मद्दृष्टिं प्रति दृष्टं श्रुतञ्च मयेत्यापादयितव्यं। अन्यथा दृष्टत्वश्रुताभ्यां ब्रह्मणि ध्यानासिद्धेरित्यर्थः॥ परस्य प्रतिपत्तौ लिङ्गेन प्रत्यायने दृष्टान्तमाह। यथेति॥ विप्रतिपन्नं प्रति धूमादिलिङ्गेनाग्न्यादि प्रत्याय्यते तथा स्पर्शादिलिङ्गेन दृष्टत्वादिविशिष्टमिदं प्रत्येतव्यमित्यर्थः॥ यथोक्तस्य ज्योतिषो लिङ्गेन

उ॰ दमस्मिन्नन्तः पुरुषे ज्योतिस्तस्यैषा दृष्टिः ॥ ७ ॥

---

भा॰ दृढा प्रतीतिः स्यात्। अनन्यत्वेन च निश्चय इति अत आह। यदतोऽमुष्माद्दिवो द्युलोकात्परः परमिति लिङ्गव्यत्ययेन ज्योतिर्दीप्यते। स्वयंप्रभं सदा प्रकाशत्वाद्दीप्यत इव दीप्यत इत्युच्यते। अग्न्यादिवज्ज्वलनलक्षणाया दीप्तेरसम्भवाद्विश्वतः पृष्ठेष्वित्येतस्य व्याख्यानं सर्व्वतः पृष्ठेष्विति संसारादुपरीत्यर्थः। संसार एव हि सर्व्वः ॥

---

व्या॰ प्रत्यायनं किमिति क्रियते तत्राह। तथा हीति। लिङ्गद्वारा तस्य प्रत्यायने सति गुणद्वयविशिष्टमेवेदं ज्योतिर्नान्यथेत्येवं यथोक्ते परस्मिन्नुपास्यज्योतिषि दृढा धीः स्यात्। तत्तद्गुणस्य ज्योतिषो ध्यानादित्यर्थः। मा भूत्परस्य ज्योतिषो यथोक्तगुणस्याशेषोपासनमित्याशङ्क्याह। अनन्यत्वेनेति। कौक्षेयस्य ज्योतिषः सन्निकर्षाज्जीवाभेदं परिकल्प्य जाठरं ज्योतिर्ब्रह्मेत्यनन्यत्वेन ध्याने जीवब्रह्मणोरेकतया निश्चयस्यार्थात्सिद्धति। अतो यथोक्तोपास्तिरर्थवतीत्यर्थः ॥ अथशब्दस्य विद्यान्तरारम्भार्थत्वमभ्युपेत्यानन्तरग्रन्थस्य तात्पर्य्यमुक्त्वाऽवशिष्टाण्यक्षराण्यवतार्य्य व्याकरोति। अत आहेत्यादिना ॥ यदित्युपक्रम्य ज्योतिरित्युपसंहारात्पर इति पुंलिङ्गप्रयोगमाशङ्क्याह। परमिति ॥ कादाचित्कप्रकाशत्वाभावात्कथं दीप्यत इति प्रयोगस्तत्राह। स्वयंप्रभमिति ॥ कस्मादेवेति प्रयुज्यते मुख्यमेव दीप्यमानत्वं किं न स्यादित्याशङ्क्याह। अग्न्यादीति ॥ हेतोरुभयत्र सम्बन्धः ॥ सर्व्वशब्दस्यासङ्कुचितत्वादात्मनोऽपि तेन सङ्गृहीतत्वात्कथं तस्मादूर्द्ध्वं ब्रह्मेत्युपपन्नमित्याशङ्क्याह। संसारादिति ॥ तस्यैव सर्व्वशब्दवाच्यत्वमुपपादयति। संसार एव हीति। तस्यानेकत्वेन सर्व्वशब्दार्हत्वादित्यर्थः ॥

उ० यत्रैतदस्मिञ्छरीरे सꣳस्पर्शेनोष्णिमानं वि-

भा० असंसारिण एकत्वान्निर्भेदत्वाच्चानुत्तमेषु तत्पुरुषसमासाशङ्कानिवृत्तये आहोत्तमेषु लोकेष्विति सत्यलोकादिषु हिरण्यगर्भादिकार्य्यस्य परस्येश्वरस्यासन्नत्वादुच्यते उत्तमेषु लोकेष्विति । इदं वावेदमेव तद्यदिदमस्मिन्पुरुषेऽन्तर्मध्ये ज्योतिः चक्षुःश्रोत्रग्राह्येन लिङ्गेनोष्णिम्ना शब्देन वावगम्यते । यत्त्वचा स्पर्शरूपेण गृह्यते तच्चक्षुषैव । दृढप्रतीतिकरत्वात्त्वचोऽविनाभूतत्वाच्च रूपस्पर्शयोः ॥

आ० आत्मनि सर्व्वशब्दानुपपत्तिमाह । असंसारिण इति ॥ सर्व्वशब्दस्यानेकार्थवाचित्वादात्मनि चैकत्वात्प्रकारभेदस्य च नित्यत्वमुक्तं तस्मिन्नसम्भवान्न तस्य सर्व्वशब्दात्प्रतीतिरित्यर्थः । उत्तमा न भवन्तीत्यनुत्तमास्तेष्विति तत्पुरुषाशङ्कायां तन्निवृत्तिद्वारा बहुव्रीहिसिद्ध्यर्थं विशेषणमित्याह । तत्पुरुषेति ॥ किमिति तेषु परब्रह्म निर्द्दिश्यते तस्य सर्व्वगतत्वादित्याशङ्क्याह । हिरण्यगर्भादीति ॥ तत्कार्य्यात्मना स्थितं परं ब्रह्मोत्तमेषु लोकेष्वित्युच्यते । तस्य सर्व्वत्र सतोऽपि सत्यलोकादिषु हिरण्यगर्भाद्यात्मनाऽतिशयेन नित्याभिव्यक्तत्वादित्यर्थः । यदिति सर्व्वनाम्ना प्रकृतं ब्रह्म परामृश्यते । तस्योपास्यत्वार्थं संसारादुपरिष्टादवस्थानमुक्तं ॥ इदानीं कौक्षेयज्योतिषि तदारोपयति । इदमिति ॥ कौक्षेयज्योतिषि प्रतीके प्रमाणं दर्शयति । चक्षुरिति ॥ चक्षुष्यो भवतीति फलवचनानुसारेण स्पर्शरूपमैक्यमाध्यासिकमादायोष्णिम्ना चाक्षुषत्वं द्रष्टव्यं । रूपस्पर्शयोरैक्याध्यासं स्फुटयति । यत्त्वचेति ॥ यदुष्णं तेजो द्रव्यात्मकं त्वगिन्द्रियेण स्पर्शरूपेण गृह्यते तच्चक्षुषैव गृह्यते तत्र हेतुमाह । दृढेति ॥ त्वचो दृढायां प्रतीतौ हेतुत्वाच्चक्षुषा तादात्म्यारोपादित्यर्थः ॥ यद्रूपवद्भवति तत्स्पर्शवदतीति नियमाच्च रूपस्पर्शयोस्तादात्म्याध्यासात्तस्य चाक्षुषत्वसिद्धिरित्याह । अविनाभूतत्वाच्चेति ॥

उ॰ जानाति तस्यैषा श्रुतिर्यत्रैतत्कर्णावपि गृह्य नि-

भा॰ कथं पुनस्तस्य ज्योतिषो लिङ्गं त्वग्दृष्टिगोचरत्वमापद्यत इत्याह यत्र यस्मिन् काले एतदिति क्रियाविशेषणं अस्मिन् शरीरे हस्तेनालभ्य संस्पर्शेनोष्णिमानं रूपसहभाविनमुष्णस्पर्शभावं विजानाति स ह्युष्णिमानमरूपव्याकरणाय देहमनुप्रविष्टस्य चैतन्यात्मज्योतिषो लिङ्गमव्यभिचारात्। न हि जीवन्तमात्मानमुष्णिमा व्यभिचरति। उष्ण एव जीविष्यञ्शीतो मरिष्यन्निति हि विज्ञायते। मरणकाले च तेजः परस्यां देवतायामिति परेण विभागत्वोपगमादतोऽसाधारणं लिङ्गमौष्ण्यमग्नेरिव धूमः॥

आ॰ शब्दो यस्य ज्योतिषो लिङ्गमौष्ण्यं तस्य त्वगिन्द्रियग्राह्यस्य चाक्षुषत्वमुपपादयितुं पृच्छति। कथमिति॥ तस्यैषा दृष्टिरित्यादिवाक्येनोत्तरं दर्शयन् यत्रेत्यादि व्याकरोति। आहेत्यादिना॥ यथैतद्विज्ञानं स्यात्तथेति विज्ञानक्रियायां विशेषणमेतदिति पदमित्यर्थः॥ संस्पर्शेनोष्णिमानं विजानाति चेत्कथं तर्हि तस्य चाक्षुषत्वमित्याशङ्क्याह। रूपसहभाविनमिति॥ भवत्वौपचारिकमौष्ण्यस्य चाक्षुषत्वं तथापि कथं तस्य लिङ्गत्वमित्याशङ्क्य जीवनप्रत्यायनद्वारा कौक्षेयज्योतिषि तस्य लिङ्गत्वं साधयति। स हीति॥ जीवात्मना तस्याव्यभिचारं स्फोरयति। न हीति॥ तत्रैव श्रुतिं संवादयति। उष्ण एवेति॥ यदा जीवस्य लिङ्गमौष्ण्यं तदा परस्यापि ज्योतिषस्तल्लिङ्गं भवति। जीवपरयोरेकत्वावगमादित्याह। मरणकाले चेति॥ वागादि मनसि मनः प्राणे प्राणस्तेजसि तदध्यक्षलक्षणां परस्यां देवतायां परमात्माख्यायां सम्पद्यत इति श्रुत्या जीवस्य परेण तदर्थात्मना सहाभिन्नत्वस्योपगमाज्जीवस्य लिङ्गं तद्भवति परस्य लिङ्गमित्यर्थः। यदा हि जीवस्य परस्य च यथोक्तलिङ्गादवगतिस्तदा तत्र कौक्षेयज्योतिषस्तदधिकरणस्य सुतरामवगतिरस्तीत्याह। अत इति॥

उ॰ नदमिव नदथुरिवाग्नेरिव ज्वलत उपशृणोति तदेतद्दृष्टञ्च श्रुतञ्चेत्युपासीत चक्षुष्यः श्रुतो भवति य

---

भा॰ अतस्तस्य परस्यैषा दृष्टिः साक्षादिव दर्शनं दर्शनोपाय इत्यर्थः। तथा तस्य ज्योतिष एषा श्रुतिः श्रवणं श्रवणोपायो ऽप्युच्यमानो यत्र यदा पुरुषो ज्योतिषो लिङ्गं शुश्रूषति श्रोतुमिच्छति तदैतत्कर्णावपिगृह्येतच्छब्दः क्रियाविशेषणं। अपिगृह्यापिधायेत्यर्थोऽङ्गुलिभ्यां प्रोर्णुत्य निनदमिव रथस्येव घोषो निनादस्तमिव शृणोति नदथुरिव ऋषभकूजितमिव शब्दो यथा चाग्नेर्बहिर्ज्वलत एवंशब्दमन्तः शरीर उपशृणोति तदेतज्ज्योतिर्दृष्टश्रुतलिङ्गत्वाद्दृष्टञ्च श्रुतञ्चेत्युपासीत। तथोपासनाच्चक्षुष्यो दर्शनीयः श्रुतो विश्रुतश्च यत्स्पर्शगुणोपासननिमित्तं फलं तद्रूपे सम्पादयति चक्षुष्य इति। रूपस्पर्शयोः सहभावित्वात्॥ ३॥

---

आ॰ उपास्यस्य जाठरे ज्योतिषि प्रतीके लिङ्गत्वे सति तल्लिङ्गमाह। तस्येति॥ विष्णोरिव प्रतिमायां जाठरेण ज्योतिषा परस्य ज्योतिषस्तादात्म्यादित्यर्थः॥ प्रतीकद्वारा दृष्ट्युपायवत्तस्य श्रवणोपायं लिङ्गान्तरं दर्शयति। तथेति॥ अपिगृह्य शृणोतीति सम्बन्धः। यथा श्रवणमेतद्भवति तथा शृणोतीति श्रवणक्रियाया विशेषणमेतच्छब्द इति योजना॥ प्रोर्णुत्य पिधायेति यावत्। श्रूयमाणशब्दस्य वाच्यार्थभावस्फुटीकरणार्थमनेकदृष्टान्तोपादानं। कौक्षेयज्योतिष्यारोपितस्य ज्योतिषो ध्येयस्य ध्यानोपायाङ्गत्वेन गुणद्वयमुपदिशति॥ तदेतदिति॥ दृष्टमित्युपासने फलमाह। तथेति॥ श्रुतमित्युपासने फलमाचष्टे। श्रुत इति॥ कथं पुनः स्पर्शगुणोपासने स्पर्शो भवतीति वक्तव्ये चक्षुष्यो भवतीत्युच्यते तत्राह। यत्स्पर्शेति॥ सम्पादने निमित्तमाह। रूपस्पर्शयोरिति॥

उ० एवं वेद य एवं वेद ॥१३॥ सर्व्वं खल्विदं ब्रह्म

भा० दृष्टत्वाच्च दर्शनीयतायाः। एवञ्च विद्यायाः फलमुपपन्नं स्यान्न तु मृदुत्वादिस्पर्शवत्त्वे। य एव यथोक्तौ गुणौ वेद स्वर्गलोकप्रतिपत्तिस्तूक्तमदृष्टं फलं। द्विरभ्यास आदरार्थः॥१३॥ पुनस्तस्यैव त्रिपादमृतस्य ब्रह्मणोऽनन्तगुणवतोऽनन्तशक्तेरनेकभेदोपास्यस्य विशिष्टगुणशक्तिमत्त्वेनोपासनं विधित्सन्नाह। सर्व्वं समस्तं खल्विति वाक्यालङ्कारार्थो निपातः। इदं जगन्नामरूपविकृतं प्रत्यक्षादिविषयं ब्रह्म॥

आ० इतश्चक्षुष्यो भवतीति फलवचनमुचितमित्याह। दृष्टत्वाच्चेति फलवचनमपि सम्पादयति॥ न कल्पकमित्याह एवञ्चेति॥ यदा स्पर्शगुणोपासननिमित्तं फलं रूपे सम्पाद्यते तदा विद्यायाः श्रुतं फलमुपपन्नमिति फलश्रुतिरनुकूलिता स्यात्। रूपविशेषवति चक्षुष्यशब्दप्रसिद्धत्वादित्यर्थः। यदि पुनर्मृदुत्वादिस्पर्शगुणस्योपासननिमित्तं फलं कल्प्यते तदा चक्षुष्यो भवतीति श्रुतं फलं नैवोपपन्नं स्यात्ततश्च फलश्रुतिरपबाधिता भवेदित्याह। न त्विति॥ कस्येदं फलमित्यपेक्षायामाह। य एवमिति॥ ननु परस्य ज्योतिषो जाठरे ज्योतिष्यारोपितस्य यथोक्तगुणवतो ध्यानात्कथमिदमत्यल्पं फलमननुरूपमुपदिश्यते तत्राह। स्वर्गलोकेति॥ फलवत्यांऽविद्यायामादरो विवक्षितः॥१३॥ प्रतीकद्वारा ब्रह्मोपासनमुक्त्वा प्रतीकं हित्वा सगुणब्रह्मोपासनमुपन्यस्यति। पुनरित्यादिना॥ तस्य निरुपाधित्वं व्यावर्त्तयति। अनन्तेति॥ कथमेकस्यानेकगुणत्वं तत्राह। अनन्तशक्तेरिति॥ ननु पूर्व्वमेवास्योपासनान्यतिवृत्तानि तथाच वक्तव्यशेषो नास्तीत्याशङ्क्याह। अनेकेति॥ अनेकेषु गायत्र्याद्युपाधिषूपास्यस्यापि ब्रह्मणो मनोमयत्वादिविशिष्टगुणत्वेन विशिष्टशक्तिमत्त्वेन चोपासनान्तरविधानार्थमुत्तरवाक्यमित्यर्थः। तस्येदमा परामर्शे हेतुमाह। प्रत्यक्षादीति॥

उ० तज्जलानिति शान्त उपासीत

भा० कारणं वृद्धतमत्वाद्ब्रह्म। कथं सर्व्वस्य ब्रह्मत्वमित्यत आह। तज्जलानिति। तस्माद्ब्रह्मणो जातं तेजोऽबन्नादिक्रमेण सर्व्वं। अतस्तज्जं। तथा तेनैव जननक्रमेण प्रतिलोमतया तस्मिन्नेव ब्रह्मणि लीयते तदात्मतया श्लिष्यत इति तल्लं। तथा तस्मिन्नेव स्थितिकालेऽनिति प्राणिति चेष्टत इति तदनं। इत्येवं ब्रह्मात्मतया त्रिषु कालेष्वविशिष्टं तद्व्यतिरेकेणाग्रहणात्। अतस्तदेवेदं जगत्। यथा चेदं तदेवैकमद्वितीयं। तथा षष्ठे विस्तरेण वक्ष्यामो यस्माच्च सर्व्वमिदं ब्रह्म। अतः शान्तो रागद्वेषादिदोषरहितः संयतः सन् यत्तत्सर्व्वं ब्रह्म तद्वक्ष्यमाणैर्गुणैरुपासीत॥

व्या० ब्रह्मशब्दस्य निरुपाधिकार्थविषयत्वं व्यावर्त्तयति। कारणमिति॥ कथं तस्य ब्रह्मत्वं तदाह। वृद्धतमत्वादिति॥ निरतिशयमहत्त्वादित्यर्थः। सर्व्वमनूद्य तस्य ब्रह्मविधाने युक्तिं प्रश्नपूर्व्वकमाह। कथमित्यादिना॥ तज्जञ्च तल्लञ्च तदनञ्च तज्जलान् अवयवलोपश्छान्दसः। तत्र तज्जत्वं जगतो व्युत्पादयति। तस्मादिति॥ तल्लत्वमुपपादयति। तथेति॥ विपर्य्ययेण तु क्रमोऽत इति न्यायात्प्रतिलोमतया जननव्युत्क्रमेण तस्मिन्नेव ब्रह्मणि लीयते जगदिति कृत्वा यथातस्तज्जं तथेति योजना। तत्र लयो नाम जगतः शून्यतेति शङ्कां व्यावर्त्तयति। तदात्मतयेति॥ तदनत्वं प्रतिपादयति। तथेति॥ तथा तज्जं तल्लञ्च तथा तदनञ्च जगदित्यर्थः। इति तदनमिति शेषः॥ युक्तिसिद्धमर्थं निगमयति। एवमिति॥ ब्रह्मव्यतिरेकेण त्रिष्वपि कालेषु जगतोऽग्रहणात्तदात्मत्वेनाविशिष्टमिष्टं जगत्तदेव स्यादिति योजना॥ युक्तिसिद्धमपि जगतो ब्रह्मत्वं प्रत्यक्षादिविरुद्धं नाङ्गीकारमर्हति। न हि सद्वितीयमद्वितीयमित्याशङ्क्याह। यथा चेति॥ सर्व्वस्य ब्रह्मत्वे फलितमाह। यस्माच्चेति॥

उ॰ अथ खलु क्रतुमयः पुरुषो यथा क्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत ॥ १ ॥

---

भा॰ कथमुपासीत। स क्रतुं कुर्व्वीत क्रतुर्निश्चयोऽध्यवसायश्च एवमेव नान्यथेति अविचलः प्रत्ययस्तं क्रतुं कुर्व्वीतोपासीतेत्यनेन व्यवहितेन सम्बन्धः। किं पुनः क्रतुकरणेन कर्त्तव्यं प्रयोजनं। कथं वा क्रतुः कर्त्तव्यः। क्रतुकरणं चाभिप्रेतार्थसाधनं कथं इत्यस्यार्थस्य प्रतिपादनार्थमथेत्यादिग्रन्थः। अथ खल्विति हेत्वर्थः। यस्मात्क्रतुमयः क्रतुप्रायोऽध्यवसायात्मकः पुरुषो जीवः। यथा क्रतुर्यादृशः क्रतुरस्य सोऽयं यथा क्रतुर्यथाध्यवसायो यादृ-

---

आ॰ कियन्तं कालं प्रत्ययमावर्त्तयेदित्याकाङ्क्षापूर्व्वकं तत्त्वनिश्चयपर्य्यन्तमिति दर्शयितुं व्यवहितं वाक्यमवतार्य्य व्याचष्टे। कथमित्यादिना॥ उपासीतेत्यस्य क्रतुं कुर्वीतेत्यनेन व्यवहितेन सम्बन्ध इति योजना॥ क्रत्वनुष्ठानस्य फलं पृच्छति। किं पुनरिति॥ तत्र क्रतुकरणं च केन प्रकारेणेति प्रश्नान्तरं दर्शयति। कथं वेति॥ ब्रह्मभावसाधनत्वात्क्रतुकरणस्य फलप्रश्नो नास्तीत्याशङ्क्याह। क्रतुकरणञ्चेति॥ न हि जीवस्य स्थितस्य नष्टस्य वा सद्भावः सम्भवतीति भावः॥ क्रतुकरणस्येदं प्रयोजनं स च क्रतुरेवं क्रियते तत्करणं चानया रीत्या ब्रह्मसद्भावं साधयतीत्यस्यार्थजातस्य प्रतिपादनार्थमाखण्डसमाप्तेरथेत्यादिरुत्तरो ग्रन्थ इत्याह। इत्यस्यार्थस्येति॥ अथ खल्वित्यत्र पूर्व्ववत् खलुशब्दोऽथशब्दस्तु हेत्वर्थ इत्यत्र हेतुरूपमर्थं विवृणोति। यस्मादिति॥ यद्वा अथेत्यारभ्य पुरुष इत्यन्तो ग्रन्थो हेत्वर्थ इत्युक्त्वा तमेव हेतुरूपमर्थं दर्शयति। यस्मादिति॥ यथा क्रतुरित्यस्मादधस्तात्तस्माच्छब्दो

भा० क्रतुमयोऽस्मिंल्लोके जीवन्निह पुरुषो भवति। तथेतोऽस्माद्देहात्प्रेत्य मृत्वा भवति॥

क्रत्वनुरूपफलात्मको भवतीत्यर्थः। एवं ह्येतच्छास्त्रतो दृष्टं। यं यं वापि स्मरन्भावं त्यजत्यन्ते कलेवरमित्यादि यत एवं व्यवस्था शास्त्रदृष्टान्तः स एवं जानन् क्रतुं कुर्व्वीत यादृशं क्रतुं वक्ष्यामस्तं। यत एवं शास्त्रप्रामाण्यादुपपद्यते क्रत्वनुरूपं फलमतः स कर्त्तव्यः क्रतुः। कथं मनोमयो मनः प्रायः। मनुतेऽनेनेति मनस्तत्स्ववृत्त्या विषयेषु प्रवृत्तं भवति तेन मनसा तन्मयः। तथा प्रवृत्त

व्या० द्रष्टव्यः। अस्मिंल्लोक इति श्रुतिमादाय व्याचष्टे। जीवन्निहेति॥ इह वर्त्तमाने देहे जीवन्सन्निति यावत्। क्रतुकरणेन किं कर्त्तव्यं फलमिति प्रश्नं व्याचष्टे। तथेति॥ क्रत्वनुरूपफलात्मकत्वे पुरुषस्य स्मृतिं संवादयति। एवं हीति॥ शास्त्रमेवोदाहरति। यं यमिति॥ कथं वा क्रतुः कर्त्तव्य इति प्रश्नं प्रत्याह। यत इति॥ क्रत्वनुरूपफलात्मकः पुरुषो भवतीत्येवंरूपा व्यवस्थेति यावत्॥ एवं जानन् क्रत्वनुरूपं फलमिति शास्त्रतः पश्यन्नित्यर्थः। कोऽसौ क्रतुरित्याशङ्क्याह। यादृशमिति॥ स क्रतुं कुर्व्वीतेत्यस्यार्थं निगमयति। यत एवमिति॥ क्रतुकरणप्रकारमेव प्रश्नपूर्व्वकं प्रकटयति। कथमित्यादिना॥ कथमिदं मनःप्रायमित्यपेक्षायां मनः शब्दार्थप्रदर्शनपूर्व्वकं व्युत्पादयति। मनुत इति॥ मनोद्वारा तदुपाधिः पुरुषो विषयप्रवणो भवतीत्यर्थः। तत्प्रायत्वमाह। तथेति॥ पुरुषो हि तत्प्रायः सन्मनसि प्रवर्त्तमाने स्वयमपि तद्वदेव प्रवृत्त इव लक्ष्यते। तथा निवर्त्तमाने मनसि निवृत्त इव चावगम्यते। वस्तुतस्तु पुरुषो न प्रवृत्तो निवृत्तो वा

भा०इव तत्प्रायो निवृत्त इव च। अत एव प्राणशरीरः प्राणो लिङ्गात्मा विज्ञानक्रियाशक्तिद्वयसंमूर्च्छितः। यो वै प्राणः सा प्रज्ञा या वा प्रज्ञा स प्राण इति श्रुतेः। स शरीरं यस्य स प्राणशरीरः। मनोमयः प्राणशरीरं नेतेति च श्रुत्यन्तरात्।

भारूपः। भा दीप्तिश्चैतन्यलक्षणं रूपंयस्य स भारूपः। सत्यसङ्कल्पः। सत्या अवितथाः सङ्कल्पा यस्य सोऽयं सत्यसङ्कल्पः। न यथा संसारिण इवानैकान्तिकफलः सङ्कल्प ईश्वरस्येत्यर्थः। अनृतेन मिथ्याफलत्वहेतुना प्रत्यूढत्वात्सङ्कल्पस्य मिथ्याफलत्वञ्च वक्ष्यत्यनृते न हि प्रत्यूढा इति। आकाशात्मा। आकाश इवात्मा स्वरूपं

व्या० ध्यायतीवेत्यादिश्रुतेरित्यर्थः ॥ अत एव मनोमयत्वादेवेति यावत् ॥ सम्मूर्च्छितत्वं सम्पिण्डितत्वं। विज्ञानशक्तेस्वैकस्मिन्नेव लिङ्गात्मनि सम्पिण्डितत्वे श्रुत्यन्तरं प्रमाणयति। यो वा इति ॥ आथर्वणीं श्रुतिं यथोक्ते विशेषणद्वये प्रमाणयति। मनोमयः प्राणेति ॥ मनोवृत्तिभिर्विभाव्यमानत्वादात्मा मनोमयः प्राण एव प्रत्यगात्मनः सूक्ष्मं शरीरं तस्य चासौ स्थूलाद्देहाद्देहान्तरं प्रति नेतेत्याथर्वणश्रुतेरात्मनि विशेषणद्वयसिद्धिः। एतच्च विशेषणद्वयं जीवगतमपि तदभेदविवक्षया ब्रह्मणि द्रष्टव्यमित्यर्थः। सत्यसङ्कल्प इत्यत्र विशेषणेन ध्वनितमर्थं दर्शयति। न यथेति ॥ इवशब्दस्तथार्थः। कथं संसारिसङ्कल्पस्यानैकान्तिकफलत्वं तत्राह। अनृतेति ॥ सङ्कल्पस्यानृतेन संसारिणि प्रत्यूढत्वे वाक्यशेषं प्रमाणयति। वक्ष्यतीति ॥ जडाजडयोराकाशेतरयोर्न तुल्यतेत्या-

उ० सर्वकर्म्मा सर्वकामः सर्वगन्धः सर्वरसः

भा० यस्य स आकाशात्मा। सर्व्वगतत्वं सूक्ष्मत्वं रूपादिहीनत्वञ्चा-काशतुल्यता ईश्वरस्य । सर्व्वकर्म्मा । सर्व्वं विश्वं तेनेश्वरेण क्रियत इति जगत्सर्व्वं कर्म्मास्येति सर्व्वकर्म्मा । स हि सर्व्वस्य कर्त्तेति श्रुतेः । सर्व्वकामः । सर्व्वे कामा दोषरहिता अस्येति स सर्व्वकामो धर्म्माविरुद्धो भूतेषु कामोऽस्मीति स्मृतेः । न नु कामोऽस्मीति वचनादिह बहुव्रीहिर्न सम्भवति । सर्व्वकाम इति । न कामस्य कर्त्तव्यत्वाच्छब्दादिवत्पारा-र्थ्यप्रसङ्गाच्च देवस्य । तस्माद्यथेह सर्व्वकाम इति बहुव्रीहि-स्तथा कामोऽस्मीति स्मृत्यर्थो वाच्यः । सर्व्वे गन्धाः सुखकरा

---

व्या० शङ्काह । सर्व्वगतत्वमिति ॥ सर्व्वकर्मेति सर्व्वक्रियाश्रयत्वमीश्वर-स्योच्यते । तदयुक्तं । निष्क्रियत्वश्रुतेरित्याशङ्क्य व्याचष्टे । सर्व्व-मिति॥ संसारिभ्यो विशेषसिद्ध्यर्थं विशिनष्टि। दोषरहिता इति॥ उदाहृतस्मृतिमाश्रित्योक्तमाक्षिपति । नन्विति ॥ कामसामा-नाधिकरण्ये बाधकोपलम्भाद्बहुव्रीहिरेवेति परिहरति । न कामस्येति ॥ तस्य कार्य्यत्वात्तदैक्ये ब्रह्मणोऽनादित्वं बाध्येत । चेतनशेषत्वाच्च कामस्य । तदैक्ये ब्रह्मणः स्वातन्त्र्यं हीयते। तथा च कर्म्मधारयासम्भवाद्बहुव्रीहिरेवेत्यर्थः॥ कथं तर्हि कामोऽस्मीति तादात्म्यस्मृतिरित्याशङ्क्याह । तस्मादिति ॥ कामेश्वरयोः सामा-नाधिकरण्यासम्भवात्प्रकृतश्रुतौ बहुव्रीहिर्यथेष्टस्तथा स्मृतावपि ब्रह्मपारतन्त्र्यमात्रं कामस्य विवक्षितं। श्रुत्यनुसारेण स्मृतेर्नेतव्य-त्वादित्यर्थः। सर्व्वशब्दाद्दुर्गन्धानामपि ब्रह्मणि प्राप्तौ विशिनष्टि। सुखकरा इति ॥ तत्रापि सर्व्वशब्दसङ्कोचे कारणमाह। पुण्य इति॥ यथा सर्व्वगन्ध इत्यत्र सुखकरा गन्धा ब्रह्मणि दर्शिता-स्तथा सर्व्वरस इत्यत्रापि सुखकरा एव रसास्तत्सम्बन्धिनो ग्राह्या इत्याह । तथेति ॥ तत्रापि सर्व्वशब्दसङ्कोचे कारणमाह।

उ० सर्व्वमिदमभ्यात्तोऽवाक्यनादरः ॥ २ ॥ एष म आत्माऽन्तर्हृदयेऽणीयान् व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा

---

भा० अस्य सोऽयं सर्व्वगन्धः। पुण्यो गन्धः पृथिव्यामिति स्मृतेः। तथा रसा अपि विज्ञेयाः। अपुण्यगन्धरसग्रहणस्य पाप्मसम्बन्धनिमित्तत्वश्रवणात्। तस्मात्तेनोभयं जिघ्रति सुरभि च दुर्गन्धि च। पाप्मना ह्येष विद्ध इति श्रुतेः। न च पाप्मसंसर्ग ईश्वरस्य। अविद्यादिदोषस्यानुपपत्तेः॥

सर्व्वमिदं जगदभ्यात्तोऽभिव्याप्तः। अततेर्व्याप्त्यर्थस्य कर्त्तरि निष्ठा। तथा अवाक्युच्यतेऽनयेति वाग्वागेव वाकः। यद्वा वचेर्घञन्तस्य करणे वाकः। स यस्य विद्यते स वाकी न वाक्यवाकी। वाक् प्रतिषेधस्चात्रोपलक्षणार्थः। गन्धरसादिश्रवणात्। ईश्वरस्य प्राप्तानि घ्राणादीनि करणानि

---

आ० अपुण्येति॥ न तद्ग्रहणं परस्मिन्निति शेषः। तच्छब्दार्थमेवोपपादयति। पाप्मना हीति॥ एष इति प्राणप्राणोक्तिर्भवतु पाप्मसंसर्गकृतमपुण्यगन्धादिग्रहणं। तथापि कथं तदीश्वरे सर्व्वज्ञे नास्तीत्याशङ्क्याह। न चेति॥ निमित्ताभावादीश्वरस्य न स्वसम्बन्धित्वेनापुण्यगन्धादिग्रहणमित्यर्थः॥

तस्य पाप्मसंसर्गे हेतुमाह। अविद्यादीति॥ आदिपदेनास्मितारागद्वेषाभिनिवेशादयो गृह्यन्ते। अभ्यात्त इति रूपं तदर्थञ्च दर्शयन् कर्म्मणि निष्ठां व्यावर्त्तयति। अततेरिति॥ वाक्शब्दस्य निष्पत्तिप्रकारं रचयति। वचेरिति॥ अत्रेति श्रुतेरीश्वरस्य चोक्तिः। उपलक्षणार्थः प्राणादिप्रतिषेधस्येति शेषः॥ अथेश्वरे घ्राणादिप्राप्तेरभावात्तत्प्रतिषेधो नोपलक्ष्येतात आह।

उ० श्यामाकतण्डुलाद्वैष म आत्मान्तर्हृदये ज्यायान् पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान्दिवो ज्यायानेभ्यो लोकेभ्यः ॥ ३ ॥ सर्व्वकर्म्मा सर्व्वकामः

---

भा० गन्धादिग्रहणाय । अतो वाक् प्रतिषेधेन प्रतिषिध्यन्ते तानि । अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्ण इत्यादिमन्त्रवर्णादनादरोऽसम्भ्रमः । अप्राप्तप्राप्तौ हि सम्भ्रमः स्यादनाप्तकामस्य । न त्वाप्तकामत्वान्नित्यतृप्तस्येश्वरस्य सम्भ्रमोऽस्ति क्वचित् । एष यथोक्तगुणो मे ममात्माऽन्तर्हृदये हृदयपुण्डरीकस्यान्तर्मध्येऽणीयानणुतरो व्रीहेर्वा यवाद्वेत्यादि । अत्यन्तसूक्ष्मप्रदर्शनार्थं श्यामाकाद्वा श्यामाकतण्डुलाद्वेति । परिच्छिन्नपरिमाणादणीयानित्युक्तेऽणुपरिमाणत्वं प्राप्तमाशङ्क्यातस्तत्प्रतिषेधायारभते । एष म आत्मान्तर्हृदये ज्यायान्पृथिव्या इत्यादिना । ज्यायःपरिमाणाच्च ज्यायस्त्वं दर्शयन्ननन्तपरिमाणत्वं दर्शयति । मनोमय इत्यादिना । ज्याया-

---

व्या० गन्धेति ॥ आदिशब्देन कामादिरुक्तः । युक्तश्चान्योन्यलक्षणं साक्षादेवान्यत्र प्रतिषेधश्रवणादित्याह । अपाणीति ॥ आदिपदेन स वेत्ति वेद्यमित्यादि गृह्यते । ईश्वरस्य सम्भ्रमाभावं प्रतिपादयति । अप्राप्तप्राप्तौ हीति ॥ यथोक्तस्य परस्य प्रत्यगात्माभेदं दर्शयति । एष इति ॥ व्रीह्याद्यनेकोपादानस्योपयोगमाह । अत्यन्तेति ॥ अणीयस्त्वज्यायस्त्वव्यपदेशयोर्मिथो विरोधमाशङ्क्य परिहरति । श्यामाकेति ॥ पृथिव्यन्तरिक्षादिवदीश्वरस्यातिशयं महत्त्वं विवक्षितमिति शङ्कां वारयति । ज्यायःपरिमाणाच्चेति ॥

उ॰ सर्व्वगन्धः सर्व्वरसः सर्व्वमिदमभ्यात्तोऽवाक्यनादर एष म आत्मान्तर्हृदय एतद्ब्रह्मैतमितः प्रेत्याभिसम्भवितास्मीति

---

भा॰ तेभ्यो लोकेभ्य इत्यन्तेन यथोक्तगुणलक्षण ईश्वरो ध्येयो न तु तत्तद्गुणविशिष्ट एव। यथोक्तराजपुरुषमानय चित्रगुश्चेत्युक्तेन विशेषणस्याप्यानयने व्याप्रीयते तद्वदिहापि प्राप्तमतस्तन्निवृत्त्यर्थं सर्व्वकर्म्मेत्यादिपुनर्व्वचनं। तस्मान्मनोमयत्वादिगुणविशिष्ट एव ईश्वरो ध्येयः। अत एव षष्ठसप्तमयोरिव तत्त्वमस्यात्मैवेदं सर्व्वमिति। नेह स्वाराज्येऽभिषिञ्चत्येष म आत्मैतद्ब्रह्मैतमितः प्रेत्याभिसम्भावितोऽस्मीति लिङ्गात्। न त्वात्मशब्देन प्रत्यगात्मैवोच्यते। मम इति षष्ठ्याः सम्बन्धार्थप्रत्यायकत्वादेतमभिसम्भावितोऽस्मीति च कर्म्मकर्त्तृत्वनिर्द्देशात्॥

ननु षष्ठेऽप्यथ सम्पत्स्यत इति सत्सम्पत्तेः कालान्तरितत्वं दर्शयति नारब्धसंस्कारशेषस्थित्यर्थपरत्वात्। न

---

आ॰ पुनरुक्तेरुपयोगमाह। मनोमय इत्यादिनेति॥ यस्तैर्लक्ष्यते स एवेश्वरः केवल इति यावत्॥ ईश्वरो यथोक्तगुणो ध्येय इत्युक्ते गुणानामपि ध्यानकर्म्मत्वं दुर्निवारमित्याशङ्क्याह। यथेति॥ पुनरुक्तिफलमुपसंहरति। तस्मादिति॥ सगुणस्येश्वरस्य ध्येयत्वे गमकान्तरमाह। अत एवेति॥ स्वरूपवाचकस्यात्मनः श्रुत्यनुपपत्तेर्न तद्बलाददैतवाक्यार्थसिद्धिरित्यर्थः॥

लिङ्गभेदाच्चेदिह भेदो विवक्षितस्तर्हि षष्ठेऽपि तल्लिङ्गदर्शनान्नाखण्डवाक्यार्थसिद्धिरिति शङ्कते। नन्विति॥ नात्र भेदो विवक्षितः। आरब्धः संस्कारः सुखादिर्येन कर्म्मणा तच्छेषस्थितौ

उ॰ यस्य स्यादद्धा न विचिकित्साऽस्तीति ह स्माह शाण्डिल्यः शाण्डिल्यः ॥ ४ ॥ १४ ॥

---

भा॰ कालान्तरितार्थता अन्यथा तत्त्वमस्याद्यर्थस्य बाधप्रसङ्गात्। यद्यप्यात्मशब्दस्य प्रत्यगर्थत्वं सर्वं खल्विदं ब्रह्मेति च प्रकृतमेष म आत्मान्तर्हृदय एतद्ब्रह्मेत्युच्यते। तथाप्यन्तर्ध्यानमीषदपरित्यज्यैवैतमात्मानमितोऽस्माच्छरीरात्प्रेत्याभिसम्भावितास्मीत्युक्तं ॥

यथा क्रतुरूपस्यात्मनः प्रतिपत्तास्मीति यस्यैवंविदः स्यादद्धा सत्यमेवं स्यामहं प्रेत्यैवं न स्यामिति। न च विचिकित्सास्ति। इत्येतस्मिन्नर्थे क्रतुफलसम्बन्धे स तथैवे-

---

व्या॰ तात्पर्य्यादिति परिहरति। नास्येति ॥ सत्सम्पत्तौ कालान्तरितत्वमेवात्र विवक्षितं किं न स्यादित्याशङ्क्याह। नेति ॥ कालान्तरभावित्वे सम्पत्तेरिष्टे तत्त्वमसीति ब्रह्मभावस्य वर्त्तमानोपदेशानुपपत्तेरिति हेतुमाह। अन्यथेति ॥ ननु प्रकरणानुगृहीताभ्यामात्मब्रह्मशब्दाभ्यामत्रापि ब्रह्मात्मैक्यमेव विवक्षितमित्यत आह। यद्यपीति ॥ लिङ्गानुगृहीतषष्ठीश्रुतिवशात्प्रकरणानुगृहीतश्रुती कथञ्चिन्नेतव्या। प्रकरणश्रुतिभ्यां लिङ्गश्रुत्योर्बलवत्त्वादात्मश्रुतेश्चान्यथोपपत्तेरुक्तत्वादिति भावः ॥

सगुणब्रह्मोपासकस्य सकृत्तत्त्वधीमात्रान्नादृष्टं फलं सिद्ध्यति। किन्तु देहपातकालेऽपि साक्षात्कारानुवृत्त्या भवितव्यमित्यभिप्रेत्याह। यथा क्रतुरूपस्येति ॥ अध्यवसायानुरूपस्य सगुणस्य परमात्मनोऽहं प्रतिपत्तास्मीत्येवंविदो यस्य स्यादद्धा निश्चयः प्रेत्याहमेव स्यामेव न तु न स्यामिति क्रतुफलसम्बन्धे संशयो ऽस्ति। स क्रत्वनुसारेणैव परमात्मभावं प्राप्नोति तथा चाद्धेति वाक्यान्मरणकालेऽपि साक्षात्कारेण भवितव्यमिति प्रतिभाती-

उ॰ अन्तरिक्षोदरः कोशो भूमिबुध्नो न जीर्य्यति दिशो ह्यस्य स्रक्तयो द्यौरस्योत्तरं बिलᳫं स एष कोशो वसुधानस्तस्मिन्विश्वमिदᳫं श्रितं ॥ १ ॥

---

भा॰ श्वरभावं प्रतिपद्यते । विद्वानित्येतदाह स्मोक्तवान् किल शाण्डिल्यो नामर्षिर्द्विरभ्यास आदरार्थः ॥ १४ ॥

अस्य कुले वीरो जायत इत्युक्तं। न वीरजन्ममात्रं पितुस्त्राणाय। तस्मात्पुत्रमनुशिष्टं लोक्यमाहुरिति श्रुत्यन्तरात्। अतस्तद्दीर्घायुष्ट्वं कथं स्यादित्येवमर्थं कोशविज्ञानारम्भः॥ अभ्यर्हितविज्ञानव्यासङ्गादनन्तरमेव नोक्तं तदिदानीमेवारभ्यते । अन्तरिक्षमुदरमन्तःसुषिरं यस्य सोऽयमन्तरिक्षोदरः कोशः कोश इवानेकधर्मसादृश्यात्कोशः स च भूमिबुध्नो भूमिर्बुध्नो मूलं यस्य स भूमिबुध्नो न जीर्य्यति

---

व्या॰ त्यर्थः । यथोक्तस्यार्थस्य साम्प्रदायिकत्वं कथयति । इत्येतदिति ॥ आदरः क्रतुफलसम्बन्धविषयः ॥ १४ ॥

शाण्डिल्यविद्यायाः समनन्तरग्रन्थस्य सम्बन्धो नास्तीत्याशङ्क्य व्यवहितेन सम्बन्धं दर्शयितुमनुवदति । अस्येति ॥ समनन्तरग्रन्थस्य तात्पर्य्यं वक्तुं भूमिकां करोति । न वीरेति ॥ तत्र बृहदारण्यकश्रुतिं प्रमाणयति । तस्मादिति ॥ पुत्रस्य लोकत्वादिति यावत् । अनुशासनेन विषयीकृतस्य पुत्रस्य लोकप्राप्तिसाधनत्वादनुशासितस्य वेदाध्ययनं पुत्रजन्मोक्त्यनन्तरमेव किमित्येतद्विज्ञानं नोपदिष्टमित्याशङ्क्याह ॥ अभ्यर्हितेति ॥ गायत्र्युपाधिकब्रह्मोपासनस्य कौक्षेये ज्योतिष्यारोप्य परब्रह्मोपासनमभ्यर्हितं तस्य च मनोमयत्वादिगुणकब्रह्मोपासनमन्तरङ्गं । तथा च तद्वचनेन वैयग्र्यादनन्तरमेव कोशविज्ञानं नोक्तमिति निवृत्ते तद्यासङ्गे तद्दृष्टिरिदानीं यथो-

उ॰ तस्य प्राची दिग्जुहूर्नाम सहमाना नाम दक्षिणा राज्ञी नाम प्रतीची सुभूता नामोदीची तासां वायुर्वत्सः स य एतमेव वायुं दिशां वत्सं

---

भा॰ न विनश्यति त्रैलोक्यात्मकत्वात्। सहस्रयुगकालावस्थायी हि सः। दिशो ह्यस्य सर्व्वाः स्रक्तयः कोणा द्यौरस्य कोशस्योत्तरमूर्द्धं बिलं स एष यथोक्तगुणकोशः। वसुधानो वसु धीयतेऽस्मिन्प्राणिनां कर्म्मफलाख्यमतो वसुधानः। तस्मिन्नन्तर्विश्वं समस्तं प्राणिकर्म्मफलं स ह तत्साधनैरिदं यद्गृह्यते प्रत्यक्षादिप्रमाणैः श्रितमाश्रितं स्थितमित्यर्थः॥

तस्यास्य प्राचीदिक् प्राग्गतो भागो जुहूर्नाम। जुह्वत्यस्यां दिशि कर्म्मिणः प्राङ्मुखाः सन्त इति जुहूर्नाम। सहन्तेऽस्यां पापकर्म्मफलानि यमपुर्य्यां प्राणिन इति सहमाना नाम दक्षिणा दिक्। तथा राज्ञी नाम प्रतीची

---

ध्या॰ क्तफलसिद्ध्यर्थमुच्यत इत्यर्थः। कोशशब्देन हिरण्यादिनिक्षेपाधारा मञ्जूषोच्यते॥ कथं त्रैलोक्यात्मनः कोशत्वं तत्राह। कोश इवेति॥ अनेन धर्म्मसादृश्यं विशदयति। स चेति॥ तथापि कथमविनाशित्वं तत्राह। सहस्रेति॥ त्रैलोक्यात्मनि कोशदृष्टिस्तत्रापि भूमौ बुध्नदृष्टिरित्युक्तं। कोशस्य च सापेक्षमविनाशित्वं ध्येयत्वेन दर्शितं। सम्प्रति दिक्षु कोशकोणदृष्टिः कर्त्तव्येत्याह। दिशो हीति॥ दिवि कोशस्योर्द्ध्वबिलबुद्धिं दर्शयति। द्यौरिति॥ यथोक्ते कोशे वसुधानत्वदृष्टिं दर्शयति। यथोक्तेति॥ तदेव समर्थयते। तस्मिन्निति॥

कोशकोणत्वेनोक्तासु दिक्ष्ववान्तरविभागमाह॥ तस्येत्यादिना॥ दिशां विशिष्टनामवतीनामनु चिन्तनीयत्वमुक्त्वा तस्-

उ॰ वेद न पुत्ररोदꣳ रोदिति सोऽहमेतमेवं वायुं दिशां वत्सं वेद मा पुत्ररोदꣳ रुदं ॥ २ ॥ अरिष्टं कोशं प्रपद्येऽमुनाऽमुनाऽमुना प्राणं प्रपद्येऽमुनाऽमुनाऽमुना भूः प्रपद्येऽमुनाऽमुनाऽमुना भुवः

---

भा॰ पश्चिमा दिक् राज्ञी । राज्ञा वरुणेनाधिष्ठिता सन्ध्यारागयोगाद्वा । सुभूता नाम भूतिमद्भिरीश्वरकुवेरादिभिरधिष्ठितत्वात्सुभूता नामोदीची । तासां दिशां वायुर्वत्सो दिग्जत्वाद्वायोः । पुरोवात इत्यादिदर्शनात् । स यः कश्चित्पुत्रदीर्घजीवितार्थ्येवं यथोक्तगुणं वायुं दिशां वत्समस्तं वेद स न पुत्ररोदं पुत्रनिमित्तं रोदनं न रोदिति पुत्रो न म्रियत इत्यर्थः । यत एवं विशिष्टं कोशं दिग्वत्सविषयं विज्ञानं अतः सोऽहं पुत्रजीवितार्थ्येवमेतं वायुं दिशां वत्सं वेद जानेऽतः पुत्ररोदं मा रुदं पुत्रमरणनिमित्तं पुत्ररोदो मम माभूदित्यर्थः ॥

अरिष्टमविनाशिनं कोशं यथोक्तं प्रपद्ये प्रपन्नोऽस्मि पुत्रायुषे । अमुनामुनेति त्रिर्नाम गृह्णाति पुत्रस्य तथा

---

आ॰ त्वन्धिनं वायुं तद्वत्समभराधर्म्मायां चिन्तयेदित्याह । तासामित्यादिना ॥ पुरोवातादीत्यादिशब्दस्तथाविधलौकिकवैदिकप्रयोगसङ्ग्रहार्थः ॥ यथोक्तस्य विज्ञानस्य फलवत्त्वमिदानीं दर्शयति । स य इति ॥ यथोक्तगुणमित्यस्य प्रकटीकरणं विशिनष्टि । अमृतमिति ॥ सफलमुपासनमुपदिश्यमुपसंहरति । यत इति ॥
दीर्घायुष्ट्वं पुत्रस्य कामयमानस्त्रैलोक्यात्मानं कोशाकारं परिकल्प्य तस्य चतस्रो दिशो विशिष्टनामवतीस्तासां स्त्रीत्वं तत्स-

ॐ प्रपद्येऽमुनाऽमुनाऽमुना स्वःप्रपद्येऽमुनाऽमुनाऽमुना॥ ३ ॥ स यदवोचं प्राणं प्रपद्य इति प्राणो वा इदꣳ सर्व्वं भूतं यदिदं किञ्च तमेव तत्प्रापत्सि ॥ ४ ॥ अथ यदवोचं भूः प्रपद्य इति पृथिवीं प्रपद्येऽन्तरिक्षं प्रपद्ये दिवं प्रपद्य इत्येव तदवोचं ॥ ५ ॥ अथ यदवोचं भुवः प्रपद्य इत्यग्निं प्रपद्ये वायुं प्रपद्य आदित्यं प्रपद्य इत्येव तदवोचं ॥ ६ ॥

---

भा॰ प्राणं प्रपद्येऽमुनाऽमुना भूः प्रपद्येऽमुनाऽमुना भुवः प्रपद्येऽमुनाऽमुना स्वः प्रपद्येऽमुनाऽमुना सर्व्वत्र प्रपद्ये इति नाम गृह्णाति पुनः पुनः। स यदवोचं प्राणं प्रपद्य इति व्याख्यानार्थमुपन्यासः। प्राणो वा इदꣳ सर्व्वं भूतं यदिदं जगत्॥

यथा वा अरा नाभाविति वक्ष्यति। अतस्तमेव सर्व्वं तत्त्वेन प्राणप्रतिपादनेन प्रापत्सि प्रपन्नोऽभूवं। तथा भूः प्रपद्य इति त्रीँल्लोकान् भूरादीन्प्रपद्य इति तदवोचं।

---

व्या॰ स्कन्धेन वायुं तद्वत्समसरणधर्म्माणं चिन्तयेदिति प्रधानोपास्तिरुक्ता। सम्प्रति तदङ्गं जपं दर्शयति। अरिष्टमित्यादिना॥ अमुनाऽनेन पुत्रेण निमित्तभूतेन दीर्घायुष्ट्वं निमित्तीकृत्येत्यर्थः। सर्व्वत्र सर्व्वेषु प्रपद्य इति क्रियापदमुपायं दर्शयितुं पुनरुपात्तं निमित्तवेदनार्थञ्च पुनः पुनर्मन्त्रेषु पुत्रस्य त्रिर्नाम गृह्णातीति योजना॥ अरिष्टमित्यादिमन्त्रस्य प्रागेव व्याख्यातत्वात्प्राणमित्यादिमन्त्रमादाय व्याचष्टे। स यदिति॥ सशब्दो वक्तृविषयः॥

प्राणस्य सर्व्वात्मत्वे वाक्यशेषमनुगुणं दर्शयति। यथेति॥ तत्सर्व्वात्म्यमतःशब्दार्थः। कदा पुनरेषां मन्त्राणां जप इत्यपे-

उ॰ अथ यदवोचꣳ स्वः प्रपद्य इत्यृग्वेदं प्रपद्ये यजुर्वेदं प्रपद्ये सामवेदं प्रपद्य इत्येव तदवोचं तदवोचं ॥ ७ ॥ १५ ॥

पुरुषो वाव यज्ञस्तस्य यानि चतुर्विꣳशति

---

भा॰ अथ यदवोचं भुवः प्रपद्य इत्यग्न्यादीन्प्रपद्य इति तदवोचं। अथ यदवोचं स्वः प्रपद्य इत्यृग्वेदादीन्प्रपद्य इत्येव तदवोचमिति । उपरिष्टान्मन्त्राञ्जपेत्ततः पूर्व्वोक्तमजरं कोशं सदिग्वत्सं यथावद्ध्यात्वा द्विर्वचनमादरार्थः ॥ १५ ॥

पुत्रायुषमुपासनमुक्तं जपश्च अथेदानीमात्मनो दीर्घजीवनायेदमुपासनं जपञ्च विदधत्तदाह। जीवन् हि स्वयं पुत्रादिफलेन युज्यते नान्यथेति । अत आत्मानं यज्ञं सम्पादयति पुरुषः। पुरुषो जीवनविशिष्टः कार्य्यकरणसङ्घातो यथा प्रसिद्ध एव। वावशब्दोऽवधारणार्थः । पुरुष एव यज्ञ इत्यर्थः ॥

तथा हि सामान्यैः सम्पादयति यज्ञत्वं। कथं तस्य

---

व्या॰ च्छायां पूर्व्वोक्तप्रधानविद्यानन्तरमित्याह । उपरिष्टादिति ॥ ध्यात्वोपरिष्टादिति सम्बन्धः यथोक्तविज्ञाने जपे वादरः॥ १५ ॥ वृत्तमनूद्य पुरुषो वावेत्यादिखण्डान्तरमवतारयति । पुत्रायुष इति ॥ किमित्यात्मनो दीर्घजीवनं समर्थ्यते तत्राह। जीवन्निति ॥ यथोक्तफलहेतुभूतां विद्यामुत्थापयति। अत आत्मानमिति ॥ कथं पुरुषस्यात्मनो यज्ञत्वं सम्पाद्यते तत्राह। पुरुष इति ॥

अवधारणार्थं समर्थयते। तथा हीत्यादिना ॥ यज्ञावयवसादृश्यात्पुरुषे यज्ञदृष्टिः कर्त्तव्येत्युक्तं। कथं सादृश्याद्यज्ञसम्पा-

ॐ वर्षाणि तत्प्रातः सवनं चतुर्विꣳशत्यक्षरा गायत्री गायत्रं प्रातःसवनं तदस्य वसवोऽन्वायत्ताः प्राणा वाव वसव एते हीदꣳ सर्वं वासयन्ति ॥ १ ॥

---

भा० पुरुषस्य यानि चतुर्विंशतिवर्षाण्यायुषस्तत्प्रातःसवनं पुरुषाख्यस्य यज्ञस्य केन सामान्येनेत्याह । चतुर्विंशत्यक्षरा गायत्रीछन्दो गायत्रीछन्दस्कं हि विधियज्ञस्य प्रातःसवनं । अतः प्रातःसवनसम्पन्नेन चतुर्विंशतिवर्षायुषा युक्तः पुरुषः । अतो विधियज्ञसादृश्याद्यज्ञः । तथोत्तरयोरप्या-

---

व्या० दनमिति पृच्छति । कथमिति ॥ तत्रोच्यते । षोडशाधिकं वर्षशतं पुरुषस्यायुः फलभूतं तत्त्रेधा विभज्य चतुर्विंशति वर्षायुषि प्रातःसवनदृष्टिः कर्त्तव्येत्याह । तस्येति ॥ गायत्रीछन्दसश्चतुर्विंशत्यक्षरत्वेऽपि कथंशब्दोक्ता प्रातःसवनदृष्टिरित्याशङ्क्याह । गायत्रीति ॥ विधितोऽनुष्ठेयमानस्य विधियज्ञस्य प्रातःकालोपलक्षितं कर्म्म प्रातःसवनं तत्र स्तोत्रादि गायत्र्यछन्दस्कं गायत्र्यं प्रातःसवनमिति च श्रुतिरित्यर्थः । यथोक्ते पुरुषायुषि प्रातःसवने चतुर्विंशत्यक्षराणि । फलितमाह । अत इति ॥ तथापि कथं पुरुषायुषस्य यज्ञत्वं तदाह । अत इति ॥ अतःशब्दस्यैवार्थो विधियज्ञसादृश्यादिति विधिनानुष्ठीयमानो यज्ञो विधियज्ञस्तेन सादृश्यं पुरुषस्य प्रातःसवनसम्बन्धं तस्मात्पुरुषो यज्ञ इत्यर्थः । यथा यथोक्ते पुरुषायुषि प्रातःसवनसम्पत्तिस्तथा वक्ष्यमाणयोरपि पुरुषायुषोर्माध्यन्दिनं सवनं तृतीयसवनमिति सवनद्वयसम्पत्तिर्द्रष्टव्येत्याह । तथेति ॥ चतुर्विंशतिवर्षमिति पुरुषायुषि प्रातःसवनमतः सङ्ख्यासामान्याद्वक्ष्यमाणपुरुषायुषोः सवनद्वयसम्पत्तौ किं कारणमित्याशङ्क्याह । त्रिष्टुबिति ॥ चतुश्चत्वारिंशदक्षरा त्रिष्टुप् प्रसिद्धा । त्रैष्टुभञ्च माध्यन्दिनं सवनं । अष्टाचत्वारिंशदक्षरा जगती । जागतं च तृती-

उ॰ तञ्चेदेतस्मिन्वयसि किञ्चिदुपतपेत्स ब्रूयात्प्राणा वसव इदं मे प्रातःसवनं माध्यन्दिनꣳ सवनमनुसन्तनुतेति माहं प्राणानां वसूनां मध्ये यज्ञो

---

भा॰ युषोः सवनद्वयसम्पत्तिः। त्रिष्टुब्जगत्यक्षरसङ्ख्यासामान्यतो वाच्या॥

किञ्च तदस्य पुरुषयज्ञस्य प्रातःसवनं विधियज्ञस्येव वसवो देवा अन्वायत्ता अनुगताः। सवनदेवतात्वेन स्वामिन इत्यर्थः। पुरुषयज्ञेऽपि विधियज्ञ इवाग्न्यादयो वसवो देवाः प्राप्ता इत्यतो विशिनष्टि प्राणा वाव वसवो वागादयो वायवश्च ते हि यस्मादिदं पुरुषादिप्राणिजातमेते वासयन्ति। प्राणेषु हि देहे वसत्सु सर्व्वमिदं वसति नान्यथा इति। अतो वसनाद्वासनाच्च वसवः। तञ्चेद्यज्ञसम्पादितमेतस्मिन्प्रातःसवनसम्पन्ने वयसि किञ्चिद्व्याध्यादिमरणशङ्काकारणमुप तपेत् दुःखमुत्पादयेत् स तदा यज्ञसम्पादी पुरुष आत्मानं यज्ञं मन्यमानो ब्रूयाज्जपेदि-

---

व्या॰ यसवनमतः सङ्ख्यासामान्यादुत्तरयोः पुरुषायुषोः सवनद्वयसम्पद्युक्तेत्यर्थः॥

पुरुषस्य यज्ञत्वे विधियज्ञेन सह सादृश्यान्तरमाह। किञ्चेति॥ प्रातःसवने वसूनां तद्देवतात्वेनान्वायत्तत्वेनैव सङ्क्षिपति। सवनदेवतात्वेन स्वामिन इत्यर्थ इति॥ वसूनां सवनस्वामित्वमुभयत्र तुल्यमित्युक्ते प्रसिद्धान्वसून् पुरुषयज्ञेऽपि प्राप्तान्प्रत्युदस्यति। पुरुषयज्ञेऽपीति॥ तेषु वसुशब्दप्रवृत्तिं साधयति। ते हीति॥ निमित्तान्तरमाह। प्राणेषु हीति॥ प्राणानां वसुत्वमुपपादितमुपसंहरति। इत्यत इति॥ सम्प्रति

उ० विलोप्सीयेत्युद्धैव तत एत्यगदो ह भवति ॥ २ ॥ अथ यानि चतुश्चत्वारिꣳशद्वर्षाणि तन्माध्यन्दिनꣳ सवनं चतुश्चत्वारिꣳशदक्षरा त्रिष्टुप् त्रैष्टुभं माध्यन्दिनꣳ सवनं तदस्य रुद्रा अन्वायत्ताः प्राणा वाव रुद्रा एते हीदꣳ सर्वꣳ रोदयन्ति ॥ ३ ॥ तञ्चेदेतस्मिन्वयसि किञ्चिदुपतपेत् स ब्रूयात्प्राणा रुद्रा इदं मे माध्यन्दिनꣳ सवनं तृतीयसवनमनुसन्तनुतेति माऽहं प्राणानाꣳ रुद्राणां

---

भा० त्यर्थं इमं मन्त्रं। हे प्राणा वसव इदं मे प्रातःसवनं मम यज्ञस्य वर्त्तते तन्माध्यन्दिनं सवनमनुसन्तनुतेति माध्यन्दिनेन सवनेनायुषा सहितमेकीभूतं सततं कुरुतेत्यर्थः। माऽहं यज्ञो युष्माकं प्राणानां वसूनां प्रातःसवनेशानां मध्ये विलोप्सीय विलुप्येयं विच्छिद्येयमित्यर्थः। इतिशब्दो मन्त्रसमाप्त्यर्थः। स तेन जपेन ध्यानेन च ततस्तस्मादुपतापादुदेत्युद्गच्छति उद्गम्य विमुक्तः सन्नगदो हानुपतापो भवत्येव अथ यानि चतुश्चत्वारिंशद्वर्षाणीति

---

व्या० पुरुषयज्ञविद्याङ्गभूतमाशीर्वादप्रयोगं दर्शयति। तञ्चेदिति॥ अनुसन्तनुतेत्यत्रानुपदमेकीभावे मन्त्रजपस्य सानुबन्धित्वं विधियज्ञेन समानं। तस्य यानि चतुर्विंशति वर्षाणीत्यादिनेति शेषः॥

प्राणेषु रुद्रशब्दप्रवृत्तौ निमित्तमाह। रुदन्तीति॥ यदुक्तं रोदयन्तीति रुद्रा इति तदुपपादयति। रुद्रा हीति॥ यथा प्राणा वसवो रुद्रास्चोक्तास्तथेति यावत्॥ तेष्वादित्यशब्दप्रवृत्तौ निमित्तमाह। ते हीति॥ तञ्चेत्यादिना पूर्वेण ग्रन्थेन तञ्चेदे-

उ॰ मध्ये यज्ञो विलोप्सीयेत्युद्धैव तत एत्यगदो ह भवति ॥ ४ ॥ अथ यान्यष्टाचत्वारिꣳशद्वर्षाणि तत्तृतीयसवनमष्टाचत्वारिꣳशदक्षरा जगती जागतं तृतीयसवनं तदस्यादित्या अन्वायत्ताः प्राणा वावादित्या एते हीदꣳ सर्वमाददते ॥ ५ ॥ तञ्चेदेतस्मिन्वयसि किञ्चिदुपतपेत्स ब्रूयात् प्राणा आदित्या इदं मे तृतीयसवनमायुरनुसन्तनुतेति माऽहं प्राणानामादित्यानां मध्ये यज्ञो विलोप्सीयेत्युद्धैव तत एत्यगदो हैव भवति ॥ ६ ॥

एतद्ध स्म वै तद्विद्वानाह महिदास ऐतरेयः स किं म एतदुपतपसि योऽहमनेन न प्रेष्यामीति

---

भा॰ समानं । रुदन्ति रोदयन्तीति प्राणा रुद्रा हि क्रूरास्ते मध्यमे वयस्यतो रुद्राः । तथादित्याः प्राणाः । ते हीदं शब्दादिजातमाददतेऽत आदित्यास्तृतीयसवनमायुः षोडशोत्तरवर्षशतं समापयतानुसन्तनुत यज्ञं समापयतेत्यर्थः । समानमन्यत् ॥

निश्चिता हि विद्या फलायेत्येतद्दर्शयन्नुदाहरत्येतद्धदर्शनं ह स्म वै किल तद्विद्वानाह महिदासो नामतः ।

---

आ॰ तस्मिन्नित्यादिवक्ष्यमाणग्रन्थस्य तुल्यार्थत्वान्न व्याख्यानापेक्षेत्याह । समानमन्यदिति ॥

महिदासोदाहरणस्य तात्पर्यमाह । निश्चिता हीति ॥ तदेतद्यज्ञदर्शनं विद्वानाह स्मेति सम्बन्धः । ह वा इति निपतयोः कि-

उ॰ स ह षोडशं वर्षशतमजीवत्प्र ह षोडशं वर्षशतं जीवति य एवं वेद ॥ ७॥ १६॥

स यदशिशिषति यत्पिपासति यन्न रमते ता अस्य दीक्षा॥ १॥ अथ यदश्नाति यत्पिबति यद्र-

---

भा॰ इतराया अपत्यमैतरेयः। किं कस्मान्मे ममैतदुपतपनमुपतपसि स त्वं हे रोग योऽहं यज्ञोऽनेन त्वत्कृतेनोपतापेन न प्रेष्यामि न मरिष्याम्यतो वृथा तव श्रम इत्यर्थः। इत्येवमाह स्मेति पूर्वेण सम्बन्धः। स एवंनिश्चयः सन्षोडशवर्षशतमजीवत्। अन्योऽप्येवंनिश्चयः षोडशं वर्षशतं प्रजीवति य एवं यथोक्तं यज्ञसम्पादनं वेद जानाति स इत्यर्थः॥ १६॥

स यदशिशिषतीत्यादिर्यज्ञसामान्यनिर्देशः पुरुषस्य पूर्वेणैव सम्बध्यते। यदशिशिषत्यशितुमिच्छति। तथा पिपासति पातुमिच्छति। यन्न रमत इष्टाद्यप्राप्तिनिमित्तं यदेवंजातीयकं दुःखमनुभवति ता अस्य दीक्षा। दुःखसामा-

---

व्या॰ लेत्यर्थः। उक्तस्य चोदाहरणप्रसिद्धिविषयः। हे रोग कस्मान्मां त्वं उपतपसीति सम्बन्धः। कस्मादित्याक्षेपे हेतुमाह। योऽहमिति॥ यो यज्ञः सोऽहमनेनेति योजना॥ इतिशब्दस्यान्वयमाचष्टे। इत्येवमिति॥ निश्चिताया विद्याया ध्यानं प्रति फलं कथयति। स एवमिति॥ यद्यपि महिदासस्य यथोक्तनिश्चयवतो यथोक्तं तथापीदानीन्तनस्य किमायातमित्याशङ्क्याह। अन्योऽपीति॥ प्रजीवतीति जीवनस्य प्रकर्षो रोगाद्युपतापराहित्यं प्रशब्देनोच्यते॥ एवंनिश्चय इत्युक्तं पुरुषं विशदयति। य एवमिति॥ १६॥

ननु पूर्वेणाशीर्वादप्रयोगेणोदाहरणेनैव समनन्तरग्रन्थस्य सम्बन्धो नोपलभ्यते तत्राह। स यदिति॥ पूर्वेण तस्य यानि

उ० मते तदुपसदैरेति ॥ २॥ अथ यद्धसति यज्जक्षति यन्मैथुनं चरति स्तुतशस्त्रैरेव तदेति ॥ ३ ॥ अथ यत्तपोदानमार्जवमहिꣳसा सत्यवचनमिति ता अस्य दक्षिणाः ॥ ४ ॥

तस्मादाहुः सोष्यत्यसोष्टेति पुनरुत्पादनमेवास्य

---

भा० न्यादिविधियज्ञस्येव । अथ यदश्नाति यत्पिबति यद्रमते रतिञ्चानुभवति इष्टादिसंयोगात्तदुपसदैः समानतामेति ॥ उपसदाञ्च पयोव्रतत्वनिमित्तं सुखमस्ति । अल्पभोजनीयानि चाद्यान्यासन्नानीति प्रश्वासोऽतोऽशनादीनामुपसदाञ्च सामान्यमथ यद्धसति यज्जक्षति भक्षयति यन्मैथुनं चरति स्तुतशस्त्रैरेव तत्सामान्यमेति । शब्दवत्त्वसामान्यात् ॥ अथ यत्तपो दानमार्जवमहिंसा सत्यवचनमिति ता अस्य दक्षिणाः। धर्मपुष्टिकरत्वसामान्यात् । यस्माच्च यज्ञः पुरुष-

---

व्या० चतुर्विंशतिवर्षाणीत्यादिना साहश्यनिर्देशेनेत्यर्थः। एवंजातीयकमशनायादित्वमिति यावत् ॥ अशिशिषादिषु दीक्षादृष्टौ हेतुमाह । दुःखेति ॥ दीक्षावचनसादृश्यात्पुरुषस्य यज्ञत्वमुक्तमिदानीमुपसदुपेतत्वसादृश्यादपि तस्य यज्ञत्वं विज्ञेयमित्याह। अथेति॥ अशनादिषु कथमुपसद्दृष्टिस्तत्राह। उपसदाञ्चेति॥ पयोव्रतत्वं पयोभक्षणयुक्तत्वं । यज्ञे यान्यद्यान्यभोजनीयानि प्रसिद्धानि तानि चोपसत्सु क्रियमाणान्यासन्नानीति तासु प्रश्वासः स्वास्थ्यविशेषः । अशनादिषु च सोऽस्तीति प्रसिद्धमित्यर्थः । सुखनिमित्तत्वं क्लेशनिवृत्तिहेतुत्वञ्च सामान्यं स्तुतशस्त्रवैशिष्ट्यसाम्यादपि पुरुषस्य यज्ञत्वमित्याह। अथ यदिति॥ हासादिषु स्तुतशस्त्रदृष्टौ हेतुमाह। शब्दवत्त्वेति॥

दक्षिणावत्त्वसाम्यादपि पुरुषस्य यज्ञत्वमवधेयमित्याह। अथे-

उ० तन्मरणमेवास्य तन्मरणमेवावभृथः ॥५॥ तद्धै तद्घोर आङ्गिरसः कृष्णाय देवकीपुत्रायोक्त्वोवाचाऽपिपास एव स बभूव सोऽन्तवेलायामेतत्त्रयं

---

भा० स्तस्मात्तं जनयिष्यति माता यदा तदाऽऽङ्गरन्ये सोष्यतीति तस्य मातरं यदा च प्रसूता भवति तदाऽसोष्ट पूर्णिकेति विधियज्ञ इव सोष्यति सोमं देवदत्तोऽसोष्ट सोमं यज्ञदत्त इत्यतः शब्दसामान्याद्वा पुरुषो यज्ञः पुनरुत्पादनमेवास्य तत्पुरुषाख्यस्य यज्ञस्य यत्सोष्यत्यसोष्टेति शब्दसम्बन्धित्वं विधियज्ञस्येव। किञ्च तन्मरणमेवास्य पुरुषयज्ञस्यावभृतः। समाप्तिसामान्यात्। तद्धैतत् यज्ञदर्शनं घोरो नामत आङ्गिरसो गोत्रतः कृष्णाय देवकीपुत्राय शिष्यायोक्त्वोवाच तदेतत्त्रयमित्यादिव्यवहितेन सम्बन्धः। स चैतद्दर्शनं श्रुत्वाऽपिपास एवान्याभ्यो विद्याभ्यो बभूव॥

---

व्या० ति॥ तपोदानादिषु दक्षिणादृष्टौ हेतुमाह। धर्म्मेति॥ प्रकारान्तरेण पुरुषस्य यज्ञत्वं साधयति। यस्माच्चेति॥ षूङ् प्राणिप्रसवे षुञ् अभिषव इति धातुद्वयदर्शनात्प्रसवे कण्डने च साधारणः सवनशब्दस्ततः सवनशब्दसामान्याद्वा पुरुषे यज्ञदृष्टिः कर्त्तव्येत्यर्थः॥ पुरुषगतं शब्दसामान्यं विशदयति। पुनरिति॥ यत् पुनरस्य पुरुषाख्यस्य विधियज्ञस्येव सोष्यतीत्यादिशब्दसम्बन्धित्वं तदुत्पादनमेव तदिति योजना॥ अवभृतसम्बन्धित्वादपि पुरुषस्य यज्ञत्वमस्तीत्याह। किञ्चेति॥ पुरुषे यज्ञदृष्टिरुक्ता सम्प्रति विशिष्टपुरुषसम्बन्धेन विद्यां स्तोतुं विद्याङ्गञ्च जपं विधातुमुपक्रमते। तद्धैतदिति॥ देवकीपुत्रस्यैतद्दर्शनं श्रवणफलमाह। स चेति॥

उ॰ प्रतिपद्येताक्षितमस्यच्युतमसि प्राणसꣳशितमसीति तत्रैते द्वे ऋचौ भवतः॥ ६॥

---

भा॰ इत्यस्य विशिष्टेयं विद्या यत्कृष्णस्य देवकीपुत्रस्यान्यां विद्यां प्रति तृड्विच्छेदकरीति पुरुषयज्ञविद्यां स्तौति घोर आङ्गिरसः कृष्णायोक्त्वेमां विद्यां किमुवाचेति तदाह। स एवं यथोक्तयज्ञविदन्तवेलायां मरणकाल एतन्मन्त्रत्रयं प्रतिपद्येत जपेदित्यर्थः। किन्तदक्षितमक्षीणमक्षतं वासीत्येकं यजुः। सामर्थ्यादादित्यस्थं प्राणं चैकीकृत्याह। तथा तमेवाहाच्युतं स्वरूपादप्रच्युतमसीति द्वितीयं यजुः। प्राणसंशितं प्राणस्य संशितं सम्यक्तनूकृतञ्च सूक्ष्मं तत्त्वमसीति तृतीयं यजुः। तत्रैतस्मिन्नर्थे विद्यास्तुतिपरे द्वे ऋचौ मन्त्रौ भवतो न जपार्थे त्रयं प्रतिपद्येतेति त्रित्वसङ्ख्याबाधनात् पञ्चसङ्ख्या हि तदा स्यात्॥

---

व्या॰ किमर्थेयं गुरुशिष्याख्यायिकेत्याह। इत्यस्येति॥ अक्षितमसीति कीदृशीं देवतां प्रत्युच्यते तत्राह। सामर्थ्यादिति॥ निकृष्टस्य स्तुतिसम्बन्धायोगात्पुरुषयज्ञे सवनदेवतान्तरानुपपत्तेश्च प्राणानामेवाधिदैविकं रूपमादित्याख्यं जप्यमन्त्रार्थत्वेन सम्बध्यत इत्यर्थः॥ द्वितीयमन्त्रस्यार्थान्तरं वारयति। तथेति॥ प्रथममन्त्रवदित्यर्थः। न च द्वयोरेकार्थत्वे सत्यनन्तरस्य वैयर्थ्यं द्वयोरपि जप्यत्वेनोपयुक्तत्वादिति द्रष्टव्यं॥ मन्त्रत्रयप्रतिपाद्यं सावित्रं तत्त्वमृग्भ्यामपि प्रतिपादितमिति प्रत्ययदार्ढ्यार्थमाह। तत्रेति॥ किमिति विद्यास्तुतिपरत्वमनयोरिष्यते जपार्थत्वमेव किं न स्यात्तत्राह। नेत्यादिना॥ ऋचोर्जपार्थत्वेऽपि त्रित्वसङ्ख्यायाः सत्त्वान्न सा बाध्येत्याशङ्क्याह। पञ्चेति॥ अनयोर्जप्यत्वे पञ्चकं प्रतिपद्येतेति पञ्चसङ्ख्याया वक्तव्यत्वात्त्रित्वं बाधितं स्यादित्यर्थः॥

उ॰ आदित्प्रत्नस्य रेतसः ।

भा॰ आत् इदित्यत्र आकारस्यानुबन्धः । तकारोऽनर्थक इच्छब्दस्य। प्रत्नस्य चिरन्तनस्य पुराणस्येत्यर्थो रेतसः कारणस्य वीजभूतस्य जगतः सदाख्यस्य ज्योतिः प्रकाशं पश्यन्ति। आशब्द उत्सृष्टानुबन्धः पश्यन्तीत्यनेन सम्बध्यते । किं ज्योतिः पश्यन्ति। वासरमहरहरिव तत्सर्व्वतो व्याप्तं ब्रह्मणो ज्योतिः। निवृत्तचक्षुषो ब्रह्मविदो ब्रह्मचर्य्यादिनिवृत्तिसाधनेन शुद्धान्तःकरणा आ समन्ततो ज्योतिः पश्यन्तीत्यर्थः । परःपरमिति लिङ्गव्यत्ययेन । ज्योतिः परत्वात्।

व्या॰ आदित्प्रत्नस्य रेतसो ज्योतिः पश्यन्ति वासरं परो यदिध्यते दिवीति मन्त्रस्य प्रतीकग्रहणमादित्प्रत्नस्य रेतस इति तत्पदच्छेदपूर्व्वकं व्याचष्टे । आदित्यादिना । इच्छब्दस्यानर्थक इति पूर्व्वेण सम्बन्धः॥ किन्तत्कारणमित्यपेक्षायां सदेव सौम्येदमिति श्रुतिसिद्धं ब्रह्मेत्याह। सदाख्यस्येति॥ आनन्दम्ब्रह्मणो विद्वानिति तत् प्रत्नस्य ज्योतिरिति सम्बन्धो द्रष्टव्यः। उत्सृष्टानुबन्धो ध्वस्ततकारः स इति यावत्॥ ननु ब्रह्मस्वरूपभूतमेतज्ज्योतिर्न च सर्व्वे पश्यन्ति तत्राह। निवृत्तचक्षुष इति॥ निवृत्तानि विमुखीकृतानि विषयेभ्यश्चक्षूंषि करणानि येषां ते तथा अत एव ब्रह्मविदः कश्चिद्धीरः प्रत्यगात्मानमैक्षत् आवृत्तचक्षुरमृतत्वमिच्छन्निति श्रुत्यन्तरं॥ तत्रैवोपायान्तरं सूचयति। ब्रह्मचर्य्यादिति॥ स्मरणं कीर्त्तनं केलिः प्रेक्षणं गुह्यभाषणं। सङ्कल्पोऽध्यवसायश्च क्रियानिर्व्वृतिरेव च। एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः। विपरीतं ब्रह्मचर्य्यमेतदेवाष्टलक्षणं॥ ब्रह्मचर्य्यादिपदेनाहिंसास्तेनादयो गृह्यन्ते। एतैर्निर्वृतिप्रधानैः साधनैः शुद्धमुद्दीपितमन्तःकरणं येषां ते तथा॥ व्यत्ययस्य हेतुमाह।

उ॰ उद्वयन्तमसस्परि ज्योतिः पश्यन्त उत्तरꣳ स्वः पश्यन्त उत्तरं देवं देवत्रा सूर्य्यमगन्म ज्योतिरुत्तममिति ज्योतिरुत्तममिति ॥ ७ ॥ १७ ॥

---

भा॰ यद्दिव्यते दीप्यते दिवि द्योतनवति परस्मिन्ब्रह्मणि वर्त्तमानं ॥

येन ज्योतिषेद्धः सविता तपति चन्द्रमा भाति विद्युद्विद्योतते ग्रहतारागणा विभासन्ते। किञ्चान्योन्यो मन्त्रदृगाह। यथोक्तं ज्योतिः पश्यन्। उद्वयं तमसोऽज्ञानलक्षणात्परि परस्तादिति शेषः। तमसो वा अपनेतृ यज्ज्योतिरुत्तरमादित्यस्थं परिपश्यन्तो वयमुदगन्मेति व्यवहितेन सम्बन्धः। तज्ज्योतिः स्व आत्मीयमस्मद्धृदि स्थितं। आदित्यस्थञ्च तदेकं ज्योतिः। यदुत्तरमुत्कृष्टतरमूर्ध्वतरं वा परं ज्योतिरपेक्ष्य पश्यन्त उदगन्म वयं। कथमुदगन्मेत्याह। देवं द्योतनवन्तं देवत्रा देवेषु सर्व्वेषु सूर्य्यं रसानां रश्मीनां प्राणानाञ्च जगत ईरणात्सूर्य्यस्तमुदगन्म गत-

---

व्या॰ ज्योतिः परस्मादिति। यत् स्वमहिम्नि प्रतिष्ठद्दीप्यते तत्परं ज्योतिरिति सम्बन्धः ॥

दीप्यमानत्वं विवृणोति। येनेति ॥ मन्त्रान्तरमवतारयति। किञ्चेति ॥ इतश्च विद्यास्तुत्यर्थेति यावत् ॥ किमाहेत्यपेक्षायां द्वितीयं मन्त्रमादत्ते। उद्वयमिति ॥ तं व्याकरोति। तमस इत्यादिना ॥ तस्यैव ज्योतिषः प्रभाने ज्योतिर्नान्यदस्तीत्यर्थः ॥ देवत्वेन प्रत्यगात्मत्वमाह। स्व इति ॥ तयोरेकत्वं स यश्चायमित्यादिषु श्रुत्यन्तरसिद्धन्दर्शयति। आदित्यस्थमिति ॥ तत्पदार्थं त्वंपदार्थञ्चोक्त्वा तयोरैक्यमुक्तं इदानीमेकीभूतं ज्योतिर्विशि-

उ० मनो ब्रह्मेत्युपासीतेत्यध्यात्ममथाधिदैवतमाकाशो ब्रह्मेत्युभयमादिष्टं भवत्यध्यात्मं चाधिदैवतं

---

भा० वन्तो ज्योतिरुत्तमं सर्व्वज्योतिर्भ्य उत्कृष्टतमं। अहो प्राप्ता वयमित्यर्थः। इदं तज्ज्योतिर्यदृग्भ्यां स्तुतं यद्यजुस्त्रयेण प्रकाशितं। द्विरभ्यासो यज्ञकल्पनापरिसमाप्त्यर्थः॥ १७॥

मनोमय ईश्वर उक्त आकाशात्मेति च ब्रह्मणो गुणैकदेशत्वेन। अथेदानीं मनआकाशयोः समस्तब्रह्मदृष्टिविधानार्थ आरम्भो मनो ब्रह्मेत्यादि। मनो मनुते अनेनेत्यन्तःकरणं तद्ब्रह्म परमित्युपासीतेति। एतदात्मविषयं दर्शनमध्यात्मं। अथाधिदैवतं देवताविषयमिदं वक्ष्यामः। आकाशो ब्रह्मेत्युपासीत। एवमुभयमध्यात्ममधिदैवतञ्चोभयं ब्रह्मदृष्टिविषयमादिष्टमुपदिष्टं भवति। आकाश-

---

व्या० नष्टि। यदुत्तरमिति॥ एकत्वधीफलं कथयति। पश्यन्त इति॥ फलमेव प्रश्नपूर्व्वकं विवृणोति। कथमित्यादिना॥ फलविषयं स्वानुभवं दर्शयति। अहो इति॥ मन्त्राणां मन्त्रयोश्चैकवाक्यत्वमुपसंहरति। इदन्तदिति॥ १७॥

ननु यज्ञविज्ञानेन वक्ष्यमाणविज्ञानस्य न सङ्गतिरस्तीति कथं पौर्व्वापर्य्यमित्याशङ्क्यानन्तरखण्डस्य व्यवहितेन सम्बन्धमाह। मनोमय इति। इति चेश्वर उक्त इति पूर्व्वेण सम्बन्धः॥ तत्र ब्रह्मणो गुणयोरेकदेशत्वेन मन आकाशश्चोक्त इत्याह। ब्रह्मण इति॥ यथोक्तगुणकब्रह्मदृष्ट्यसमर्थस्य तयोरेव सम्पूर्णब्रह्मदृष्टिकथनार्थमुत्तरं ग्रन्थमवतारयति। अथेति॥ एवमुभयमुपदिष्टं भवतीति सम्बन्धः॥ तदेवोभयं विभजते। अध्यात्ममिति॥ कथं मनोदृष्टिविषयत्वेनाध्यात्मं मनो ब्रह्मेत्युपासनं विधित्सते

उ॰ च ॥ १ ॥ तदेतच्चतुष्पाद्ब्रह्म वाक् पादः प्राणः पादश्चक्षुः पादः श्रोत्रं पाद इत्यध्यात्ममथाधिदैवतमग्निः पादो वायुः पाद आदित्यः पादो दिशः पाद इत्युभयमेवादिष्टं भवत्यध्यात्मं चैवाधिदैवतं

---

भा॰ मनसोः सूक्ष्मत्वात्। मनसोपलभ्यत्वाच्च ब्रह्मणो योग्यं मनो ब्रह्मदृष्टेः। आकाशस्य सर्वगतत्वात्सूक्ष्मत्वादुपाधिहीनत्वाच्च। तदेतन्मान आख्यं चतुष्पाद्ब्रह्म। चत्वारः पादा अस्येति। कथं चतुष्पात्त्वं मनसो ब्रह्मण इत्याह। वाक्प्राणश्चक्षुः श्रोत्रमित्येते पादा इत्यध्यात्मं॥

अथाधिदैवतमाकाशस्य ब्रह्मणोऽग्निर्वायुरादित्यो दिश इत्येते। एवमुभयमेव चतुष्पाद्ब्रह्मादिष्टं भवत्यध्यात्मञ्चैवाधिदैवतञ्च। तत्र मनसो वागेव ब्रह्मणश्चतुर्थः पाद इतरपादत्रयापेक्षया। वाचा हि पादेनेव गवादिवद्वक्तव्यविषयं प्रति तिष्ठति। अतो मनसः पाद इव वाक्। तथा प्राणो

---

आ॰ तत्राह। मनसेति॥ तथापि कथं ब्रह्मदृष्टेराकाशं विषयीभवति न हि तेनोपलभ्यते ब्रह्मेत्याशङ्क्याह। आकाशस्येति॥ ब्रह्मदृष्टेर्योग्यमिति पूर्व्वेण सम्बन्धः॥ अध्यात्ममधिदैवतं च विहितस्योपासनस्यानुचिन्तनं दर्शयति। तदेतदिति॥ मनसश्चतुष्पात्त्वं प्रश्नपूर्व्वकं व्युत्पादयति। कथमित्यादिना॥

आधिदैविकस्याकाशस्य चतुष्पात्त्वं प्रकटयति। अथेत्यादिना॥ मनआकाशयोरुक्तं चतुष्पात्त्वं निगमयति। एवमिति॥ आध्यात्मिकान्पादान् प्रपञ्चयति। तत्रेति॥ पादत्वं वाचो व्युत्पादयति। वाचा हीति॥ यथा गवादिर्गन्तव्यं पादेनैव प्राप्नोति देवदत्तोऽपि वाचैव पादेन वक्तव्यं विषयं प्रतिलभते। तेन

उ० च ॥ २ ॥ वागेव ब्रह्मणश्चतुर्थः पादः सोऽग्निना ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ॥ ३ ॥ प्राण एव ब्रह्मणश्चतुर्थः पादः स वायुना ज्योतिषा

---

भा० घ्राणः पादस्तेनापि गन्धविषयं प्रति च क्रामति । तथा चक्षुः पादः श्रोत्रं पाद इत्येवमध्यात्मं चतुष्पात्त्वं मनसो ब्रह्मणः । तथाधिदैवतमग्निवाय्वादित्यदिश आकाशस्य ब्रह्मण उदर इव गोः पादाविव लग्ना उपलभ्यन्ते । तेन तस्याकाशस्याग्न्यादयः पादा उच्यन्ते। एवमुभयमध्यात्मञ्चैवाधिदैवतं चतुष्पादादिष्टं भवति । तत्र वागेव मनसो ब्रह्मणस्तुर्थः पादः । सोऽग्निनाधिदैवतेन ज्योतिषा भाति च दीप्यते तपति च सन्तापञ्चौष्ण्यं करोति ॥

अथवा तैलघृताद्याग्नेयाशनेनेद्धा वाग् भाति च तपति च वदनायोत्साहवती स्यादित्यर्थो विद्वत्फलं भाति च

---

व्या० तस्या युक्तं पादत्वमित्यर्थः ॥ प्राणस्य वाच इव पादत्वं दर्शयति । तेनापीति ॥ आधिदैविकान्पादान्विवृणोति । तथेति ॥ यथा गोरुदरे पादा लग्ना लक्ष्यन्ते तथाकाशस्योदर इवाग्न्यादयो लग्ना दृश्यन्ते । तस्मात्तस्य ते पादा इव भवन्तीत्यर्थः ॥ द्विविधपादविवरणमुपसंहरति । एवमिति ॥ सम्प्रत्याध्यात्मिकपादानामाधिदैविकपादैरधिष्ठेयतया सम्बन्धोऽनुचिन्तनीय इति दर्शयितुमुपक्रमते । तत्रेति ॥ सोऽग्निनेत्यादेरर्थान्तरमाह । अथवेति ॥ कीर्त्तियशसोः प्रत्यक्षत्वपरोक्षत्वाभ्यां भेदः सर्व्वत्रोभयतः सम्बध्यते ॥ १८ ॥ खण्डान्तरस्य सङ्गतिमाह । आदित्य

उ० भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ॥ ४ ॥ चक्षुरेव ब्रह्मणश्चतुर्थः पादः स आदित्येन ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ॥ ५ ॥ श्रोत्रमेव ब्रह्मणश्चतुर्थः पादः स दिग्भिर्ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ॥ ६ ॥ १८ ॥ आदित्यो ब्रह्मेत्यादेशस्तस्योपव्याख्यानमसदेवेदमग्र आसीत् ।

---

भा० तपति च कीर्त्त्या यशसा ब्रह्मवर्चसेन य एवं यथोक्तं वेद । तथा प्राण एव ब्रह्मणश्चतुर्थः पादः ॥ स वायुना गन्धात्मना भाति च तपति च । तथा चक्षुरादित्येन रूपग्रहणाय श्रोत्रं दिग्भिः शब्दग्रहणाय विद्याफलं समानं सर्व्वत्र ब्रह्मसम्पत्तिरदृष्टं फलं य एवं वेद । द्विरुक्तिर्दर्शनसमाप्त्यर्था ॥ १८ ॥ आदित्यो ब्रह्मणः पाद उक्त इति तस्मिन् सकलब्रह्मदृष्ट्यर्थमिदमारभ्यते । आदि-

---

आ० इति ॥ तस्येत्यादित्यो गृह्यते ॥ अनभिव्यक्तनामरूपत्वाभिप्रायेणासच्छब्दो गौणो व्याख्यातस्तच्चैवकारावष्टम्भेन प्रवृत्ते । नन्विति ॥ कथमसतः सज्जायेतेति । असत्कारणत्वस्य षष्ठे निराकरिष्यमाणत्वात्तत्र सत्कारणं भवतु प्रकृते तु सावधारणादसच्छब्दादसदेव कारणं विवक्षितमित्युदितानुदितहोमवद्वि-

भा० त्योब्रह्मेत्यादेश उपदेशस्तस्योपव्याख्यानं क्रियते स्तुत्यर्थमसद्व्याकृतनामरूपमिदं जगदशेषमग्रे प्रागवस्थायामुत्पत्तेरासीन्न त्वसदेव। कथमसतः सज्जायेतेत्यसत्कार्य्यत्वस्य प्रतिषेधात्। न त्विहासदेवेति विधानाद्विकल्पः स्यात्।

न क्रियास्विव वस्तुनि विकल्पानुपपत्तेः कथं तर्हीदमसदेवेति। नन्ववोचामाव्याकृतनामरूपत्वादसदिवासदिति। नन्वेवशब्दोऽवधारणार्थः सत्त्वमेव न तु सत्त्वाभावमवधारयति। किं तर्हि नामरूपव्याकृतविषये सच्छब्दप्रयोगो दृष्टः। तच्च नामरूपव्याकरणमादित्यायत्तं प्रायशो जगतस्तदभावे ह्यन्धं तम इदं न प्रज्ञायेत। किञ्च नेत्यतस्तत्स्तुतिपरे वाक्ये सदपीदं प्रागुत्पत्तेर्जगदसदेवेत्यादित्यं स्तौति ब्रह्मदृष्ट्यर्हत्वाय। आदित्यनिमित्तो हि लोके सदिति व्यवहारः। तथाऽसदेवेदं राज्ञः

---

व्या० कल्प इत्यर्थः॥ क्रियायाः कर्त्तृतन्त्रत्वात्तदिच्छया तत्र विकल्पाद्वस्तुनस्तु सिद्धस्य तदिच्छाननुविधायित्वान्न विकल्पः सम्भवति। न हि स्थाणुरेव कस्यचिदपेक्षया पुरुषो भवतीति परिहरति। न क्रियास्विवेति॥ विकल्पासम्भवे वाक्यस्य गतिर्वक्तव्येति पृच्छति। कथमिति॥ असच्छब्दस्य वा गतिरवधारणस्य वा पृच्छ्यते तत्राद्यं प्रत्याह। नन्विति॥ द्वितीयं शङ्कते। नन्वेवशब्द इति॥ तस्य का गतिरिति शेषः॥ पूर्व्वकालीनसत्त्वाभिधायकासीच्छब्दस्य वाक्यशेषे श्रवणान्नोपक्रमे च सत्त्वाभावावधारणं विवक्षितं किन्त्वभिव्यक्त्यभावावधारणमादित्यस्तुत्यर्थमिति समाधत्ते। सत्यमेवमिति॥ क्व पुनरियमादित्यस्तुतिरुपयुज्यते तत्राह। ब्रह्मदृष्टीति॥ जगतो नामरूपव्याकरणमादित्यायत्तमिति तदुपपादयति। आदित्येति॥ तथापि कथमादित्यस्तुतिरि-

उ॰ तत्सदासीत्तत्समभवत्तदाण्डं निरवर्त्तत तत्संवत्सरस्य मात्रामशयत तन्निरभिद्यत ते आण्ड-

भा॰ कुलं सर्व्वगुणसम्पन्ने पूर्णवर्म्मणि राजन्यसतीति तद्वत्। न च सत्त्वमसत्त्वञ्चेह जगतः प्रतिपिपादयिषितमादित्यो ब्रह्मेत्यादेशपरत्वात्।

उपसंहरिष्यन्ते आदित्यं ब्रह्मेत्युपास्त इति तत्सदासीत्तदसच्छब्दवाच्यं प्रागुत्पत्तेः। स्तिमितमनिस्पन्दमसदिव सत्कार्य्याभिमुखं ईषदुपजातप्रवृत्ति सदासीत्ततोऽपि लब्धपरिस्पन्दं तत्समभवत्। अल्पतरनामरूपव्याकरणेनाङ्कुरीभूतमिव वीजं। ततोऽपि क्रमेण स्थूलीभवत्तदा अद्भ्योऽण्डं समवर्त्तत संवृत्तं। आण्डमिति दैर्घ्यं छान्दसं। तदण्डं संवत्सरस्य कालस्य प्रसिद्धस्य मात्रां परिमाणमभिन्नस्वरूपमेवाशयत स्थितं बभूव। तत्ततः संवत्सरपरिमाणात्कालादूर्द्ध्वं निरभिद्यत निरभिन्नं वयसामिवाण्डं।

---

आ॰ त्याशङ्क्य दृष्टान्तेन दर्शयति। तथेति॥ किञ्चोपक्रमोपसंहारैकरूप्येणादित्ये ब्रह्मदृष्टिविधिपरमिदं वाक्यं न तस्य कारणसत्त्वे तात्पर्य्यं कल्पयितुं शक्यमनन्यथासिद्धकल्पकाभावादित्याह। न चेति॥

तत्परत्वं कथमवगतमित्याशङ्क्योपसंहारस्योपक्रमानुसारित्वादित्याह। उपसंहरिष्यतीति॥ कथं तस्यासच्छब्दवाच्यत्वं तदाह। स्तिमितमिति॥ सत्त्वं तर्हि कथमिति तदाह। कार्य्येति॥ वीजस्योच्छूनतावत्कारणस्य सिसृक्षावस्थां दर्शयति। ईषदिति॥ लब्धपरिस्पन्दं प्राप्तपरिणामं सम्भूतसूक्ष्माकारेणाभवदित्यर्थः॥ सूक्ष्मभूतोत्पत्त्यनन्तरं स्थूलभूतोत्पत्तिमाह। ततो

उ॰ कपाले रजतञ्च सुवर्णञ्चाभवतां ॥ १ ॥ तद्यद्रजतᳬ सेयं पृथिवी यत्सुवर्णᳬ सा द्यौर्यज्जरायु ते पर्वता यदुल्वᳬ स मेघो नीहारो या धमनयस्ता नद्यो यद्वास्तेयमुदकᳬ स समुद्रः ॥ २ ॥ अथ यत्तदजायत सोऽसावादित्यस्तं जायमानं घोषा उलूलवोऽनुदतिष्ठन्त्सर्वाणि च भूतानि सर्वे

---

भा॰ तस्य निरभिन्नस्याण्डस्य कपाले द्वे रजतञ्च सुवर्णञ्चाभवतां संवृत्ते। तत्तयोः कपालयोर्यद्रजतं कपालमासीत्सेयं पृथिवी। पृथिव्युपलक्षितमधोऽण्डकपालमित्यर्थः। यत्सुवर्णं कपालं सा द्यौर्द्युलोकोपलक्षितमूर्द्ध्वं कपालमित्यर्थः॥ यज्जरायु गर्भवेष्टनं स्थूलमण्डस्य द्विशकलीभावकाले आसीत्ते पर्व्वता बभुवुः। यदुल्वं यत्सूक्ष्मं गर्भपरिवेष्टनं तत्सह मेघैः समेघो नीहारोऽवश्यायो बभूवेत्यर्थः। या गर्भस्य जातस्य देहे धमनयः शिरास्ता नद्यो बभूवुः। यत्तस्य वस्तौ भवं वास्तेयमुदकं समुद्रः। अथ यत्तदजायत गर्भरूपं तस्मिन्नण्डे सोऽसावादित्यस्तमादित्यं जायमानं घोषाः शब्दा उलूलव उरुरवो विस्तीर्णरवा उदतिष्ठन्नुत्थितवन्तः

---

व्या॰ ऽपीति॥ भूतसूक्ष्माकारप्राप्तेरनन्तरं पञ्चीकरणप्रक्रिययाऽन्योन्यावयवानुप्रवेशेन स्थूलभूतावस्थमासीदित्यर्थः। स्थूलेभ्यश्च भूतेभ्योऽण्डनिर्वृत्तिं प्रतिजानीते। अद्भ्य इति॥ अप्प्रधानेभ्यो भूतेभ्य इत्यर्थः॥

अवश्यायशब्देन हिममुच्यते। उलूलव इत्युत्सवकालीनशब्द-

उ॰ च कामास्तस्मात्तस्योदयं प्रति प्रत्यायनं प्रति घोषा उलूलवोऽनुतिष्ठन्ति सर्वाणि च भूतानि सर्वे चैव कामाः ॥ ३ ॥

स य एतमेवं विद्वानादित्यं ब्रह्मेत्युपास्तेऽभ्याशो ह यदेनꣳ साधवो घोषा आ च गच्छेयुरुप च

---

भा॰ ईश्वरस्येवेह प्रथमपुत्रजन्मनि सर्व्वाणि च स्थावरजङ्गमानि भूतानि सर्व्वे च तेषां भूतानां कामाः काम्यन्त इति विषयाः स्त्रीवस्त्रान्नादयो यस्मादादित्यजन्मनिमित्तीभूतकामोत्पत्तिस्तस्मादाद्यत्वेऽपि तस्यादित्यस्योदयं प्रति प्रत्यायनं प्रत्यस्तगमनं च प्रत्यथवा पुनःपुनःप्रत्यागमनं प्रत्यायनं तत्प्रति तन्निमित्तीकृत्येत्यर्थः । सर्व्वाणि च भूतानि सर्व्वे च कामा घोषा उलूलवश्चानुतिष्ठन्ति ॥

प्रसिद्धं हि एतदुदयादौ सवितुः । स यःकश्चिदेतमेवं यथोक्तमहिमानं विद्वान् सन्नादित्यं ब्रह्मेत्युपास्ते स तद्भावं प्रतिपद्यत इत्यर्थः । किञ्च दृष्टं फलमभ्याशः क्षिप्रं तद्विदो यदिति क्रियाविशेषणमेनमेवंविदं साधवः शोभना घोषाः । साधुत्वं घोषादीनां यदुपभोगे पापानुबन्धाभावः ।

---

आ॰ विशेषे प्रसिद्धाः स्त्रीवस्त्रान्नादय उदतिष्ठन्निति पूर्व्वेणसम्बन्धः ॥

किमत्र प्रमाणमित्याशङ्क्याह । प्रसिद्धं हीति ॥ एतदिति भूताद्युत्थानं । अदृष्टफलमाहृत्योक्ता दृष्टफलमाचष्टे । किञ्चेति ॥ तद्विदो दृष्टफलमिति सम्बन्धः । क्रियाविशेषणमिति एवंविदं साधवो घोषा आगच्छेयुरिति यत्तत्क्षिप्रमप्रतिबन्धेनैवेत्यर्थः ।

ॐ निम्रेडेरन्निम्रेडेरन् ॥ ४ ॥ १९ ॥ इति छान्दोग्योपनिषदि तृतीयः प्रपाठकः ॥ ३ ॥

॥ ॐ ॥ जानश्रुतिर्ह पौत्रायणः श्रद्धादेयो

भा० आ च गच्छेयुरागच्छेयुश्चोप च निम्रेडेरन्निम्रेडेरन्न केवलमागमनमात्रं घोषाणामुपसुखं येयुश्चोपसुखञ्च कुर्य्युरित्यर्थः। द्विरभ्यासोऽध्यायसमाप्त्यर्थ आदरार्थश्च ॥ १९ ॥ इति श्रीमद्गोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्य्यस्य श्रीमच्छङ्करभगवतः कृतौ छान्दोग्योपनिषद्विवरणे तृतीयः प्रपाठकः समाप्तः ॥ ३ ॥

॥ ॐ ॥ वायुप्राणयोर्ब्रह्मणः पाददृष्ट्यध्यासः पुरस्ताद्दर्शितः। अथेदानीं तयोः साक्षाद्ब्रह्मत्वेनोपास्यत्वायोत्तरमारभ्यते। सुखावबोधार्था आख्यायिका विद्यादानग्रहणविधिप्रदर्शनार्था च। श्रद्धान्नदानानुद्धतत्वादीनाञ्च विद्याप्राप्तिसाधनत्वं प्रदर्श्यते आख्यायिकया। जानश्रुतिर्जन-

व्या० च्चादित्ये ब्रह्मदृष्टिरादरस्य विषयः ॥ १९ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्य्यश्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानकृतायां छान्दोग्यभाष्यटीकायां तृतीयः प्रपाठकः समाप्तः ॥ ३ ॥

॥ ॐ ॥ आदित्यस्य सूत्रावच्छेदभेदत्वात्तदुपासनानन्तरं सूत्रोपासनमुपन्यस्यते। नन्वध्यात्ममधिदैवतञ्च वायुप्राणयोः सूत्रात्मभूतयोरुपासनं पूर्व्वाध्यायेऽपि व्याख्यातं ॥ तथा च कोऽत्र विशेषो येन तदुपासनं पुनरारभ्यते अत आह। वायुप्राणयोरिति ॥ साक्षात्पादकल्पनं विनेति यावत् ॥ ब्रह्मत्वेन ब्रह्मकार्य्यरूपेणेत्यर्थः। विद्येति। धर्म्मार्थौ यत्र न स्यातां शुश्रूषा वापि तद्विधा। तत्र विद्या न वक्तव्या शुभं बीजमिवोषर इति

उ० बहुदायी बहुपाक्यआस स ह सर्वत आवसथान्मा-
पयाञ्चक्रे सर्वत एव मेऽत्स्यन्तीति ॥ १ ॥ अथ ह

भा० अतस्यापत्यं । ह ऐतिह्यार्थः । पुत्रस्य पौत्रः पौत्रायणः स एव श्रद्धादेयः श्रद्धापुरःसरमेव ब्राह्मणादिभ्यो देयमस्येति श्रद्धादेयः । बहुदायी प्रभूतं दातुं शीलमस्येति बहुदायी । बहुपाक्यो बहुपक्तव्यमहन्यहनि गृहे यस्यासौ बहुपाक्यः । भोजनार्थिभ्यो बहुस्य गृहेऽन्नं पच्यत इत्यर्थः । एवं गुण-सम्पन्नोऽसौ जानश्रुतिः पौत्रायणो विशिष्टे देशे काले च कस्मिंश्चित् आस ह बभूव । स ह सर्व्वतः सर्व्वासु दिक्षु ग्रामेषु नगरेषु चावसथान । एत्य वसन्ति येष्वित्यावसथास्तानाप-याञ्चक्रे कारितवानित्यर्थः । सर्व्वत एव मे ममान्नं तेष्वा-वसथेषु वसन्तोऽत्स्यन्ति भोक्ष्यन्ति इत्येवमभिप्रायः । तत्रैवं

व्या० स्मृतिमनुसन्धाय पुष्कलधनमादाय रैक्वो राज्ञे विद्यां प्रादाज्जा-नश्रुतिश्च शास्त्रार्थं ज्ञात्वा पुष्कलधनं दत्त्वैव श्रद्धादिसम्पन्न-स्ततो विद्यामाददौ । तथान्योऽपि विद्याया दाता ग्रहीता वा स्यादिति तद्दानग्रहणयोर्विधिप्रदर्शनार्था चाख्यायिकेत्यर्थः ॥ ननु षट् शतानि गवामित्यादिदर्शनाद्धनदानमेव विद्याग्रहणे साधनमिह प्रतीयते न तु श्रद्धादीत्याशङ्क्याह । श्रद्धेति ॥ आदिपदेन तात्पर्यप्रणिपातादयो गृह्यन्ते । आख्यायिका तदु ह पुनरेवेत्यादि लक्षणयेति यावत् ॥ जनश्रुतस्य पुत्रो यस्तस्य पौत्रः पौत्रायणः स च प्रकृतो जानश्रुतिरेवेत्याह । पुत्रस्येति ॥ श्रद्धया देयस्यात्पत्वशङ्कां वारयति । बहुदायीति ॥

बहुपाकस्य फलत्वमाह । भोजनेति ॥ उक्ताराज्ञो वर्त्तमान-त्वाभावादसत्त्वमाशङ्क्योक्तमेवमिति स्वसमीपं प्राप्तेभ्य एवा-

५० हꣳसा निशायामतिपेतुस्तद्धैवꣳ हꣳसो हꣳसमभ्युवाद हो होयि भल्लाक्ष भल्लाक्ष जानश्रुतेः पौत्रायणस्य समं दिवा ज्योतिराततं तन्मा प्रसांक्षी-

भा० सति राजनि तस्मिन् घर्मकाले हर्म्यतलस्थेऽथ ह हंसा निशायां रात्रावतिपेतुः। ऋषयो देवता वा राज्ञोऽन्नदानगुणैस्तोषिताः सन्तो हंसरूपा भूत्वा राज्ञो दर्शनगोचरेऽतिपेतुः पतितवन्तः। तस्मिन्काले तेषां पततां हंसानामेकः पृष्ठतः पतन्नग्रतः पतन्तं तं हंसमभ्युवादाभ्युक्तवान् हो होयीति भो भो इति सम्बोध्य भल्लाक्ष भल्लाक्ष इति आदरं दर्शयन् यथा पश्य पश्याश्चर्यमिति तद्वत्। भल्लाक्ष इति मन्ददृष्टित्वं सूचयन्नाह।

अथवा सम्यग्ब्रह्मदर्शनाभिमानवत्त्वात्तस्यासकृदुपालभ्यस्तेन पीड्यमानोऽमर्षितया तत्सूचयति भल्लाक्ष इति। जानश्रुतेः पौत्रायणस्य समं तुल्यं दिवा द्युलोकेन ज्योतिः प्रभास्वरमन्नदानादिजनितप्रभावजमाततं व्याप्तं

---

र्थिभ्योऽसावन्नं ददातीत्याशङ्क्याह। स हेति॥ विशिष्टान्नदानफलं दर्शयितुमारभते। तत्रेति॥ वाक्यार्थं दर्शयति। ऋषय इति॥ सम्बोधनाभ्यासस्य विषयमाह। आदरं दर्शयन्निति॥ तदेव दृष्टान्तेन स्पष्टयति। यथेति॥ भल्लाक्षशब्दार्थमाह। भल्लेति॥ भल्लाक्षशब्दो भद्राक्षविषयः सन् विरुद्धतत्त्वतया मन्ददृष्टित्वसूचकः॥

भल्लाक्षशब्दस्य विषयान्तरमाह। अथवेति॥ तस्य पृष्ठगामिनो हंसस्य महात्मा नातिक्रमणीयो विजानतेति सम्यग्दर्शनाभिमानशालित्वात्तेनाग्रगामी हंसो जानश्रुतिमति विचक्षि-

उ॰ स्तत्वा मा प्रधाक्षीरिति ॥ २ ॥ तमु ह परः प्रत्युवाच कम्वर एनमेतत्सन्तꣳ सयुग्वानमिव रैक्वमात्थेति यो नु कथꣳ स युग्वा रैक्व इति ॥ ३ ॥

---

भा॰ द्युलोकस्पृगित्यर्थः। दिवाक्षा वा समं ज्योतिरित्येतन्मा प्रसांक्षीः सञ्जनं सक्तिं तेन ज्योतिषा सम्बन्धं मा कार्षीरित्यर्थः। तत्प्रसञ्जनेन तज्ज्योतिस्त्वा त्वां मा प्रधाक्षीर्मा दहत्वित्यर्थः पुरुषव्यत्ययेन मा प्रधाक्षीरिति। तमेवमुक्तवन्तं पर इतरोऽग्रगामी प्रत्युवाच। अरे निकृष्टोऽयं राजा वराकस्तं कं उ एनं सन्तं केन माहात्म्येनोक्तं सन्तमिति कुत्सयत्येनमेवं सबहुमानमेतद्वचनमात्थ ॥

रैक्वमिव सयुग्वानं सह युग्वया गन्त्र्या वर्त्तत इति सयुग्वा रैक्वः। तमिवात्थैनं। अननुरूपमस्मिन्नयुक्तमीदृशं वक्तुं रैक्व

---

आ॰ मिवेति गुरुमर्षितया पीड्यमानः सन् न त्वं धर्म्मं जानासि ज्ञानाभिमानन्तु वहसीत्युपलब्धस्तत्र भल्लाक्षेत्युपालम्भस्य रूपं सूचयतीत्यर्थः॥ पृष्ठगामी हंसो निन्दापूर्व्वकमग्रगामिनं हंसं सम्बोध्य किमुक्तवानित्यपेक्षायामाह। जानश्रुतेरिति ॥ मा प्रधाक्षीरिति पाठे कथं मा प्रधाक्षीरित्युच्यते तत्राह। पुरुषव्यत्ययेनेति॥ मध्यमपुरुषं प्रथमपुरुषं कृत्वा व्याख्यानमित्यर्थः। सन्तमेनं प्राणिमात्रं राजानमधिकृत्य सबहुमानमेतद्वचनमात्थेति कुत्सयतीति सम्बन्धः॥

तत्र वैधर्म्म्यं दृष्टान्तमाह। रैक्वमिवेति॥ युगं वहतीति युग्यो बलीवर्दोऽश्वो वास्यामस्तीति युग्या शकटी तया सह वर्त्तत इति युग्वा रैक्वः वकारो मत्वर्थीयः। त्वं रैक्वज्ञानमाहात्म्ययुक्तमधिकृत्य यथा प्रशंसावचनं तथा कर्म्मिणमेवं राजानमधिकृत्य

उ॰ यथा कृताय विजितायाधरेयाः संयन्त्येवमेनं सर्वं तदभिसमेति यत्किञ्च प्रजाः साधु कुर्वन्ति यस्तद्वेद

भा॰ इत्यभिप्रायः। इतरस्त्वाह। यो नु कथं त्वयोच्यते सयुग्वा रैक्व इत्युक्तवन्तं भल्लाह आह शृणु यथा स रैक्वः। यथा लोके कृतायः कृतो नाम यो द्यूतसमये प्रसिद्धश्चतुरङ्कः स यदा जयति द्यूते प्रवृत्तानां तस्मै विजिताय तदर्थमितरे त्रिद्व्येकाङ्का अधरेयाः॥

त्रेताद्वापरकलिनामानः संयन्ति सङ्गच्छन्त्यन्तर्भवन्ति। चतुरङ्के कृता ये त्रिद्व्येकाङ्कानां विद्यमानत्वादन्तर्भवन्तीत्यर्थः। यथाऽयं दृष्टान्त एवमेनं रैक्वं कृतायस्थानीयं

व्या॰ कथमेवमात्थेत्यर्थः॥ उक्तं वाक्यार्थं सङ्कलयति। अननुरूपमिति॥ अस्मिन्वराके राजनि धर्म्ममात्रनिष्ठे नेदमनुरूपं वचनं रैक्वे पुनर्विज्ञानवति यथोक्तं वचो युक्तमेवेति इतरः पृष्ठगामी हंसो यः सयुग्वा रैक्वस्त्वयोच्यते स कथं नु स्यादित्यन्वयः॥ स रैक्वो येन प्रकारेण स्यात्तं प्रकारं शृणिवति प्रतिज्ञाय प्रकारप्रदिदर्शयिषया दृष्टान्तमाह। यथेति॥ द्यूतस्य समयः सङ्केतस्तदनुष्ठानकालो येन द्यूतविद्यायामेजति सोऽत्तोऽस्य कश्चिद्भागोऽयशब्दवाच्यस्तत्र चतुरङ्को भागश्चत्वारोऽङ्काश्चिह्नान्यस्मिन्निति व्युत्पत्तेः तस्मै सत्कृतनामव्यवहृतेन यदा द्यूते प्रवृत्तानां मध्ये स कोऽपि जयति तदा तस्मै कृतनामवते विजितायाधरेयाः संयन्तीति सम्बन्धः॥ तदर्थं व्याचष्टे। तदर्थमिति॥ अधरेयान्व्याकरोति। अधरेया इति॥

तानेव विभिनष्टि। त्रेतेति॥ अत्तस्य यस्मिन्भागे त्रयोऽङ्का स त्रेता नामायो भवति। यत्र तु द्वावङ्कौ स द्वापरनामकः। यत्रैकोऽङ्कः स कलिसञ्ज्ञ इति विभागः॥ तादर्थ्येनेतराङ्कानामन्तर्भावमुक्तं व्यक्तीकरोति। चतुरङ्क इति॥ तदन्तर्भवन्ति तस्मि-

उ॰ यत् स वेद स मयैतदुक्त इति ॥ ४ ॥ यदु ह

भा॰ त्रेतादिस्थानीयं सर्व्वं तदभिसमेति अन्तर्भवति रैक्के। किन्तद्यत्किञ्च लोके सर्व्वाः प्रजाः साधु शोभनं धर्म्मजातं कुर्व्वन्ति तत्सर्व्वं रैक्कस्य धर्म्मोऽन्तर्भवति तस्य च फले सर्व्वप्राणिधर्म्मफलमन्तर्भवतीत्यर्थः ॥

तथाऽन्योऽपि कश्चिद्यस्तद्वेद्यं वेद। किन्तद्यद्वेद्यं स रैक्को वेद। तद्वेद्यमन्योऽपि यो वेद तमपि सर्व्वप्राणिधर्म्मजातं तत्फलञ्च रैक्कमिवाभिसमेतीत्यनुवर्त्तते। स एवम्भूतो रैक्कोऽपि मया विद्वानेतदुक्तः। एवमुक्तो रैक्कवत्स एव कृतायस्थानीयो भवतीत्यभिप्रायः। तदु ह तदेतदीदृशं हंसवाक्यं आत्मनः कुत्सारूपमन्यस्य विदुषो रैक्कादेः प्रशंसारूपमुपशुश्राव श्रुतवान् हर्म्यतलस्थो राजा जानश्रुतिः पौत्रायणः। तच्च हंसवाक्यं स्मरन्नेव पौनःपुन्येन रात्रिशेषमतिवाहयामास। ततः स वन्दिभी राजा

आ॰ न्तर्गते त्रेतादयस्तेऽन्तर्भवन्तीति यावत्। महासङ्ख्यायामवान्तरसङ्ख्यान्तर्भावः प्रसिद्ध एवेत्यर्थः॥ दृष्टान्तमनूद्य दार्ष्टान्तिकमाह। यथेति॥ रैक्कमभिव्याप्य सर्व्वं समेतीत्यस्यार्थं सङ्क्षिपन्त्यन्तर्भवन्तीति॥ रैक्के सर्व्वस्यान्तर्भावं प्रश्नपूर्व्वकं प्रकटयति। किन्तदित्यादिना॥ तद्धर्म्मस्य महत्त्वादन्येषां च धर्म्मजातस्याल्पत्वात्तस्यैतरस्मिन्नन्तर्भावः सम्भवतीत्यर्थः। किञ्च सर्व्वेषां प्राणिनां धर्म्मफलमल्पीयस्त्वान्महत्तरे रैक्कस्य धर्म्मफलेऽन्तर्भवन्तीत्याह। तस्य चेति॥ न केवलं रैक्कस्यैतन्माहात्म्यं किन्त्वन्यापि ज्ञानवत्तास्तीति जानश्रुतेरनुग्रहार्थमाह। तथेति॥ प्रतिपन्नहंसवचनखेदित इतरो राजा रात्रिशेषमतिवाह्य शयनं जहदात्मनः समीपस्थं

उ॰ जानश्रुतिः पौत्रायण उपशुश्राव स ह सञ्जिहान एव क्षत्तारमुवाचाङ्गारे ह स युग्वानमिव रैक्वमात्थेति यो नु कथꣳ सयुग्वा रैक्व इति ॥ ५ ॥ यथा कृताय विजितायाधरेयाः संयन्त्येवमेनꣳ सर्वं तदभिसमेति यत्किञ्च प्रजाः साधु कुर्वन्ति

भा॰ स्तुतियुक्ताभिर्वाग्भिः प्रतिबोध्यमान उवाच क्षत्तारं । सञ्जिहान एव शयनं निद्रां वा परित्यजन्नेव हे अङ्ग वत्सारे ह सयुग्वानमिव रैक्वमात्थ किं मां स एव स्तुत्यर्हो नाहमित्यभिप्रायः । अथवा सयुग्वानं रैक्वमात्थ गत्वा मम तद्दिदृक्षा तदेव इवशब्दोऽवधारणार्थोऽनर्थको वा वाच्यः । स च क्षत्ता प्रत्युवाच रैक्वानयनकामो राज्ञो ऽभिप्रायज्ञो यो नु कथं सयुग्वा रैक्व इति राज्ञे-वञ्चोक्त आनेतुं तच्चिह्नं ज्ञातुमिच्छन् यो नु कथं सयुग्वा रैक्व इत्यवोचत् । स च भल्लाक्षवचनमेवावोचत्। तस्य स्मरन्स ह क्षत्ता नगरं ग्रामं वा गत्वाऽन्विष्य रैक्वं नाविदं न व्यज्ञाशिषमिति प्रत्येयाय प्रत्यागतवान् तं होवाच क्षत्तारमरे यत्र ब्राह्मणस्य ब्रह्मविद एकान्तेऽरण्ये नदीपुलिनादौ विविक्ते देशेऽन्वेषणानुमार्गणं भवति तत्तत्रैनं रैक्वमर्च्छ गच्छ तत्र मार्गणं कुर्वित्यर्थः । इत्युक्तः

व्या॰ स्तुतिकर्त्तारं क्षत्तारमङ्गारे हेत्यादिवाक्यमुक्तवान् ॥ तस्याभिप्राय-माह । स एवेति ॥ कथमिवशब्दो द्वितीयो घटते तत्राह । तदेति ॥ अवधारणस्यापि नोपयोगोऽस्तीति चेत्तत्राह । अनर्थको वेति ॥

उ० यस्तद्वेद यत्स वेद समयैतदुक्त इति ॥ ६ ॥ स ह क्षत्ताऽन्विष्य नाविदमिति प्रत्येयाय तꣳ होवाच यत्रारे ब्राह्मणस्यान्वेषणा तदेनमर्च्छेति ॥ ७ ॥ सोऽधस्ताच्छकटस्य पामानं कषमाणमुपोपविवेश तꣳ हाभ्युवाद त्वं नु भगवः सयुग्वा रैक्व इत्यहꣳ ह्यरा३ इति ह प्रतिजज्ञे स ह क्षत्ताऽविदमिति प्रत्येयाय ॥ ८ ॥ १ ॥

तदु ह जानश्रुतिः पौत्रायणः षट् शतानि गवां निष्कमश्वतरीरथं तदादाय प्रतिचक्रमे तꣳ हा-

---

भा० क्षत्ताऽन्विष्य तं विजने देशेऽधस्ताच्छकटस्य गन्त्र्याः पामानं कर्षमाणं कण्डूयमानं दृष्ट्वाऽयं नूनं सयुग्वा रैक्व इति समीपे उपोपविवेश विनयेनोपविष्टवान्। तञ्च रैक्वं हाभ्युवादोक्तवान्। त्वमसि हे भगवो भगवन् सयुग्वा रैक्व इत्येवं पृष्टोऽहमस्मि हि। अरा अरे इति ह्यनादर एव प्रतिजज्ञेऽभ्युपगतवान्। स तं विज्ञायाविदं विज्ञातवानस्मीति प्रत्येयाय प्रत्यागत इत्यर्थः ॥ १ ॥

तत्र ऋषेर्गार्हस्थ्यं प्रत्यभिप्रायं बुद्ध्वा धनार्थिताञ्च उ ह एव जानश्रुतिः पौत्रायणः षट् शतानि गवां निष्कं

---

व्या० प्रश्नवाक्यं व्याचष्टे। राज्ञेति ॥ यो नु कथमित्यादि पूर्व्ववद्व्याख्येयं ॥ तस्येति कर्म्मणि षष्ठी ॥ १ ॥

मया हि गार्हस्थ्यं चिकीर्ष्यते तदर्थञ्च धनमर्थ्यते न चायं तादर्थ्येन किञ्चिदुपकर्त्तुमित्याशयेनानादरं विज्ञातवानस्मि

उ० ऽभ्युवाद ॥ १ ॥ रैक्वेमानि षट् शतानि गवामयं निष्कोऽयमश्वतरीरथो नु म एतां भगवो देवताᳮ शाधि यां देवतामुपास्स इति ॥ २ ॥ तमु ह परः प्रत्युवाचाह हारेत्वा शूद्र तवैव सह गोभिर-

---

भा० कण्ठहारमश्वतरीरथमश्वतरीभ्यां युक्तं तदा धनं गृहीत्वा प्रतिचक्रमे रैक्वं प्रति गतवान्। तञ्च गत्वाऽभ्युवाद हाभ्युक्तवान्। हे रैक्व गवां षट् शतानि इमानि तुभ्यं मया नीतानि। अयं निष्कोऽश्वतरीरथश्चायमेतद्धनमादत्स्व। भगवोऽनुशाधि च मे मां याञ्च देवतां त्वमुपास्से तद्देवतोपदेशेन मामनुशाधीत्यर्थः। तमेवमुक्तवन्तं राजानं प्रत्युवाच परो रैक्वः। अहेत्ययं निपातो विनिग्रहार्थीयो ऽन्यत्रेह त्वनर्थकः। एवशब्दस्य पृथक् प्रयोगात्। हारेत्वा हारेण युक्ता इत्वा गन्त्री सेयं हारेत्वा गोभिः सह तवैवास्तु तवैव तिष्ठतु न ममापर्याप्तेन कर्मार्थमनेन प्रयोजनमित्यभिप्रायो हे शूद्र इति॥

---

व्या० यदुक्तलक्षणं रैक्वं तस्य च गार्हस्थ्याभिप्रायं धनार्थित्वञ्चेति शेषः। क्षत्तृवचने श्रुते सतीति सप्तम्यर्थः। धनार्थितां बुद्ध्वेति पूर्व्वेण सम्बन्धः॥ उ हशब्दस्य पूर्व्ववदप्येवकारोऽर्थोऽन्यत्रापि विनिग्रहार्थत्वसम्भवे किमित्यानर्थक्यमित्याशङ्क्य तवैवेत्येवकारादेव विनिग्रहसिद्धिरित्याह। एवशब्दस्येति॥ गार्हस्थ्यार्थिनस्तव कर्म्मानुष्ठानार्थमिदं धनं तिष्ठतामिति चेन्नेत्याह। नं ममेति॥

उ॰ स्त्विति तदु ह पुनरेव जानश्रुतिः पौत्रायणः

---

भा॰ ननु राजाऽसौ क्षत्तृसम्बन्धात् ह क्षत्तारमुवाचेत्युक्तं। विद्याग्रहणाय च ब्राह्मणसमीपोपगमात्। शूद्रस्य चानधिकारात्। कथमिदमननुरूपं रैक्वेणोच्यते हे शूद्रेति। तत्राहुराचार्य्याः। हंसवचनश्रवणात् शुगेनमाविवेश। तेनासौ शुचा श्रुत्वा रैक्वस्य महिमानं वा द्रवतीति। ऋषिरात्मनः परोक्षज्ञतां दर्शयन् शूद्र इत्याहेति। शूद्रवद्वाधनेनैवैनं विद्याग्रहणायोपजगाम न च शुश्रूषया। न तु जात्यैव शूद्र इति। अपरे पुनराहुरल्पं धनमाहृतमिति रुषैवैनमुक्तवाञ्छूद्र इति।

---

आ॰ शूद्रशब्देन जानश्रुतेः सम्बोधनमनुचितमिति चोदयति। नन्विति ॥ तस्याशूद्रत्वे हेत्वन्तरमाह। विद्याग्रहणायेति ॥ तस्य श्रुतिद्वारा विद्याधिकारो नास्तीत्ययं शूद्राधिकरणे निर्द्धारितमित्याशयेनाह। शूद्रस्य चेति ॥ जानश्रुतेः सति क्षत्रियत्वे शूद्रसम्बोधनमयोग्यमित्युपसंहरति। कथमिति ॥ न जातिशूद्रो जानश्रुतिः किन्तु क्षत्रियोऽस्मिन् गौणः शूद्रशब्द इत्येकीयमतोपन्यासेन परिहरति। तत्रेति ॥ तेन शुगाविष्टत्वेनासौ जानश्रुतिः शुचा हेतुना रैक्वमाद्रवतीति शूद्रः श्रुत्वा वा हंसवाक्यं रैक्वमाद्रवतीति नैमित्तिकं तत्र शूद्रपदमित्यर्थः। तथापि किमिति शूद्रपदेन राजानमृषिः सम्बोधयतीत्याशङ्क्याह। ऋषिरिति ॥ उक्तप्रकारद्वयसमाप्ताविति शब्दः ॥ प्रकारान्तरेण जानश्रुतेः शूद्रत्वं गौणं व्युत्पादयति। शूद्रवदेति ॥ न च शुश्रूषया तेन शूद्र इति शेषः। मुख्यं शूद्रत्वं क्षत्रसम्बन्धेन व्यावर्त्तयति। न त्विति ॥ क्षत्रिये जानश्रुतौ शूद्रशब्दप्रवृत्तौ निमित्तान्तरमाह। अपरे पुनरिति ॥

उ॰ सहस्रं गवां निष्कमश्वतरीरथं दुहितरं तदादाय प्रतिचक्रमे ॥ ३ ॥ तꣳ हाभ्युवाद रैक्वेदꣳ सहस्रं गवामयं निष्कोऽयमश्वतरीरथ इयं जायाऽयं ग्रामो यस्मिन्नास्सेऽन्वेव मा भगवः शाधीति ॥ ४ ॥ तस्या ह मुखमुपोद्गृह्णन्नुवाचाजहारेमाः

---

भा॰ लिङ्गञ्च वक्राहरणे उपादानं धनस्येति। तदु हृषमत ज्ञात्वा पुनरेव जानश्रुतिः पौत्रायणो गवां सहस्रमधिकं जायाञ्चर्षेरभिमतां दुहितरमात्मनस्तदादाय प्रतिचक्रमे क्रान्तवान्। रैक्वेदं गवां सहस्रमयं निष्कोऽयमश्वतरीरथ इयं जायार्थं मम दुहिता नीताऽयञ्च ग्रामो यस्मिन्नास्से तिष्ठसि स च त्वदर्थे मया कल्पितः। तदेतत्सर्व्वमादायानुशाध्येव मा मां हे भगव इत्युक्तः। तस्या जायार्थमानीताया राज्ञो दुहितुर्ह एव मुखं द्वारं विद्याया दाने तीर्थमुपोद्गृह्णन्जानन्नित्यर्थः। ब्रह्मचारी धनदायी मेधावी श्रोत्रियः प्रियो विद्यया विद्यां यः प्राह तानि तीर्थानि षण्ममेति विद्याया वचनं विज्ञायते। एवं जानन्नुपोद्गृह्णन्नुवाचोक्तवान्। आजहार आहृतवान्। भगवान् यदीमा गावो यच्चा-

---

व्या॰ तत्र गमकं दर्शयति। लिङ्गञ्चेति॥ यद्दृषेर्मतमधिकधनार्थित्वमिति यावत्। त्वाधिक्यं षट्शतेभ्यः सकाशादिति शेषः। विद्यादानेन तस्या द्वारत्वं तद्दातुश्च वरज्ञानदानतीर्थतां जानन्नुवाचेति सम्बन्धः। धनदातुर्विद्यादानतीर्थत्वे प्रमाणमाह। ब्रह्मचारीति॥ तस्या द्वारतां विद्यादाने तद्दातुस्तीर्थतां च

उ॰ शूद्र अनेनैव मुखेनालापयिष्यथा इति ते हैते रैक्वपर्णा नाम महावृषेषु यत्रास्मा उवास स तस्मै होवाच ॥ ५ ॥ २ ॥

---

भा॰ न्यद्धनं तत्साध्विति वाक्यशेषः। शूद्रेति पूर्व्वोक्तानुकृतिमात्रं न तु कारणान्तरापेक्षया।

पूर्व्ववदनेनैव मुखेन विद्याग्रहणतीर्थेनालापयिष्यथ आलापयसीति मां भाषयसीत्यर्थः। ते हैते ग्रामा रैक्वपर्णा नाम विख्याता महावृषेषु देशेषु यत्र येषु ग्रामेषूवासोषितवान् रैक्वस्तानसौ ग्रामानदादस्मै रैक्वाय राजा तस्मै राज्ञे धनं दत्तवते ह किलोवाच विद्यां स रैक्वः॥ २॥ वायुर्व्वाव संवर्गो वायुर्वाव्वो वावेत्यवधारणार्थः। संवर्गः संवर्जनात्सङ्ग्रहणात्सङ्ग्रसनाद्वा संवर्गः। वक्ष्यमाणा अग्न्याद्या देवता आत्मभावमापादयतीत्यतः संवर्गः। संवर्जनाख्यो गुणो ध्येयो वायुवत्। कृतायान्तर्भावदृष्टान्तात् कथं संवर्गत्वं

---

व्या॰ जानन्नुवाचेत्युक्तमनुवदति। एवं जानन्निति॥ किमुक्तमित्यपेक्षायामाह। आजहारेति॥

तत्र वैधर्म्यदृष्टान्तमाह। पूर्व्ववदिति॥ अल्पधनहरणानिच्छायां कारणापेक्षायां शूद्रेति सम्बोधनवदित्यर्थः। रैक्वेण ग्रामादिकं गृहीत्वा विद्या जानश्रुतये दत्तेत्यस्मान् प्रति श्रुतिर्ज्ञापयति। ते हैत इति॥ महावृषेषु महापुण्येष्विति यावत्॥ २॥ कथं विद्यामुक्तवानित्याशङ्क्याधिदैवतं तदुक्तिप्रकारं दर्शयति। वायुरित्यादिना॥ प्राणो वाव संवर्ग इति वक्ष्यमाणेनापुनरुक्तार्थैवायं व्याचष्टे। वायुर्वाव्व इति॥ संवर्जनादित्यस्य व्याख्यासङ्ग-

उ० वायुर्वाव संवर्गो यदा वा अग्निरुद्वायति वायुमेवाप्येति यदा सूर्य्योऽस्तमेति वायुमेवाप्येति यदा चन्द्रोऽस्तमेति वायुमेवाप्येति ॥ १ ॥

यदाप उच्छुष्यन्ति वायुमेवापि यन्ति वायुर्ह्येवैतान्सर्वान्संवृङ्क्त इत्यधिदैवतं ॥ २ ॥ अथाध्यात्मं प्राणो वाव संवर्गः स यदा स्वपिति प्राणमेव

---

भा० वायोरित्याह । यदा यस्मिन्काले वै अग्निरुद्वायत्युद्वासनं प्राप्नोतीत्युपशाम्यति तदासावग्निर्वायुमेवाप्येति । वायुः स्वाभाव्यमपि गच्छति । तथा यदा सूर्य्योऽस्तमेति वायुमेवाप्येति । यदा चन्द्रोऽस्तमेतीति वायुमेवाप्येति ॥

ननु कथं सूर्य्याचन्द्रमसोः स्वरूपावस्थितयोर्वायावपि गमनं । नैष दोषः । अस्तमनेऽदर्शनप्राप्तेर्वायुनिमित्तत्वात् । वायुना ह्यस्तं नीयते सूर्य्यः । चलनस्य वायुकार्य्यत्वात् । अथ वा प्रलये सूर्य्याचन्द्रमसोः स्वरूपभ्रंशे तेजोरूपयोर्वायावेवापि गमनं स्यात् । तथा यदा आप उच्छुष्यन्त्युच्छोष-

---

व्या० द्ध्यादिति सङ्ग्रहवाक्यस्थं समर्थयते । वक्ष्यमाणा इति ॥ किमिति संवर्गत्वं वायोरुपदिश्यते तत्र दृष्टान्तश्रुतिं प्रमाणयति । कृता इति ॥ सङ्ग्रहवाक्योक्तं पक्षमाकाङ्क्षापूर्व्वकं व्युत्पादयति । कथमित्यादिना ॥

सूर्य्याचन्द्रमसोर्वायावपि गमनमाक्षिपति ॥ नन्विति ॥ आप्रलयात्तयोरधिकारपदे स्थित्यङ्गीकारात्स्वरूपावस्थितत्वं व्युत्पादयति । वायुना हीति ॥ सूर्य्यग्रहणं चन्द्रमसोऽप्युपलक्षणं गाणत्वर्हि वायावप्ययः सूर्य्यादेरित्याशङ्क्य पक्षान्तरमाह । अथ-

उ॰ वागप्येति प्राणं चक्षुः प्राणꣳ श्रोत्रं प्राणं मनः प्राणो ह्येवैतान्सर्वान् संवृङ्क्त इति ॥ ३ ॥ तौ वा एतौ द्वौ संवर्गौ वायुरेव देवेषु प्राणः प्राणेषु ॥ ४ ॥

अथ ह शौनकञ्च कापेयमभिप्रतारिणं च काक्षसेनिं परिविष्यमाणौ ब्रह्मचारी बिभिक्षे तस्मा

---

भा॰ माप्नुवन्ति तदा वायुमेवापि यन्ति। वायुर्हि यस्मादेव एतानग्न्याद्यान्महाबलान्संवृङ्क्ते अतो वायुः संवर्गगुण उपास्य इत्यर्थः। इत्यधिदैवतं दैवतासु संवर्गदर्शनमुक्तं। अथान्तरमध्यात्ममात्मनि संवर्गदर्शनमिदमुच्यते। प्राणो मुख्यो वाव संवर्गः। स पुरुषो यदा यस्मिन्काले स्वपिति प्राणमेव वागप्येति वायुमिवाग्निः प्राणं चक्षुः प्राणं श्रोत्रं प्राणं मनः। प्राणो हि यस्मादेवैतान्वागादीन्सर्वान्संवृङ्क्त इति। तौ वा एतौ द्वौ संवर्गौ संवर्जनगुणौ वायुरेव देवेषु संवर्गः प्राणः प्राणेषु वागादिषु मुख्यः॥

अथैतयोः स्तुत्यर्थमियमाख्यायिका आरभ्यते। हेत्येतिह्यार्थः। शौनकञ्च शुनकस्यापत्यं शौनकं कापेयं कपि-

---

आ॰ वेति॥ सङ्गतिसमये हि संहरतीवेत्यर्थः। कथं प्राणस्य संवर्गत्वमत्याशङ्क्याह। स पुरुष इति॥ तस्मात्संवर्ग इत्यध्यात्ममिति शेषः। वायुप्राणावधिदैवताध्यात्मभेदेन संवर्गगुणावुक्तावुपसंहरति। ताविति॥

अथ हेत्याद्यनन्तरवाक्यं व्याचष्टे। अथैतयोरिति॥ ब्रह्मविच्छौण्डो ब्रह्मविदां मध्ये शूरमात्मानं मन्यमान इति यावत्। बुद्धा लिङ्गविशेषेणेति शेषः॥ जिज्ञासमानावित्युक्तमेव व्यनक्ति।

उ० उ ह न ददतुः ॥ ५ ॥ स होवाच महात्मन-
श्चतुरो देव एकः कः स जगार भुवनस्य गोपा-
स्तं कापेयं नाभिपश्यन्ति मर्त्या अभिप्रतारि-
न्बहुधा वसन्तं यस्मै वा एतदन्नं तस्मा एत-

---

भा० गोत्रमभिप्रतारिणं च नामतः कक्षसेनस्यापत्यं काक्षसेनिं।
भोजनायोपविष्टौ परिविष्यमाणौ सूपकारैर्ब्रह्मचारी ब्रह्म-
विच्छौण्डो बिभिक्षे भिक्षितवान्। ब्रह्मचारिणो ब्रह्मवि-
न्मानितां बुद्ध्वा तं विजिज्ञासमानौ तस्मा उ ह भिक्षां न
ददतुर्न दत्तवन्तौ ह। किमयं वक्ष्यतीति। स होवाच
ब्रह्मचारी महात्मनश्चतुर इति द्वितीया बहुवचनं।
देव एकोऽग्न्यादीन् वायुर्वागादीन् प्राणः। कः स
प्रजापतिर्जगार ग्रसितवान्। कः स जगारेति प्रश्नमेके
मन्यन्ते। भुवनस्य भवन्त्यस्मिन्भूतानीति भुवनं भूरादिः
सर्व्वो लोकस्तस्य गोपा गोपायिता रक्षिता गोपेत्यर्थः।

---

व्या० किमयमिति ॥ चतुर इति द्वितीयाबहुवचनदर्शनान्महात्मन
इति तादृगेवेत्याह। द्वितीयेति ॥ यद्वा महात्मन इत्यस्य पञ्च-
म्यादौ चतुर इत्यस्य च समीचीने प्रयोगदर्शनात्॥ इह तथा
माभूदिति मत्वाह। महात्मन इति ॥ अतो हि जगारेति
सम्बन्धः। कः शब्दः प्रजापतिविषयो व्याख्यातः॥ सम्प्रति पक्षान्त-
रमाह। कः स इति॥ यस्तज्जगार स कः स्यादिति प्रश्नमेके
वदन्तीत्यर्थः॥

उ॰ न्न दत्तमिति ॥ ६ ॥ तदु ह शौनकः कापेयः प्रतिमन्वानः प्रत्येयायात्मा देवानां जनिता प्रजानाꣳ हिरण्यदꣳष्ट्रो बभसोऽनसूरिर्महान्त-

---

भा॰ तं कं प्रजापतिं हे कापेय नाभिपश्यन्ति न जानन्ति मर्त्या मरणधर्म्माणोऽविवेकिनो वा । हेऽभिप्रतारिन्बहुधाऽध्यात्माधिदैवताधिभूतप्रकारैर्वसन्तं । यस्मै वा एतदहन्यहन्यन्नमदनायाह्रियते संस्क्रियते तस्मै प्रजापतये एतदन्नं न दत्तमिति । तदु ह ब्रह्मचारिणो वचनं शौनकः कापेयः प्रतिमन्वानो मनसालोचयन् ब्रह्मचारिणं प्रत्येयाय आजगाम । गत्वाऽऽह यं त्वमवोचो न पश्यन्ति मर्त्या इति तं वयं पश्यामः कथमात्मा सर्व्वस्य स्थावरजङ्गमस्य । किञ्च देवानामग्न्यादीनामात्मनि संहृत्य ग्रसित्वा पुनर्जनितोत्पादयिता वायुरूपेणाधिदैवतमग्न्यादीनां । अध्यात्मञ्च प्राणरूपेण वागादीनां प्रजानाञ्च जनिता ।

---

आ॰ अत्तारं प्राणमात्मानं चैकत्वेन पश्यन् ब्रह्मचारी मह्यं भिक्षां यन्न ददतुर्भवन्तौ तत्तस्मै देवायैव न ददतुरित्यज्ञत्वमेव तयोर्दर्शयन्नाह । यस्मा इति ॥ दर्शनमेव प्रश्नद्वारा विशदयति । कथमित्यादिना ॥ अधिदैवतमग्न्यादीनां वायुरूपेण जनितेति सम्बन्धः । तस्याः प्राथमिकं कृत्वा दर्शयति । आत्मनीति ॥ अग्न्यादीन् प्रलयकाले देवः स्वात्मनि वायुरूपेण ग्रसित्वा पुनरुत्पत्त्यवस्थायामुत्पादयितेति योजना ॥ अध्यात्मं वागादीनपि स्वापावस्थायां स्वात्मनि प्राणरूपे संहृत्य पुनः प्रबोधावस्थायां तेषामुत्पादयिता देवः प्राणरूपेणेत्याह । अध्यात्मञ्चेति ॥

उ० मस्य महिमानमाहुरनद्यमानो यदनन्नमत्तीति वै वयं ब्रह्मचारिन्नेदमुपास्महे दत्तास्मै भिक्षामिति ॥ ७ ॥

---

भा० अथ वा आत्मा देवानामग्निर्वागादीनां। जनिता प्रजानां स्थावरजङ्गमादीनां। हिरण्यदंष्ट्रोऽभग्नदंष्ट्रोऽभग्नदंष्ट्र इति यावत्। बभसो भक्षणशीलोऽनसूरिः। सूरिर्मेधावी न सूरिरसूरिस्तत्प्रतिषेधेऽनसूरिः सूरिरेवेत्यर्थो महान्तमतिप्रमाणमप्रमेयमस्य प्रजापतेर्महिमानं विभूतिमाहुर्ब्रह्मविदः। यस्मात्स्वयमन्यैरनद्यमानोऽभक्ष्यमाणो यदनन्नमग्निवागादिदेवतारूपमत्ति भक्षयतीति। वै इति निरर्थकः। वयं हे ब्रह्मचारिन् आ इदमेवं यथोक्तलक्षणं ब्रह्म वयं आ उपास्महे। वयमिति व्यवहितेन सम्बन्धः। अन्ये न वयमिदमुपास्महे किन्तर्हि परमेव ब्रह्मोपास्महे इति वर्णयन्ति ॥

---

व्या० देवानामग्न्यादीनां प्रजानां वागादीनाञ्च जनितेत्युक्तं ॥ सम्प्रति व्याख्यान्तरमाह। अथ वेति ॥ अभग्नदंष्ट्रः सर्व्वसंहर्त्तुरपि न काचन ग्लानिर्भवतीत्यर्थः ॥ प्रजापतेर्महिमेति प्रमाणं प्रकटयति। यस्मादिति ॥ इतिशब्दात्परस्ताद्यच्छब्दस्य सम्बन्धः। तदर्थश्च यस्मादित्युक्तस्तस्मात्प्रजापतेर्महिमानमतिप्रमाणमाहुरिति पूर्व्वेण सम्बन्धः ॥ वै वयमित्यादि भागं पदच्छेदपूर्व्वकमादाय व्याचष्टे। वयमित्यादिना ॥ क्रियापदेन वयमित्यस्य सम्बन्धमुक्तमुपपादयति। वयमितीति ॥ ब्रह्मचारिन्निदं वयमासमन्तादुपास्महे। ब्रह्मेत्युक्त्वा प्रकारान्तरेण पदच्छेदपूर्व्वकं व्याख्यान्तरमाह। अन्येनेति ॥

उ॰ तस्मा उ ह ददुस्ते वा एते पञ्चान्ये पञ्चान्ये दश सन्तस्तत्कृतं तस्मात्सर्वासु दिक्ष्वन्नमेव दशकृ-

भा॰ दत्ताऽस्मै भिक्षामित्यवोचद् भृत्यांस्तस्मा उ ह ददुस्ते हि भिक्षां । ते वै ये ग्रसन्तेऽग्न्यादयो यश्च तेषां ग्रसिता वायुः पञ्चान्ये वागादिभ्यः । तथाऽन्ये तेभ्यः पञ्चाध्यात्मं वागादयः प्राणश्च ते सर्वे दश भवन्ति सङ्ख्यया दश सन्तस्तत्कृतं भवति ते चतुरङ्क एकायः । एवं चत्वारस्त्र्यङ्काय एवं त्रयोऽपरे द्व्यङ्कायः । एवं द्वावन्यावेकाङ्कायः । एवमेकोऽन्य इति । एवं दश

आ॰ शौनकस्याभिप्रतारिणश्च ज्ञानातिशयं दर्शयित्वा यतिश्च ब्रह्मचारी चेत्यादिस्मृतिमनुसृत्याह । दत्तेति ॥ आख्यायिकाद्वारा प्रकृतायां संवर्गविद्यायामात्मा देवानामित्यादि गुणजातमुपदिश्य गुणान्तरमुपदेष्टुमनन्तरवाक्यमवतारयति । ते वा इति ॥ तद्व्याचष्टे । ये ग्रसन्त इति ॥ त एते वागादिभ्यः सकाशादन्ये पञ्चेति सम्बन्धः ॥ अधिदैवतमग्न्यादीन् वायुसहितान्पञ्चोक्त्वा तेनैव प्रकारेणाध्यात्ममपि तेभ्यः सकाशादन्ये प्राणसहिता वागादयः पञ्च सन्तीत्याह । तथेति ॥ अवान्तरसङ्ख्याविनिवेशमुक्त्वा तत्रैव महासङ्ख्यानिवेशं दर्शयति । ते सर्व इति ॥ दशसङ्ख्यासम्बन्धात्तेषां सङ्ख्ययेति कृतायोपलक्षितं द्यूतं कृतमित्युच्यते । तत्र दशसङ्ख्यावत्त्वस्य वक्तव्यत्वादिति द्रष्टव्यं ॥

यदुक्तमग्न्यादयो वागादयश्च दश सन्तस्तत्कृतं भवतीति तदुपपादयति । चतुरङ्क इत्यादिना ॥ एकस्तावदयो द्यूते चतुरङ्को दृश्यते तद्वदग्न्यादयो वागादयश्च ग्रस्यमानाश्चत्वारो भवन्ति । यथा द्यूते त्रेता नामको यस्त्र्यङ्को गृह्यते तथाग्न्यादयो वागादयश्चैकैकन्यूनास्त्रयस्तथा च तत्र द्वापरनामा यो द्व्यङ्को जायते तद्वद्वागादिष्वग्न्यादिषु च द्वौ द्वौ वर्जयित्वा द्वौ द्वौ भवतः । तथा च तत्र कलिसञ्ज्ञायो भवत्येकाऽङ्को योऽग्न्यादीनां ग्रसिता वायुर्वागा-

उ० तᳫं सैषा विराडन्नादी तयेदᳫं सर्वं दृष्टᳫं सर्व-

भा० मन्तस्तत्कृतं भवति। यत एवं सर्व्वासु दिक्षु दशसंख्यान्याद्या वागाद्याश्च दश सङ्ख्यासामान्यादन्नमेव। दशाक्षरा विराड्
विराडन्नमिति हि श्रुतिः। अतोऽन्नमेव दशसङ्ख्यावात्त्वात्।
तत एव दशकृतेऽन्तर्भावाच्च चतुरायत्वेनेत्यवोचाम।
सैषा विराड्दशसङ्ख्या सत्यन्नञ्चान्नादिनी च कृतत्वेन। कृते हि दशसङ्ख्यान्तर्भूताऽतोऽन्नमन्नादिनी च सा।

व्या० दीनां ग्रसिता प्राणस्त्वेकस्तेभ्यो ग्रस्यमानेभ्योऽन्य इत्येवं ग्रसितृत्वेन च दश सन्तस्ते पूर्व्वोक्तं कृतं भवतीत्यर्थः। द्यूतस्य सर्व्वान्नात्तृत्वप्रसिद्ध्या दशसङ्ख्यावतां देवानां कृतत्वसम्पादनेनात्तृत्वं सम्पादितं॥ इदानीं दशसङ्ख्यावत्त्वेनैव विराट्त्वसम्पादनेन तेषामन्नत्वं सम्पादयति। यत इति॥ अग्न्यादिषु वागादिषु च मिलितेषु दशसङ्ख्यावत्त्वेऽपि कथमनेन तद्वत्त्वं तथा च कथं सङ्ख्यासामान्यं तेषामन्नसङ्ख्यासामान्यसम्पादनमित्याशङ्क्याह। दशाक्षरेति॥ विराड्दशसङ्ख्यावती प्रसिद्धा सा चान्नमिति श्रूयते तथा च यथोक्तेष्वग्न्यादिषु वागादिषु च समुदितेषु सङ्ख्यासामान्याद्विराट्त्वं सम्पाद्यान्नत्वसम्पादनं सुशकमित्याह। अत इति॥ तेषु कृतत्वेनान्नत्वं सम्पादितमुपसंहरति। तत एवेति॥ द्यूतस्यायचतुष्टयविशिष्टत्वेन कृतत्वेन कृतोपलक्षितेन तत्र दशसङ्ख्यायाः सत्त्वात्तत एवं सङ्ख्यासामान्यादग्न्यादयश्च कृतं भवति ततश्च तेषामत्तृत्वमुक्तमित्यर्थः॥

सम्प्रति कृतेष्वग्न्यादिषु विराट्त्वमन्नत्वमत्तृत्वमिति त्रयमुपसंहरति। सैषेति॥ विराजो विधेयत्वात्तस्याश्च स्त्रीलिङ्गतया सैषेति विधेयलिङ्गभाजनं। त एते प्रकृता देवा विराडित्यवगन्तव्या। सा च दशदेवतात्मिका दशसङ्ख्यावती भवत्यन्नमिति देवतानामन्नत्वसिद्धिः। अन्नादीत्यस्य विराजा सम्बन्धादन्नादिनीति व्याख्यातं। ततश्च देवतात्मिका विराट् कृतत्वेनान्नादीनीति तदात्मकानाम-

उ० मस्येदं दृष्टं भवत्यन्नादो भवति य एवं वेद य एवं वेद॥ ४॥ ३॥सत्यकामो ह जाबालो जबालां

भा० तथा विद्वान्देवतात्मभूतः सन् विराट्त्वेन दशसङ्ख्यात्वं कृतसङ्ख्यान्नादी तयान्नान्नादिन्येदं सर्व्वं जगत् दशदिक्संस्थं दृष्टं कृतसङ्ख्याभूतयोपलब्धं । एवंविदोऽस्य सर्व्वं कृतसङ्ख्याभूतस्य दशदिक्सम्बद्धं दृष्टमुपलब्धं भवति । किञ्चान्नादश्च भवति य एवं यथोक्तदर्शी । द्विरभ्यास उपासनसमाप्त्यर्थः ॥ ३ ॥

सर्व्वं वागाद्यग्न्यादि चान्नान्नादत्वं संस्तुतं जगदेकीकृत्य षोडशधा प्रविभज्य तस्मिन् ब्रह्मदृष्टिर्विधातव्येत्यारभ्यते। श्रद्धातपसोर्ब्रह्मोपासनाङ्गत्वप्रदर्शनायाख्यायिका । सत्य-

आ० ग्न्यादीनामप्यत्तृत्वसिद्धिरित्यर्थः। विराट्त्वेनान्नत्वं कृतत्वेनात्तृत्वञ्चेति सम्पत्तिद्वयमग्न्यादौ दर्शितमुपसंहरति । कृते ह्येति॥ कृतोपलक्षिते द्यूते दशसङ्ख्यान्तर्भूताप्रसिद्धा । सा चाग्न्यादौ दर्शिता । तथा च सङ्ख्यासामान्याद् द्यूतगतमत्तृत्वमग्न्यादिषु सम्पाद्यते। तेनेदं दशकमन्नादीत्युच्यते विराड्वेदे दशसङ्ख्यावतीत्युक्तं । सा चान्नं विराडन्नमित्युक्तत्वात्। ततश्च विराट् सम्पत्त्या भवति प्रकृतं दशकमन्नमित्यर्थः ॥ सगुणं संवर्गदर्शनमुक्त्वा तत्फलं वक्तुं विद्वत्स्वरूपं सङ्गिरते । तथेति ॥ यथाग्न्यादीनां विराट्त्वेनान्नत्वं कृतत्वेन चान्नादत्त्वं तथा वायुमग्न्याद्यात्मकं प्राणञ्च वागाद्यात्मकमेकीकृत्यात्मत्वेन विद्वान्दश देवताः स्वयम्भूतः सन् दशसङ्ख्यया विराट्त्वेनान्नं कृतशब्दितयुगं तद्गतदशसङ्ख्यावच्छिन्नतया कृतत्वेनान्नादी भवतीत्यर्थः। फलोक्त्युपयोगित्वेनार्थान्तरमाह । तयेति ॥ कृतोपलक्षितद्यूतस्थसङ्ख्यावच्छिन्नत्वेनावस्थितयान्नत्वेनान्नादित्वेन व्यवस्थितया सर्व्वमिदं जगद्दशसु दिक्षु संस्थितं दृष्टमुपलब्धं भवति न हि देवतादशकं हित्वा

उ॰ मातरमामन्त्रयाञ्चक्रे ब्रह्मचर्य्यं भवति विवत्स्यामि किं गोत्रोऽन्वहमस्मीति ॥ १ ॥ सा हैनमुवाव नाहमेतद्वेद तात यद्गोत्रस्त्वमसि

भा॰ कामो ह नामतो ह शब्द एेति ह्यार्थो जबालाया अपत्यं जाबालो जबालां स्वां मातरमामन्त्रयाञ्चक्रे आमन्त्रितवान्। ब्रह्मचर्य्यं स्वाध्यायग्रहणाय हे भवति विवत्स्याम्याचार्य्यकुले। किं गोत्रोऽहं किमस्य मम गोत्रं सोऽहं किंगोत्रोऽहमस्मीति। एवं पृष्टा जबाला सा हैनं पुत्रमुवाच नाहमेतत्तव गोत्रं वेद हे तात यद्गोत्रस्त्वमसि कस्मान्न वेत्सीत्युक्ताह। बहु भर्तृगृहे परिचर्य्याजातमतिथ्यभ्यागतादि

व्या॰ जगन्नाम किञ्चिदस्ति तथा च दृष्टे देवतादर्शके दृष्टमेव सर्वं जगद्भवेदित्यर्थः॥ भूमिकामेवं कृत्वा विद्याफलं दर्शयति। एवंविद इति॥ वायुं प्राणमत्तारमात्मत्वेन पश्यतः कृतसङ्ख्यावच्छिन्नतया स्थिरस्य दृष्टदेवताभूतस्य सर्वं जगद्दृष्टं भवति। दृष्टदेवतातिरिक्तस्य जगतोऽभावादित्यर्थः॥ २॥ यो यथोक्तदर्शी प्राणो भूत्वा सर्वस्यान्नादस्य भवतीति फलान्तरं पूर्वेण सम्बन्धं दर्शयितुमुत्तरस्य तात्पर्य्यमाह। सर्वमिति॥ एकीकृत्य कारणरूपेणैक्यमादायेत्यर्थः॥ तर्हि तस्मिन् ब्रह्मदृष्टिरेव विधीयतां किमित्याख्यायिका प्रणीयते तत्राह। श्रद्धातपसोरिति॥ ब्रह्मचर्य्यवासस्योद्देश्यं फलं दर्शयति। स्वाध्यायेति॥ आचार्य्यो हि माणवकमुपनयते विज्ञातकुलगोत्रमेवेति मन्वानः पृच्छति। किंगोत्रोऽहमिति॥ अतिथ्यभ्यागताद्यधिकृत्य परिचर्य्याजातं बहु चरन्ती भर्तृगृहे यतोऽहं स्थिता तेन परिचरन्ती सती परिचरणचित्ततया गोत्रादीन्नापृच्छं। तथा च तत्स्मरणे मनो मम नासीदिति गोत्रादिप्रश्नाभावे हेत्वन्तरमाह। यौवनेति॥ यद्यपि तस्यामवस्थायां लज्जया गोत्रादिना-

उ॰ बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे साहमेतन्न वेद यद्गोत्रस्त्वमसि जबाला तु नामाहमस्मि सत्यकामो नाम त्वमसि स सत्यकाम एव जाबालो ब्रवीथा इति ॥ २ ॥

स ह हारिद्रुमतं गौतममेत्योवाच ब्रह्मचर्यं

---

भा॰ चरन्त्यहं परिचारिणी परिचरन्तीति परिचरणशीलैवाहं परिचरणचित्ततया गोत्रादिस्मरणे मम मनो नाभूत्। यौवने च तत्काले त्वामलभे लब्धवत्यस्मि। तदैव ते पितोपरतः। अनाथाऽहं साहमेतन्न वेद यद्गोत्रस्त्वमसि। जबाला तु नामाहमस्मि सत्यकामो नाम त्वमसि स त्वं सत्यकाम एवाहं जाबालोऽस्मीत्याचार्य्याय ब्रवीथाः। यद्याचार्य्येण पृष्ट इत्यभिप्रायः।

स ह सत्यकामो हारिद्रुमतं हरिद्रुमतोऽपत्यं हारिद्रुमतं गौतमं गोत्रत एत्य गत्वोवाच ब्रह्मचर्य्यं भगवति

---

आ॰ प्राचीस्तथापि कालान्तरे किमिति पितरं न पृष्टवतीत्याशङ्क्याह। तदैवेति॥ तथापि किमित्यन्यमभिज्ञं नाप्राक्षीरित्याशङ्क्याह। अत इति॥ प्रथमं लज्जया पितरं प्रति न प्रश्नः पुनस्च तस्योपरतत्वात्पश्चान्न दुःखबाहुल्यादन्यं प्रति प्रश्न इति स्थिते प्रश्नाभावफलमाह। साहमिति॥ किं तर्हि तव ज्ञानमस्ति तदाह। जबाला त्विति॥ एवं स्थिते किमाचार्य्यं प्रति मया वक्तव्यमित्याशङ्क्याह। स त्वमिति॥ नापृष्टः कस्यचिद्ब्रूयादिति न्यायं सूचयति। यदीति॥

मातृवचनश्रवणानन्तरं किं कृतवानित्यपेक्षायामाह। स हेति॥ आचार्य्यसमीपे ब्रह्मचर्य्यवासः शिष्यभावादृते न सिध्यति इत्यभि-

उ॰ भगवति वत्स्याम्युपेयां भगवन्तमिति ॥ ३ ॥ तꣳ होवाच किंगोत्रो नु सोम्यासीति स होवाच नाहमेतद्वेद भो यद्गोत्रोऽहमस्म्यपृच्छं मातरꣳ सा मा प्रत्यब्रवीद्बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे साहमेतन्न वेद यद्गोत्रस्त्वमसि जबाला तु नामाऽहमस्मि सत्यकामो नाम त्वमसीति सोऽहꣳ सत्यकामो जाबालोऽस्मि भो इति ॥ ४ ॥ तꣳ होवाच नैतदब्राह्मणो विवक्तुमर्हति

---

भा॰ पूजावति त्वयि वत्स्याम्यत उपेयामुपगच्छेयं शिष्यतया भगवन्तमित्युक्तवन्तं तमुवाच गौतमः। किं गोत्रो नु सोम्यासीति विज्ञातकुलगोत्रशिष्य उपनेतव्य इति पृष्टः प्रत्याह सत्यकामः। स होवाच नाऽहमेतद्वेद भो यद्गोत्रोऽहमस्मि। किन्त्वपृष्टं पृष्टवानस्मि मातरं। सा मया पृष्टा मां प्रत्यब्रवीत् माता। बह्वहं चरन्तीत्यादि पूर्व्ववत्। तस्या अहं वचः स्मरामि सोऽहं सत्यकामो जाबालोऽस्मि भो इति। तं होवाच गौतमो नैतद्वचोऽब्राह्मणो विशेषेण वक्तुमर्हत्यार्जवार्थसंयुक्तं। ऋजवो हि ब्राह्मणाः॥

---

व्या॰ मन्वानायोक्तं। अत इति॥ किमनया काकदन्तपरीक्षया भवता त्वहमुपनेतव्योऽस्मीत्याशङ्क्याह। विज्ञातेति॥ मातरं पृष्ट्वा विज्ञायागम्यतामित्याशङ्क्याह। तं हेत्यादिना॥ ब्राह्मणस्य वा अनृतं विना कथमार्जवसंयुक्तवचनमित्याशङ्क्याह। ऋजवो हीति॥

उ० समिधं सोम्याहरोप त्वा नेष्ये न सत्यादगा इति तमुपनीय कृशानामबलानां चतुःशता गा निराकृत्योवाचेमाः सोम्यानुसंव्रजेति ता अभिप्रस्थापयन्नुवाच नासहस्रेणावर्त्तेयेति स ह वर्षगणं प्रोवास ता यदा सहस्रꣳ सम्पेदुः ॥ ४ ॥

---

भा० नेतरे स्वभावतो यस्मान्न सत्याद्ब्राह्मणजातिधर्माद्गाः नापेतवानसि । अतो ब्राह्मणं त्वामुपनेष्येऽतः संस्कारार्थं होमाय समिधं सोम्याहरेत्युक्त्वा तमुपनीय कृशानामबलानां यूथान्निराकृत्यापकृष्य चतुःशता चत्वारि शतानि गवामुवाचेमा गा इमाः सोम्य अनुसंव्रज अनुगच्छ । इत्युक्तस्ता अरण्यं प्रत्यभिप्रस्थापयन्नुवाच नासहस्रेणापूर्णेनावर्त्तेय न प्रत्यागच्छेय । स एव मुक्त्वा गा अरण्यं तृणोदकबहुलं द्वन्द्वरहितं प्रविश्य स ह वर्षगणं दीर्घं प्रोवास प्रोषितवान् । ताः सम्यग्गावो रक्षिता यदा यस्मिन् काले सहस्रं सम्पेदुः सम्पन्ना बभुवुः ॥ ४ ॥

---

व्या० क्षत्रियादीनामपि केषाञ्चिदार्जवमस्तीत्याशङ्क्याह । नेतरेति ॥ ऋजुवचनत्वेन ब्राह्मणत्वं प्रतिजानीते । यस्मादिति ॥ उपनीयाध्याप्य चेति शेषः । तस्यानुग्रहार्थं शुश्रूषामादिष्टवानित्याह । कृशानामिति ॥ आचार्य्यनियोगस्य शिष्येण सफलीकर्त्तव्य इत्याशयेनाह । इत्युक्त इति ॥ सम्पन्ना बभूवुस्तदपि तमृषभोऽभ्युक्तवानिति सम्बन्धः ॥ ४ ॥

उ० अथ हैनमृषभोऽभ्युवाद सत्यकाम३ इति भगव इति ह प्रतिशुश्राव प्राप्ताः सोम्य सहस्रꣳ स्मः प्रापय न आचार्य्यकुलं ॥ १ ॥ ब्रह्मणश्च ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै होवाच प्राची दिक्कला प्रतीची दिक्कला दक्षिणा दिक्कलोदीची दिक्कलैष वै सोम्य चतुष्कलः पादो

---

भा० तमेतं श्रद्धातपोभ्यां सिद्धं वायुदेवता दिक्सम्बन्धिनी तुष्टा सत्यृषभमनुप्रविश्यर्षभापन्नानुग्रहायाथ हैनमृषभो ऽभ्युवादाऽभ्युक्तवान्। सत्यकाम३ इति सम्बोध्य तमसौ सत्यकामो भगव इति प्रतिशुश्राव प्रतिवचनं ददौ प्राप्ताः सोम्य सहस्रं स्म पूर्णा तव प्रतिज्ञाऽतः प्रापय नोऽस्माना-चार्य्यकुलं। किञ्चाहं ब्रह्मणः परस्य ते तुभ्यं पादं ब्रवाणि कथयानि। इत्युक्तः प्रत्युवाच ब्रवीतु कथयतु मे मह्यं भगवान्। इत्युक्त ऋषभस्तस्मै सत्यकामाय होवाच।

प्राची दिक्कला ब्रह्मणः पादस्य चतुर्थो भागः। तथा प्रतीची दिक्कला तथा दक्षिणा दिक्कलोदीची दिक्कलैष वै

---

व्या० कथमृषभः सत्यकामं प्रतिवक्तुमलं। न हि लोके बलीवर्दस्य मनुष्यप्रतिवचनं दृष्टमत आह। तमेतमिति॥ सत्यकामं श्रद्धादिसम्पन्नमेनमथ तस्यामवस्थायां ऋषभोऽनुग्रहायाभ्युवादेति सम्बन्धः॥ ऋषभस्य स्वरूपमाह। वायुदेवतेति॥ अरण्ये तत्र तत्र गाश्चारयतः श्रद्धापूर्व्वकं तपश्चरतो वायुदेवता कथं तुष्टेत्याशङ्क्याह। दिक्सम्बन्धिनीति॥ वाक्यान्तरञ्च मदीयं श्रूयतामित्याह। किञ्चेति॥

वायुदेवता दिक्सम्बन्धिनीत्युक्तत्वाद्दिग्गोचरमेव दर्शनमुवाचेत्याह। प्राचीति॥ ब्रह्मणः पादस्य व्यधिकरणे षष्ठ्यौ एकपाद एव

उ० ब्रह्मणः प्रकाशवान्नाम ॥ २ ॥ स य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणः प्रकाशवानित्युपास्ते प्रकाशवानस्मिँल्लोके भवति प्रकाशवतो ह लोकाञ्जयति य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणः प्रकाशवानित्युपास्ते ॥ ३ ॥ ५ ॥

अग्निष्टे पादं वक्तेति स ह श्वो भूते गा अभिप्रस्थापयाञ्चकार ता यत्राभि सायं बभूवुस्तत्रा-

---

भा० सोम्य ब्रह्मणः पादश्चतुष्कलश्चतस्रः कला अवयवा यस्य सोऽयं चतुष्कलः पादो ब्रह्मणः प्रकाशवान्नाम। प्रकाशवानित्येव नामाभिधानं यस्य। तथोत्तरेऽपि पादास्त्रयश्चतुष्कला ब्रह्मणः। स यः कश्चिदेवं यथोक्तमेतं ब्रह्मणश्चतुष्कलं पादं विद्वान् प्रकाशवानित्यनेन गुणेन विशिष्टमुपास्ते तस्येदं फलं। प्रकाशवानस्मिँल्लोके भवति प्रख्यातो भवतीत्यर्थः। तथा दृष्टं फलं प्रकाशवतो ह लोकान् देवादिसम्बन्धिनोऽमृतः स जयति प्राप्नोति। य एतमेवं विद्वान् चतुष्कलं पादं ब्रह्मणः प्रकाशवानित्युपास्ते ॥ ५ ॥

सोऽग्निष्टे पादं वक्तेत्युपररामर्षभः सत्यकामो ह श्वो भूते परेद्युर्नैत्यिकं नित्यं कर्म कृत्वा गा अभिप्रस्थापया-

---

व्या० ब्रह्मेति विभ्रमं व्युदस्यति। तथेति॥ प्रथमपादोपासकस्य दृष्टमदृष्टञ्च फलमाह। स य इत्यादिना॥ कस्येदं फलमित्युक्ते पूर्व्वोक्तमेवोपासकमनुवदति। य एतमिति॥ ५॥

अवशिष्टं पादत्रयं कथं द्रष्टव्यमिति बुभुत्समानं सत्यकामं प्रत्याह। सोऽग्निरिति॥ अविदुषो विद्याभिमाननिमित्तकर्म्म-

उ॰ ग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चा-
दग्नेः प्राङुपोपविवेश ॥ २ ॥ तमग्निरभ्युवाद
सत्यकाम३ इति भगव इति ह प्रतिशुश्राव ॥ २ ॥
ब्रह्मणः सोम्य ते पादं ब्रवाणीति ब्रवीतु मे भग-
वानिति तस्मै होवाच पृथिवी कलाऽन्तरिक्षं
कला द्यौः कला समुद्रः कलैष वै सोम्य चतुष्कलः
पादो ब्रह्मणोऽनन्तवान्नाम ॥ ३ ॥

---

भा॰ श्चकार आचार्य्यकुलं प्रति । ताः शनैश्चरन्त्य आचार्य्य-
कुलाभिमुख्यः प्रस्थिताः । यत्र यस्मिन्काले देशेऽभि सायं
निशायामभिबभूवुरेकत्राभिमुख्यः सम्भूताः । तत्राग्निमुप-
समाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङ्मुख
उपविवेश । ऋषभवचो ध्यायंस्तमग्निरभ्युवाद सत्यकाम३
इति सम्बोध्य तमसौ सत्यकामो भगव इति ह प्रतिशुश्राव
प्रतिवचनं ददौ । ब्रह्मणः सोम्य ते पादं ब्रवाणीति ब्रवीतु
मे भगवानिति तस्मै होवाच पृथिवी कलाऽन्तरिक्षं कला
द्यौः कला समुद्रः कलेत्यात्मगोचरमेव दर्शनमग्निरब्रवीत् ।
एष वै सोम्य चतुःकलः पादो ब्रह्मणोऽनन्तवान्नाम ॥

---

व्या॰ त्यागो न युक्त इति मत्वाह । सत्यकाम इति ॥ अभिसायं बभूवुः
सायङ्कालं प्राप्ता इति यावत् । तस्य ब्रह्मचर्य्यमव्याहतमिति
सूचयति । तत्रेति ॥ उपोपविवेश । तत्रोपोपशब्दाभ्यां गवा-
मग्नेश्च सामीप्यनिवेशनमस्योच्यते ॥ अर्थिने विद्या वक्तव्येति
सूचयति । ऋषभेति ॥ आत्मगोचरमग्नेश्चास्य विद्यमानमित्यर्थः ।
यद्वा पृथिव्यादिरूपेणाग्नेरवस्थानादग्निविषयमित्यर्थः ॥ यथोक्त-
पादे गुणविशेषं निर्द्दिशति । एष वा इति ॥

उ० स य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणो ऽनन्तवानित्युपास्तेऽनन्तवानस्मिँल्लोके भवत्यनन्तवतो ह लोकाञ्जयति य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणोऽनन्तवानित्युपास्ते ॥ ४ ॥ ६ ॥

हꣳसस्ते पादं वक्तेति स ह श्वो भूते गा अभिप्रस्थापयाञ्चकार ता यत्राभि सायं बभूवुस्तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङुपोपविवेश ॥ १ ॥ तꣳ हꣳस उपनिपत्याभ्युवाद सत्यकाम३ इति भगव इति ह प्रतिशुश्राव ॥ २ ॥ ब्रह्मणः सोम्य ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै होवाचाग्निः कला सूर्य्यः कला चन्द्रः कला विद्युत्कलैष वै सोम्य चतुष्कलः

---

भा० स यः कश्चिद्यथोक्तं पादमनन्तत्वेन गुणेनोपास्ते स तथैव तद्गुणो भवत्यस्मिँल्लोकेऽमृतश्चानन्तवतो ह लोकान् स जयति य एतमेवमित्यादि पूर्व्ववत् ॥ ६ ॥ सोऽग्निर्हंसस्ते पादं वक्तेत्युक्तोपरराम हंस आदित्यः । शौक्ल्योत्पतनसामान्याच्च । स ह श्वो भूत इत्यादि समानं । अग्निः

---

आ० द्वितीयपादोपासकस्य द्विविधं फलं दर्शयति । स य इति ॥ यथोक्तं चतुष्कलमिति यावत् तथैवोपास्य गुणानुरोधेनेत्यर्थः । तद्गुणस्तेन गुणेन गुणवाननन्तवानविच्छिन्नसन्तानो भवतीत्यर्थः ॥ ६ ॥ अनन्तवतो लोकानक्षयानित्येतत् ॥ अवशिष्टपादद्वयं कथं ज्ञातमिति जिज्ञासमानं प्रत्याह । सोऽग्निरिति ॥ पश्चि-

उ॰ पादो ब्रह्मणो ज्योतिष्मान्नाम ॥ ३ ॥ स य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणो ज्योतिष्मानित्युपास्ते ज्योतिष्मानस्मिँल्लोके भवति ज्योतिष्मतो ह लोकाञ्जयति य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणो ज्योतिष्मानित्युपास्ते ॥ ४ ॥ ७ ॥

मद्गुष्टे पादं वक्तेति स ह श्वो भूते गा अभिप्रस्थापयाञ्चकार ता यत्राभि सायं बभूवुस्तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङुपोपविवेश ॥ १ ॥ तं मद्गुरुप निपत्याभ्युवाद

---

भा॰ कला सूर्य्यः कला चन्द्रः कला विद्युत्कला एष वै सोम्येति ज्योतिर्विषयमेव च दर्शनं प्रोवाचातो हंसस्यादित्यत्वं प्रतीयते विद्वत्फलं ज्योतिष्मान्दीप्तियुक्तोऽस्मिँल्लोके भवति । चन्द्रादित्यानां ज्योतिष्मत एव मृत्वा लोकाञ्जयति समानमुत्तरं ॥ ७ ॥

हंसोऽपि मद्गुष्टे पादं वक्तेत्युपरराम । मद्गुरुदकचरः पक्षी स चाप्सु सम्बन्धात्प्राणः । स ह श्वो भूत इत्यादि पूर्व-

---

व्या॰ विशेषविषयत्वं हंसशब्दस्य व्यावर्त्तयति । आदित्य इति ॥ कथं तत्र हंसशब्दस्य प्रवृत्तिरित्याशङ्क्याह । शौक्ल्यादिति ॥ आदित्योऽपि स्वविषयमेव दर्शनमुक्तवानित्याह । अग्निरिति ॥ तृतीये पादेऽपि गुणविशेषमुपदिशति । एष वा इति ॥ यतो हेतोर्ज्योतिर्विषयमेव दर्शनमुक्तवानत एव तस्यादित्यत्वे हंसस्य गमकान्तरमाह । ज्योतिर्विषयमेवेति ॥ ७ ॥ य एतमेवं विद्वा-

उ० सत्यकाम३ इति भगव इति ह प्रतिशुश्राव ॥२॥
ब्रह्मणः सोम्य ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै होवाच प्राणः कला चक्षुः कला श्रोत्रं कला मनः कलैष वै सोम्य चतुष्कलः पादो ब्रह्मण आयतनवान्नाम ॥ ३॥ स य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मण आयनमवानित्युपास्त आयतनवानस्मिंल्लोके भवत्यायतनवतो ह लोकाञ्जयति य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मण आयतनवानित्युपास्ते ॥ ४ ॥ ८ ॥

---

भा० वत्। स च मद्गुः प्राणः स्वविषयमेव च दर्शनमुवाच प्राणः कलेत्याद्यायतनवानित्येव नाम। आयतनं नाम मनः सर्व्वकरणोपहृतानां भोगानां तद्यस्मिन्पादे विद्यत इत्यायतनवान्नाम पादः। तं पादं तथैवोपास्ते यः स आयतनवानाश्रयवानस्मिँल्लोके भवति। तथायतनवत एव सावकाशाँल्लोकान्मृतो जयति य एतमेवमित्यादि पूर्व्ववत्॥ ८॥

---

आ० नित्याद्युत्तरमवशिष्टं पादान्तरं तर्हि कथं ज्ञायतामित्याशङ्क्याह। हंसोऽपीति॥ मद्गुशब्दस्य वाच्यमर्थमन्वाचष्टे। मद्गुरिति॥ तस्य कथं सत्यकामं प्रत्युपदेष्टृत्वमत आह। स चेति॥ तं मद्गुरुपनिपत्येत्यत्र मद्गुशब्दार्थं पूर्व्वोक्तमेव स्मारयति। मद्गुः प्राण इति॥ प्राणः कलेत्यादि आयतनवानित्येवमिति यथोक्तगुणं समर्थयते। आयतनमित्यादिना॥ तद्यस्मिन्पादे वर्त्तते सोऽयमायतनवान्नाम पाद इति दृष्टव्यमिति योजना। द्विविधं विद्याफलमभिधत्ते। तं पादमिति॥ तथैवायतनत्वगुणाक्रान्तत्वेनैवेत्यर्थः॥ ८॥

उ० प्राप हाचार्य्यकुलं तमाचार्य्योऽभ्युवाद सत्य
काम३ इति भगव इति ह प्रतिशुश्राव ॥ १ ॥
ब्रह्मविदिव वै सोम्य भासि को नु त्वानुशशासे-
त्यन्ये मनुष्येभ्य इति ह प्रतिजज्ञे भगवाꣳस्त्वे-
वमेका मे ब्रूयात् ॥ २ ॥

---

भा० स एवं ब्रह्मवित्सन् प्राप ह प्राप्तवानाचार्य्यकुलं। तमाचार्य्योऽभ्युवाद सत्यकाम ३ इति। भगव इति ह प्रतिशुश्राव। ब्रह्मविदिव वै सोम्य भासि। प्रसन्नेन्द्रियः प्रहसितवदनश्च निश्चिन्तः कृतार्थो ब्रह्मविद्भवति। अत आचार्य्यो ब्रह्मविदिव भासीति। को नु इति वितर्कयन्नुवाच। कस्त्वामनुशशासेति स चाह सत्यकामोऽन्ये मनुष्येभ्यः। देवता मामनुशिष्टवत्यः। कोऽन्यो भवच्छिष्यं मां मनुष्यः सन्ननुशासितुमुत्सहत इत्यभिप्रायः। अतोऽन्ये मनुष्येभ्य इति प्रतिजज्ञे प्रतिज्ञातवान्। भगवांस्त्वेव मे कामे ममेच्छायां ब्रूयात् किमन्यैरुक्तेन नाहं तद्गणयामीत्यभिप्रायः॥

---

आ० ब्रह्मविदिव भासीत्युक्ते कीदृशो ब्रह्मविदित्यपेक्षायामाह। प्रसन्नेन्द्रिय इति॥ सत्यकामस्यापि तल्लक्षणवत्त्वमतःशब्दार्थः। मान्त्वदाचार्य्यमवज्ञाय मच्छिष्यं त्वां कोऽन्यो मनुष्यो मच्छापादभीतः शिष्यत्वेनादायानुशासनं कृतवान् यदनुशासनात् ते ब्रह्मविद्या जातेति साक्षेपं पृच्छति। कस्त्वामिति॥ मनुष्येभ्यः सकाशादन्ये अनुशिष्टवन्त इति सामान्यप्रतिज्ञां विभजते। देवता इति॥ देवतानामेवोपदेष्टृत्वं व्यतिरेकद्वारा विशदयति। कोऽन्य इति॥ प्रतिज्ञां निगमयति। अत इति॥ मया तर्हीदानीं न किञ्चिदस्ति तव कर्त्तव्यमित्याशङ्कां वारयति। भगवानिति॥

उ० श्रुतꣳ ह्येव मे भगवद्दृशेभ्य आचार्य्याद्धैव विद्या विदिता साधिष्ठं प्रापयतीति तस्मै हैतदेवोवाचात्र ह न किञ्चन वीयायेति वीयायेति ॥ ३ ॥ ९ ॥

उपकोसलो ह वै कामलायनः सत्यकामे

---

भा० किञ्च श्रुतं हि यस्मान्मम विद्यत एवास्मिन्नर्थे भगवद्दृशेभ्यो भगवत्समेभ्य ऋषिभ्यः। आचार्य्याद्धैव विद्या विदिता साधिष्ठं साधुतमत्वं प्रापदिति प्राप्नोतीत्यतो भगवानेव ब्रूयादित्युक्त आचार्य्योऽब्रवीत्तस्मै तामेव दैवतैरुक्तां विद्यां। अत्र ह न किञ्चन षोडश कला विद्यायाः किञ्चिदेकदेशमात्रमपि न वीयाय न विगतमित्यर्थः। द्विरभ्यासो विद्यापरिसमाप्त्यर्थः ॥ ९ ॥

पुनर्ब्रह्मविद्यां प्रकारान्तरेण वक्ष्यामीत्यारभते गतिञ्च तद्विदोऽग्निविद्याञ्चाख्यायिका। पूर्व्ववच्छ्रद्धातपसोर्ब्रह्म-

---

आ० इतश्च भगवानेव ब्रवीतु मे विद्यामित्याह। किञ्चेति ॥ तदेव कारणं दर्शयति। श्रुतमिति ॥ अस्मिन्नर्थे आचार्य्यादेव विद्या श्रोतव्येत्येवंलक्षणे श्रुतमेव विशदयति। आचार्य्यादिति ॥ विदिता प्राप्तेति यावत्। आचार्य्याधीना धीरेव फलतीत्यतःशब्दार्थः ॥ विद्यान्तरमाचार्य्येणोक्तमिति शङ्कामेवकारेण वारयति। दैवतैराचार्य्येणैव सत्यकामायोक्तां विद्यामस्मान्प्रति श्रुतिर्ज्ञापयति। अत्रेति ॥ न विगतं किन्तु पूर्णैव विद्या वाय्वादिभिराचार्य्येण चोपदिष्टेति शेषः। तत्रापि पादचतुष्टयानुध्यानसमुच्चितमेकमेव विज्ञानं तत्फलञ्च संहत्यैकविज्ञानफलत्वेन परिणेयमेकैकपादोपासनस्य कृतार्थत्वाहेतुत्वादित्याचार्य्योपदेशस्यैव सार्थकत्वमिति द्रष्टव्यं ॥ ९ ॥

सप्रपञ्चब्रह्मोपासनमुक्त्वा वार्ध्वब्रह्मोपासनसमुच्चितं कारण-

उ॰ जाबाले ब्रह्मचर्य्यमुवास तस्य ह द्वादशवर्षाण्य-
ग्नीन् परिचचार स ह स्मान्यानन्तेवासिनः
समावर्त्तयꣳस्तꣳ ह स्मैव न समावर्त्तयति ॥ १ ॥
तं जायोवाच तप्तो ब्रह्मचारी कुशलमग्नीन्परिच-
चारीन्मा त्वाग्नयः परिप्रवोचन् प्रब्रूह्यस्मा इति

---

भा॰ विद्यासाधनत्वप्रदर्शनार्था । उपकोसलो ह वै नामतः
कमलस्यापत्यं कामलायनः सत्यकामे जाबाले ब्रह्मचर्य्य-
मुवास तस्य ह ऐतिह्यार्थः । तस्याचार्य्यस्य द्वादशवर्षाण्यग्नीन्
परिचचाराग्नीनां परिचरणं कृतवान् । स ह स्माचार्य्यो
ऽन्यान् ब्रह्मचारिणः स्वाध्यायं ग्राहयित्वा समावर्त्तयंस्तमे-
वोपकोसलमेकं न समावर्त्तयति स्म ह । तमाचार्य्यजायो-
वाच तप्तो ब्रह्मचारी कुशलं सम्यगग्नीन् परिचचारीत् परि-
चरितवान् । भगवांश्चाग्निषु भक्तं न समावर्त्तयति । अतोऽ-
स्मद्भक्तं न समावर्त्तयतीति ज्ञात्वा त्वामग्नयो मा परिप्रवोचन्
गर्हां तव माकुर्य्युः । अतः प्रब्रूह्यस्मै विद्यामिष्टामुपकोसला

---

व्या॰ ब्रह्मोपासनं वक्तुं खण्डान्तरमवतारयति । पुनरिति ॥ न केवलं
ब्रह्मविद्याशेषत्वादित्यर्थः । पूर्व्ववदिति । यथा पूर्व्वस्मिन् खण्डे
श्रद्धातपसोर्ब्रह्मोपासनाङ्गत्वप्रदर्शनायाख्यायिकेत्युक्तं तद्वदित्यर्थः ॥
तप्त इति भवदपेक्षितां शुश्रूषां विदधानो बहुकायक्लेशं कृत-
वानित्यर्थः । विवक्षितशुश्रूषाकरणमेव विशदयति । कुशलमिति ॥
किमिति भवत्या मां ब्रूहीतीदमिदानीमुच्यते । न हि मत्तोऽन्यत्र
त्वदनुरागो युक्तिमानित्याशङ्क्य भगवति स्नेहादित्याह । भग-
वानिति ॥ अग्नीन् परिचर्य्यमाणब्रह्मचारिणोऽसमावर्त्तनमतः-
शब्दार्थः । गर्हापरिहारो द्वितीयेनातःशब्देन परामृश्यते ॥

उ० तस्मै हाप्रोच्यैव प्रवासाञ्चक्रे ॥ २ ॥ स ह व्याधि-
नाऽनशितुं दध्रे तमाचार्य्यजायोवाच ब्रह्मचा-
रिन्नशान किं नु नाश्नासीति स होवाच बहव
इमेऽस्मिन्पुरुषे कामा नानात्यया व्याधिभिः
प्रतिपूर्णोऽस्मि नाशिष्यामीति ॥ ३ ॥ अथ हाग्नयः
समूदिरे तप्तो ब्रह्मचारी कुशलं नः पर्य्यचारीत्

---

भा० चेति । तस्मा एवं जाययोक्तोऽपि ह्यप्रोच्यैवानुक्त्वैव किञ्चित्प्रवासाञ्चक्रे प्रवसितवान् । स होपकोसलो व्याधिना मानसेन दुःखेनानशितुमनशनं कर्त्तुं दध्रे धृतवान् मनः । तं तूष्णीमग्न्यागारेऽवस्थितमाचार्य्यजायोवाच हे ब्रह्मचारिन् अशान भुङ्क्ष्व । किं नु कस्मान्नु कारणान्नाश्नासीति । स होवाच बहवोऽनेकेऽस्मिन् पुरुषेऽकृतार्थे प्राकृते कामा इच्छाः कर्त्तव्यं प्रति । नानात्ययोऽतिगमनं येषां व्याधीनां कर्त्तव्यचिन्तानां ते नानात्यया व्याधयः कर्त्तव्यतया अप्राप्तिनिमित्तानि चित्तदुःखानीत्यर्थस्तैः प्रतिपूर्णोऽस्मि । अतो नाशिष्यामीत्युक्त्वा तूष्णींभूते ब्रह्मचारिण्यथ हाग्नयः

---

आ० आचार्य्यशुश्रूषापरं शिष्यं देवतैवानुगृह्णातीति ज्ञापयितु-मारभते । तस्मा इति ॥ आचार्य्याभिप्रायमजानतः शिष्यस्य दुःखप्राप्तिं दर्शयति । स हेति ॥ अतिगमनं वस्तुस्वरूपमतीत्य विषयेषु प्रवेश इति यावत् । नानात्यया इति कामानां विशेषणं ॥ कथं तेन व्याधयो विशेष्यन्ते तत्राह । कर्त्तव्यतयेति ॥ कामा एव व्याधय इत्यर्थः ॥ आचार्य्यप्रवासात्तज्जायाया ब्रह्म-

उ० हन्तास्मै प्रब्रवामेति तस्मै होचुः ॥ ४ ॥ प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति स होवाच विजानाम्यहं यत्प्राणो ब्रह्म कञ्च तु खञ्च न विजानामीति

---

भा० शुश्रूषया वर्जिताः कारुण्याविष्टाः सन्तस्त्रयोऽपि समूदिरे सम्भूयोक्तवन्तः । हन्तेदानीमस्मै ब्रह्मचारिणेऽस्मद्भक्ताय दुःखिताय तपस्विने श्रद्दधानाय सर्व्वेऽनुशास्मोऽनुप्रब्रवाम ब्रह्मविद्यामित्येवं सम्प्रधार्य्य तस्मै होचुरुक्तवन्तः॥ प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति स होवाच ब्रह्मचारी विजानाम्यहं यद्भवद्भिरुक्तं प्रसिद्धपदार्थकत्वात् प्राणो ब्रह्मेति। स यस्मिन् सति जीवनं यदपगमे च न भवतीति तस्मिन् वायुविशेषे लोके रूढोऽतो युक्तं ब्रह्मत्वं तस्य । तेन प्रसिद्धपदार्थकत्वाद्विजानाम्यहं यत्प्राणो ब्रह्मेति । कञ्च

---

व्या० चारिण्यनुग्रहात्तस्य चानशनाध्यवसायादनन्तरमित्यथशब्दार्थः॥
हन्तेति यद्यर्थोऽस्मद्भक्तं ब्रह्मचारिणमुपेक्ष्य देशान्तरं गतस्तर्हीति यावत्॥ अथ पुनरेत्याचार्य्यो ब्रह्मविद्यामस्मै विवक्षितात्र वक्ष्यति किं त्वरयेत्याशङ्क्याह । दुःखितायेति ॥ ब्रह्मविद्यासाधनसम्पत्तिमस्य दर्शयति । तपस्विन इति ॥ प्राणो ब्रह्मेति भवद्भिरुक्तं तदहं विजानामीति सम्बन्धः । तत्र हेतुमाह । प्रसिद्धेति ॥ प्राणपदस्य प्रसिद्धार्थमेव समर्थयते । यस्मिन्निति ॥ एवम्भूतः प्राणशब्द इति शेषः। प्राणशब्दस्य प्रसिद्धार्थत्वेऽपि कुतो ब्रह्मत्वं तस्मिन्प्रसिद्धमित्याशङ्क्याह । अत इति ॥ कार्य्यकरणसङ्घाते नष्टेऽग्रहणादित्यतःशब्दार्थः। स्वकीयज्ञानसमुच्चयार्थश्चकारः । विजानाम्यहमित्युक्तमुपसंहरति । तेनेति ॥

उ॰ ते होचुर्यद्वाव कं तदेव खं यदेव खं तदेव कमिति

---

भा॰ तु खञ्च न विजानामीति। ननु कं खंशब्दयोरपि सुखाकाशविषयत्वेन प्रसिद्धपदार्थकत्वमेव कस्मात् ब्रह्मचारिणोऽज्ञानं। नूनं सुखस्य कंशब्दवाच्यस्य क्षणप्रध्वंसित्वात् खंशब्दवाच्यस्याकाशस्याचेतनस्य कथं ब्रह्मत्वमिति मन्यते।

कथञ्च भगवतां वाक्यमप्रमाणं स्यादिति। अतो न विजानामीत्याह। तमेवमुक्तवन्तं ब्रह्मचारिणं ते हाग्नय ऊचुः। यद्वाव यदेव वयं कमवोचाम तदेव खमाकाशं इत्येवं खेन विशेष्यमाणं कं विषयेन्द्रियसंयोगजात् सुखान्निवर्त्तितं स्यान्नीलेनेव विशेष्यमाणमुत्पलं रक्तादिभ्यः। यदेव खमाकाशमवोचाम तदेव च कं सुखमिति जानीहि। एवञ्च सुखेन विशेष्यमाणं खं भौतिकादचेतनात्खान्निवर्त्तितं स्या-

---

व्या॰ खेनाज्ञातं ब्रह्मचारी दर्शयति। कञ्चेति॥ तस्याज्ञानमाक्षिपति। नन्विति॥ प्राणशब्दस्य वायुविषयत्वेन प्रसिद्धार्थत्ववदित्यपेरर्थः। ब्रह्मचारिणोऽभिप्रायं दर्शयन्नुत्तरमाह। नूनमिति॥

ननु विरुद्धार्थत्वादग्नीनां वाक्यं भवत्यप्रमाणमित्याशङ्क्याह। कथञ्चेति॥ विरुद्धार्थत्वप्रतीतेराग्निवाक्यस्य चाप्रामाण्यायोगाद्युक्तं ब्रह्मचारिणो ज्ञानमिति निगमयति। अत इति॥ खस्य विशेषणत्वं कस्य च विशेष्यत्वमित्यङ्गीकारे फलं कथयति। इत्येवमिति॥ कस्य विशेषणत्वं खस्य विशेष्यत्वमित्येवमपि विशेषणविशेष्यत्वमवगन्तव्यमित्याह। यदेवेति॥ यथोक्तविशेषणविशेष्यभावे फलमाह। एवञ्चेति॥ यद्वावेत्यादिवाक्यार्थमुक्तमेव प्रतिपत्तिसौकर्य्यार्थं सङ्क्षिपति। सुखमिति॥ इतरेतरविशेषणविशेष्यत्वमाक्षिपति। नन्विति॥ अन्यतरदेवेत्यत्र यदेव खमित्येत-

भा० नीलोत्पलवदेव । सुखमाकाशखं नेतरल्लौकिकमाकाशञ्च सुखाश्रयं नेतरत् भौतिकमित्यर्थः । नन्वाकाशञ्च सुखेन विशेषयितुमिष्टमस्त्वन्यतरदेव विशेषणं । यद्वाव कं तदेव खमतिरिक्तमितरत् । यदेव खं तदेव कमिति पूर्व्वविशेषणं वा । ननु सुखाकाशयोरुभयोरपि लौकिकसुखाकाशाभ्यां व्यावृत्तिरिष्टेत्यवोचाम । सुखेनाकाशे विशेषिते व्यावृत्तिरुभयोरर्थप्राप्तैवेति चेत् सत्यमेव । किन्तु सुखेन विशेषितस्यैवाकाशस्य ध्येयत्वं विहितं न त्वाकाशगुणस्य विशेषणस्य सुखस्य ध्येयत्वं विहितं स्यात् । विशेषणोपादानस्य विशे-

---

व्या० दुच्यते यद्वाव कं तदेव खमित्यत्र यद्वाव कं इत्येतद्विशेषणमतिरिक्तमधिकमकिञ्चित्करमिति योजना । यदि तु यदेव खं तदेव कमिति खेन कं विशेष्यते । तदा यदेव खमित्येतदेव विशेषणमस्तु ॥ यद्वाव कमिति पूर्व्वविशेषणमकिञ्चित्करमित्याह । यदेवेति ॥ वाशब्दोऽतिरिक्तमित्येतदनुकरणार्थः ॥ विशेषणयोरर्थवत्त्वं पूर्व्वोक्तसिद्धान्तो स्मारयति । नन्विति ॥ तथा च सुखस्य लौकिकसुखाद्व्यावृत्त्यर्थं यदेव खमिति विशेषणमाकाशस्य च लौकिकाकाशाद्व्यावृत्त्यर्थं । यद्वाव कमिति विशेषणमर्थवदिति शेषः ॥ अन्यतरविशेषणवशादपि यथोक्तव्यावृत्तिसिद्धेरकिञ्चित्करं विशेषणद्वयमिति शङ्कते । सुखेनेति ॥ यदा सुखेनाकाशं विशेष्यते तदा भूतादाकाशादाकाशं व्यावर्त्तितं भवति । सुखस्य तद्विशेषणत्वायोगात्सुखमपि लौकिकसुखाद्व्यवच्छिद्यते । लौकिकसुखस्याकाशविशेषणत्वानुपपत्तेः । अतः सुखेनाकाशस्याकाशेन सुखस्य चाविशेषितत्वसामर्थ्यात्तत्प्राप्त्यैव सुखाकाशयोर्लौकिकसुखाकाशाभ्यां व्यावृत्तिरित्यन्यतरदेव विशेषणमर्थवदित्यर्थः ॥ किमन्यतरस्यैव विशेषणस्य व्यावर्त्तकत्वमित्यापाद्यते किं वा तस्यैवार्थवत्त्वमिति तत्राद्यमङ्गीकरोति । सत्यमेवेति ॥ द्वितीयं दूषयति । न त्वित्यादिना ॥ विशिष्टस्यैव ध्येयत्वे विशेषण-

ॐ प्राणश्च हास्मै तदाकाशञ्चोचुः ॥ ५ ॥ १० ॥

---

भा० श्चनियन्तृत्वेनैवोपचयात् । अतः खेन सुखमपि विशेष्यते ध्येयत्वाय । कुतश्चैतन्निश्चीयते । कंशब्दस्यापि ब्रह्मशब्दसम्बन्धात् कं ब्रह्मेति । यदि हि सुखगुणविशिष्टस्य खस्य ध्येयत्वं विवक्षितं स्यात् कं खं ब्रह्मेति ब्रूयुरग्नयः प्रथमं । न चैवमुक्तवन्तः । किं तर्हि कं ब्रह्म खं ब्रह्मेति । अतो ब्रह्मचारिणो मोहापनयनाय कंखंशब्दयोरितरविशेषणविशेष्यत्वनिर्देशो युक्त एव यद्वाव कमित्यादिः । तदेतदग्निभिरुक्तं वाक्यार्थमस्मद्बोधाय श्रुतिराह । प्राणञ्च हास्मै ब्रह्मचारिणे । तस्याकाशस्तदाकाशः । प्राणस्य सम्बन्ध्याश्रयत्वेन हार्द आकाश इत्यर्थः । सुखगुणवत्त्व-

---

व्या० स्यापि ध्येयत्वं सिध्यतीति चेन्नैवं दण्डी प्रैषानन्वाहेति वद्विशेषणस्यान्यथासिद्धत्वादित्याह । विशेषणेति ॥ द्वयोरपि विशेषणयोरर्थवत्त्वं निगमयति । अत इति ॥ विधान्तरेण ध्येयत्वासम्भवादित्यतःशब्दार्थः । खमिव सुखेनेत्यपेरर्थः ॥ इतश्च सुखाकाशयोरितरेतरविशेषणविशेष्यत्वमेषितव्यमित्याह । कुतश्चेति ॥ कुतःशब्दोपात्तमितःशब्दार्थं स्फुटयति । कंशब्दस्येति ॥ खं ब्रह्मेति खंशब्दस्य ब्रह्मशब्दसम्बन्धवदित्यपेरर्थः ॥ गुणगुणिनोरुभयोरपि ध्येयत्वसिद्ध्यर्थमितरेतरविशेषणविशेष्यत्वं कंशब्दस्य च प्रत्येकब्रह्मशब्दसम्बन्धादपि स्वीकर्त्तव्यमित्युक्तं व्यतिरेकद्वारा साधयति । यदि हीति ॥ उक्तरीत्या द्वयोरपि ध्येयत्वमतःशब्दार्थः । ब्रह्मचारिणो मोहो नामान्योऽन्यविशेषणविशेष्यत्वाग्रहणादाकाशस्यैव गुणिनो ध्येयत्वं न तु सुखस्य गुणस्येति विभ्रमः । प्राणश्चेत्यादि वाक्यं नाग्नीनां न ब्रह्मचारिणः । तथा च कथमुपाख्यायिकामिदं निर्वहतीत्याशङ्क्याह । तदेतदिति ॥

उ० अथ हैनं गार्हपत्योऽनुशशास पृथिव्यग्निरन्नमादित्य इति य एष आदित्ये पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति ॥ १ ॥

---

भा० निर्देशात् । तच्चाकाशं सुखगुणविशिष्टं ब्रह्म तत्स्थञ्च प्राणं ब्रह्मसम्पर्कादेव ब्रह्म इत्युभयं प्राणञ्चाकाशञ्च समुच्चित्य ब्रह्मणी ऊचुरग्नय इति ॥ १० ॥

समभूयाग्नयो ब्रह्मचारिणे ब्रह्मोक्तवन्तः । अथानन्तरं प्रत्येकं स्वस्वविषयां विद्यां वक्तुमारेभिरे । तत्रादावेनं ब्रह्मचारिणं गार्हपत्योऽग्निरनुशशास । पृथिव्यग्निरन्नमादित्य इति ममेतास्तनवः । तत्र य आदित्ये एष पुरुषो दृश्यते सोऽहमस्मि गार्हपत्योऽग्निर्यश्च गार्हपत्योऽग्निः स एवाहमादित्ये पुरुषोऽस्मीति । पुनः परावृत्य स एवाहमस्मीति वचनं पृथिव्यन्नयोरिव भोज्यत्वलक्षणयोः सम्बन्धो

---

आ० आकाशस्य प्राणसम्बन्धित्वं कया विधयेत्यपेक्षायामाह । आश्रयत्वेनेति ॥ कार्य्यब्रह्मोपासनसमुचितं कारणब्रह्मोपासनमुपसंहर्त्तुमिति शब्दः ॥ १० ॥

प्रधानविद्यामुपदिश्याङ्गविद्याविधानायोपक्रमते । सम्भूयेति ॥ अनन्तरं प्रधानविद्योपदेशादिति शेषः । अग्निविद्यां वक्तुमारब्धानामग्नीनां मध्ये प्रथममग्निरिति श्रुतावथशब्दार्थः ॥ पृथिव्यादिचतुष्टयमनूद्याग्न्यादित्ययोरवान्तरभेदं दर्शयति । तत्रेति ॥ एवमग्न्यादित्ययोस्तादात्म्यमितीतिशब्दार्थः । य एष आदित्ये पुरुषो दृश्यते सोऽहमस्मीत्येतावतैव तयोस्तादात्म्यसिद्धेः स एवाहमस्मीति पुनरुक्तिरनर्थिकेत्याशङ्क्याह । पुनरिति ॥ भोज्यत्वलक्षणं स्वभावो ययोस्तयोर्गार्हपत्येन यथा सम्बन्धस्तथा गार्हपत्यादित्य-

उ॰ स य एतमेवं विद्वानुपास्तेऽपहते पापकृत्यां लोकी भवति सर्व्वमायुरेति ज्योग्जीवति नास्यावरपुरुषाः क्षीयन्त उप वयं तं भुञ्जामोऽस्मिꣳश्च लोकेऽमुष्मिꣳश्च य एतमेवं विद्वानुपास्ते ॥ २ ॥ ११ ॥

भा॰ न गार्हपत्यादित्ययोः। अन्तृत्वपक्तृत्वप्रकाशनधर्म्मा अविशिष्टा इत्यत एकत्वमेवानयोरत्यन्तं। पृथिव्यन्नयोस्तु भोज्यत्वेनाभ्यां सम्बन्धः। स यः कश्चिदेवं यथोक्तं गार्हपत्यमग्निमन्नान्नादत्त्वेन चतुर्धा प्रविभक्तमुपास्ते सोऽपहते विनाशयति पापकृत्यां पापं कर्म्म। लोकी लोकवांश्च मदीयेन लोकेनाग्नेयेन तद्वान् भवति यथा वयमिह च लोके। सर्व्वं वर्षशतमायुरेति प्राप्नोति। ज्योगुज्ज्वलं जीवति नाप्रख्यात इत्येतत्। न चास्यावरास्च ते पुरुषाश्चास्य विदुषः सन्ततिजा इत्यर्थः। न क्षीयन्ते सन्तत्युच्छेदो न भवतीत्यर्थः। किञ्च तं वयमुपभुञ्जामः पालयामोऽस्मिंश्च लोके जीवन्तममुष्मिंश्च लोके। य एतमेवं विद्वानुपास्ते यथोक्तं तस्यैतत्फलमित्यर्थः ॥ ११ ॥

व्या॰ योर्न सम्बन्धः किन्तु तादात्म्यलक्षण एवेत्यत्र हेतुमाह। अत्तृत्वेति ॥ पृथिव्यादावपि तादात्म्यं किं न स्यादित्याशङ्क्याह। पृथिवीति ॥ आभ्यामग्न्यादित्याभ्यामिति यावत्। स एवाहमस्मीति पराकृत्यापुनर्वचनं यथोक्तार्थविशेषसिद्ध्यर्थमिति भावः ॥ उक्ताया विद्याया गार्हपत्यविषयाया द्विविधं फलं दर्शयति। स यः कश्चिदित्यादिना ॥ कस्यैतत्फलमित्यपेक्षायामुक्तमेव सङ्क्षिपति। य एतमेवमिति ॥ ११ ॥

उ॰ अथ हैनमन्वाहार्य्यपचनोऽनुशशासापो दिशो नक्षत्राणि चन्द्रमा इति य एष चन्द्रमसि पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति ॥ १ ॥ स य एतमेवं विद्वानुपास्तेऽपहते पापकृत्यां लोकी भवति सर्व्वमायुरेति ज्योग्जीवति नास्यावरपुरुषाः क्षीयन्त उप वयं तं भुञ्जामोऽस्मिꣳश्च लोकेऽमुष्मिꣳश्च य एतमेवं विद्वानुपास्ते ॥ २ ॥ १२ ॥

---

भा॰ अथ हैनमन्वाहार्य्यपचनोऽनुशशास दक्षिणाग्निरापो दिशो नक्षत्राणि चन्द्रमा इत्येता मे मम चतस्रस्तनवश्चतुर्धा अहमन्वाहार्य्यपचन आत्मानं प्रविभज्यावस्थितः। तत्र य एष चन्द्रमसि पुरुषो दृश्यते सोऽहमस्मीति पूर्व्ववत्। अन्नसम्बन्धाज्ज्योतिष्ट्वसामान्याच्चान्वाहार्य्यपचनचन्द्रमसोरेकत्वञ्च दक्षिणादिक्सम्बन्धाच्च। अपां नक्षत्राणाञ्च

---

आ॰ गार्हपत्योपदेशानन्तर्य्यमथशब्दार्थः। अबादिचतुष्टयमनूद्य दक्षिणाग्नौ चन्द्रे च विशेषं दर्शयति। तत्रेति॥ अन्वाहार्य्यपचनचन्द्रमसोस्तादात्म्येनापन्ने नक्षत्राणाञ्च ताभ्यां भोज्यत्वेन सम्बन्ध इति वक्तुं पुनर्वचनमित्याह। स एवेति॥ कथं पुनरन्वाहार्य्यपचनचन्द्रमसोस्तादात्म्यं तत्राह। अन्नसम्बन्धादिति॥ प्रसिद्धं हि दर्शपूर्णमासयोरन्वाहार्य्यपचने हविः श्रपयन्ति। चन्द्रं प्राप्यान्नं भवतीत्यादौ चन्द्रमसि प्रसिद्धोऽन्नसम्बन्धः। तस्मात्तयोस्तादात्म्यमित्यर्थः। तयोरेकत्वे हेत्वन्तरमाह। ज्योतिष्ट्वेति॥ तत्रैव हेत्वन्तरमाह। दक्षिणेति॥ अन्वाहार्य्यपचनो हि दक्षिणाग्निरुच्यते। चन्द्रमाश्च दक्षिणेन पथा प्राप्यमाणो दक्षिणस्यां दिशि भवतीति गम्यते॥ उत्तरदिगधिष्ठातुरपि तस्य तत्सम्बन्धान्निवा-

उ॰ अथ हैनमाहवनीयोऽनुशशास प्राण आकाशो द्यौर्विद्युदिति य एष विद्युति पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति ॥ १ ॥ स य एतमेवं विद्वानुपास्तेऽपहते पापकृत्यां लोकी भवति सर्वमायुरेति ज्योग्जीवति नास्यावरपुरुषाः क्षीयन्ते उप वयं तं भुञ्जामोऽस्मिꣳश्च लोकेऽमुष्मिꣳश्च य एतमेवं विद्वानुपास्ते ॥ २ ॥ १३ ॥

---

भा॰ पूर्ववदन्नत्वेनैव सम्बन्धः । नक्षत्राणां चन्द्रमसो भोग्यत्वप्रसिद्धेः । अपामन्नोत्पादकत्वादन्नत्वं दक्षिणाग्नेः पृथिवीवद्गार्हपत्यस्य । समानमन्यत् ॥ १२ ॥

अथ हैनमाहवनीयोऽनुशशास प्राण आकाशो द्यौर्विद्युत् इति ममाप्येतास्तनवो य एष विद्युति पुरुषो दृश्यते सोऽहमस्मीत्यादि पूर्ववत् । सामान्यात् । दिवाका-

---

आ॰ रणात्तद्युक्तं तयोरैक्यमित्यर्थः ॥ अपां नक्षत्राणाञ्च चन्द्रवदन्वाहार्यपचनेन तादात्म्यमाशङ्क्याह । अपामिति ॥ पूर्ववत्पृथिव्यन्नयोस्तयोर्गार्हपत्यादित्याभ्यामन्नत्वेन सम्बन्धवदिति यावत् । सम्बन्धोऽन्वाहार्यपचनचन्द्रमोभ्यामिति शेषः । कथं नक्षत्राणामन्नत्वं तत्राह । नक्षत्राणामिति ॥ कथं पुनरपामन्नत्वं तदाह । अपामिति ॥ दक्षिणाग्नेर्दक्षिणाग्निं प्रतीति यावत् । पृथिव्या गार्हपत्याग्निं प्रत्यन्नत्ववदित्युदाहरणार्थः ॥ १२ ॥

स य एतमेवं विद्यावानित्याद्यन्यदित्युक्तं गार्हपत्यस्य दक्षिणाग्नेश्चोपासनानन्तर्यमथशब्दार्थः ॥ तत्रावान्तरभेदं दर्शयति । य एष इति ॥ सोऽहमस्मीत्याद्यन्यत्समानमिति सम्बन्धः । यथा पूर्वं ज्योतिष्ट्वाविशेषाद्गार्हपत्यादित्ययोरन्वाहार्यपचनचन्द्रम-

उ॰ ते होचुरुपकोसलैषा सोम्य तेऽस्मद्विद्यात्म-
विद्या चाचार्य्यस्तु ते गतिं वक्तेत्याजगाम हास्या-
चार्य्यस्तमाचार्य्योऽभ्युवादोपकोसल३ इति ॥ १ ॥
भगव इति ह प्रतिशुश्राव ब्रह्मविद इव सोम्य
ते मुखं भाति को नु त्वानुशशासेति को नु
मानुशिष्याद्भो इतीहापेव निह्नुते इमे नूनमीदृशा

---

भा॰ अयोस्त्वाश्रयत्वाद्विद्युदाहवनीययोर्भोग्यत्वेनैव सम्बन्धः।
समानमन्यत् ॥ १३ ॥

ते पुनः सम्भूयोचुर्हे उपकोसल एषा सोम्य ते तवास्म-
द्विद्याग्निविद्येत्यर्थः। आत्मविद्या पूर्व्वोक्ता प्राणो ब्रह्म कं
ब्रह्म खं ब्रह्मेति च। आचार्य्यस्तु ते गतिं वक्ता विद्याफल-
प्राप्तय इति उक्त्वोपरेमुरग्नयः। आजगाम हास्याचार्य्यः
कालेन। तञ्च शिष्यमाचार्य्योऽभ्युवादोपकोसल३ इति
भगव इति ह प्रतिशुश्राव ब्रह्मविद इव सोम्य ते मुखं प्रसन्नं

---

आ॰ सोऽस्य साम्यमुक्तं तथा ज्योतिष्ट्वसाम्याद्विद्युदाहवनीययोस्तादात्म्य-
मैक्यमित्याह। पूर्व्ववदिति ॥ कथं तर्हि ताभ्यां दिवाकाशयोः
सम्बन्धस्तत्राह। दिवाकाशयोस्त्विति ॥ आहवनीयस्य फलत्वा-
द्दिवो विषयत्वं तत्र होमादिद्वारा निष्पन्नापूर्व्वस्य द्युलोकफल-
त्वाभ्युपगमाद्विद्युतस्त्वाकाशाश्रयत्वं प्रसिद्धमतो विद्युदाहवनी-
ययोर्भोग्यत्वेनैव दिवाकाशयोः सम्बन्ध इत्यर्थः ॥ १३ ॥

स य एतमेवमित्याद्यन्यदित्युक्तमग्नीनां मिथो विसंवादं
व्यावर्त्तयति। ते पुनरिति ॥ तथाप्यात्मविद्या श्रोतव्येत्याशङ्क्याह।
आत्मविद्येति ॥ कथमाचार्य्योपदेशमन्तरेण भगवदुपदेशवशा-

उ॰ होवाचैतदमृतमभयमेतद्ब्रह्मेति तद्यद्यप्यस्मिन् स-
र्पिर्वोदकं वा सिञ्चन्ति वर्त्मनी एव गच्छति॥ १॥

भा॰ आचार्यस्तु ते गतिं वक्तेति गतिमात्रस्य वक्तेत्यवोचन् भविष्यद्विषयापरिज्ञानञ्चाग्नीनां। नैष दोषः। सुखाकाशस्यैवाक्षिणि दृश्यत इति द्रष्टुरनुवादात्। एष आत्मा प्राणिनामिति होवाच एवमुक्तवानेतद्यदेवात्मतत्त्वमवोचाम। एतदमृतममरणधर्म्यविनाश्यत एवाभयं यस्य हि विनाशाशङ्का तस्य भयोपपत्तिस्तदभावादभयमत एवैतद्ब्रह्म बृहदनन्तमिति। किञ्चास्य ब्रह्मणोऽक्षिपुरुषस्य माहात्म्यं तत्तत्र पुरुषस्य स्थानेऽक्षिणि यद्यपि अस्मिन् सर्पिर्वोदकं वा सिञ्चन्ति वर्त्मनी एव गच्छति पक्षावेव

---

व्या॰ हितेत्ये विशेषणान्तरमाह। शान्तैरिति॥ तेषां निवृत्तचक्षुष्ट्वे हेतुमाह। विवेकिभिरिति॥ पुरुषोऽक्षिणि दृश्यतेत्यत्र बृहदारण्यकश्रुतिं प्रमाणयति। चक्षुष इति॥ आचार्येणापूर्व्वविद्योपदेशादग्नीनामुक्तिर्मिथ्या प्राप्तेति शङ्कते। नन्विति॥ अग्निवचनस्य गत्यन्तरमाह। भविष्यदिति॥ नाग्नीनामुक्तिर्मृषा नापि तेषां भविष्यद्विषयाज्ञानमिति दूषयति। नैष दोष इति॥ यत्सुखगुणकमाकाशमुपास्यमग्निभिरुपदिष्टं तस्यैव कारणब्रह्मणो द्रष्टारूपस्याक्षिणि दृश्यते इत्यनुवादो गतिव्याख्यानायाचार्येण क्रियते तन्नास्ति दोषद्वयमित्यर्थः॥ अक्षिणि दृश्यत इति प्रयोगादाचार्येण छायात्मा विवक्षित इत्याशङ्क्याह। एष इति॥

इतश्च नायं पुरुषश्छायात्मेत्यनन्तरवाक्यमवतार्य्य व्याकरोति। एतदित्यादिना॥ इतिशब्दो यथोक्तगुणगणैरुपास्यः पुरुषो न छायात्मा भवितुमर्हतीत्यर्थः। असङ्गत्वाच्च नायं छायात्मे-

उ० एतꣳ संयद्वाम इत्याचक्षत एतꣳ हि सर्वाणि वामान्यभि संयन्ति सर्वाण्येनं वामान्यभि संयन्ति य एवं वेद ॥ २ ॥

एष उ एव वामनीरेष हि सर्वाणि वामानि नयति सर्वाणि वामानि नयति य एवं वेद ॥ ३ ॥

---

भा० गच्छति न चक्षुषा सम्बध्यते पद्मपत्रेणेवोदकं । स्थानस्याप्येतन्माहात्म्यं किं पुनः स्थानिनोऽक्षिपुरुषस्य निरञ्जनत्वं वक्तव्यमित्यभिप्रायः ॥ एतं यथोक्तं पुरुषं संयद्वाम इत्याचक्षते । कस्मात् । यस्मादेवं सर्व्वाणि वामानि वननीयानि सम्भजनीयानि शोभनानि अभिसंयन्त्यभिसंगच्छन्तीत्यतः संयद्वामः । तथैवंविदमेनं सर्व्वाणि वामान्यभिसंयन्ति य एवं वेद ॥

एष उ एव वामनीर्यस्मात् एष हि सर्व्वाणि वामानि पुण्यकर्म्मफलानि पुण्यानुरूपं प्राणिभ्यो नयति प्रापयति

---

आ० त्याह । किञ्चेति । माहात्म्यं स्थानद्वारेणोच्यत इति शेषः ॥ किमेतावता पुरुषस्यायातमित्याह । स्थानस्यापीति ॥ तस्यैवोपास्यत्वार्थं गुणान्तरं दर्शयति । एतमिति ॥ पुरुषस्य संयद्वामत्वं ब्रह्मविदुक्त्या सिद्धमपि नात्यर्थमन्तरेण व्यक्तीभवतीति शङ्कते । कस्मादिति ॥ अवयवार्थोपन्यासेन परिहरति । यस्मादिति ॥ गुणोपास्तिफलमाह । तथेति ॥ उपास्यगुणानुसारेणेत्यर्थः ॥

एवं विदं संयद्वामगुणविशिष्टपुरुषोऽस्मीति वेदितारमित्येतद्गुणान्तरमुपास्यत्वाय दर्शयति । एष इति ॥ तद्युत्पादयति । एष इति ॥ गुणान्तरं ध्यानेनोक्त्वा व्युत्पादयति । एष इत्यादिना ॥ आदित्यादिरूपेणास्यैव दीप्यमानत्वे श्रुत्यन्तरमनुकूलयति ।

उ० एष उ एव भामनीरेष हि सर्वेषु लोकेषु भाति सर्वेषु लोकेषु भाति य एवं वेद ॥ ४ ॥ अथ यदु चैवास्मिञ्छव्यं कुर्वन्ति यदि च नार्च्चिषमेवाभिसम्भवन्त्यर्च्चिषोऽहरह्न आपूर्य्यमाणपक्षमापूर्य्य

---

भा० वहति चात्मधर्म्मत्वेन विदुषः फलं सर्व्वाणि वामानि नयति य एवं वेद ॥ एष उ एव भामनीरेष हि यस्मात्सर्व्वेषु लोकेष्वादित्यचन्द्राग्न्यादिरूपैर्भाति दीप्यते । तस्य भासा सर्व्वमिदं भातीति श्रुतेरतो भामानि नयतीति भामनीः । य एवं वेदासावपि सर्व्वेषु लोकेषु भाति ॥ अथेदानीं यथोक्तब्रह्मविदो गतिरुच्यते यद्यदि उ च एवास्मान्नेवंविदि शव्यं शवकर्म्म मृते कुर्व्वन्ति यदि च न कुर्व्वन्ति ऋत्विजः सर्व्वथाप्येवंवित्तेन शवकर्म्मणा अकृतेनापि प्रतिवद्धो न ब्रह्म प्राप्नोति न च कृतेन शवकर्म्मणाऽस्य कश्चनाभ्यधिको लोकः न कर्म्मणा वर्द्धते नो कनीयानिति श्रुत्यन्तरात् । शवकर्म्मण्यनादरं दर्शयन् विद्यां स्तौति न पुनः शवकर्म्म एवंविदो न कर्त्तव्यमिति ॥

---

व्या० तस्येति ॥ गुणोपास्तिफलमाह । य एवमिति ॥ गतिं वक्तुं पूर्व्वोक्तब्रह्मविद्यायामधिकगुणानेवाचार्य्योऽन्ववादीदिदानीं तामेव गतिमवतारयति । अथेति ॥ तां वक्तुं पातनिकां करोति । यद्यदीति ॥ करणाकरणाभ्यां विदुषो न वृद्धिर्नापि हानिरित्यत्र श्रुत्यन्तरं प्रमाणयति । न कर्म्मणेति ॥ अथ यदु चैवेत्यादिवाक्यस्य तात्पर्य्यं दर्शयति । शवकर्म्मणीति ॥ तात्पर्य्यान्तरं दर्शयति । न पुनरिति ॥

उ० माणपक्षाद्यान्षडुदङ्ङेति मासाꣳस्तान्मासेभ्यः संवत्सरꣳ संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषो मानवः ॥ ५ ॥

---

भा० अक्रियमाणे हि शवकर्म्मणि कर्म्मणां फलारम्भे प्रतिबन्धः कश्चिदनुमीयते अन्यत्र। यत इह विद्याफलारम्भकाले शवकर्म्म स्याद्वा न वेति विद्यावतोऽप्रतिबन्धेन फलारम्भं दर्शयति। ये सुखाकाशमचिरस्थं संयद्वामनीर्भामनीरित्येवङ्गुणमुपासते प्राणसहितामग्निविद्यां तेषामन्यत्कर्म्म भवतु मा वा भूत् सर्व्वथापि तेऽर्च्चिषमेवाभिसम्भवन्त्यर्च्चिरभिमानिनीं देवतामभिसम्भवन्ति प्रतिपद्यन्त इत्यर्थः। अर्च्चिषोऽर्च्चिर्देवताया अहरहरभिमानिनीं देवतामह्न आपूर्य्यमाणपक्षं शुक्लपक्षदेवतामापूर्य्यमाणपक्षाद्यान् षण्मासानुदङ्ङुत्तरां दिशमेति सविता तान्मासानुत्तरायणदेवतां तेभ्यो मासेभ्यः संवत्सरं संवत्सरदेवतां ततः संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो

---

आ० यदि विदुषोऽपि शवकर्म्म कर्त्तव्यं कर्त्तर्हि तस्य विशेषस्तत्राह। अक्रियमाणे हीति॥ अन्यत्रेत्यविद्यावानुच्यते। इहेति प्रस्तुतवाक्यस्य विद्यावतो वोक्तिरिति शवकर्म्मण्यनादरपूर्व्वकमिति शेषः। विद्यावतः शवकर्म्मभावाभावयोरप्रतिबन्धः फलं सिद्ध्यति। अविद्यावतस्तु शवकर्म्म करणे कर्म्माणि न फलदानीति विद्यास्तुतिरिहाभिप्रेतेति भावः॥ तेऽर्च्चिषमेवेत्यत्र तच्छब्दार्थं व्याचष्टे। ये सुखाकाशमिति॥ सत्यलोकस्थमिति देशव्यवच्छेदेन किमिति व्याख्यायते मुख्यमेव ब्रह्मशब्दालम्बनं किं नोच्यते तत्राह। गन्त-

उ० स एनान् ब्रह्म गमयत्येष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्त्तं नावर्त्तन्ते नावर्त्तन्ते ॥ ६ ॥ १५ ॥

---

भा० विद्युतं तत्तत्रस्थांस्तान् पुरुषः कश्चिद्ब्रह्मलोकादेत्य अमानवो मानव्यां सृष्टौ भवो मानवो न मानवो अमानवः स पुरुष एतान् ब्रह्म सत्यलोकस्थं गमयति गन्तृगन्तव्यगमयितृत्वव्यपदेशेभ्यः । सन्मात्रे ब्रह्मप्राप्तौ तदनुपपत्तेः । ब्रह्मैव सन् ब्रह्माऽप्येतीति हि तत्र वक्तुं न्याय्यं। सर्व्वभेदनिरासेन सन्मात्रप्रतिपत्तिं वक्ष्यति । न चादृष्टो मार्गो गमनायोपतिष्ठते। स एनमविदितो न भुनक्तीति श्रुत्यन्तरात् । एष देवपथो देवैरर्चिरादिभिर्गमयितृत्वेनाधिकृतैरुपलक्षितः पन्था देवपथ उच्यते। ब्रह्म गन्तव्यं तेन चोपलक्षित इति ब्रह्मपथः। एतेन प्रतिपद्यमाना गच्छन्तो ब्रह्म

---

व्या० गन्तव्येति॥ एतेभ्यो हेतुभ्यः सत्यलोकस्थं ब्रह्म न मुख्यमिति सम्बन्धः॥ मुख्यब्रह्मप्राप्तावपि यथोक्तव्यपदेशा भविष्यन्तीत्याशङ्क्याह । सन्मात्रेति ॥ तदनुपपत्तेर्न तादृग्ब्रह्मशब्दमिति शेषः ॥ अनुपपत्तिमेव स्फोरयति। ब्रह्मैवेति ॥ तत्रेति मुख्यप्राप्तिरुच्यते। कस्यचिदपि सन्मात्रब्रह्मप्राप्तिरत्र नास्तीत्याशङ्क्याह । सर्व्वभेदेति ॥ वक्ष्यति षष्ठेऽध्याये श्रुतिरिति शेषः ॥ जीवस्य सन्मात्रब्रह्म पारमार्थिकं रूपश्चेदुपासकस्यापि न गतिरुचिता तस्यापि ब्रह्मातिरिक्तस्वरूपाभावादित्याशङ्क्याह । न चेति ॥ एकत्वलक्षणो मार्गो न दृष्टश्चेदवगमनाय नोपतिष्ठते । न हि ध्याननिष्ठस्यादृष्टमेकत्वगमनं वारयितुं पारयत्यज्ञानप्रतिबन्धात् । तस्य गमनभ्रान्तिसम्भवादित्यर्थः । यदा एकत्वलक्षणो मार्गो नावगतो न गमनाय

भा॰ इमं मानवं मनुसम्बन्धिनं मनोः सृष्टिलक्षणमावर्त्तं नाव-र्त्तन्ते। आवर्त्तन्तेऽस्मिन् जननमरणप्रबन्धचक्रारूढा घटीय-न्त्रवत् पुनः पुनरित्यावर्त्तस्तं न प्रतिपद्यन्ते। नावर्त्तन्त इति द्विरुक्तिः सफलाया विद्यायाः परिसमाप्तिप्रदर्शनार्था॥१५॥

रहस्यप्रकरणे प्रसङ्गत्वादारण्यकत्वसामान्याच्च यज्ञे क्षते उत्पन्ने व्याहृतयः प्रायश्चित्तार्था विधातव्याः । तद-भिज्ञस्य चर्त्विजो ब्रह्मणो मौनमित्यत इदमारभ्यते ।

---

व्या॰ मोक्षायोपस्थितो भवतीत्यर्थः॥ तत्र प्रमाणमाह । स एनमिति॥ स परमात्मा प्रत्यक्त्वेनाज्ञातः सन्नेनमधिकारिणं मुक्तिप्रदानेन न पालयतीत्यर्थः। प्रकृतां गतिमुपसंहरति । एष इति॥ गतिफलं निगमयति । एतेनेति॥ इममिति विशेषणादनावृत्तिरस्मि-न्कल्पे। कल्पान्तरे त्वावृत्तिरिति सूच्यते॥ आवर्त्तशब्दं व्याक-रोति। आवर्त्तन्त इति॥ सफलाया यथोक्तगतिपूर्व्वकेन फलेन सहिताया इति यावत्। कार्य्यब्रह्मोपासनसमुच्चिता कारणब्र-ह्मोपासना यथोक्ता न विद्यासहिता विद्यात्र विवक्षिता तस्या इत्यर्थः॥ १५ ॥

पूर्व्वोत्तरग्रन्थयोरसङ्गतिमाशङ्क्य प्रासङ्गिकीं सङ्गतिमाह। रहस्यप्रकरण इति॥रहस्यमुपासनं तत्प्रकरणे विदुषां फलप्राप्तय मार्गोपदेशप्रसङ्गेन यज्ञस्य समाप्तिं गमनायानन्तरग्रन्थेन मार्गो-पदेशादस्ति सङ्गतिरित्यर्थः॥ किञ्च पूर्व्वोत्तरग्रन्थयोरारण्यकत्वेन न समानत्वादपि सङ्गतिरस्तीत्याह। आरण्यकत्वेति॥ किञ्चाभि-विषया विद्या प्रकृते यज्ञे वा सिद्धेऽभिसम्बन्धे यदि किमपि क्षत-मुत्पद्यते तदा प्रायश्चित्तार्था व्याहृतयो विधातव्या इत्यनन्तरं ग्रन्थ-प्रवृत्तिरिति सङ्गत्यन्तरमाह। यज्ञ इति॥ प्रकृतायामुपासनायां मौनमङ्गीक्रियते वाग्व्यापारे विक्षिप्तचित्ततया ध्यानानुष्ठाना-सिद्धेः। ऋत्विग्विशेषस्य च प्रायश्चित्ताभिज्ञस्य मौनमत्र विधीयते तेनास्ति मिथः सङ्गतिरित्याह। तदभिज्ञस्येति॥

उ० एष ह वै यज्ञो योऽयं पवत एष ह यन्नि-
दꣳ सर्वं पुनाति यदेष यन्निदꣳ सर्वं पुनाति

भा० एष ह वै एष वायुर्योऽयं पवतेऽयं यज्ञः। ह वै इति प्रसिद्धार्थावद्योतकौ निपातौ। वायुप्रतिष्ठो हि यज्ञः प्रसिद्धो श्रुतिषु। स्वाहा वातेधाः। अयं वै यज्ञो योऽयं पवत इत्यादिश्रुतिभ्यः। वात एव हि चलनात्म-कत्वात्क्रियासमवायी। वात एव यज्ञस्यारम्भकः। वातः प्रतिष्ठेति च श्रवणात्। एष ह यन् गच्छन् चलन्निदं सर्वं जगत् पुनाति पावयति शोधयति। न ह्यचलतः

व्या० यज्ञस्य देवतोद्देशेन द्रव्यत्यागात्मकत्वात्क्रियायाश्च त्वगभङ्गिन्या गतिमत्त्वायोगान्मार्गोपदेशासम्भवात्कथमाद्या सङ्गतिरित्या-शङ्क्य गतिमत्त्वं सम्पादयितुं यज्ञस्य वायुरूपत्वमाह। एष इत्यादिना॥ यज्ञो वाय्वाश्रयो वाय्वात्मक इति श्रौती प्रसिद्धि-स्तामेव प्रकटयति। वायुप्रतिष्ठ इति॥ श्रुतीरुदाहरति। स्वाहेति॥ स्वाहाकारमुच्चार्य्य वाते वायौ धीयते क्षिप्यते इति वातेधा यज्ञः॥ श्रुत्यन्तरमाह। अयमिति॥ आदिशब्देन वाता-द्यज्ञः प्रयुज्यतामिति श्रुतिर्गृह्यते॥ आदर्शितश्रुतीनामर्थं सङ्कृ-ह्णाति। वात इति॥ यो यज्ञः क्रियासमवायी तत्समुदायात्मकः स वायुरेव। द्वयोश्चलनात्मकत्वाविशेषात्। तस्माद्वायुप्रतिष्ठस्त-दात्मको यज्ञ इत्यर्थः॥ वायुप्रतिष्ठो यज्ञ इत्यत्र श्रुत्यन्तरमाह। वात एवेति॥ पवनत्वश्रुत्याऽपि वायुयज्ञयोरेकत्वमाह॥ एष ह यन्निति॥ विनाऽपि वायुं शुद्धिः सिद्ध्यतीत्याशङ्क्याह। न हीति॥ अचलतो विहितक्रियामनुतिष्ठत इति यावत्। शुद्धिर्नाम दोष-निरासः। स च निषिद्धं प्रत्यक्तुं यतमानस्य सिद्ध्यति। न तु निषिद्धक्रियात्यागोदासीनस्य दोषनिरासात्मिका शुद्धिः सम्भ-

उ॰ तस्मादेष एव यज्ञस्तस्य मनश्च वाक् च वर्त्तनी ॥ १ ॥ तयोरन्यतरां मनसा सꣳस्करोति ब्रह्मा वाचा होताऽध्वर्युरुद्गाताऽन्यतराꣳ स यत्रोपाकृते प्रातरनुवाके पुरा परिधानीयाया ब्रह्मा

---

भा॰ शुद्धिरस्ति। दोषनिरसनं चलतो हि दृष्टं न स्थिरस्य। यद्यस्माच्च यन् एष इदं सर्व्वं पुनाति तस्मादेष एव यज्ञो यत्पुनातीति। तस्यास्यैवं विशिष्टस्य यज्ञस्य वाक् च मन्त्रोच्चारणे व्यापृता। मनश्च यथाभूतार्थज्ञाने व्यापृतं। ते एते वाङ्मनसे वर्त्तनी मार्गौ याभ्यां यज्ञस्तायमानः प्रवर्त्तते ते वर्त्तनी। प्राणापानपरिचलनवत्या हि वाचश्चित्तस्य चोत्तरोत्तरक्रमो यद्यज्ञ इति हि श्रुत्यन्तरं। अतो वाङ्मनसाभ्यां यज्ञो वर्त्तनीभ्यां वर्त्तत इति वाङ्मनसे वर्त्तनी उच्येते यज्ञस्य। तयोर्वर्त्तन्योरन्यतरां वर्त्तनीं मनसा विवेकज्ञानवता संस्करोति ब्रह्मार्त्विग्वाचा वर्त्तन्या।

---

व्या॰ वति। चलनं वायुः। तस्माद्वायुरेव चलनद्वारा सर्व्वं जगत्पुनातीत्याह। दोषेति॥

वायोरस्तु पावनत्वं प्रकृते किमायातमित्याशङ्क्याह। यद्यस्मादिति॥ वाय्वात्मना गतिविशिष्टस्य यज्ञस्य मार्गद्वयमुपदिशति। तस्येति॥ एवं विशिष्टस्य पावनस्य वायुरूपस्येति यावत्। यज्ञस्योक्तमार्गद्वयवैशिष्ट्ये सोपस्कारमैतरेयवाक्यमुदाहरति। प्राणेति॥ प्राणापानाभ्यामुच्छ्वासनिश्वासाभ्यां परिचलनं विद्यते यस्यास्तस्या वाचश्चित्तस्य पूर्व्वापरभावक्रमेण यज्ञः सम्पाद्यते। मनसा हि ध्यायन् वाचमभिव्याहरन् पूर्व्वापरीयभावेन यज्ञं सम्पादयतीत्यर्थः। यज्ञस्य मार्गद्वयविशिष्ट-

उ० व्यववदति ॥ २ ॥ अन्यतरामेव वर्त्तनिꣳ सꣳस्करोति हीयतेऽन्यतरा स यथैकपाद्व्रजन्यथो वैकेन चक्रेण वर्त्तमानो रिष्यत्येवमस्य यज्ञो रिष्यति यज्ञꣳ रिष्यन्तं यजमानोऽनु रिष्यति स इष्ट्वा पापीयान् भवति ॥ ३ ॥ अथ यत्रोपाकृते प्रातरनु-

---

भा० होताऽध्वर्य्युरुद्गातेत्येते त्रयोऽप्यृत्विजोऽन्यतरां वाग्लक्षणां वर्त्तनीं वाचैव संस्कुर्व्वन्ति। तत्रैवं सति ते वाङ्मनसे वर्त्तनी संस्कार्य्ये यज्ञे ॥

अथ स यत्र यस्मिन् काले उपाकृते प्रारब्धे प्रातरनुवाके शस्ते पुरा पूर्व्वं परिधानीयाया ऋचो ब्रह्मैतस्मिन्नन्तरे काले व्यववदति मौनं परित्यजति यदि तदान्यतरामेव वाग्वर्त्तनीं संस्करोति। ब्रह्मणा संस्क्रियमाणा मनोवर्तनी हीयते विनश्यति छिद्रीभवत्यन्यतरा । स यज्ञो वाग्वर्त्तन्यैवान्यतरया वर्त्तितुमशक्नुवद्रिष्यति। कथमिवेत्याह । स यथैकपात्पुरुषो व्रजन् गच्छन्नध्वानं

---

आ० मुपसंहरति। अत इति ॥ तयोरन्योन्यमुपकार्य्योपकारकभावं दर्शयति। तयोरिति॥ वाचा सम्यक्प्रयुक्तयेति शेषः। संस्कृतायां वाग्वर्त्तन्यान्त्वयैव यज्ञो निष्पन्नो भवतीत्याह। वाचैवेति॥ किन्तर्हि मनोवर्त्तन्या संक्रियत इत्याशङ्क्याह। तत्रेति॥ यज्ञस्य द्वाभ्यां मार्गाभ्यां नीयमानत्वे पूर्व्वोक्तरीत्या स्थिते सतीति यावत्॥

मनोवर्तन्याः संस्काराभावे प्रत्यवायं दर्शयति। अथेत्यादिना॥ मनो वर्त्तनी ब्रह्मणा वाग्वर्त्तनी च होतृप्रभृतिभिः संस्कार्य्येति व्यवस्थान्तरमित्यर्थः। स ब्रह्मेत्यन्वयं सूचयति। ब्रह्मेति॥ पुनरुक्तिस्तस्य क्रियापदेन सम्बन्धद्योतनार्था । एतस्मिन्नन्तरे

उ० वाचो न पुरा परिधानीयाया ब्रह्मा व्यववदत्युभे एव वर्त्तनी सᳫंस्कुर्वन्ति न हीयतेऽन्यतरा ॥ ४ ॥ स यथोभयपाद्व्रजन्रथो वोभाभ्यां चक्राभ्यां वर्त्तमानः प्रतितिष्ठत्येवमस्य यज्ञः प्रतितिष्ठति यज्ञं प्रतितिष्ठन्तं यजमानोऽनु प्रतितिष्ठति स इष्ट्वा श्रेयान् भवति ॥ ५ ॥ १६ ॥

---

भा० रिष्यति। रथो वैकेन चक्रेण वर्त्तमानो गच्छन्रिष्यत्येवमस्य यजमानस्य ब्रह्मणा यज्ञो रिष्यति विनश्यति। यज्ञं रिष्यन्तं यजमानोऽनुरिष्यति। यज्ञप्राणो हि यजमानः। अतो युक्तो यज्ञरेषे रेषस्तस्य। स तं यज्ञमिष्ट्वा तादृशं पापीयान्पापतरो भवति॥ अथ पुनर्यत्र ब्रह्मा विद्वान्मौनं परिगृह्य वाग्विसर्गमकुर्व्वन्वर्त्तते यावत्परिधानीयाया न व्यववदति। तथैव ते सर्व्वर्त्विज उभे एव वर्त्तनी संस्कुर्व्वन्ति न हीयतेऽन्यतरापि॥ किमेवेत्याह। पूर्व्वोक्तविपरीतौ दृष्टान्तौ। एवमस्य यजमानस्य यज्ञः

---

व्या० काले प्रातरनुवाकः शस्त्रमारभ्य तत्परिसमाप्तेरन्तरावस्थायामित्यर्थः। वाचो होत्रादिभिः संस्कार्य्यत्वमस्तु। मनसश्च ब्रह्मसंस्कार्य्यत्वं माभूदेतावता यज्ञस्य किमायातमित्याशङ्क्याह। स यज्ञ इति॥ यज्ञ भ्रंशमेवाकाङ्क्षाद्वारा व्युत्पादयति। कथमित्यादिना॥

नाशेऽपि यज्ञस्य यजमानस्य किमायातमित्याशङ्क्याह। यज्ञप्राणो हीति॥ वाग्वर्त्तनी संस्काराभावेऽपि तुल्यो दोषः॥ मौनगुणं दर्शयति। अथ पुनरिति॥ तथैव सम्यगनुष्ठातार इति यावत्।

उ० प्रजापतिर्लोकानभ्यतपत्तेषां तप्यमानानाᳬं रसान्प्राबृहदग्निं पृथिव्या वायुमन्तरिक्षादादित्यं दिवः ॥ १ ॥ स एतास्तिस्रो देवता अभ्यतपत्तासां तप्यमानानाᳬं रसान्प्राबृहदग्नेर्ऋचो वायोर्यजूᳬंषि सामादित्यात् ॥ २॥ स एतां त्रयीं

---

भा० स्ववर्त्तनीभ्यां वर्त्तमानः प्रतितिष्ठति स्वेनात्मनाऽविनश्यन् वर्त्तत इत्यर्थः। यज्ञं प्रतितिष्ठन्तं यजमानोऽनु प्रतितिष्ठति एवं मौनो विज्ञानवद्ब्रह्मोपेतं यज्ञमिष्ट्वा श्रेयान् भवति श्रेष्ठो भवतीत्यर्थः॥ १६ ॥

अत्र ब्रह्मणो मौनं विहितं। तद्भेषे ब्रह्मत्वकर्मणि चाथान्यस्मिंश्च हौत्रादिकर्मारेषे व्याहृतिहोमः प्रायश्चित्तमिति। तदर्थं व्याहृतयो विधातव्या इत्याह। प्रजापतिर्लोकानभ्यतपल्लोकानुद्दिश्य तत्र सारजिघृक्षया ध्यानलक्षणं तपश्चचार। तेषां तप्यमानानां लोकानां रसान्साररूपान् प्राबृहदुद्धृतवान् जग्राहेत्यर्थः। कान्। अग्निं रसं पृथिव्याः। वायुमन्तरिक्षात्। आदित्यं दिवः। पुनरप्येव-

---

आ० तथा सति ब्रह्मा चान्ये चर्त्विजो द्वे वर्त्तन्यौ संस्कुर्व्वन्त्येवेत्याह। नेति॥ वर्त्तनीद्वयसंस्कारे किं स्यादित्यपेक्षायामाह। एवमिति॥ १६॥

नित्यानुष्ठानमुक्त्वा नैमित्तिकप्रायश्चित्तविधानार्थमुपक्रमते। अथेति॥ तद्भ्रेषे ब्रह्मणो मौनभ्रंशे सतीति यावत्। रसान् विशेषतो ज्ञातुं पृच्छति। कानिति॥ एवं यथा लोकानभ्यतपत तथेति यावत्। जग्राहेति सम्बन्धः। तदेव विवृणोति

उ॰ विद्यामभ्यतपत्तस्यास्तप्यमानाया रसान्प्रावृहद्भू-
रित्यृग्भ्यो भुवरिति यजुर्भ्यः स्वरिति सामभ्यः
॥ ३ ॥ तद्यदृक्तो रिष्येद्भूः स्वाहेति गार्हपत्ये जुहु-
याहचामेव तद्रसेनर्चां वीर्य्येणर्चां यज्ञस्य विरि-
ष्टꣳ सन्दधाति ॥ ४ ॥ अथ यदि यजुष्टो रिष्ये-
द्भुवः स्वाहेति दक्षिणाग्नौ जुहुयाद्यजुषामेव
तद्रसेन यजुषां वीर्य्येण यजुषां यज्ञस्य विरिष्टꣳ

---

भा॰ मेवमग्न्याद्याः। स एतास्तिस्रो देवता उद्दिश्याभ्यतपत्। ततोऽपि सारं रसं त्रयीविद्यां जग्राह तां पुनरभ्यतपत्त्रयीं विद्यां। तस्यास्तप्यमानाया रसं भूरिति व्याहृतिमृग्भ्यो जग्राह। भुवरिति व्याहृतिं यजुर्भ्यः। स्वरिति व्याहृतिं सामभ्यः। अत एव लोकदेववेदरसा महाव्याहृतयः॥ अतस्तत्र यज्ञे यद्यृक्तः ऋक्सम्बन्धादृङ्निमित्तं रिष्येद्यज्ञः क्षतं प्राप्नुयाद्भूःस्वाहेति गार्हपत्ये जुहुयात्। सा तत्र प्रायश्चितिः॥

कथमृचामेव तदिति क्रियाविशेषणं रसेनर्चां वीर्य्येणौजसा ऋचां यज्ञस्य ऋक्सम्बन्धिनो यज्ञस्य विरिष्टं

---

व्या॰ भूरिति॥ व्याहृतिमित्यादिना प्रथमोऽतःशब्दो यत इत्यस्मिन्नर्थे यद्यृक्त इति ऋक्शब्दस्तस्मिन्नुक्तः॥

प्रायश्चित्तमेवाकाङ्क्षापूर्व्वकं विवृणोति। कथमित्यादिना॥ क्रियाविशेषणमिति यज्ञस्य क्षतं सन्दधातीति यत्तदृचामेव रसेन सन्दधातीत्यर्थः। ओजसा सन्दधातीति सम्बन्धः। तथा च सति यथोक्ते साधने सतीत्यर्थः॥ यथा पूर्व्वस्मिन् प्रायश्चित्ते

उ॰ सन्दधाति ॥ ५ ॥ अथ यदि सामतो रिष्येत्स्वः स्वाहेत्याहवनीये जुहुयात्साम्नामेव तद्रसेन साम्नां वीर्य्येण साम्नां यज्ञस्य विरिष्टꣳसन्दधाति ॥ ६ ॥

तद्यथा लवणेन सुवर्णꣳ सन्दध्यात्सुवर्णेन रजतꣳ रजतेन त्रपु त्रपुणा सीसꣳ सीसेन लोहं लोहेन दारु दारु चर्म्मणा ॥ ७ ॥ एवमेषां लोका-

---

भा॰ विच्छिन्नं चतरूपमुत्पन्नं सन्दधाति प्रतिसन्धत्ते ॥ अथ यदि यजुष्टो यजुर्निर्म्मितं रिष्येद्भुवः स्वाहेति दक्षिणाग्नौ जुहुयात्॥ तथा सामनिमित्ते रिष्येत् स्वः स्वाहेत्याहवनीये जुहुयात्। तथा पूर्ववद्यज्ञं सन्दधाति ब्रह्मनिमित्ते तु रेषे त्रिष्वग्निषु तिसृभिर्व्याहृतिभिर्जुहुयात् ॥

त्रय्या हि विद्यायाः स रेषः। अथ केन ब्रह्मत्वमित्यनयैव त्रय्या विद्ययेति श्रुतेः। न्यायान्तरं वा मृग्यं ब्रह्मत्वनिमित्ते रेषे ॥ तद्यथा लवणेन सुवर्णं सन्दध्यात्। क्षारेण टङ्कणादिना खरेषु मृदुत्वकरं हि तत्। सुवर्णेन रज-

---

व्या॰ यज्ञस्य क्षतमिव रसेन सन्दधाति ॥ तथा द्वितीयतृतीयप्रायश्चित्तयोरपि यजुषां साम्नाञ्च रसेनाध्वर्य्युरुद्गाता च तत्क्षतं सन्धत्त इत्याह। पूर्ववदिति ॥ होत्राद्यपराधाधीनयज्ञध्वंसे प्रायश्चित्तमुक्त्वा ब्रह्मापराधकृते यज्ञनाशे किं प्रायश्चित्तमित्याशङ्क्याह। ब्रह्मेति ॥

अथ यथोक्तप्रायश्चित्ते लिङ्गं दर्शयति। त्रय्या हीति ॥ ब्रह्मणस्त्रयीसारत्वे प्रमाणमाह। अथ केनेति ॥ साधारणकार्य्यस्य साधारणसामग्रीजन्यत्वनियमादेदत्रयसाधारणे ब्रह्मत्वे वेदत्रयसाधारणमेव प्रायश्चित्तं वाच्यमित्येको न्यायो दर्शितः। सम्भ-

उ॰ नामासां देवतानामस्यास्त्रय्या विद्याया वीर्य्येण यज्ञस्य विरिष्टꣳ सन्दधाति भेषजकृतो ह वा एष यज्ञो यत्रैवंविद्ब्रह्मा भवति ॥ ८॥ एष ह वा

भा॰ तमशक्यसन्धानं सन्दध्यात् रजतेन तथा त्रपु त्रपुणा सीसं सीसेन लोहं लोहेन दारु दारु चर्म्मणा चर्म्मबन्धनेन ॥ एवमेषां लोकानामासां देवतानामस्यास्त्रय्या विद्याया वीर्य्येण रसाख्येनौजसा यज्ञस्य विरिष्टं सन्दधाति । भेषजकृतो ह वा एष यज्ञः । रोगार्त्त इव पुमांश्चिकित्सकेन सुशिक्षितेनैष यज्ञो भवति । कोऽसौ यत्र यस्मिन्यज्ञे एवंविद्यथोक्तव्याहृतिहोमप्रायश्चित्तविद्ब्रह्मर्त्विग्भवति स यज्ञ इत्यर्थः ॥ किञ्चैष ह वा उदक्प्रवण उदङ्निम्नो

स्वा॰ त्यत्रस्यैव वेदैकत्वप्रसिद्धेर्ब्रह्मणः सर्व्ववेदार्थाभिज्ञस्य ज्ञानमाहात्म्येनैव दोषनिरासान्नान्यत्प्रायश्चित्तं विधेयमिति न्यायान्तरमाह । न्यायान्तरं वेति ॥ वस्तुस्वभाववैचित्र्यादुत्पन्नस्यापि क्षतस्य केनचित्सन्धानं भवतीत्यत्र दृष्टान्तमाह । तद्यथेत्यादिना ॥ किन्तत्र साधनमिति तद्दर्शयति । क्षारेणेति ॥ खरे सुवर्णे वह्निसंयुक्ते द्रवीभूते क्षारप्रक्षेपेण टङ्कणादिना मृदुकरणं मिथोऽवयवसंयोजनं सन्धानं प्रसिद्धमित्यर्थः । रजतं सुवर्णेन खरसतत्त्वावदशक्यं सन्धानं तथापि वह्निसंयोगपूर्व्वकं पूर्व्ववदेव तत्रापि प्रसिद्धं सन्धानमित्याह । सुवर्णेनेति ॥ रजतेनेत्यादावपि यथोक्तं द्रष्टव्यं । सन्दधाति अस्त्वेति शेषः । भेषजेनेव कृतः संस्कृत इति यावत् ॥

तदेव स्फुटयति । रोगार्त्त इति ॥ भवति संस्कृत इति शेषः । इतश्चैवंविदा ब्रह्मणा भवितव्यमित्याह किञ्चेति ॥ गाथाशब्दो गायत्र्यादिच्छन्दोव्यतिरिक्तच्छन्दोविषयः । यतो यतः प्रदे-

उ० उदक्प्रवणो यज्ञो यत्रैवंविद्ब्रह्मा भवत्येवंविदँ ह वा एषा ब्रह्माणमनुगाथा यतो यत आवर्त्तते तत्तद्गच्छति ॥ ९ ॥ मानवो ब्रह्मैवैक ऋत्विक्कुरून्श्वाऽभिरक्षत्येवंविद्ध वै ब्रह्मा यज्ञं यजमानँ सर्वाँश्चर्त्विजोऽभिरक्षति तस्मादेवंविदमेव

---

भा० दक्षिणोच्छ्रायो यज्ञो भवति। उत्तरमार्गं प्रति हेतुरित्यर्थः। यत्रैवंविद्ब्रह्मा भवत्येवंविदं ह वै ब्रह्माणमृत्विजं प्रत्येषानुगाथा ब्रह्मणः स्तुतिपरा। यतो यत आवर्त्तते कर्म प्रदेशात्। ऋत्विजां यज्ञः क्षतीभवंस्तत्तद्यज्ञस्य क्षतरूपं प्रतिसन्दधत्प्रायश्चित्तेन गच्छति परिपालयतीत्येतन्मानवो ब्रह्मा। मौनाचरणान्मननाद्वा ज्ञानवत्त्वात्ततो ब्रह्मैवैकर्त्विक्कुरून् कर्तॄन् ॥

योद्धृनारूढानश्वा वडवा यथाऽभिरक्षत्येवंविद्ध ह वै ब्रह्मा यज्ञं यजमानं सर्वांश्चर्त्विजोऽभिरक्षति तत्कृतदोषापनयनात्। यत एवं विशिष्टो ब्रह्मा विद्वांस्तस्मादेवं-

---

आ० प्राक्कर्म्म आवर्त्तत इत्युक्तं विवृणोति। ऋत्विजामिति ॥ यत्र यत्र प्रदेशे यज्ञस्य क्षतिरध्वर्युप्रभृतीनामभवत्तत्र तत्र यज्ञस्य क्षतरूपं प्रायश्चित्तेन प्रतिसन्धानात् ब्रह्मा कर्तॄन् परिपालयतीति सम्बन्धः॥ ऋत्विजि ब्रह्मणि मानवशब्दप्रवृत्तौ निमित्तद्वयमाह। मौनेति॥ ज्ञानातिशययत्त्वच्छब्दार्थः। कर्तॄनभिरक्षयतीति सम्बन्धः॥ उक्तमर्थं दृष्टान्तेन प्रकटयति। योद्धृनित्यादिना॥ प्रकरणार्थमुपसंहरति। एवमिति॥ १७ ॥ ॥ इति श्रीमत्परमहंस-

उ० ब्रह्माणं कुर्वीत नानेवंविदं नानेवंविदं ॥ १० ॥ ॥ १७ ॥ इति छान्दोग्योपनिषदि चतुर्थः प्रपाठकः समाप्तः ॥ ४ ॥

---

भा० विदमेव यथोक्तव्याहृत्यादिविदं ब्रह्माणं कुर्वीतेति । नानेवंविदं कदाचनेति । द्विरभ्यासोऽध्यायसमाप्त्यर्थः ॥ १७ ॥ इति श्रीमद्गोविन्दभगवत्पूज्यपादशिष्यपरमहंसपरिव्राजकाचार्य्यस्य श्रीमच्छङ्करभगवतः कृतौ छान्दोग्योपनिषद्विवरणे चतुर्थः प्रपाठकः समाप्तः ॥ ४ ॥

---

आ० परिव्राजकाचार्य्यं श्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानकृतायां छान्दोग्योपनिषद्भाष्यटीकायां चतुर्थः प्रपाठकः समाप्तः ॥ ४ ॥

उ॰ ॥ ॐ ॥ यो ह वै ज्येष्ठञ्च श्रेष्ठञ्च वेद ज्येष्ठश्च ह वै श्रेष्ठश्च भवति प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च ॥ १ ॥

---

भा॰ ॥ ॐ ॥ सगुणब्रह्मविद्याया उत्तरा गतिरुक्ता। अथेदानीं पञ्चमेऽध्याये पञ्चाग्निविदो गृहस्थस्य ऊर्द्धरेतसाञ्च श्रद्धालूनां विद्यान्तरशीलिनां तामेव गतिमनूद्यान्या दक्षिणदिक्सम्बन्धिनी केवलकर्म्मिणां धूमादिलक्षणा पुनरावृत्तिरूपा तृतीया च। ततः कष्टतरा संसारगतिर्वैराग्यहेतोर्वक्तव्येत्यारभ्यते । प्राणः श्रेष्ठो वागादिभ्यः प्राणो वाव संवर्ग इत्यादि च बहुशोऽतीते ग्रन्थे प्राणग्रहणं कृतं स कथं श्रेष्ठो वागादिषु सर्व्वैः संहत्यकारित्वाविशेषे

---

व्या॰ ॥ ॐ ॥ श्रीगणेशाय नमः ॥ वृत्तमनूद्य वर्त्तिष्यमाणाध्यायस्य सङ्गतिं सङ्गिरते। सगुणेति ॥ विद्यान्तरं पञ्चाग्निविद्यातिरिक्ता सगुणविद्या । तच्छीलिनां तन्निष्ठानामिति यावत् ॥ तामेव गतिमर्च्चिरादिलक्षणामित्यर्थः ॥ ततो गतिद्वयात्तृतीया विद्याकर्म्मरहितानामिति शेषः ॥ अथ क्रमेण मुक्तिसम्भवादुत्तरा गतिरुच्यतां किमिति दक्षिणा तृतीया च संसाररूपा गतिरति निकृष्टा व्यपदिश्यते तत्राह । कष्टतरेति ॥ सगुणब्रह्मविद्यावतामर्च्चिराद्यां गतिमुक्त्वा समुच्चितानामसमुच्चितानां कर्म्मणां संसारगतिप्रभेदरूपं फलं वक्तुमयमारम्भ इत्यर्थः । कर्म्मविधिश्च धनसम्पत्तौ सत्यां भवति। तत्सम्पत्तिश्च ब्राह्मणस्य श्रैष्ठ्ये सत्येव सम्भवतीति श्रैष्ठ्यसिद्धये प्राणोपासनं पूर्व्वत्रानुक्तं वक्तव्यमित्यनन्तरग्रन्थसङ्गतिं वदन् प्रसङ्गं करोति । प्राणः श्रेष्ठ इत्यादिना ॥ प्राणो ब्रह्मेत्यादिवाक्यमादिशब्दार्थः । उदाहृतानुदाहृतश्रुत्यन्तरसमुच्चयार्थश्चकारः। प्राणस्य वागादिभ्यः श्रैष्ठ्यमुक्तमाक्षिपति। कथमिति ॥ सर्व्वैर्वागादिभिः संहत्य प्राणस्य

उ॰ यो ह वै वसिष्ठं वेद वसिष्ठो ह स्वानां भवति वाग्वाव वसिष्ठः॥ २॥ यो ह वै प्रतिष्ठां

---

भा॰ कथञ्च तस्योपासनमिति तस्य श्रेष्ठत्वादिगुणविधित्सया इदमनन्तरमारभ्यते॥

यो ह वै कश्चिज्ज्येष्ठञ्च प्रथमं वयसा श्रेष्ठञ्च गुणैरभ्यधिकं वेद स ज्येष्ठश्च ह वै श्रेष्ठश्च भवति। फलेन पुरुषं प्रलोभ्याभिमुखीकृत्याह। प्राणो वाव ज्येष्ठश्च वयसा वागादिभ्यः। गर्भस्थे हि पुरुषे प्राणस्य वृत्तिर्वागादिभ्यः पूर्वं लब्धात्मिका भवति। यया गर्भो विवर्द्धते चक्षुरादिस्थानावयवनिष्पत्तौ सत्यां पश्चाद्वागादीनां वृत्तिलाभ इति प्राणो ज्येष्ठो वयसा भवति। श्रेष्ठत्वन्तु

---

व्या॰ कार्य्यकरत्वे सम्प्रतिपन्ने स एव कथं श्रेष्ठो निर्द्धार्य्यते तेषामन्यतमस्यैव श्रैष्ठ्यं किं न स्यादित्यर्थः॥

तस्यैवोपास्यतया श्रैष्ठ्यमाशङ्क्य वागादीनामन्यतमस्योपास्यत्वमपास्य प्राणस्यैव नोपास्यत्वं हेत्वभावादित्याक्षेपान्तरमाह। कथञ्चेति॥ प्राणस्य श्रेष्ठत्वं ज्येष्ठत्वमित्यादिगुणविधानार्थमेव तावत् प्रथममारभ्यते। यो ह वै ज्येष्ठञ्चेत्याद्यचोद्यं परिहरति। प्रथममिति॥ प्राणस्यैवोपासनं न वागादीनामित्येतदनन्तरमारभ्यते। अथ ह प्राण उच्चिक्रमिष्यन् इत्यादिनेति॥ द्वितीयं चोद्यमुद्धरति॥ इदमनन्तरमिति॥ कोऽसौ ज्येष्ठत्वश्रेष्ठत्वगुणो वेदितव्य इत्याह। फलेनेति॥ कुतो वागादिभ्यो ज्यैष्ठ्यं प्राणस्य प्रतीतं। सर्व्वे हि वागादयः सप्राणाः सहैव गर्भस्थे स्वतो वृत्तिभागिनो भवन्ति तत्राह। गर्भस्थे हीति॥ तत्र गर्भविवृद्धिदर्शनं प्रमाणयति। ययेति॥ कदा तर्हि वागादीनां वृत्तिलाभस्तत्राह। चक्षुरादीति॥ प्राणस्य श्रैष्ठ्यं प्रतिपादितं निग-

वेद प्रति ह तिष्ठत्यस्मिꣳश्च लोकेऽमुष्मिꣳश्च
उ॰ चक्षुर्वाव प्रतिष्ठा ॥ ३ ॥ यो ह वै सम्पदं वेद
सꣳहास्मै कामाः पद्यन्ते देवाश्च मानुषाश्च श्रोत्रं
वाव सम्पत् ॥ ४ ॥ यो ह वा आयतनं वेदायतनꣳ

---

भा॰ प्रतिपादयिष्यति सुहय इत्यादिनिदर्शनेन । अतः प्राण एव ज्येष्ठः श्रेष्ठश्चास्मिन् कार्य्यकारणसङ्घाते ॥

यो ह वै वसिष्ठं वसितृतममाच्छादयितृतमं वसुमत्तमं वायोर्वेद स तथैव वसिष्ठो ह भवति स्वानां ज्ञातीनां। कस्तर्हि वसिष्ठ इत्याह । वाग्वाव वसिष्ठो वाग्मिनो हि पुरुषा वसन्ति अभिभवन्त्यन्यान् वसुमत्तमांश्चातो वाग्वसिष्ठः । यो ह वै प्रतिष्ठां वेद स चास्मिन् लोकेऽमुष्मिंश्च परे प्रति तिष्ठति ह । तर्हि का प्रतिष्ठेत्याह । चक्षुर्वाव प्रतिष्ठा । चक्षुषा हि पश्यन् समे च दुर्गे च प्रतितिष्ठति यस्मादतः प्रतिष्ठा चक्षुः । यो ह वै सम्पदं वेद तस्मा अस्मै देवाश्च मानुषाश्च कामाः सम्पद्यन्ते तर्हि का सम्प-

---

व्या॰ मयति। इति प्राण इति॥ गुणद्वयमुपास्यत्वाय दर्शितं निगमयति। अत इति॥

तदर्थत्वेनैव गुणान्तरं दर्शयति । यो ह वा इति ॥ वसुमत्तमं धनवत्त्वादन्येषां निवासकारणमित्यर्थः । तथैवेत्युपासनानुसारेणेति यावत् । वसिष्ठो ह भवतीति वासयिता चेत्यर्थः॥ वाचो वसिष्ठत्वं समर्थयते। वाग्मिनो हीति ॥ वसुमत्तमाश्च तेनान्यान्निवासयन्तीति शेषः॥ गुणान्तरमाध्यानायोपदिशति । यो हेति ॥ प्रतिष्ठात्वं चक्षुषो विशदयति। चक्षुषा हीति ॥

उ॰ ह स्वानां भवति मनो ह वा आयतनं ॥ ४ ॥
अथ ह प्राणा अहꣳ श्रेयसि व्यूदिरेऽहꣳ
श्रेयानस्म्यहꣳ श्रेयानस्मीति ते ह प्राणाः प्रजा-
पतिं पितरमेत्योचुर्भगवन् को नः श्रेष्ठ इति

भा॰ दित्याह । श्रोत्रं वाव सम्पत् । यस्माच्छ्रोत्रेण वेदं गृह्यन्ते
तदर्थविज्ञानञ्च ततः कर्माणि क्रियन्ते ततः कामं सम्पदि-
त्येवं कामसम्पद्धेतुत्वात्। श्रोत्रं वाव सम्पत्। यो ह वा आय-
तनं वेदायतनꣳ स्वानां भवति। मनो ह वा आयतनं ॥
इन्द्रियोपहृतानां विषयाणां भोक्त्रर्थानां प्रत्ययरू-
पाणां मन आयतनमाश्रयः । अतो मनो ह वा आय-
तनमित्युक्तं । अथ ह प्राणा एवं यथोक्तगुणाः सन्तोऽहं
श्रेयस्यहं श्रेयानस्म्यहं श्रेयानस्मीति एतस्मिन् प्रयोजने
व्यूदिरे नाना विरुद्धञ्चोदिरे उक्तवन्तस्ते ह ते हैवं
विवदमाना आत्मनः श्रेष्ठत्वविज्ञानाय प्रजापतिं पितरं
जनयितारं कञ्चिदेत्योचुरुक्तवन्तो हे भगवन् को नोऽस्माकं
मध्ये श्रेष्ठोऽभ्यधिको गुणैरित्येवं पृष्टवन्तः ।तान् पितोवाच
ह यस्मिन् वो युष्माकं मध्ये उत्क्रान्ते शरीरमिदं पापिष्ठ-

गुणान्तरमाह । यो ह वा इति ॥ दैवाः कामाः स्वर्गादयो वा
मानुषाः पश्वादयः। श्रोत्रस्य सम्पत्त्वं साधयति । यस्मादिति ॥
इत्येवं यस्मात्तस्मादिति योजना ॥ सम्प्रति गुणान्तरमाह । यो
हेति ॥ कथं पुनरायतनत्वं मनसः सिद्धमित्यत आह । इन्द्रि-
योपहृतानामिति ॥ यथोक्ता गुणा मुख्यप्राणगामिनः प्रत्येकं

उ॰ तान् होवाच यस्मिन् व उत्क्रान्ते शरीरं पापिष्ठतरमिव दृश्येत स वः श्रेष्ठ इति ॥ ७ ॥ सा ह वागुच्चक्राम सा संवत्सरं प्रोष्य पर्य्येत्योवाच कथमशकतर्ते मज्जीवितुमिति यथा कला अवदन्तः प्राणन्तः प्राणेन पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण ध्यायन्तो मनसैवमिति प्रविवेश ह वाक् ॥ ८ ॥ चक्षुर्होच्चक्राम तत्संवत्सरं प्रोष्य पर्य्येत्योवाच कथमशकतर्ते मज्जीवितुमिति यथाऽन्धा अपश्यन्तः प्राणन्तः प्राणेन वदन्तो वाचा शृण्वन्तः श्रोत्रेण ध्यायन्तो मनसैवमिति प्रविवेश

---

भा॰ मिवातिशयेन जीवितोऽपि समुत्क्रान्तप्राणं ततोऽपि पापिष्ठतरमेवातिशयेन दृश्येत । कुणपमस्पृश्यमशुचि दृश्येत स वो युष्माकं श्रेष्ठ इत्यवोचत् काक्का तद्दुःखं परिजिहीर्षुः ।

तथोक्तेषु पित्रा प्राणेषु सा ह वागुच्चक्रामोत्क्रान्तवती । सा चोत्क्रम्य संवत्सरमात्रं प्रोष्य स्वव्यापारान्निवृत्ता सती पुनः पर्य्येत्येतरान् प्राणानुवाच कथं केन प्रकारेण अशकत शक्तवन्तो यूयं मदृते मां विना जीवितुं धारयितुमात्मान-

---

घ्या॰ वागादिषु भवन्तीति वक्ष्यमाख्यायिकां प्रणयति । अथेति ॥ कश्चिद्विराजं कश्यपादीनामन्यतमं वेत्यर्थः । शरीरस्य पापिष्ठत्वं पापकार्य्यप्रधानत्वं । इवशब्दोऽवधारणार्थः ॥ उक्तमेवार्थं सङ्क्षिप्याह । कुपणमिति ॥ त्यक्तप्राणं शवरूपमिति यावत् ॥

ननु प्रजापतिः सर्व्वज्ञो मुख्यमेव प्राणं किमिति श्रेष्ठं नाभि-

उ॰ ह चक्षुः ॥ ९ ॥ श्रोत्रꣳ होच्चक्राम तत्संवत्सरं पर्य्येत्योवाच कथमशकतर्ते मज्जीवितुमिति यथा बधिरा अशृण्वन्तः प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा ध्यायन्तो मनसैवमिति प्रविवेश ह श्रोत्रं ॥ १० ॥ मनो होच्चक्राम तत्संवत्सरं प्रोष्य पर्य्येत्योवाच कथमशकतर्ते मज्जीवितुमिति यथा बाला अमनसः प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेणैवमिति प्रविवेश ह मनः ॥ ११ ॥ अथ ह प्राण उच्चिक्रमिषन्त्स यथा सुहयः पड्वीशशङ्कून् सङ्खिदेदेवमितरान् प्राणान् समखिदत्तꣳहाभिसमेत्योचुर्भगवन्नेधि त्वन्नः श्रेष्ठो

---

भा॰ मिति ते होचुर्यथा कला इत्यादि। कला मूका यथा लोकेऽवदन्तो वाचा जीवन्ति। कथं। प्राणन्तः प्राणेन पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण ध्यायन्तो मनसा सर्व्वकरणचेष्टां कुर्व्वन्त इत्यर्थः। एवं वयमजीविष्मेत्यर्थः। आत्मनोऽश्रेष्ठतां प्राणेषु बुद्धा प्रविवेश ह वाक् पुनः स्वव्यापारे प्रवृत्ता बभूवेत्यर्थः। समानमन्यत्। चक्षुर्ह उच्चक्राम श्रोत्रं होच्चक्राम मनो होच्चक्रामेत्यादि। यथा बालाऽमनसः अप्ररूढमनस

---

व्या॰ वदति तत्राह। कलेति॥ अयं श्रेष्ठ इत्युक्ते एतेषां वागादीनां दुःखं तत्परिहर्त्तुमिच्छन् प्रजापतिः स्वरभङ्गोपायविशेषेण श्रेष्ठत्वमुक्तवान्न स्फुटमित्यर्थः॥ अन्यदित्यस्य विषयमाह। चक्षुरिति॥

उ० ऽसि मोत्क्रमीरिति ॥ १२ ॥ अथ हैनं वागुवाच यदहं वसिष्ठाऽस्मि त्वं तद्वसिष्ठोऽसीत्यथ हैनं चक्षुरुवाच यदहं प्रतिष्ठास्मि त्वं तत्प्रतिष्ठासीति ॥ १३ ॥ अथ हैनꣳ श्रोत्रमुवाच यदहꣳ सम्प-

---

भा० इत्यर्थः ॥ एवं परीक्षितेषु वागादिष्वथानन्तरं ह स मुख्यः प्राण उच्चिक्रमिषन्नुत्क्रान्तुमिच्छन्किमकरोदित्युच्यते । यथा लोके सुहयः शोभनोऽश्वः पड्वीशशङ्कून् पादबन्धनकीलान् परीक्षणायारूढेन कशया हतः सन् सङ्खिदेत् समुत्खनेत् समुत्पाटयेत् एवमितरान् वागादीन्समुदखिदत् समुद्धृतवान् । ते प्राणाः सञ्चालिताः सन्तः स्वस्थाने स्थातुमनुत्सहमाना अभिसमेत्य मुख्यं प्राणं तमूचुर्हे भगवन् एधि भवनः स्वामी यस्मात्त्वं नोऽस्माकं श्रेष्ठोऽसि मा चास्माद्देहादुत्क्रमीरिति । अथ हैनं वागादयः प्राणस्य श्रेष्ठत्वं कार्य्येणापादयन्त आहुर्बलिमिव हरन्तो राज्ञो विशः । कथं वाक् तावदुवाच यदहं वसिष्ठाऽस्मि यदिति क्रियाविशेषणं । यद्वसिष्ठत्वगुणास्मीत्यर्थः । त्वं तद्वसिष्ठस्तेन वसिष्ठत्वगुणेन त्वं तद्वसिष्ठोऽसि तद्गुणस्त्वमित्यर्थः ॥

---

आ० बालानामपि बहिरन्तरिन्द्रियत्वाविशेषात्कथममनस इति विशेषणमत आह । यथेति ॥ परीक्षितेषु श्रेष्ठतारहितेषु निरूप्योपनिश्चितेष्वित्येतत्पदनशीलाः पादास्तेषां संहतिः पड्विस्तस्या ईशा नियामका शङ्कवो वर्णविकारश्छान्दसः । तान्यथोक्तानश्वो युगपदुत्पाटयेत् ॥ यथेति दृष्टान्तमुक्त्वा दार्ष्टान्तिकमाह । एवमिति ॥ मयि श्रेयस्त्वधीर्युष्माकमस्तीति कथं ज्ञातुं शक्यमित्याशङ्क्याह ।

उ० दस्मि त्वं तत्सम्पदसीत्यथ हैनं मन उवाच यद-
हमायतनमस्मि त्वं तदायनमसीति॥१४॥न वै
वाचो न चक्षुꣳषि न श्रोत्राणि न मनाꣳसी-

---

भा० अथवा तच्छब्दोऽपि क्रियाविशेषण एव । त्वत्कृतस्त्वदी-
योऽसौ वसिष्ठत्वगुणोऽज्ञानान्ममेति मयाभिमत इत्येतत् ।
तथोत्तरेषु योज्यं चक्षुःश्रोत्रमनःसु श्रुतेरिदं वचो युक्तमिदं
वागादिभिर्मुख्यं प्राणं प्रत्यभिहितं यस्मान्न वै लोके वाचो
न चक्षूंषि न श्रोत्राणि न मनांसीति वागादीनि कर-
णान्याचक्षते लौकिका आगमज्ञा वा किन्तर्हि प्राणा
इत्येवाचक्षते कथयन्ति यस्मात्प्राणो ह्येवैतानि सर्व्वाणि
वागादीनि करणजातानि भवत्यतो मुख्यं प्राणं प्रत्यनु-
रूपमेव वागादिभिरुक्तमिति प्रकरणार्थमुपसञ्जिहीर्षति ॥

---

या० अथेति ॥ वचनं प्रश्नपूर्व्वकं प्रकटयति । कथमित्यादिना ॥
क्रियाविशेषणत्वमेव विशदयति । यद्वसिष्ठत्वेति ॥ वसिष्ठत्वेन
गुणेनाहं गुणवानस्मि यत्तत्त्वमेवेति योजना । अनन्तरं वाक्य-
मादाय व्याचष्टे । त्वमित्यादिना तद्वसिष्ठ इति समस्तपदमिति-
गृहीत्वा व्याख्याय पक्षान्तरमाह । अथ वेति ॥ यच्छब्दवदित्यपे-
रर्थः । अहं वसिष्ठत्वगुणोऽस्मीति यत्तत्त्वमेव वसिष्ठत्वगुणोऽसीति
कथमिदानीमुच्यते । अन्यथा हि पूर्व्वमभिधानस्तवासीदित्याश-
ङ्क्याह । त्वत्कृत इति ॥ वाचि दर्शितं न्यायं चक्षुरादावति-
दिशति । तथेति ॥ वागादिवचनादुत्थाय प्राणाधीनतां वागादेः
श्रुतिरेव कथयन्तीत्युत्तरस्य । न वै वाच इत्यादेस्तात्पर्य्यमाह ।
श्रुतेरिति ॥ तदेव च सोपस्कारं व्याकरोति । युक्तमित्यादिना ॥
यदि सर्व्वाण्येव करणानि वाक्तन्त्राणि स्युस्तर्हि वाचमित्येव तानि

उ० त्याचक्षते प्राणा इत्येवाचक्षते प्राणो ह्येवैतानि सर्वाणि भवति ॥ १५ ॥ १ ॥

---

भा० ननु कथमिदं युक्तं चेतनावन्त इव पुरुषा अहं श्रेष्ठतायै विवदन्तोऽन्योन्यं स्पर्द्धयेयुरिति । न हि चक्षुरादीनां वाचं प्रत्याख्याय प्रत्येकं वदनं सम्भवति । तथापगमो देहात्पुनः प्रवेशो ब्रह्मागमनं प्राणस्तुतिर्वोपपद्यते । तत्राग्न्यादिचेतनावद्देवताधिष्ठितत्वाद्वागादीनां चेतनावत्त्वं तावत्सिद्ध-

---

व्या० ब्रूयुः । यदि चक्षुस्तन्त्राणि स्युस्तदा सर्वाण्येव चक्षूंषीति वदेयुः । न चैवं वदन्ति प्राणा इति तु तानि कथयन्ति । तस्मात्प्राणपारतन्त्र्यं करणानां सिद्धमित्यर्थः । वागादिभिरुक्तत्वं त्वद्वसिष्ठोऽसीत्यादि प्राणस्यैव यथोक्तगुणवत्त्वो ध्येयत्वं प्रकरणार्थः ॥ साक्षादुपसंहारादर्शनादुपसञ्जिहीर्षतीत्युक्तं । व्याख्यायिकाया यथा श्रुतमर्थमाक्षिपति । नन्विति ॥ यथा पुरुषाश्चेतनावन्तो विवदमानाः स्पर्द्धन्ते तथा वागादयोऽचेतनाः स्वकीयश्रेष्ठत्वसिद्ध्यर्थं विप्रतिपन्ना मिथः स्पर्द्धेरन्निति नैव युक्तमचेतनेषु स्पर्द्धादेरदर्शनादित्यर्थः । किञ्च वाग्व्यतिरिक्तानामन्योन्यं वचनमेवानुचितं वचनस्य वाग्व्यापारत्वादित्याह । न हीति ॥ किञ्च वागादीनां देहोत्सर्पणाद्ययुक्तमचेतनत्वादित्याह । तथेति ॥ वाशब्दो न हीत्यस्यानुकर्षणार्थः । अग्न्यादयश्चेतनावन्तो देवतास्ताभिरधिष्ठितत्वात्तादात्म्याभिप्रायेण वागादीनां चेतनावत्त्वसम्भवाद्वदनादिव्यवहारः सम्भवतीति ॥ अग्निर्वाग्भूत्वा मुखं प्राविशदिति श्रुतिमनुसृत्योत्तरमाह । तत्रेति ॥ एकस्मिन्देहे अनेकचेतनावतां विरुद्धानेकाभिप्रायानुविधायित्वेन देहस्योन्मथनप्रसङ्गादक्रियत्वप्रसङ्गाद्वा नानेकचेतनाधिष्ठितत्वमेकस्य देहस्य सम्भवतीति शङ्कते । तार्किकेति ॥ किमेकशरीरमनेकमनेकचेतनाधिष्ठितं न भवति किं वा तैर्नियमितकर्तृभोक्त्रधिष्ठितमिति विकल्प्याद्यं दूषयति । नेतीति ॥ अस्ति हि परमते

भा॰ भागमतः। तार्किकसमयविरोध इति चेत्। देहे एकस्मि-न्ननेकचेतनावत्त्वेनेश्वरस्य निमित्तकारणवत्त्वाभ्युपगमात्।

ये तावदीश्वरमभ्युपगच्छन्ति तार्किकास्ते मनआदि-कार्य्यकारणानामाध्यात्मिकानां बाह्यानाञ्च पृथिव्यादीनां ईश्वराधिष्ठितानामेव नियमेन प्रवृत्तिमिच्छन्ति रथादि-वत्। न चास्माभिरग्न्याद्याश्चेतनावत्यो देवता अध्यात्म-कर्तृभोक्तृयोग्या अभ्युपगम्यन्ते किं तर्हि कार्य्यकरणवतीनां हि तासां प्राणैकदेवताभेदानां अध्यात्माधिभूताधिदैव-भेदकोटिविकल्पानां। अध्यक्षतामात्रेण नियन्तेश्वरोऽभ्युप-गम्यते। स ह्यकरणः। अपाणिपादो जवनो ग्रहीता

---

व्या॰ शरीरस्य जीवाधिष्ठितस्यैवेश्वराधिष्ठितत्वं तथाचैकशरीरमने-कचेतनाधिष्ठितं न भवतीति नास्ति खेश्वरवादिनां शङ्केत्यर्थः॥

सङ्गृहवाक्यं विवृणोति। ये तावदिति॥ अचेतनानां चेतना-धिष्ठितानामेव प्रवृत्तिरित्यत्र दृष्टान्तमाह। रथादिवदिति॥ द्वितीयं प्रत्याह। न चेति॥ कार्य्यकारणानामधिष्ठातृदेवतानां तर्हि तत्कार्य्यकारणानां किमधिष्ठातृदेवतान्तरमिति पृच्छति। किन्तर्हीति॥ देवताकार्य्यकारणानामधिष्ठातृदेवतान्तरमिष्टं चेदनवस्था स्यादिति मन्वानं प्रत्याह। कार्य्यकारणवतीनामिति॥ शाकल्यब्राह्मणमनुसृत्याह। प्राणेति॥ ननु भूयस्यो देवताः कथं तासां प्राणस्यैकदेवताप्रभेदत्वमत आह। अध्यात्मेति॥ अध्यात्माधिभूताधिदेवानां भेदकोटिभिर्विकल्पो यासामिति वि-ग्रहः॥ नियन्तृत्वप्रयुक्तव्यापारवत्त्वं वारयितुं विशिनष्टि। अध्य-क्षतामात्रेणेति॥ अथेश्वरस्यापि नियन्तृत्वात्कार्य्यकारणवत्त्वं देव-तानामिव स्यादिति चेन्नेत्याह। स हीति॥ अकरणत्वमकार्य्य-त्वस्योपलक्षणं॥ तत्र श्रुतिं प्रमाणयति। अपाणीति। आदित्यप-देन च न तस्य कार्य्यं करणञ्च विद्यत इत्यादि मन्त्रवर्णो गृहीतः।

भा॰ पश्यत्यचक्षुः स शृणोत्यकर्ण इत्यादिमन्त्रवर्णात्। हिरण्यगर्भं पश्यति जायमानं। हिरण्यगर्भं जनयामास पूर्व्वमित्यादि च श्वेताश्वतरीयाः पठन्ति॥

भोक्ता कर्म्मफलसम्बन्धी देहे तद्विलक्षणो जीव इति वक्ष्यामः। वागादीनाञ्चेह संवादः कल्पितो विदुषोऽन्वयव्यतिरेकाभ्यां प्राणश्रेष्ठतानिर्द्धारणार्थं। यथा लोके पुरुषा अन्योन्यमात्मनः श्रेष्ठतायै विवदमानाः कञ्चिद्गुणविशेषाभिज्ञं पृच्छन्ति को नः श्रेष्ठो गुणैरिति। तेनोक्ता एकैकश्येनादः कार्य्यं साधयितुमुद्यच्छन्तु। येनादः कार्य्यं साध्यते स वः श्रेष्ठ इत्युक्तास्तथा एवोद्यच्छन्त आत्मनोऽन्यस्य वा श्रेष्ठतां निर्द्धारयन्ति। तथेमं संव्यवहारं वागादिषु कल्पितवती श्रुतिः। कथं नाम विद्वान् वागादीनामेकैकस्याभावेऽपि जीवनं दृष्टं न तु प्राणस्येति प्राणश्रेष्ठतां प्रतिपद्यत इति। तथाच श्रुतिः कौषीतकीनां। जीवति वागपेतो मूकान् हि पश्यामो जीवति

---

व्या॰ सूत्रात्मा हिरण्यगर्भो सा चैका समष्टिरूपा देवता तदवस्थाभेदानां देवतानामीश्वरो नियन्तेत्युक्तं तत्र प्रमाणमाह। हिरण्यगर्भमिति॥ आदिपदेन हिरण्यगर्भः समवर्त्ततेत्यादि गृह्यते॥

देवानामीश्वरस्य चास्मिन्देहे भोक्तृत्वाभावे कस्य भोक्तृत्वमित्यत आह। भोक्तेति॥ तद्विलक्षणो देवतेश्वराभ्यां व्यावृत्त इति यावत्। वागादिशब्दवाच्याश्चेतनावत्यो देवता इति स्तोकव्याख्याविकायाश्चार्थनिवृत्यर्थमुक्तमिदानीं तस्यास्तात्पर्य्यमाह। वागादीनाञ्चेति॥ कल्पनाप्रयोजनमाह। विदुष इति॥ यथोक्तां कल्पनां दृष्टान्तेन स्पष्टयति। यथेत्यादिना॥ तेनोक्ता इत्युक्तमेव व्यनक्ति। एकैकश्येनेति॥ विदुष इत्यादिनोक्तं प्रयोजनं प्रकटयति।

उ॰ स होवाच किं मेऽन्नं भविष्यतीति यत्किञ्चिदिदमाश्वभ्य आशकुनिभ्य इति होचुस्तद्वा एतदनस्यान्नमनो ह वै नाम प्रत्यक्षं न ह वा एवं-

---

भा॰ चक्षुरपेतोऽन्धान् हि पश्यामो जीवति श्रोत्रापेतो बधिरान् हि पश्यामो जीवति मनोऽपेतो बालान् हि पश्यामो जीवति बाक्छिन्नो जीवत्यूरुच्छिन्न इत्याद्या ॥ १ ॥

स होवाच मुख्यः प्राणः किं मेऽन्नं भविष्यतीति। मुख्यप्राणं प्रष्टारमिव कल्पयित्वा वागादीन् प्रति वक्तृनिव कल्पयन्ती श्रुतिराह। यदिदं लोकेऽन्नजातं प्रसिद्धमाश्वभ्य आश्वभिः सहाऽऽशकुनिभ्यः सह शकुनिभिः सर्व्वप्राणिनां यदन्नं तत्तवान्नमिति होचुर्व्वागादय इति। प्राणस्य सर्व्वमन्नं प्राणोऽत्ता सर्व्वस्यान्नस्येत्येवंप्रतिपत्तये कल्पि-

---

आ॰ कथं नामेति ॥ विद्वान् प्राणश्रेष्ठतां कथं नाम प्रतिपद्येतेति सम्बन्धः ॥ प्रतिपत्तिप्रकारं सङ्क्षिपति। वागादीनामिति ॥ फलवती कल्पनेति शेषः ॥ दृष्टेऽप्यर्थे श्रुतिमनुग्राहकत्वेन दर्शयति। तथा चेति ॥ १ ॥

वागादीनां स्वामी श्रैष्ठ्यादिगुणः प्राणोऽस्मीति विद्यादिति प्रधानविद्यामुपदिश्य तदङ्गभूतान्नवासोदृष्टिविधानार्थं प्रक्रमे प्रथममन्नदृष्टिं विधातुं प्रसङ्गं प्रकुरुते। स होवाचेति ॥ मुख्यस्य प्राणस्य प्रष्टृत्वं वागादीनां प्रति वक्तृत्वं काल्पनिकमित्याह। मुख्यमिति ॥ यदिदमित्युक्तमेव च यत्पदं वाक्यार्थकल्पनार्थं यदन्नमित्यत्रानूद्यते। तद्वा एतदित्यादि ॥ उत्तरवाक्यस्य पूर्व्ववाक्यादर्थभेदाभावमाशङ्क्याह। प्राणस्येति ॥ प्राणशब्दं विहायाऽनःशब्दप्रयोगे तात्पर्य्यमाह। सर्व्वप्रकारेति ॥ अन चेष्टायामिति धातुजस्यानशब्दस्योपादानं सर्व्वप्रकारचेष्टया प्राणस्य प्राप्ति

उ० विदि किञ्च नान्नं भवतीति ॥ १ ॥ स होवाच
किं मे वासो भविष्यतीत्याप इति होचुस्तस्माद्वा

---

भा० ताख्यायिकारूपाद्व्यावृत्य स्वेन श्रुतिरूपेणाह। तद्वै एत-
द्यत्किञ्चिल्लोके प्राणिभिरन्नमद्यते अनस्य प्राणस्य
तदन्नं प्राणेनैव तदद्यत इत्यर्थः। सर्व्वप्रकारचेष्टा-
व्याप्तिगुणप्रदर्शनार्थमन इति प्राणस्य प्रत्यक्षं नाम।
प्राद्युपसर्गपूर्व्वत्वे हि विशेषगतिरेव स्यात्। तथाच सर्व्वा-
न्नानामत्तुर्नामग्रहणमितीदं प्रत्यक्षं नाम अन इति।
सर्व्वान्नानामत्तुः साक्षादभिधानं। न ह वै एवंविदि
यथोक्तप्राणविदि प्राणोऽहमस्मि सर्व्वभूतस्थः सर्व्वान्नाना-
मत्तेति तस्मिन्नेवंविदि ह वै किञ्चन किञ्चिदपि प्राणि-
भिराद्यं सर्व्वैरनन्नमनद्यं न भवति सर्व्वमेवंविद्यन्नं भव-
तीत्यर्थः। प्राणभूतत्वाद्विदुषः। प्राणाद्वा एष उदेति

---

आ० गुणप्रदर्शनार्थं। तथा यः कोऽपि दहति शोषयति प्लावयति वा
सर्व्वोऽपि प्राण एवेति युक्तं। प्राणस्यान इति नामेत्यर्थः। प्रत्यक्षं
पूर्व्वोक्तधातुजन्मनामेति यावत्॥

उक्तमेवार्थं समर्थयते। प्रादीति॥ अनशब्दस्येति शेषः। न
प्राणस्य सर्व्वचेष्टाप्तिरित्येवकारार्थः। तथाच प्राणादिशब्दोपा-
दाने विशेषव्याप्तिरेवेति स्थिते सतीत्यर्थः। अन इति प्रत्यक्षमिदं
नाम। सर्व्वान्नानामत्तुर्नामग्रहणमिति सम्बन्धः॥ तदेव व्याचष्टे।
सर्व्वान्नानामिति॥ ततश्च प्राणशब्दस्य प्राणविदः सर्व्वमन्नं चेत्तद्वि-
दुषो भक्ष्याभक्ष्यविभागासिद्धौ तद्विषयं शास्त्रं विरुध्येतेत्याशङ्क्या-
ध्यात्मिकं रूपं हित्वाऽधिदैविकेन रूपेण तस्य सर्व्वान्नत्वे विभा-
गशास्त्रमाध्यात्मिकपरिच्छेदविषयत्वेनाविरुद्धमित्याह। प्राणभू-
तत्वादिति॥ प्राणभूतो विद्वानित्यत्र श्रुत्यन्तरं संवादयति। प्राणा

उ० एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिद्-
धति लम्भुको ह वासो भवत्यनग्नो ह भवति ॥ २ ॥

भा० प्राणोऽस्तमेतीत्युपक्रम्यैवंविदो ह वा उदेति सूर्य्य एवंविद्य-
स्तमेतीति श्रुत्यन्तरात् ॥

स होवाच पुनः प्राणः। पूर्व्ववदेव कल्पना। किं मे वासो
भविष्यतीत्यर्थ इति होचुर्वागादयः। यस्मात्प्राणस्य वास
आपस्तस्माद्वा एतदशिष्यन्तो भोच्यमाणा भुक्तवन्तश्च
ब्राह्मणा विद्वांस एतत्कुर्वन्ति। किं अद्भिर्वासस्थानीयाभिः
पुरस्ताद्भोजनात्पूर्व्वमुपरिष्टाच्च भोजनादूर्द्धञ्च परिदधति
परिधानं कुर्व्वन्ति मुख्यस्य प्राणस्य लम्भुको लम्भनशीलो
वासो भवति। वाससो लब्धैव भवतीत्यर्थः। अनग्नो भवति।
वाससो लम्भुकत्वेनार्थसिद्धैवानग्नता इत्यनग्नो ह भवतीत्यु-
त्तरीयवान् भवतीत्येतत्। भोच्यमाणस्य भुक्तवतश्च यदा-
चमनं शुद्ध्यर्थं विज्ञातं तस्मिन् प्राणस्य वास इति दर्शनमा-
त्रमिह विधीयते। अद्भिः परिदधतीति नाचमनान्तरं।
यथा लौकिकैः प्राणिभिरद्यमानमन्नं प्राणस्येति दर्शन-

व्या० होति ॥ प्राणविद्याङ्गत्वनान्नदृष्टिरुपदिष्टा ॥ सम्प्रति तदङ्गत्वेन
वासोदृष्टिं प्रस्तौति। स होवाचेति ॥ अत्रापि प्राणस्य प्रष्टृत्वं
वागादीनां प्रति वक्तृत्वञ्च कल्पितमेवेत्याह। पूर्व्ववदिति ॥
अपां प्राणं प्रति वासोरूपत्वे गमकमाह। यस्मादिति ॥ वासो-
दृष्टिफलमाचष्टे। लम्भुक इति ॥ अनग्नो ह भवतीत्यस्य पौनरुक्त्य-
माशङ्क्यार्थविशेषमाह। वास इति ॥ आचमनान्तरं प्राणविदो
विधीयते एवंविदशिष्यन्नाचामेदिति श्रुतेरित्याशङ्क्याह। भोच्य-

भा० मात्रं। तद्वत्किं मे वास इत्यादि प्रश्नप्रतिवचनयोस्तुल्य-
त्वात्। अथाचमनमपूर्व्वं तादर्थ्येन क्रियेत तदा क्रम्याद्य-
न्नमपि प्राणस्येति भक्ष्यत्वेन विहितं स्यात्।

तुल्ययोर्विज्ञानार्थयोः प्रश्नप्रतिवचनयोः प्रकरणस्य विज्ञानार्थत्वादर्द्धजरतीयो न्यायो न युक्तः कल्पयितुं। यत्तु प्रसिद्धमाचमनं प्रायत्यार्थं प्राणस्यानग्नतार्थञ्च न भवतीत्युच्यते न तथा वयमाचमनमुभयार्थं ब्रूमः। किन्तर्हि प्रायत्यार्थाचमनसाधनभूता आपः प्राणस्य वास इति दर्शनञ्चोद्यत इति ब्रूमः। तत्राचमनस्योभयार्थत्वप्रसङ्गदोषचोदनानुपपन्ना। वासोऽर्थ एवाचमने तद्दर्शनं स्यादिति चेत्। न। वासोज्ञानार्थवाक्ये वासोऽर्था

---

आ० मात्रस्येति॥ आदिपदेन प्रश्नप्रतिवचने गृह्येते। सर्व्वप्राणि-भोग्येऽन्ने तस्यान्नमिति दृष्टिवदाचमनीयास्वप्सु तस्य विधीयते॥ वासोदृष्टिरित्युक्तं व्यतिरेकद्वारा विवृणोति। यदीति॥ तादर्थ्ये-नानग्नतार्थ्येनेति यावत्॥

अथ पूर्व्वमन्नदृष्टिरेव विधीयते। सर्व्वान्नभक्षणस्य प्रमाणवि-रुद्धत्वादिह त्वपूर्व्वमाचमनमविरोधाद्विधीयतामित्याशङ्क्याह। तुल्ययोरिति॥ एकस्याचमनस्य शुद्ध्यर्थत्वमनग्नतार्थत्वञ्च वक्तुम-शक्यं विरोधादित्याशङ्क्याह। यत्त्विति॥ विरोधो यथा स्यात्तथेति यावत्। तर्हि कीदृगाचमनं विवक्षितमित्याह। किन्तर्हीति॥ प्रयतस्य भावः प्रायत्यं तदार्था या आचमनक्रिया तत्साधनभूता-स्वप्सु वासःसङ्कल्पनं क्रियान्तरमत्र विधित्सितमित्याह। प्राय-त्येति॥ क्रियाभेदे फलितमाह। तत्रेति॥ अन्यार्थास्वप्सु अन्यार्थ-त्वचिन्तने प्रमाणविरोधाद्विधियोगेन वासोऽर्थमाचमनान्तरमेव विधेयं। तत्र चानग्नतार्थत्वचिन्तनमुचितमिति शङ्कार्थः। वासो-ऽर्थापूर्व्वाचमनविधाने तत्रानग्नतार्थत्वदृष्टिविधाने च वाक्यभे-

उ॰ तद्धैतत्सत्यकामो जाबालो गोश्रुतये वैयाघ्रपद्यायोक्त्वोवाच यद्यप्येनच्छुष्काय स्थाणवे ब्रूयाज्जायेरन्नेवास्मिञ्छाखाः प्ररोहेयुः पलाशानीति ॥ ३ ॥ अथ यदि महज्जिगमिषेदमावास्यायां दीक्षित्वा पौर्णमास्याꣳ रात्रौ सर्वौषधस्य मन्थं

---

भा॰ पूर्व्वाचमनविधाने तच्चानग्नतार्थत्वदृष्टिविधाने च वाक्यभेदः। आचमनस्य तदर्थत्वमन्यार्थत्वञ्चेति प्रमाणाभावात्।

तदेतत्प्राणदर्शनं स्तूयते। कथं तद्धैतत्प्राणदर्शनं। सत्यकामो जाबालो गोश्रुतये नाम्ना वैयाघ्रपद्याय व्याघ्रपदोऽपत्यं वैयाघ्रपद्यस्तस्मै गोश्रुत्याख्यायोक्त्वोवाचाऽन्यदपि वक्ष्यमाणं वचः। किन्तदुवाचेत्याह। यद्यपि शुष्काय स्थाणवे एतद्दर्शनं ब्रूयात् प्राणविज्जायेरन्नुत्पद्येरन्नेवास्मिन् स्थाणौ शाखाः प्ररोहेयुश्च पलाशानि च पत्राणि। किमु जीवते पुरुषाय ब्रूयादिति। यथोक्तप्राणदर्शनविद इदं मन्थाख्यं कर्म्मारभ्यते। अथानन्तरं यदि महन्महत्त्वं

---

व्या॰ दप्रसङ्गात्प्रसिद्धाचमनसाधनभूताखपु वासोदृष्टिपरमेव च वाक्यमित्युत्तरमाह। नेत्यादिना॥ वासोऽर्थत्वमन्यार्थत्वं दृष्ट्यर्थत्वमित्युक्ते प्रमाणस्यैकस्य वाक्यस्याप्रमाणत्वप्रसङ्गादिति यावत्॥

तद्धैतदित्यादि वाक्यं विधानार्थं नापि फलवचनं तथाच व्यर्थमित्याशङ्क्याह। तदेतदिति॥ स्तुतिमेव प्रश्नपूर्व्वकं विवृणोति। कथमिति॥ जीवते पुरुषाय प्राणविद्यावत्त्वदर्शनं ब्रूयात्तदास्मिन्महाफलं भवतीति किमु वक्तव्यमिति योजना। गोदोहनवदधिकृताधिकारमिदं कर्म्म प्राणविदोऽस्मिन्-

उ० दधिमधुनोरुपमथ्य ज्येष्ठाय श्रेष्ठाय स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे सम्पातमवनयेत् ॥ ४ ॥ वसिष्ठाय स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे सम्पातमवनयेत्प्रतिष्ठायै स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे सम्पातमवनयेत्सम्पदे स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे सम्पातमवनयेदायतनाय स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे सम्पातमवनयेत् ॥ ५ ॥ अथ प्रतिसृप्याञ्जलौ मन्थमाधाय जप-

---

भा० जिगमिषेत् गन्तुमिच्छेन्महत्त्वं प्राप्तुं यदि कामयेदित्यर्थः । तस्येदं कर्म्म विधीयते । महत्त्वे सति श्रीरुपनमते । श्रीमतो ह्यर्थं प्राप्तधनं ततः कर्म्मानुष्ठानं ततश्च देवयानं पितृयानं वा पन्थानं प्रतिपत्स्यत इत्येतत्प्रयोजनमुररीकृत्य महत्त्वप्रेप्सोरिदं कर्म्म न विषयोपभोगकामस्य । तस्यायं कालादिविधिरुच्यते । अमावस्यायां दीक्षित्वा दीक्षित इव भूमिशयनादिनियमं कृत्वा तपो-

---

आ० धिकारोऽस्तीत्याह । यथोक्तेति ॥ अनन्तरं प्राणविद्यानिष्पत्तिरिति शेषः ॥ वाक्यशेषं पूरयति । तस्येति ॥ महत्त्वद्वारा विषयोपभोगकामुकस्य कर्म्मविधायि शास्त्रं श्येनादिशास्त्रवदनर्थफलमेवेत्याशङ्क्याह । महत्त्वे हीति ॥ तस्येति प्रकृतमन्थाख्यकर्म्मोक्तिः । कालादीत्यादिशब्दो द्रव्यादिसङ्ग्रहार्थः । दैक्ष्यं दीक्षायां भवं मौञ्ज्यभ्यञ्जनादि न सर्व्वमेवायमनुतिष्ठति । प्रकृतिधर्म्मा हि विकृतावनुवर्त्तन्ते । प्रकृतिवद्विकृतिः कर्त्तव्येति

उ॰ त्यमो नामास्यमा हि ते सर्व्वमिदꣳ स हि ज्येष्ठः श्रेष्ठो राजाधिपतिः स मा ज्यैष्ठ्यꣳ श्रैष्ठ्यꣳ राज्यमाधिपत्यं गमयत्वहमेवेदꣳ सर्व्वमसानीति

भा॰ रूपं सत्यवचनं ब्रह्मचर्य्यमित्यादिधर्म्मवान् भूत्वा इत्यर्थो न पुनर्द्दीच्चामेव कर्म्मजातं सर्व्वमुपादत्ते। अतद्विकारत्वान्मन्थाख्यस्य कर्म्मणः। उपसद्व्रतीतिश्रुत्यन्तरात्। पयोमात्रभक्षणं च शुद्धिकारणं तप उपादत्ते। पौर्णमास्यां रात्रौ कर्म्मारभते सर्व्वौषधस्य ग्रामारण्यानामौषधीनां यावच्छक्यात्ल्पमल्पमुपादाय तद्वितुषीकृत्यामगेव पिष्टं दधिमधुनोरौदुम्बरे कंसाकारे चमसाकारे वा पात्रे श्रुत्यन्तरात्प्रक्षिप्योपमथ्याऽग्रतः स्थापयित्वा ज्येष्ठाय श्रेष्ठाय स्वाहेत्यग्नावावसथ्ये आज्यस्य आवापस्थाने हुत्वा स्रुवमंलग्नं मन्थे सम्पातमवनयत्स्रुवमधः पातयेत्। समानमन्यत्। वसि-

आ॰ न्यायात्। न चेदं कर्म्म कस्य चिद्विकृतिरतो यथोक्तधर्म्मवत्त्वमेवात्र विवक्षितमित्यर्थः॥ दीक्षित्वेत्यनेन विवक्षितं धर्म्मान्तरमाह। उपसदिति॥ उपसदो नामेष्टयः प्रवर्ग्याङ्गस्तु प्रसिद्धाः। तासु व्रतं पयोमात्रभक्षणं तदुपेतो भूत्वा मन्थं सम्पाद्य जुहोतीति वाजसनेयके समानप्रकरणे श्रवणादिति यावत्। पिष्टं कृत्वा तदाममपक्वमेव दधिमधुनोः सम्बन्धं पात्रे प्रक्षिप्येति सम्बन्धः। औदुम्बरत्वे नियमः। पात्रस्याकारे तु विकल्पः। कथमश्रुतं पात्रमत्र कल्प्यते तत्राह। श्रुत्यन्तरादिति॥ औदुम्बरे कंसाकारे कंसे चमसे वेति वाजसनेये श्रवणात्सर्व्वशाखाप्रत्ययन्यायेनापेक्षितं पात्रमत्र गृहीतमित्यर्थः। आवसथसम्बन्धी लौकिकोऽग्निः। आवसथ्यो विवक्षितो यस्मिन्नौपासनाख्यं कर्म्म क्रियते आज्यस्य हुत्वेति

उ॰ ॥ ६ ॥ अथ खल्वेतयर्चा पच्छ आचामति तत्सवितुर्वृणीमह इत्याचामति वयं देवस्य

---

भा॰ ष्ठाय प्रतिष्ठायै सम्पदे आयतनाय स्वाहेति प्रत्येकं तथैव सम्पातमवनयेत् । हुत्वाऽथ प्रतिसृप्याग्नेरीषदपसृत्याञ्जलौ मन्थमाधाय जपतीमं मन्त्रं । अमो नामास्यमा हि ते । अम इति प्राणस्य नाम । अन्नेन हि प्राणः प्राणिति देहे इत्यतो मन्थद्रव्यं प्राणस्यान्नत्वात्प्राणत्वेन स्तूयते अमो नामासीति ॥ कुतः । यत्तोऽमा सह हि यस्मात्ते तव प्राणभूतस्य सर्व्वं समस्तं जगदिदं अतोऽमो नामासीत्यर्थः । स हि प्राणभूतो मन्थो ज्येष्ठः श्रेष्ठश्च । अत एव च राजा दीप्तिमानधिपतिश्चाधिष्ठाय पालयिता सर्व्वस्य । स मा मामपि मन्थः प्राणो ज्यैष्ठ्यादिगुणपूगमात्मनो गमयत्वहमेवेदं सर्व्वं जगदसानि भवानि प्राणवत् । इतिशब्दो मन्त्रसमाप्त्यर्थः ॥ अथानन्तरं

---

आ॰ सम्बन्धः । आवपस्थानमाहुतिप्रक्षेपप्रदेशः ॥ गृह्योक्तं वसिष्ठाय स्वाहेत्यादिवाक्यं पूर्व्ववाक्येन तुल्यार्थमित्याह । समानमिति ॥ तुल्यत्वमेव स्पष्टयति । वसिष्ठायेति ॥ स्वाहेति मन्त्रं समुच्चार्य्य हुत्वेति सम्बन्धः । तथैव प्रथमहोमानन्तरमित्यर्थः । आहुत्यनन्तरमथशब्दार्थः ॥

भवतु प्राणस्येदं नाम मन्थनस्य तु कथं मन्त्रार्थमित्याशङ्क्याह । अन्नेन हीति ॥ प्रतिज्ञातेऽर्थे प्रश्नपूर्व्वकं हेतुमाह । कुत इति ॥ अतस्त्वामो नामासीति पूर्व्वेण सम्बन्धः ॥ हेतुं व्याचष्टे । यस्मादिति ॥ अनन्तरं जपकर्म्मणः सकाशादिति शेषः ॥ तदेव स्पष्टयति । मन्त्रस्येति ॥ मन्त्रस्यैकैकेन पादेन मन्थस्यैकैकं ग्रासं

उ॰ भोजनमित्याचामति श्रेष्ठ॑ सर्वधातममित्याचामति तुरं भगस्य धीमहीति सर्वं पिबति ॥ ७ ॥

---

भा॰ खल्वेतया वक्ष्यमाणयर्चा पच्छः पादश आचामति भक्षयति । मन्त्रस्यैकैकेन पादेनैकैकग्रासं भक्षयति । तद्भोजनं सवितुः सर्व्वस्य प्रसवितुः प्राणमादित्यस्यैकीकृत्योच्यते । आदित्यस्य वृणीमहे प्रार्थयेमहि मन्थरूपं । येनान्नेन साविचेण भोजनेनोपभुक्तेन वयं सवितृस्वरूपापन्ना भवेमेत्यभिप्रायः । अथवा देवस्य सवितुरिति पूर्व्वेण सम्बन्धः । श्रेष्ठं प्रशस्यतमं सर्व्वान्नेभ्यः सर्व्वधातमं सर्व्वस्य जगतो धारयितृतमं अतिशयेन विधातृतममिति वा । सर्व्वथा भोजनविशेषणं तुरं त्वरं तूर्णं शीघ्रमित्येतद्भगस्य देवस्य सवितुः स्वरूपमिति शेषः । धीमहि चिन्तयेमहि विशिष्टभोजनेन संस्कृताः शुद्धात्मानः सन्त इत्यभिप्रायः । अथवा भगस्य श्रियः कारणं महत्त्वं प्राप्तं कर्म्म कृतवन्तो वयं तद्धीमहि चिन्तयेमहि । सर्व्वञ्च मन्थ-

---

व्या॰ भक्षयतीति योजना । भोजनं मन्थरूपमिति सम्बन्धः । तत्कथं सवितुः स्यात् प्राणस्य हि मन्थद्रव्यमन्नमित्युक्तं तत्राह । प्राणमिति ॥ उच्यते सवितुर्भोजनमिति शेषः ॥ प्राणादित्ययोरेकत्वे फलितं वाक्यार्थमाह । आदित्यस्येति ॥ मन्थरूपं तद्भोजनमिति पूर्व्वेण सम्बन्धः ॥

प्रार्थनाविषयं भोजनमेव विशिनष्टि । येनेति ॥ तस्यैव विशेषणान्तरं श्रेष्ठमित्यादि स्थितिकारणत्वमुक्त्वा जनकत्वं पक्षान्तरमाह । अतिशयेनेति ॥ जगद्धात्रौ फलदानेति जगद्धात्रौ फलदाने च धातुः शैघ्र्यं किमिति भोजने कथ्यमाने ध्यानमुच्यते

उ० निर्णिज्य कꣳसं चमसं वा पश्चादग्नेः संविशति चर्म्मणि वा स्थण्डिलये वा वाचंयमोऽप्रसाहः स यदि स्त्रियं पश्येत् समृद्धं कर्म्मेति विद्यात् ॥ ८ ॥ तदेष श्लोको यदा कर्म्मसु काम्येषु स्त्रियꣳ स्वप्नेषु पश्यति समृद्धिं तत्र जानीयात्तस्मिन्स्वप्ननिदर्शने तस्मिन्स्वप्ननिदर्शने ॥ ९ ॥ २ ॥

भा० लेपं पिबति निर्णिज्य प्रक्षाल्य कांसं कंसाकारं चमसञ्च-मसाकारं चौदुम्बरं पात्रं । पीत्वा आचम्य पश्चादग्नेः प्राक्शिराः संविशति चर्म्मणि वाऽजिने स्थण्डिले केवलायां भूमौ । वाचंयमो वाग्यतः सन्नित्यर्थः। अप्रसाहो न प्रसह्यते नाभिभूयते स्त्र्याद्यनिष्टस्वप्नदर्शनेन यथा तथा संयत-चित्तः सन्नित्यर्थः । स एवम्भूतो यदि स्त्रियं पश्येत् स्वप्नेषु तदा विद्यात्समृद्धं ममेदं कर्म्मेति ॥

तदेतस्मिन्नर्थे एष श्लोको मन्त्रोऽपि भवति । यदा

व्या० तत्राह । विशिष्टेति ॥ शुद्धधीत्वं ध्यानकारणमुक्त्वा प्रकृतकर्म्म-प्रेप्सितमहत्त्वे हेतुत्वादपि ध्यानमनुष्ठेयमित्याह । अथवेति ॥ सावित्रं रूपमुक्तं नियमेनौदुम्बरं वैकल्पिताकारे विशेषः । पात्रं प्रक्षाल्य पिबतीति सम्बन्धः । मन्थलेपपात्रं प्रक्षाल्य पीत्वा-चमनपूर्व्वकमग्नेः पश्चिमभागे कृष्णाजिनव्यवहितायां केव-लायां वा भूमौ प्राक्शिरा भूत्वा शयीतेत्याह । पीत्वेति ॥ शयनस्य कर्त्तव्यं दर्शयति । वाचंयम इति ॥ तस्य स्वप्ने कथ-ञ्चिदुत्तमस्त्रीदर्शने शुभागमः सूच्यत इत्याह । स एवम्भूत इति ॥ २ ॥ प्राणविद्या तदङ्गकर्म्म चेत्युभयमुक्तमिदानीमग्निवि-द्यामाख्यातुकामस्तावदाख्यायिकायास्तात्पर्य्यमाह । ब्रह्मादीति ॥

उ॰ श्वेतकेतुर्हारुणेयः पञ्चालानाꣳ समितिमेयाय तꣳ ह प्रवाहणो जैबलिरुवाच कुमारानु त्वा-शिषत्पिता इत्यनु हि भगव इति ॥ १ ॥ वेत्थ यदितोऽधिप्रजाः प्रयन्तीति न भगव इति वेत्थ यथा पुनरावर्तन्ता ३ इति न भगव इति वेत्थ पथोर्देवयानस्य पितृयाणस्य च व्यावर्तना३ इति

---

भा॰ कर्म्मसु काम्येषु कामार्थेषु स्त्रियं स्वप्नेषु स्वप्नदर्शनेषु स्वप्नकालेषु वा पश्यति समृद्धिं तत्र जानीयात्। कर्म्मणां फलनिष्पत्तिर्भविष्यतीति जानीयादित्यर्थः ॥ तस्मिन् स्त्र्यादिप्रशस्तस्वप्नदर्शने सति इत्यभिप्रायः । द्विरुक्तिः कर्म्मसमाप्त्यर्थः ॥ २ ॥ ब्रह्मादिस्तम्बपर्य्यन्ताः संसार-गतयो वक्तव्या वैराग्यहेतोर्मुमुक्षूणामित्यत आख्या-यिका आरभ्यते । श्वेतकेतुर्नामतो ह इत्यैतिह्यार्थः । अरुणस्यापत्यमारुणिस्तस्यापत्यमारुणेयः पञ्चालानां जन-पदानां समितिं सभामेयाय आजगाम। तमागतवन्तं ह प्रवाहणो नामतो जीवलस्यापत्यं जैबलिरुवाचोक्तवान्। हे कुमारानु त्वा त्वामशिषदन्वशिषत्पिता। किमनुशिष्टस्त्वं पित्रेत्यर्थः । इत्युक्तः स आहाऽनु ह्यनुशिष्टोऽस्मि भगव इति सूचयन्नाह । तं होवाच यद्यनुशिष्टोऽसि

---

ग्या॰ तासाञ्च वक्तव्यत्वे हेतुमाह ॥ वैराग्यहेतोरिति ॥ राजा कुमा-रेति सम्बोधयन्नभिमानं श्वेतकेतोरपनिनीषति ॥

उ॰ न भगव इति ॥ २ ॥ वेत्थ यथाऽसौ लोको न सम्पूर्य्यता ३ इति न भगव इति वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति नैव भगव इति ॥ ३ ॥ अथ नु किमनुशिष्टोऽवोचथा यो हीमानि न विद्यात् कथꣳ सोऽनुशिष्टो ब्रवी-

---

भा॰ वेत्थ यदितोऽस्माल्लोकादध्यूर्द्ध्वं यत्प्रजाः प्रयन्ति यद्गच्छन्ति तत्किं जानीष इत्यर्थः। न भगव इत्याह इतरो न जानेऽहं तद्यत्पृच्छसि। एवं तर्हि वेत्थ जानीषे यथा येन प्रकारेण पुनरावर्त्तन्ता इति न भगव इति प्रत्याह। वेत्थ पथोर्मार्गयोः सह प्रयाणयोर्देवयानस्य पितृयाणस्य च व्यावर्त्तना व्यावर्त्तनं इतरेतरवियोगस्थानं सह गच्छतामित्यर्थः। न भगव इति वेत्थ यथासौ लोकः पितृसम्बन्धी। यं प्राप्य पुनरावर्त्तन्ते बहुभिः प्रयद्भिरपि येन कारणेन न सम्पूर्य्यता ३ इति। न भगव इति प्रत्याह। वेत्थ यथा येन क्रमेण पञ्चम्यां पञ्चसङ्ख्याकायां आहुतौ हुतायामाहुतिनिर्वृत्ता आहुतिसाधनाश्चापः पुरुषवचसः

---

आ॰ यथेति॥ अस्यार्थमाह। येनेति॥ विद्वदविदुषोस्तुल्यमार्गयो सतोर्द्वौ मार्गौ तयोर्मध्ये देवयानस्येत्यादि योज्यमुक्तं वाक्यार्थं सङ्क्षिपति। इतरेतरेति॥ विदुषाञ्च कर्म्मिणाञ्च मार्गद्वयमधिकृत्य सह प्रस्थितानां यत्र मिथो वियोगो भवति तत्किं वेत्थेत्यर्थः॥ पितृलोकसम्बन्धिनं लोकमेव व्याकरोति। यं प्राप्येति॥ आहुतिनिर्वृत्त इत्यस्य व्याख्यानं आहुतिसाधनाश्चेति अपूर्व्वरूपाणामपां भूतान्तरसमुच्चयार्थश्चकारः। अथवा पयोदृतादि-

उ॰ तेति स हायस्तः पितुरर्द्धमेयाय तꣳ होवाचा
ऽननुशिष्य वाव किल मा भगवानब्रवीदनु त्वाशि-
षमिति ॥ ४ ॥ पञ्च मा राजन्यबन्धुः प्रश्नानप्रा-
क्षीत्तेषां नैकञ्चन नाशकं विवक्तुमिति स होवाच

---

भा॰ पुरुष इत्येवंवचोऽभिधानं यासां हूयमानानां क्रमेण षष्ठाहुतिभूतानां ताः पुरुषवचसः पुरुषवाच्या भवन्ति पुरुषाख्यां लभन्त इत्यर्थः। इत्युक्तो नैव भगव इत्याह। नैवाहमत्र किञ्चन जानामीत्यर्थः। अथैवमज्ञः सन् किमनुशिष्टोऽस्मीत्यवोचथा उक्तवानसि। यो हीमानि मया पृष्टान्यर्थजातानि न विद्यात्र विजानीयात्कथं स विद्वत्स्वनुशिष्टोऽस्मीति ब्रवीत। एवं स श्वेतकेतू राज्ञाऽऽयस्त आयासितः सन् पितुरर्द्धं स्थानमेयाय गतवांस्तञ्च पितरमुवाचाऽननुशिष्याऽनुशासनमकृत्वैव मा मां किल भगवान् समावर्त्तनकालेऽब्रवीदुक्तवान् अनु त्वाशिषमन्वशिषं त्वामिति॥

यतः पञ्च पञ्चसङ्ख्याकान् प्रश्नान् राजन्यबन्धू राजन्याः बन्धवोऽस्येति राजन्यबन्धुः स्वयं दुर्वृत्त इत्यर्थो

---

च्या॰ रूपेणाहुतिं साधयन्तीति चाहुत्या पुनरपूर्व्वात्मना निष्पन्ना इत्यर्थः। क्रमेणेति श्रद्धासोमवृष्ट्यन्नरेतसा हवनद्वारेणेति यावत्। षष्ठाहुतिभूतानामन्त्येष्टिविधानेन शरीराहुतिद्वारा सूक्ष्मतां गतानामित्यर्थः॥ त्वत्पृष्टार्थजातातिरिक्तविषयमनुशासनं ममास्तीत्यनुशिष्टोऽस्मीत्युक्तमित्याशङ्क्याह। यो हीति॥
अननुशिष्य त्वामन्वशिषमिति कथमुक्तवानसीत्याशङ्क्याह। यत इति॥ नैकञ्चनेत्युक्तमेव नञ्पदं नाशकमिति सम्बन्धं

उ॰ यथा मा त्वं तदैतानवदो यथाहमेषां नैकञ्चन वेद यद्यहमिमानवदिष्यं कथं तेनावक्ष्यमिति ॥ ५ ॥ स ह गौतमो राज्ञोऽर्द्धमेयाय तस्मै ह प्राप्ता-

भा॰ ऽप्राक्षीत्पृष्टवांस्तेषां प्रश्नानां नैकञ्च नैकमपि नाशकं न शक्तवानहं विवक्तुं विशेषेणार्थतो निर्णेतुमित्यर्थः । स होवाच पिता यथा मा मां वत्स त्वं त्वदागममात्रमेव एतान्प्रश्नानवद उक्तवानसि तेषां नैकञ्च नाशकं विवक्तु-मिति । तथा मां जानीहि त्वदीयाज्ञानेन लिङ्गेन मम तद्विषयमज्ञानं जानीहीत्यर्थः । कथं यथाऽहमेषां प्रश्ना-नामेकञ्च नैकमपि न वेद न जाने इति । यथा त्वमे-वाङ्ग एतान्प्रश्नान्न जानीषे तथाऽहमप्येतान्न जान इत्यर्थः । अतो मय्यन्यथाभावो न कर्त्तव्यः ॥

कुत एतदेवं यतो यद्यहमिमान् प्रश्नानवदिष्यं विदि-तवानस्मि कथं ते तुभ्यं प्रियाय पुत्राय समावर्त्तनकाले पुरा नावक्ष्यं नोक्तवानस्मीति उक्त्वा स ह गौतमो गोत्रतो

आ॰ दर्शयितुं पुनरुपात्तं । अतो मां प्रति तव मिथ्यावादिता सिद्धेति शेषः । पिता स्वकीयमिथ्यावादित्वशङ्कां परिहरति । स होवा-चेति ॥ यथा मा त्वमित्यादिवाक्यं पूरयित्वा व्याख्यायानन्तर-वाक्यमाकाङ्क्षापूर्व्वकमुत्थापयति । कथमित्यादिना ॥ तद्व्याचष्टे । यथेति । अज्ञानाविशेषोऽतःशब्दार्थः । अन्यथाभावो ज्ञातेऽपि विषये तवानुक्तिरिति यावत् ॥

त्वदीयमज्ञानं कुतो हेतोर्मया ज्ञातव्यमित्याशङ्कामुद्भाव्या-नन्तरवाक्येनोत्तरमाह । कुत इत्यादिना ॥ अतस्तव पात्रभूतस्या-ऽनुपदेशान्मदीयमज्ञानं ज्ञातव्यमिति शेषः । अर्हणां योग्यां

उ॰ याहीस्नकार स ह प्रातः सभाग उदेयाय तᳬ होवाच मानुषस्य भगवन् गौतम वित्तस्य वरं वृणीथा इति स होवाच तवैव राजन् मानुषं वित्तं यामेव कुमारस्यान्ते वाचमभाषथास्तामेव मे ब्रूहीति ॥ ६ ॥

---

भा॰ राज्ञो जैबलेरर्द्धं स्थानमेयाय गतवान्। तस्मै ह गौतमाय प्राप्तायार्हामर्हणाञ्चकार क्षतवान्। स च गौतमः कृतातिथ्य उषित्वा परेद्युः प्रातःकाले सभागे सभां गते राज्ञि उदेयाय। भजनं भागः पूजा सेवा सह भागेन वर्त्तमानो वा सभागः पूज्यमानोऽन्यैः स्वयं गौतम उदेयाय राजानमुद्गतवान्। तं होवाच गौतमं राजा मानुषस्य भगवन् गौतम मनुष्यसम्बन्धिनो वित्तस्य ग्रामादेर्वरं वरणीयं कामं वृणीथाः प्रार्थयेथाः। स होवाच गौतमस्तवैव तिष्ठतु राजन्मानुषं वित्तं। यामेव कुमारस्य मम पुत्रस्यान्ते समीपे वाचं पञ्चप्रश्नलक्षणामभाषथा उक्तवानसि तामेव वाचं मे मह्यं ब्रूहि कथयेत्युक्तो गौतमेन राजा सह कृच्छ्री दुःखी बभूव॥

---

घा॰ पूजामित्यर्थः। सभागपदं सप्तम्यन्तं राजविषयं। प्रथमान्तं गौतमविषयमिति भेदः॥ गौतममागतं योगक्षेमार्थिनं बुध्वा राजा प्रसन्नः सन्नुक्तवानित्याह। तं होवाचेति॥ तर्हि कृतकृत्यस्य तव किमागमनमित्याशङ्क्याह। यामेवेति॥

उ॰ स ह कृच्छ्री बभूव तꣳ ह चिरं वसेत्याज्ञापयाञ्चकार तꣳ होवाच यथा मा त्वं गौतमाऽवदो यथेयन्न प्राक् त्वत्तः पुरा विद्या ब्राह्मणान् गच्छति तस्माद् सर्व्वेषु लोकेषु क्षत्रस्यैव प्रशासनमभूदिति

---

भा॰ कथन्विदमिति। स ह कृच्छ्रीभूतोऽप्रत्याख्येयं ब्राह्मणं मन्वानो ह न्यायेन विद्या वक्तव्येति मत्वा तं ह गौतमं चिरं दीर्घकालं वसेत्येवमाज्ञापयाञ्चकार आज्ञप्तवान्। यत्पूर्व्वं प्रख्यातवान् राजा विद्यां यच्च पश्चाच्चिरं वसेत्याज्ञप्तवान् तन्निमित्तं ब्राह्मणं क्षमापयति हेतुवचनोक्त्या। तं होवाच राजा सर्व्वविद्यो ब्राह्मणोऽपि सन् यथा येन प्रकारेण मा मां हे गौतमावदस्त्वं तामेव विद्यालक्षणां वाचं मे ब्रूहीत्यज्ञानात् तेन त्वं जानीहि। तत्रास्ति वक्तव्यं यथा येन प्रकारेणेयं विद्या प्राक् त्वत्तो न ब्राह्मणान् गच्छति न गतवती। न च ब्राह्मणा अनया विद्यया ऽनुशासितवन्तः। तथैतत्प्रसिद्धं लोके यतो यस्माद् पुरा पूर्व्वं

---

व्या॰ कृच्छ्रीभावमभिनयति! कथमिति॥ गौतमस्य वचनं राज्ञो दुःखीभावकारणं तर्हि प्रत्याख्यायतामित्याशङ्क्याह। सहेति॥ किमिति तर्हि चिरं वसेत्युक्तवानित्याह। न्यायेनेति॥ संवत्सरं वसेदिति यावत्। वक्तव्यविद्येतिशेषः॥ कथं राज्ञो ब्राह्मणं प्रत्याज्ञां कुर्व्वतो न प्रत्यवायः स्यादित्याशङ्क्याह। यत्पूर्व्वमिति॥ प्रत्याख्यानादिविषयहेतुवचनं न केवलं विद्यावशादेव श्रैष्ठ्यं किन्तु जातितोऽपीत्यपरर्थः॥ तर्हि ब्रूहि तां वाचमित्याशङ्क्याह। तत्रेति॥ विद्याप्रवचने प्रस्तुते सतीति यावत्। यथेत्यस्यापेक्षितं

उ॰ तस्मै होवाच ॥ ७ ॥ ३ ॥

भा॰ सर्व्वेषु लोकेषु चत्रस्यैव चत्रजातिरेवानया विद्यया प्रशासनं प्रशास्तृत्वं शिष्याणामभूद्बभूव। चत्रियपरम्परयैवेयं विद्यैतावन्तं कालमागता । तथाप्यहमेतां तुभ्यं वच्यामि त्वत्सम्प्रदानादूर्द्धं ब्राह्मणान् गमिष्यति। अतो मया यदुक्तं तत्चन्तुमर्हसीत्युक्का तस्मै होवाच विद्यां राजा ॥ ३ ॥ पञ्चम्यामाहुतावाप इत्ययं प्रश्नः प्राथम्येनापाक्रियते । तदपाकरणमन्वितरेषामपाकरणमनुकूलं भवेदिति। अग्निहोत्राहुत्योः कार्य्यारम्भो यः स उक्तो वाजसनेयके । तं

आ॰ पूरयति । तथेति ॥ प्रसिद्धमेव स्फोरयति । तस्मादिति॥ ब्राह्मणानामनया विद्यया प्रशास्तृत्वस्य प्रागभावादिति यावत्॥ इतिशब्दोपात्तमर्थं कथयति । चत्रियेति ॥ उक्तप्रत्याख्यानादिकारणमतःशब्दार्थः ॥ ३ ॥ ननु यथा प्रश्नमेव प्रतिवचनमुचितं पञ्चमन्तु प्रश्नं प्राथम्येन प्रतिवदता क्रमो निराकृतस्तत्र किं कारणमत आह । पञ्चम्यामिति॥ अर्थक्रममनुसृत्य पाठक्रमोऽभिधातव्य इत्यर्थः ॥ ननु वाजसनेयकेऽग्निहोत्रप्रकरणेऽग्निहोत्राहुत्यपूर्व्वपरिणामं जगदित्युक्तं तदेवेहापि विवच्चितमिति चेत् किमनेन पिष्टपेषणन्यायेनेत्याशङ्क्यार्थभेदं वक्तुमग्निहोत्रप्रकरणस्थितमर्थमनुवदति । अग्निहोत्राहुत्योरिति ॥ उक्तप्रकारमेव प्रदर्शयन् प्रथमं याज्ञवल्क्यस्य जनकं प्रति षट् प्रश्नानुत्थापयति । तं प्रतीति ॥ कार्य्यारम्भकस्तच्छार्थः । अग्निहोत्राहुत्यपूर्व्वपरिणामो जगदिष्यते। तत्राग्निहोत्रे सायं प्रातश्चाहुतयोराहुत्योरस्माल्लोकादुत्क्रान्तिः। उत्क्रान्तयोः परलोकं प्रति गतयोस्तत्र प्रतिष्ठा। प्रतिष्ठितयोः स्वाश्रयं सम्पादयमाना तृप्तिः। तृप्तिमापाद्यावस्थितयोः पुनरिमं लोकं प्रत्यावृत्तिः। आवृत्तयोराश्रयः पुमान्

भा॰ प्रति प्रश्नाः । उत्क्रान्तिराहुत्योर्गतिः प्रतिष्ठा तृप्तिः पुनरावृत्तिर्लोकं प्रत्युत्थायीति तेषाञ्चापाकरणमुक्तं तत्रैव ॥

ते एते आहुती हुते उत्क्रामतस्तेऽन्तरिक्षमाविशतस्तेऽन्तरिक्षमेवाहवनीयं कुर्वाते वायुं समिधं मरीचिरेव शुक्लामाहुतिं तेऽन्तरिक्षं तर्पयतस्ते तत उत्क्रामत इत्यादि । एवमेव पूर्व्ववद्दिवं तर्पयतस्ते तत आवर्त्तन्ते । इमामाविश्य तर्पयित्वा पुरुषमाविशतः । ततः

---

व्या॰ कथममुं लोकं प्रत्युत्थानशीलो भवतीति कार्य्यारम्भमधिकृत्य षट् प्रश्नाः प्रवृत्ता इत्यर्थः ॥ तत्रैव वाजसनेयके याज्ञवल्क्यं प्रति जनकस्य प्रतिवचनं दर्शयति । तेषाञ्चेति ॥

अपूर्व्वरूपे खल्वाहुती यजमानमुत्क्रामन्तं परिवेष्ट्योत्क्रामतः । ते च धूमादिना यजमानेऽन्तरिक्षमाविशति तदाश्रितत्वात्तदाविशतः । ते पुनरन्तरिक्षस्थयजमानानुकूलतया स्थिते स्वयमन्तरिक्षाधिकरणे तदाहवनीयमिव कुर्व्वाते । आहुत्यधिकरणाहवनीयत्वात् । तत्र वायुं समिधमिव कुरुतः । वायुनाऽन्तरिक्षस्य समिध्यमानत्वात् । शुक्लां शुद्धामाहुतिमिव मरीचिरेवाधत्ते । मरीचीनामन्तरिक्षे व्याप्तत्वात् । ते चान्तरिक्षस्थे तन्निष्ठं यजमानं फलोन्मुखमादधाते । ते पुनरन्तरिक्षादुत्क्रामति यजमाने सहोत्क्रामतः । यजमाने च द्युलोकमाविशति सहाविशतः । तमाविश्य तमेवाहवनीयं कुर्वाते आदित्यं समिधमित्याद्यन्तरिक्षे च यदेवोक्तं। यथावाहुती पूर्व्वमन्तरिक्षं तर्पयत इत्युक्तं तथैव द्युलोकस्थयजमानं फलदानेन सुखिनमातन्वाते। ते चारब्धक्षये ततो द्युलोकाद्यजमाने पृथिवीमाविशति अभूते सहावर्त्तेते। पृथिवीञ्चाविश्य व्रीह्यादिना स्वाश्रयं स्नेषयित्वा रेतस्सिक्तं पुरुषमाश्रयद्वारेणाविशतः। पुरुषाच्च रेतोद्वारा द्वितीयां प्रकृतिमाविश्य गर्भीभूतं स्वाश्रयं कर्म्मानुष्ठानयोग्यं देहभागिनमापादयतः। ततोऽसौ पारलौकिकं कर्म्मानुष्ठायान्ते लोकं प्रत्युत्थानशीलो भवति। इति सर्व्वं जनकेनोक्तमित्यर्थः।

भा॰ स्त्वियमाविश्य लोकं प्रत्युत्थायी भवतीति । तत्राग्नि-होत्राहुत्योः कार्य्यारम्भमात्रमेवंप्रकारं भवतीत्युक्तं ॥

इह तु तं कार्य्यारम्भमग्निहोत्रापूर्व्वपरिणामलक्षणं पञ्चधा प्रविभज्याग्नित्वेनोपासनमुत्तरमार्गप्रतिपत्तिसा-धनं विधित्सन्नाहाऽसौ वाव लोकोऽग्निरित्यादि । इह सायम्प्रातरग्निहोत्राहुती हुते पयआदिसाधने श्रद्धा-पुरःसरे आहवनीयाग्निसमिद्धूमार्चिरङ्गारविस्फुलिङ्गभा-विते कर्त्रादिकारकभाविते चान्तरिक्षं क्रमेणोत्क्रम्य द्युलोकं प्रविशन्त्यौ सूक्ष्मभूतेऽप्समवायित्वादप्शब्दवाच्ये श्रद्धाहेतुत्वाच्च श्रद्धाशब्दवाच्ये तयोरधिकरणो ऽग्निः । अन्यच्च तत्सम्बन्धं समिदादीत्युच्यते ॥

---

व्या॰ तथापि कथमर्थभेदसिद्धिरित्याशङ्क्योक्तमेव सङ्क्षिप्याह । तत्रेति ॥ वाजसनेयिकं सप्तम्यर्थः ॥

प्रकृतश्रुतेरर्थविशेषं दर्शयति । इह त्विति ॥ पञ्चधा द्युपर्जन्य-पृथिवीपुरुषयोषित्प्रकारैरिति यावत् ॥ पञ्चाग्निसम्बन्धमवतार्य्य प्रथमपर्य्यायस्य तात्पर्य्यमाह । इहेति ॥ अयं लोको भूलोकस्त-स्मिन्नित्यर्थः । आहुत्योरप्समवायित्वसिद्ध्यर्थं विशिनष्टि । पय-आदीति ॥ तयोः श्रद्धात्वसिद्ध्यर्थं श्रद्धापुरःसरे इत्युक्तं । तयो-रधिकरणो ऽग्निरित्यादिकल्पनोपयोगित्वेन विशेषणान्तरमा-दत्ते । आहवनीयेति ॥ तयोः स्वातन्त्र्यं परिहरति । कर्त्रादीति ॥ अधिकरणशब्दो भावप्रधानो धर्म्मिपरः । काल्पनिको द्युलो-काद्याख्योऽग्निस्तत्सम्बन्धमिति तच्छब्दोऽग्निविषयः ॥ अन्यच्चेत्युक्तं स्पष्टयति । समिदादीति ॥ आदिशब्दो धूमार्चिरङ्गारादि-विषयः ॥

उ० असौ वाव लोको गौतमाग्निस्तस्यादित्य एव समिद्रश्मयो धूमोऽहरर्चिश्चन्द्रमा अङ्गारा नक्षत्राणि विस्फुलिङ्गाः ॥ १ ॥ तस्मिन्नेतस्मिन्नग्नौ

भा० असावग्न्यादिभावनाहुत्योः सापि तथैव निर्दिश्यते। असौ वाव लोकोऽग्निर्हे गौतम यथाऽग्निहोत्राधिकरणं आहवनीयं। इह तस्याग्नेर्द्युलोकाख्यस्यादित्य एव समित् तेन हीद्धोऽसौ लोको दीप्यते। अतः समिन्धनात् समिदादित्यः। रश्मयो धूमस्तदुत्थानात्। समिधो हि धूम उत्तिष्ठति। अहरर्चिः प्रकाशसामान्यात्। आदित्यकार्य्यत्वाच्च। चन्द्रमा अङ्गाराः। अह्नः प्रशमेऽभिव्यक्तेः। अर्चिषो हि प्रशमेऽङ्गारा अभिव्यज्यन्ते। नक्षत्राणि विस्फुलिङ्गाश्चन्द्रमसोऽवयवा इव विप्रकीर्णत्वसामान्यात्। तस्मिन्नेतस्मिन्नग्नौ यथोक्तलक्षणेऽग्नौ देवाः। यजमानप्राणा अग्न्यादिरूपाः। अधिदैवतं श्रद्धां। अग्निहोत्राहुतिपरिणामावस्थारूपाः सूक्ष्मा आपः श्रद्धाभाविताः श्रद्धा उच्यन्ते। पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीत्यपां होम्यतया प्रश्ने श्रुतत्वात्॥

व्या० पर्य्यायतात्पर्य्यमुक्त्वाऽक्षराणि व्याकरोति। असावित्यादिना॥ इहेत्येतल्लोकनिर्देशः पूर्व्वेण सम्बध्यते। तदुत्थानादित्यत्र तच्छब्देनादित्यो गृहीतः॥ अध्यात्माधिदैवविभागेन देवान् विशदयति। यजमानेति॥ प्रत्ययविशेष्यत्वेन श्रद्धाया होम्यत्वानुपपत्तिरित्याशङ्क्य श्रद्धां व्याकरोति। अग्निहोत्रेति॥ किञ्च प्रश्नप्रतिवचनयोरेकार्थत्वात् प्रश्ने चापां होम्यतया श्रुतत्वात्प्रतिवचनेऽपि ताः श्रद्धाशब्दिता होम्यतया विवक्षिता इत्याह। पञ्चम्यामिति॥

उ० देवाः श्रद्धां जुह्वति तस्या आहुतेः सोमो राजा सम्भवति ॥ २ ॥ ४ ॥

पर्जन्यो वाव गौतमाग्निस्तस्य वायुरेव समिदभ्रं

---

भा० श्रद्धा वा आपः श्रद्धामेवारभ्य प्रणीय प्रचरन्तीति च विज्ञायते । तांश्रद्धामब्रूपां जुह्वति । तस्या आहुतेः सोमो राजा । अपां श्रद्धाशब्दवाच्यानां द्युलोकाग्नौ हुतानां परिणामः सोमो राजा सम्भवति । यथा ऋग्वेदादिपुष्परसा ऋगादिमधुकरोपनीतास्त आदित्ये यश आदिकार्य्यं रोहितादिरूपलक्षणमारभन्त इत्युक्तं । तथेमा अग्निहोत्राहुतिसमवायिन्यः सूक्ष्माः श्रद्धाशब्दवाच्या आपो द्युलोकमनुप्रविश्य चान्द्रं कार्य्यमारभन्ते फलरूपमग्निहोत्राहुत्योः । यजमानाश्च तत्कर्त्तार आहुतिमया आहुतिभावनाभाविता आहुतिरूपेण कर्म्मणाऽऽकृष्टाः श्रद्धाप्-

---

आ० च्यप्सु श्रद्धाशब्दस्य वृद्धव्यवहारप्रयोगाभावान्नैवमित्याशङ्क्याह । श्रद्धेति ॥ कथमापः श्रद्धाशब्देन प्रसिद्धवदुच्यन्ते तत्राह । श्रद्धा इति ॥ श्रद्धापूर्व्वकहोममुद्दिश्य पयः सोमाज्याहुतिसाधनं सम्पाद्य जुहोतीति तैत्तिरीयकाः पठन्ति । तथा चाप्सु श्रद्धाशब्दः सम्भवतीत्यर्थः ॥ उक्तमर्थं दृष्टान्तेन स्पष्टयति । यथेत्यादिना ॥ उक्तं मधुविद्यायामिति शेषः । चान्द्रं कार्य्यं चन्द्रसमीपस्थं तत्सदृशं शरीरमित्यर्थः ॥ तथापि यजमानानां कथं फलितत्वमत आह । यजमानाश्चेति ॥ आहुती तच्छब्देन गृह्येते । प्राधान्यं मयडित्यर्थः ॥ तदेव स्पष्टयति । आहुतिभावनाभाविता इति ॥ तत्संस्तुतास्तदनुसारिणस्तदाश्रया इत्यर्थः ॥ तद्भावितत्वफलमाह । आहुतिरूपेणेति ॥ तेनाकृष्टत्वं वशीकृतत्वं ॥ आहुतिभाविता इत्युक्तं स्पष्टयति । श्रद्धेति ॥ तत्पूर्व्वकं

उ० धूमो विद्युदर्चिरशनिरङ्गारा ह्रादुनयो विस्फुलिङ्गाः ॥ १ ॥ तस्मिन्नेतस्मिन्नग्नौ देवाः सोमꣳ राजानं जुह्वति तस्या आहुतेर्वर्षꣳ सम्भवति ॥ २ ॥ ५ ॥

---

भा० मवायिनो द्युलोकमनुप्रविश्य सोमभूता भवन्ति । तदर्थं हि तैरग्निहोत्रं कृतं । अत्र त्वाकृतिपरिणाम एव पञ्चाग्निसम्बन्धक्रमेण प्राधान्येन विवक्षित उपासनार्थं । न यजमानानां गतिं । तां त्वविदुषां धूमादिक्रमेणोत्तरत्र वक्ष्यति विदुषाञ्चोत्तरां विद्याकृतां ॥ ४ ॥ द्वितीयहोमपर्य्यायार्थमाह । पर्जन्यो वाव पर्जन्य एव गौतमाग्निः पर्जन्यो नाम वृष्ट्युपकरणाभिमानिनीदेवताविशेषः । तस्य वायुरेव समित् । वायुना हि पर्जन्योऽग्निः समिध्यते । पुरोवातादिप्राबल्ये वृष्टिदर्शनात् ॥

---

व्या० पयः सोमादिसाध्यं यत्कर्म्म तदाश्रया इत्यर्थः । सोमभूतास्तत्समीपस्थं शरीरं प्राप्य तत्स्वरूपा इत्यर्थः ॥ कथं सोमसारूप्यं धर्म्मिगं फलमित्याशङ्क्याह । तदर्थमिति ॥ यजमानानां सोमभावो गतिमन्तरेण न सिध्यति । तथाच वक्तव्या गतिरित्याशङ्क्याह । अत्रेति । आहवनीयोऽग्निः सप्तम्यर्थः । सा तर्हि कुत्रोच्यते । न हि तदुक्तिमन्तरेण यथोक्तं फलं सिध्यत्यत आह । तान्त्विति ॥ ४ ॥ द्वितीयहोमसम्बन्धी द्वितीयः पर्य्यायस्तस्यार्थं निर्ज्ञातुं तमेव पर्य्यायमादत्ते श्रुतिरित्यर्थः । पुरोवातादीत्यादिशब्देन वर्षहेतुर्वायुभेदो गृह्यते ॥

उ॰ पृथिवी वाव गौतमाग्निस्तस्याः संवत्सर एव समिदाकाशो धूमो रात्रिरर्चिर्दिशोऽङ्गारा अवान्तरदिशो विस्फुलिङ्गाः ॥ १ ॥ तस्मिन्नेतस्मिन्नग्नौ देवा वर्षं जुह्वति तस्या आहुतेरन्नꣳ सम्भवति ॥ २ ॥ ६ ॥

---

भा॰ अभ्रं धूमो धूमकार्य्यत्वाद्धूमवच्च लक्ष्यमाणत्वात्। विद्युदर्चिः। प्रकाशसामान्यात्। अशनिरङ्गाराः। काठिन्यात् विद्युत्सम्बन्धाद्वा। ह्रादनयो विस्फुलिङ्गाः। ह्रादनयो गर्जितशब्दाः। मेघानां विप्रकीर्णत्वसामान्यात्। तस्मिन्नेतस्मिन्नग्नौ देवाः पूर्व्ववत्सोमं राजानं जुह्वति। तस्या आहुतेर्वर्षं सम्भवति। श्रद्धाख्या आपः सोमाकारपरिणता द्वितीये पर्य्याये पर्जन्याग्निं प्राप्य वृष्टित्वेन परिणमन्ते॥ ५॥

पृथिवी वाव गौतमाग्निरित्यादि पूर्व्ववत्। तस्याः पृथिव्याख्यस्याग्नेः संवत्सर एव समित्। संवत्सरेण हि कालेन समिद्धा पृथिवी व्रीह्यादिनिष्पत्तये भवति। आकाशो धूमः पृथिव्या इवोत्थित आकाशो दृश्यते। यथाऽग्नेर्धूमो रात्रिरर्चिः पृथिव्या ह्यप्रकाशात्मिकाया अनुरूपा रात्रिः। तमोरूपत्वात्। अग्नेरिवानुरूपमर्चिर्दिशोऽङ्गारा उपशा-

---

व्या॰ उक्तञ्चाभ्राणां धूमकार्य्यत्वं पौराणिकैः। यज्ञधूमोद्भवं त्वभ्रं द्विजानां च हितं सदा। दावाग्निधूमसम्भूतमभ्रं वनहितं स्मृतं॥ मृतधूमोद्भवन्त्वभ्रमशुभाय भविष्यति। अभिचाराग्निधूमोत्थं भूतनाशाय वै द्विजा इति॥ अध्यात्मं यजमानस्य प्राणाः। इन्द्रा-

उ० पुरुषो वाव गौतमाग्निस्तस्य वागेव समि-
त्प्राणो धूमो जिह्वाऽर्चिश्चक्षुरङ्गाराः श्रोत्रं विस्फु-
लिङ्गाः ॥ १ ॥ तस्मिन्नेतस्मिन्नग्नौ देवा अन्नं
जुह्वति तस्या आहुते रेतः सम्भवति ॥ २ ॥ ७ ॥
योषा वाव गौतमाग्निस्तस्या उपस्थ एव

---

भा० त्त्वसामान्यात्। अवान्तरदिशो विस्फुलिङ्गाः। क्षुद्रत्व-
सामान्यात्। तस्मिन्नित्यादि समानं। तस्या आहुतेरन्नं
व्रीहियवादि सम्भवति॥ ६ ॥

पुरुषो वाव गौतमाग्निः। तस्य वागेव समित्। वाचा हि
मुखेन समिध्यते पुरुषो न मूकः। प्राणो धूमो धूम इव मुखा-
न्निर्गमनात्। जिह्वार्चिर्लोहितत्वात्। चक्षुरङ्गारा भास
आश्रयत्वात्। श्रोत्रं विस्फुलिङ्गाः। विप्रकीर्णत्वसाम्यात्।
समानमन्यत्। अन्नं जुह्वति व्रीह्यादिसंस्कृतं। तस्या
आहुते रेतः सम्भवति॥ ७ ॥

योषा वाव गौतमाग्निः। तस्या उपस्थ एव समित्।
तेन हि सा पुत्राद्युत्पादनाय समिध्यते। यदुपमन्त्रयते स

---

आ० दयस्त्वाधिदैवतं देवा इत्याह। पूर्ववदिति॥ सोमं राजानमि-
त्यादि व्याचष्टे। श्रद्धाख्या इति॥ ५॥ ६॥

तस्या आहुतेर्गर्भः सम्भवति इत्युक्तं व्यक्तीकरोति। एव-
मिति॥ यथोक्तरीत्या श्रद्धादीनां रेतोऽन्तानां यानि द्युलोका-
दिषु योषिदन्तेष्वग्निषु हवनानि तेषामेकैकमस्मिन् पर्य्याये यः
क्रमो व्याख्यातस्तेनेति यावत्॥

कथं पुनरापो गर्भीभवन्ति भूतान्तराणामपि तुल्यो गर्भीभा-
वस्तस्य पाञ्चभौतिकत्वादत आह। तत्रेति॥ भूतानां मध्ये किमि-

उ॰ समिद्यदुपमन्त्रयते स धूमो योनिरर्च्चिर्यदन्तः करोति तेऽङ्गारा अभिनन्दा विस्फुलिङ्गाः ॥ १ ॥ तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति तस्या आहुतेर्गर्भः सम्भवति ॥ २ ॥ ८ ॥

---

भा॰ धूमः । स्त्रीसम्भवादुपमन्त्रणस्य । योनिरर्च्चिर्लोहितत्वात् । यदन्तः करोति तेऽङ्गारा अग्निसम्बन्धात् । अभिनन्दाः सुखलवा विस्फुलिङ्गाः क्षुद्रत्वात् ॥ तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति । तस्या आहुतेर्गर्भः सम्भवतीति । एवं श्रद्धासोमवर्षान्नरेतोहवनपर्य्यायक्रमेणाप एव गर्भीभूतास्ताः । तत्रापामाहुतिसमवायित्वात् प्राधान्यविवक्षा आपः पञ्चम्यामाहुतौ पुरुषवचसो भवन्तीति । न त्वाप एव केवलाः सोमादिकार्य्यमारभन्ते । न चापोऽत्रिवृत्कृताः सन्तीति । त्रिवृत्कृतत्वेऽपि विशेषसञ्ज्ञालाभो दृष्टः पृथिवीयमिमा आपोऽयमग्निरित्यन्यतमबाहुल्यनिमित्तः । तस्मात्समुदिता-

---

आ॰ त्वपां प्राधान्यविवक्षयैष निर्द्देशः ॥ तासामेव केवलानां कार्य्यारम्भकत्वविवक्षा किं न स्यात्तत्राह । न त्विति ॥ भूतान्तरासहकृतानां केवलानामपामारम्भकत्वे यदारब्धं कार्य्यं न तद्भोगायतनं तस्य जलबुद्बुदवदत्यन्तचञ्चलत्वादित्यर्थः ॥ केवलानामप्यत्वमुपेत्योक्तमिदानीं तदेव नास्तीत्याह । न चेति ॥ इतिशब्दस्तासां त्रिवृत्तं । त्रिवृतमेकैकामकरोदिति श्रुतेरिति हेत्वर्थः ॥ सर्व्वस्य त्रिवृत्कृतत्वे कथं दृष्टो विशेषव्यपदेशो युज्यतेत्याशङ्क्याह । त्रिवृत्कृतत्वेऽपीति ॥ अपां प्राधान्यविवक्षया प्रश्नप्रतिवचनयोरप्शब्द इत्युपसंहरति । तस्मादिति ॥ केवलानामपामसत्त्वादिति यावत् ॥ कथमारम्भकेषु भूतेष्वपां बाहुल्यमवगतमित्याशङ्क्य कार्य्यद्वारा तदधिगतिरि-

उ० इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति स उल्बावृतो गर्भो दश वा मासानन्तः शयित्वा यावद्वाथ जायते ॥ १ ॥

---

भा० वम्हतानि बाहुल्यात्कर्मसमवायीनि सोमादिकार्यारम्भकाण्याप इत्युच्यन्ते। दृश्यन्ते च द्रवबाहुल्यं सोमवृष्ट्यन्नरेतोदेहेषु। बहुद्रवञ्च शरीरं यद्यपि पार्थिवं तत्र पञ्चम्यामाहुतौ हुतायां रेतोरूपा आपो गर्भीभूताः ॥ ८ ॥

इति त्वेवन्तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति व्याख्यात एकः प्रश्नः। यत्तु द्युलोकादिमां प्रत्याहृतयोराहुत्योः पृथिवीं पुरुषं स्त्रियं क्रमेणाविश्य लोकं प्रत्युत्थायी भवतीति वाजसनेयक उक्तं तत्प्रासङ्गिकमिहोच्यते। इह च प्रथमे प्रश्न उक्तं वेत्थ यदितोऽधि प्रजाः प्रयन्तीति। तस्य चायमुपक्रमः। स गर्भोऽपां पञ्चमः

---

था० त्वाह। दृश्यते चेति ॥ सोमादीनामब्बाहुल्येऽपि कथं पार्थिवशरीरस्य तद्बाहुल्यमित्याशङ्क्याह। बहुद्रवञ्चेति ॥ पञ्चमप्रश्ननिर्णयमुपसंहर्त्तुं पातनिकां करोति। तत्रेति ॥ योयामाविति यावत् ॥ गर्भीभूताः पुरुषवचसो भवन्तीति सम्बन्धः ॥ ७ ॥ ८ ॥

उक्तार्थे वाक्यं योजयति। इति त्विति ॥ अपां गर्भीभावोक्तिमात्रेण पुरुषवचस्त्वस्य निर्णीतत्वादलमुत्तरग्रन्थेनेत्याशङ्क्य तस्य तात्पर्यमाह। यत्त्विति ॥ आहुत्योः सम्बन्धीति शेषः। प्रासङ्गिकं गर्भीभावोक्तिप्रसङ्गादागतमिति यावत् ॥ इहेति प्रकृतश्रुत्युक्तिः ॥ प्रासङ्गिकीं सङ्गतिं त्यक्त्वा साक्षादेव पूर्वोत्तरग्रन्थयोरस्ति सङ्गतिरिति तात्पर्यान्तरमाह। इह चेति ॥ प्रजानामूर्द्धगमनमुत्तरत्र निरूपयिष्यते। तादर्थ्येन तासामुत्पत्तिरादावुच्यत इत्यर्थः ॥

उ॰ स जातो यावदायुषं जीवति तं प्रेतं दिष्ट-

भा॰ परिणामविशेषः। आकृतिकर्मसमवायिनीनां श्रद्धाशब्दवाच्यानां उल्बावृत उल्बेन जरायुणाऽऽवृतो वेष्टितो दश वा नव वा मासानन्तर्मातुः कुक्षौ शयित्वा यावता कालेन न्यूनेनातिरिक्तेनानन्तरं जायते॥

उल्बावृत इत्यादिवैराग्यहेतोरिदमुच्यते। कष्टं हि मातुः कुक्षौ मूत्रपुरीषवातपित्तश्लेष्मादिपूर्णे तदनुलिप्तस्य गर्भस्योल्बाऽशुचिपूयावृतस्य लोहितरेतोऽशुचिवीजस्य मातुरशितपीतरसानुप्रवेशेन विवर्द्धमानस्य निरुद्धशक्तिबलवीर्य्यतेजःप्रज्ञाचेष्टस्य शयनं। ततो योनिद्वारेण पीड्य-

व्या॰ द्विविधां सङ्गतिमुक्त्वा वाक्याक्षराणि योजयति। स गर्भ इति॥ सोमवृष्ट्यन्नरेतांस्यपेक्ष्य पञ्चमत्वं गर्भाख्यस्य परिणामस्य द्रष्टव्यं। अपां प्रकृतत्वद्योतनार्थमाकृतीत्यादि विशेषणद्वयं। अथवा पूर्वोक्तात्कालान्न्यूनाधिकेन वा कालेन यावता जन्तुः समग्राङ्गो जायते तावता कालेन कुक्षौ शयित्वेति सम्बन्धः। अनन्तरं योनितो निर्गमनकारणीभूतकर्म्माभिव्यक्तेरिति शेषः॥

उल्बावृतत्वं कुक्षौ चिरं शयनं योनितो निस्सरणमित्येतदशेषमति प्रसिद्धं किमिति श्रुत्या व्यपदिश्यते तत्राह। उल्बावृत इत्यादीति॥ वैराग्यार्थत्वमस्य स्फुटयति। कष्टं हीति॥ श्लेष्मादीत्यादिशब्देनाऽसृक्पूयस्नायुमज्जादीनि गृह्यन्ते। तदनुलिप्तस्येति तच्छब्दो मूत्रपुरीषादिविषयः। शक्तिर्बुद्धिसामर्थ्यं। बलं देहसामर्थ्यं। तेजः शरीरगता कान्तिः। प्रज्ञा चेतना जीवनधर्म्मः। चेष्टा प्राणधर्म्मः। ता निरुद्धा यस्य तस्येति विग्रहः॥ मातुरुदरे शयानस्य कष्टत्वेऽपि तदुदराद्योनिद्वारा निःसरणं सुखकरमिति चेन्नेत्याह। तत इति॥ तद्ग्राहत्वप्रकारमेवाभिनयति।

उ० मितोऽग्नय एव हरन्ति यत एवेतो यतः सम्भूतो भवति ॥ २ ॥ ९ ॥

---

भा० मानस्य कष्टतरा निःसृतिर्जन्मेति वैराग्यं ग्राहयति । मुहूर्त्तमप्यसह्यं दश वा मासानतिदीर्घकालमन्तः शयित्वेति । स एवं जातो यावदायुषं पुनर्घटीयन्त्रवद्गमनागमनाय कर्म्म कुर्वन् कुलालचक्रवद्वा तिर्य्यग्भ्रमणाय यावत्कर्म्मणोपात्तमायुस्तावज्जीवति । तमेवं क्षीणायुषं प्रेतं मृतं दिष्टं कर्म्मणा निर्द्दिष्टं परलोकं प्रति । यदि चेज्जीवन् वैदिके कर्म्मणि ज्ञाने वाधिकृतस्तमेनं मृतमितोऽस्माद्ग्रामादग्नयेऽग्न्यर्थमृत्विजो हरन्ति पुत्रा वान्त्यकर्म्मणे । यत एव इत आगतोऽग्नेः सकाशाच्छ्रद्धाद्याहुतिक्रमेण । यतश्च पञ्चभ्योऽग्निभ्यः सम्भूत उत्पन्नो

---

व्या० मुहूर्त्तमपीति ॥ यस्मातुरन्तः शयनं मुहूर्त्तमपि दुःसहं तत्कथं दीर्घकालं शयितुं शक्यं । कथञ्च दश वा नव वा मासानन्तः शयित्वा पुनर्योनिद्वारा दुष्करं निस्सरणं दुःसह्यं स्यादिति वैराग्यं ग्राहयति श्रुतिरित्यर्थः ॥ जातस्य पुनरनर्थो नास्तीत्याशङ्क्याह । स एवमिति ॥ यावदायुषमित्येतद्व्याचष्टे । पुनरिति ॥ घटीयन्त्रवदूर्द्धं गमनार्थं वा निषिद्धं कर्म्म पौनःपुन्येनाचरन् यावत्कर्म्मणार्जितमायुस्तावदस्मिन्देहे जीवति ततो म्रियते । तथा च जातस्य मृत्युध्रौव्यान्नास्ति सम्यग्ज्ञानं विना स्वस्तिप्राप्तिरित्यर्थः ॥ अस्तु तर्हि मृतस्य कृतकृत्यतेत्याशङ्क्याह । तमेवमिति ॥ सर्व्वस्य तर्हि मृतस्य पारलौकिकत्वं स्यादिति चेन्नेत्याह । यदीति ॥ तदा परलोकं

भा० भवति तस्मा एवाग्नये हरन्ति स्वामेवयोनिमग्निमापादयन्तीत्यर्थः ॥ ८ ॥

वेत्थ यदितोऽधि प्रजाः प्रयन्तीत्ययं प्रश्नः प्रत्युपस्थितोऽपाकर्त्तव्यतया। तत्र लोकं प्रत्युत्थितानामधिकृतानां गृहमेधिनां य इत्थमेवं यथोक्तं पञ्चाग्निदर्शनं द्युलोकाद्यग्निभ्यो वयं क्रमेण जाता अग्निस्वरूपाः पञ्चाग्न्यात्मान इत्येवं विदुर्जानीयुः। कथमवगम्यते इत्थं विदुरिति। गृहस्था एव उच्यन्ते नान्य इति। गृहस्थानां ये त्वनित्थं विदुः केवलेष्टापूर्त्तदत्तपरास्ते धूमादिना चन्द्रं गच्छन्तीति वक्ष्यति। ये चारण्योपलक्षिता वैखानसाः परिव्राजकाश्च श्रद्धातप इत्युपासते तेषाञ्चेत्थंविद्भिः सहार्चिरादिना

---

व्या० प्रति कर्म्मणा निर्द्दिष्टमिति पूर्व्वेण सम्बन्धः। युक्तञ्च तन्मृतस्याग्न्यर्थं नयनमित्याह। यत इति ॥ ६ ॥

स उत्क्रान्त इत्यादिनोक्तमनुवदति। वेत्थेति ॥ प्रत्युपस्थितः प्रजोत्पत्तिदर्शनेन प्रसक्त इति यावत्। तद्य इत्थं विदुरित्येतद्व्याचष्टे। तत्रेत्यादिना ॥ सामर्थ्यमेव स्फुटयति। लोकमिति ॥ निर्द्धारणार्था षष्ठी ॥ वेदनप्रकारमनुवदति। द्युलोकादीति ॥ तेऽर्चिषमभिसम्भवन्तीत्युत्तरत्र सम्बन्धः ॥ साधारणोक्तेर्विशेषे सङ्कोचो हेतुं विना न सिध्यतीति शङ्कते। कथमिति ॥ पारिशेष्यं सङ्कोचकमिति परिहरति। गृहस्थानामिति ॥ षष्ठी निर्धारणे। अतश्च केवलकर्म्मिणो गृहस्था न विदुरिति ग्रहणमर्हन्तीति शेषः ॥ पारिव्राजका वानप्रस्थाश्च गृह्यन्तामिति चेन्नेत्याह। ये चेति ॥ केषां तर्हि ग्रहणमत आह। पारिशेष्यादिति ॥ गृहस्थ एव। हेत्वन्तरमाह। अग्निहोत्रेति ॥ तदाकृत्यपूर्व्वपरिणामात्मकं जगदत्र पञ्चधा प्रविभज्याग्नित्वेन दर्शनमुत्तर-

भा० गमनं वक्ष्यति । पारिशेष्यात् अग्निहोत्राहुतिसम्बन्धाच्च गृहस्था एव गृह्यन्त इत्थं विदुरिति ॥

ननु ब्रह्मचारिणोऽप्यगृहीता ग्रामश्रुत्यारण्यश्रुत्या चानुपलक्षिताश्च विद्यन्ते कथं पारिशेष्यसिद्धिः । नैष दोषः । पुराणस्मृतिप्रामाण्यात् । ऊर्द्ध्वरेतसां नैष्ठिकब्रह्मचारिणामुत्तरेणार्य्यम्णः पन्थाः प्रसिद्धः । अतस्तेऽप्यरण्यवासिभिः सह गमिष्यन्ति । उपकुर्व्वाणकास्तु स्वाध्यायग्रहणार्था इति न विशेषनिर्द्देशार्हाः । ननूर्द्ध्वरेतस्त्वं चेदुत्तरमार्गप्रतिपत्तिकारणं पुराणस्मृतिप्रामाण्यादिष्यते इत्थंवित्त्वमनर्थकं प्राप्तं ॥

---

आ० मार्गप्राप्तिसाधनं चोद्यते । अतो विद्यायास्तत्सम्बन्धाद्गृहस्थानामपि तत्सम्बन्धस्य प्राप्तत्वात् तेषामेवेह ग्रहणमुचितमित्यर्थः ॥

पारिशेष्यमाक्षिपति । नन्विति ॥ ग्रामे सपत्नीको वासः । न च ब्रह्मचारिणां पत्नीसम्बन्धः । तत्र ग्रामश्रुत्या ब्रह्मचारिणो गृहीताः । गुरुकुलवासित्वाच्च नारण्यश्रुतयोपलक्षिताः । ततस्तेषामिह ग्रहणासम्भवान्न पारिशेष्यमित्यर्थः ॥ किं नैष्ठिकब्रह्मचारिणोऽत्रेत्थं विदुरिति गृह्येरन् किं वोपकुर्व्वाणा इति विकल्प्याद्यं दूषयति । नैष दोष इति ॥ अष्टाशीति सहस्राणि यतीनामूर्द्ध्वरेतसां । स्मृतं स्थानं तु यत्तेषां तदेव गुरुवासिनामित्यादिपुराणस्मृतेः श्रुतिमूलत्वेन प्रामाण्यान्नैष्ठिकब्रह्मचारिणामूर्द्ध्वरेतसामादित्यसम्बन्धेनोत्तरायणेनोपलक्षितो देवयानाख्यो मार्गो यावता प्रसिद्धस्तस्मात्तेषामरण्यवासिभिः सहाखण्डितब्रह्मचर्य्येणैवार्च्चिरादिगतिलाभान्न पञ्चाग्निवित्त्वेन प्रयोजनमिति पारिशेष्यसिद्धिरित्यर्थः ॥ द्वितीयं प्रत्याह । उपकुर्व्वाणकास्त्विति ॥ ते हि स्वाध्यायग्रहणार्थास्तस्मिन् गृहीते स्वेच्छावशादाश्रमान्तरं गच्छन्तस्तत्फलेनैव फलवन्तो भवन्तीति न गृहस्थादिभ्यो विभज्येत्थं विदुरिति निर्द्देशमर्हन्तीत्यर्थः । किं नैष्ठिकानां ब्रह्मचारिणामुत्तरमार्गप्राप्तिसम्भवादनर्थकमित्थंवित्त्वं प्राप्तमिति श्रुतिविरोधात् । द्वितीये तु पारिशेष्यसिद्धितादवस्थ्यमिति शङ्कार्थः ॥

भा० न गृहस्थान् प्रत्यर्थवत्त्वात्। ये गृहस्था अनित्थं विदु-स्तेषां स्वभावतो दक्षिणो धूमादिः पन्थाः प्रसिद्धस्तेषां ये इत्थं विदुः सगुणं वाऽन्यद्ब्रह्म विदुः। अथ यदु चैवास्मिन् शव्यं कुर्व्वन्ति यदि च नार्च्चिषमेवेति लिङ्गादुत्तरेण ते गच्छन्ति। ननूर्द्धरेतसां गृहस्थानाञ्च समाने आश्रमित्वे ऊर्द्धरे-तसामेवोत्तरेण पथा गमनं न गृहस्थानामिति न युक्तं। अग्निहोत्रादिवैदिककर्म्मबाहुल्ये च सति नैष दोषः। अपूता हि ते॥ शत्रुमित्रसंयोगनिमित्तौ हि तेषां

---

व्या० किमित्थंवित्त्वं नैष्ठिकान् प्रत्यनर्थकमित्युच्यते किं वा सर्व्वानेव प्रतीति विकल्प्याद्यमङ्गीकृत्य द्वितीयं दूषयति। न गृहस्थानिति॥ तान् प्रत्यर्थवत्त्वमेवेत्थंवित्त्वस्य विभज्य समर्थयते। ये गृहस्था इति॥ स्वभावतस्तदनुष्ठितेष्टापूर्त्तबलादित्यर्थः। तेषामेव गृहस्थानां मध्ये ये केचिदुक्तेन प्रकारेणेत्थं पञ्चाग्निदर्शनं विदुर-ग्निभ्योऽन्यद्वा सगुणं ब्रह्म विदुस्ते देवयानोत्तरेण पथा गच्छन्ती-ति सम्बन्धः। न केवलं गृहस्थानां पञ्चाग्निवित्त्वमेव किन्तु सगुण-ब्रह्मवित्त्वमपि तेषामस्तीति प्रमाणमाह। अथेति॥ अन्त्येष्टि-करणाकरणयोरविशेषेण ब्रह्मविदामर्च्चिरादिगतिश्रवणादस्ति गृहस्थानामपि ब्रह्मवित्त्वमिति गम्यते। पारिव्राजकादिष्वन्त्ये-ष्ट्यसम्भवेन विद्यास्तुतेरपि दुर्व्वचनत्वादित्यर्थः॥ विहितत्वावि-शेषादाश्रमाणां तुल्यत्वमाश्रित्य शङ्कते। नन्विति॥ साम्यमुक्त्वा गृहस्थेषु विशेषं दर्शयति। अग्निहोत्रादीति॥ वैदिकानि कर्म्माणि भूयांसि सन्ति। तेषाञ्च बाहुल्ये सत्यविदुषामूर्द्धरेत-सामेव देवयानेन पथा गमनं न गृहस्थानामित्ययुक्तं। साधन-भूयस्त्वे फलभूयस्त्वन्यायविरोधादित्यर्थः॥ आश्रमित्वाविशेषे ऽपि धर्म्मविशेषाद्विशुद्धितारतम्यसम्भवान्नैकरूप्यमिति परि-हरति। नैष दोष इति॥

भा० रागद्वेषौ । तथा धर्माधर्मौ हिंसानुग्रहनिमित्तौ । हिंसानृतमायाऽब्रह्मचर्यादि च बहुशुद्धिकारणमप्यपरिहार्य्यं तेषां । अतोऽपूताः । अपूतत्वान्नोत्तरेण पथा गमनं । हिंसानृतमायाऽब्रह्मचर्यादिपरिहाराच्च । शुद्धात्मनो हीतरे शत्रुमित्ररागद्वेषादिपरिहाराच्च विरजसस्तेषां युक्त उत्तरः पन्थाः । तथाच पौराणिकाः । ये प्रजामीषिरेऽधीरास्ते श्मशानानि भेजिरे । ये प्रजां नेषिरे धीरास्तेऽमृतत्वं हि भेजिर इत्याहुः । इत्थं-विदां गृहस्थानामरण्यवासिनाञ्च समानमार्गत्वेऽमृतत्वे फले च सत्यरण्यवासिनां विद्यानर्थक्यं प्राप्तं । तथाच श्रुतिविरोधः। न तत्र दक्षिणा यन्ति नाविद्वांसस्तपस्विन इति । स एनमविदितो न भुनक्तीति च विरुद्धं । न । आभूतसंप्लवस्थानस्यामृतत्वेन विवक्षितत्वात् ॥

---

व्या० कथं गृहस्थानामग्निहोत्रादिभूयोधर्म्मवतां विद्याहीनानामप्यपूतत्वं तत्राह । शत्रुमित्रेति ॥ अब्रह्मचर्यादीत्यादिपदेन परिगृहीतादि गृह्यते । अशुद्धिबाहुल्यकारणमतःशब्दार्थः । तुल्यमूर्द्ध्वरेतसामप्यशुद्धिहेतुबाहुल्यादपूतत्वमित्याशङ्क्याह । हिंसेति ॥ ऊर्द्ध्वरेतसां पूतत्वे सिद्धे फलितमाह । तेषामिति ॥ ऊर्द्ध्वरेतसां देवयाने पथ्यनुप्रवेशे प्रमाणमाह । तथा चेति ॥ पौराणिका आहुरिति सम्बन्धः । आश्रमधर्म्ममात्रमार्गद्वारेणामृतत्वमूर्द्ध्वरेतसामुक्तमाक्षिपति । इत्थं विदामिति ॥ तेषां विद्यानर्थक्यमिष्टमेवेत्याशङ्क्याह । तथा चेति ॥ स परमात्मा स्वयमज्ञातः सन्नेनमधिकारिणमपवर्गप्रदानेन न पालयतीति च वाक्यं विद्यामन्तरेणामृतत्वं ब्रुवतो विरुद्धमित्यर्थः ॥ ऊर्द्ध्वरेतसाममृतत्वस्यापेक्षिकत्वात्तत्र विद्यानर्थक्यमेवेति परिहरति । नाभूतेति॥

भा॰ तत्रैवोक्तं पौराणिकैः । आभूतसंप्लवं स्थानममृतत्वं हि भाष्यत इति । यत्त्वात्यन्तिकममृतत्वं तदपेक्षया न तत्र दक्षिणा यन्ति स एनमविदितो न भुनक्तीत्याद्याः श्रुतय इत्यतो न विरोधः । न च पुनरावर्त्तन्त इतीमं मानवमावर्त्तं न वर्तन्त इत्यादिश्रुतिविरोध इति चेत् । न । इमं मानवमिति विशेषणात्तेषामिह न पुनरावृत्तिरस्तीति च । यदि ह्येकान्तेनैव नावर्त्तेरन्निमं मानवमिहेति च विशेषणमनर्थकं स्यात् । इममिहेत्याकृतिमात्रमुच्यत इति चेत् । न । अनावृत्तिशब्देनैव नित्यानावृत्त्यर्थस्य प्रतीतत्वादाकृतिकल्पनाऽनर्थिका । अत इममिहेति च विशेषणार्थवत्त्वाय अन्यत्रावृत्तिः कल्पनीया । न च सदेकमेवाद्वितीयमित्येवं प्रत्ययवतां मूर्द्धन्या नाड्याऽर्चिरादिमार्गेण गमनं ॥

---

व्या॰ आपेक्षिकममृतत्वमित्यत्र प्रमाणमाह । तत्रैवेति ॥ यत्र प्रजाः कामयमाना मुक्तिभाजो न भवन्तीत्युक्तं तत्रैव तत्सन्निधाविति यावत् ॥ कथं तर्हि यथोक्तश्रुतिविरोधसमाधिरित्याशङ्क्याह । यत्त्वेति ॥ आदिशब्दस्तमेवं विद्वानमृत इह भवतीत्यादिश्रुतिसङ्ग्रहार्थः ॥ आपेक्षिकामृतत्वे श्रुतिविरोधो न शक्यते परिहर्त्तुमिति शङ्कते । न चेति ॥ आदिशब्दस्तेषामिह न पुनरावृत्तिरित्यादिवाक्यसङ्ग्रहार्थः ॥ इममिहेति विशेषणावष्टम्भेन निराचष्टे ॥ नेत्यादिना ॥ तदेव व्यतिरेकमुखेन विशदयति । यदीति ॥ सर्व्वकल्पेषु श्रुतेरेतादृशत्वादिममिहेति पदद्वयसामान्येन सर्व्वकल्पविषये विशेषणानर्थक्यं दुर्व्वारमित्युत्तरमाह । नानावृत्तीति ॥ विधान्तरेण विशेषणार्थसम्भवे फलितमाह । अत इति ॥ यस्मिन् कल्पे ब्रह्मलोकप्राप्तिस्तस्मात्कल्पान्तरमन्यत्रेत्युक्तं । ऊर्द्धरेतसामाश्रमधर्म्ममात्रनिष्ठानाममृतत्वमपेक्षिकमुपक्षिप्तं । सम्प्रति तेषामेव साक्षात्कृतब्रह्मतत्त्वानामात्यन्तिकममृतत्वं गतिनिरपेक्षं सिध्यतीत्याह । न चेति ॥

भा० ब्रह्मैव सन् ब्रह्माप्येति। तस्मात्तत्सर्व्वमभवत्। न तस्य प्राणा उत्क्रामन्ति। अत्रैव समवलीयन्त इत्यादिश्रुतिभ्यः। न तस्माज्जीवादुच्चिक्रमिषोः प्राणा नोत्क्रामन्ति सहैव गच्छन्तीत्ययमर्थः कल्प्यत इति चेत्। न। अत्रैव समवलीयन्त इति विशेषणानर्थक्यात्। सर्व्वे प्राणा अनूत्क्रामन्तीति च प्राणैर्गमनस्य प्राप्तत्वात्। तस्मादुत्क्रामन्तीत्यनाशङ्कैवैषा। यद्यपि मोक्षस्य संसारगतिवैलक्षण्यात्प्राणानां जीवेन सहागमनमाशङ्क्य तस्मान्नोत्क्रामन्तीत्युच्यते तदाप्यत्रैव समवलीयत इति विशेषणमनर्थकं स्यात्। न च प्राणैर्वियुक्तस्य गतिरुपपद्यते॥ जीवत्वं वा। सर्व्वगतत्वात्सदात्मनो निरवयवत्वात् प्राणसम्बन्धमात्रमेव ह्यग्निविस्फुलिङ्गवज्जीवत्वं भेदकारणमिति॥

---

व्या० तेषां गत्यादिनिरपेक्षमात्यन्तिकममृतत्वं भवतीत्यत्र प्रमाणमाह। ब्रह्मैवेति॥ न तस्मात्प्राणा उत्क्रामन्तीति माध्यन्दिनश्रुतिमनुसृत्य न तस्येत्यादिका नवश्रुतिरपि नेतव्येति शङ्कते। न तस्मादिति॥ वाक्यशेषविरोधान्नैवमिति दूषयति। नात्रेति॥ श्रुत्यन्तरालोचनायामपि न स्वयूथ्यकल्पनेत्याह। सर्व्वे प्राणा इति॥ प्राणैः सह जीवस्येति शेषः। संसारदशायां प्राणैः सह विज्ञानात्मनो गमनेऽपि मोक्षे नास्ति प्राणानां जीवेन सह गमनमित्याशङ्कायां न तस्मादित्यादिवाक्यमित्याशङ्क्याह। यद्यपीति॥ भवतु प्राणानामत्रैव समवलयस्तथापि जीवस्य गमनायत्तममृतत्वमित्याशङ्क्याह। न चेति॥ कस्मिन्नहमुत्क्रान्त उत्क्रान्तो भविष्यामि। कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामीति। स प्राणमसृजतेति श्रुतेरिति शेषः॥ किञ्च प्राणैर्वियुक्तस्य चिदात्मनो जीवत्वं नोपपद्यते प्राणोपाधिकस्यैव तस्य जीवशब्दवाच्यत्वादित्याह। जीवत्वं वेति॥

भा॰ अतस्तद्वियोगे जीवत्वं गतिर्वा न शक्या परिकल्पयितुं। श्रुतयश्चेत्प्रमाणं। न च सतोऽणुरवयवः स्फुटितो जीवाख्यः सद्रूप छिद्रीकुर्व्वन् गच्छतीति शक्यं कल्पयितुं। तस्मात्तयोर्द्धमायन्नमृतत्वमेतीति सगुणब्रह्मोपासकस्य प्राणैः सह नाड्या गमनं सापेक्षमेव चामृतत्वं। न साक्षान्मोक्ष इति गम्यते। तदपराजितापूस्तदैरं मदीयं सर इत्याद्युक्ता तेषामेवैष ब्रह्मलोक इति विशेषणात्। अतः पञ्चाग्निविदो गृहस्था ये चेमेऽरण्ये वानप्रस्थाः परिव्राजकाश्च सह नैष्ठिकब्रह्मचारिभिः श्रद्धातप इत्येवमाद्युपासते। श्रद्दधानास्तपस्विनश्चेत्यर्थः। उपासनशब्दतात्पर्य्यार्थः। इष्टापूर्त्तदत्त-

---

व्या॰ उक्तमर्थं समर्थयते। सर्व्वगतत्वादिति॥ चिदात्मा हि कल्पनायामधिष्ठाने सति ह्यतो निर्भागं सर्व्वस्यात्मा। तस्मादग्नेर्विस्फुलिङ्गवज्जीवत्वाख्यभेदसम्पादनं तस्य प्राणशब्दमात्रमेवेति वैदिकानां प्रसिद्धं। तथा च प्राणवियोगे चिदात्मनो जीवत्वं गतिर्वा न शक्यते कल्पयितुं। तस्मात्पूर्णत्वादिप्रतिपादकश्रुतीनां प्रमाणत्वादित्यर्थः। सदात्मनः सर्व्वगतस्य जीवाख्यभेदकरणं न प्राणोपाधिकृतं। किन्तु स्वत एव तस्यांशो जीवस्तथा चाग्निविस्फुलिङ्गवत्तस्य गत्यर्थत्वोपपत्तेरित्याशङ्क्याह। न चेति॥ निष्कलं निष्क्रियं शान्तमित्यादिश्रुतेरिति शेषः। प्रकरणार्थमुपसंहरति। तस्मादिति॥ निर्गुणब्रह्मविदामात्यन्तिकामृतत्वस्य गमनादिनिरपेक्षत्वादिति यावत्॥

सगुणब्रह्मोपासकस्य सापेक्षममृतत्वमित्यत्र विशेषणश्रुतिमनुकूलयति। तदपराजितेति॥ आदिपदेन तदश्वत्थः सोमसवन इत्यादि गृह्यते। तेषामेव ब्रह्मविदामेष पूर्व्वोक्तविशेषणगुणो ब्रह्मणः सत्याख्यस्य लोको नान्येषामकृतात्मनामिति विशेषदर्शनादमृतत्वं तेषां तल्लोकनिवासिभिः समं सापेक्षमेवेति निर्द्धारितमित्यर्थः। ऊर्द्ध्वरेतसामाश्रममात्रनिष्ठानामपि ब्रह्म-

उ० ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्च्चिषमभि-
सम्भवन्त्यर्च्चिषोऽहरह्न आपूर्य्यमाण पक्षमापूर्य्य-
माणपक्षाद्यान् षडुदङ्ङेति मासाꣳस्तान् ॥ १ ॥
मासेभ्यः सम्वत्सरꣳ सम्वत्सरादादित्यमादि-

भा० मित्युपासत इति यद्वत् ॥ श्रुत्यन्तराच्च च सत्यं ब्रह्म हिर-
ण्यगर्भाख्यमुपासते ते सर्व्वेऽर्च्चिषमर्च्चिरभिमानिनीन्देवता-
मभिसंविशन्ति प्रतिपद्यन्ते ॥

समानमन्यच्च चतुर्थगतिव्याख्यानेन। एष देवयानः
पन्था व्याख्यातः सत्यलोकावसानो नाण्डाद्बहिः। यद-
न्तरा पितरं मातरञ्चेति मन्त्रवर्णात्। अथेत्यर्थान्तर-

व्या० लोको लभ्यते। गृहस्थानां पुनर्विदुषामेवेत्युपपाद्य प्रकृतिश्रुति-
व्याख्यानमनुवर्त्तयति। अत इति ॥ पूर्व्वोक्तपारिशेष्यादिति
यावत्। पारिव्राजकास्त्वित्यमुख्य सन्न्यासिन स्त्रिदण्डिनो गृह्यन्ते
मुख्यसन्न्यासिनां ब्रह्मसंस्थोऽमृतत्वमेतीति पृथक्कृतत्वात्। श्रद्धां
सत्यमुपासत इति श्रुत्यन्तरं। पञ्चाग्निविदो गृहस्थाः स्वाश्रममा-
त्रप्रवणादूर्द्धरेतसः सत्यब्रह्मोपासकास्त्वोभये सर्व्वशब्देनोच्यन्ते ॥
चतुर्थे यदुपकोशलविद्यायां गतिंव्याख्यानमतिवृत्तं तेन समान
मर्च्चिषोऽहरित्यादि वाक्यव्याख्यानं। तथाच तत्र पृथक्कर्त्तव्यमि-
त्याह। समानमिति ॥ समानमित्युत्तरमार्गव्याख्यानमुपसंह-
रति। एष इति ॥ देवयानेन पथा बहिरण्डाद्यवस्थितं ब्रह्म
गन्तव्यमित्येके तान्प्रत्याह। नाण्डादिति ॥ तत्र हेतुमाह। यदन्त-
रेति ॥ पितरं द्युलोकं मातरञ्च पृथिवीं मध्ये द्वे स्रुती अभूत्एवं
ताभ्यामिदं विश्वं कर्म्म ज्ञानाधिकृतं गच्छति। नचाण्डाद्बहिरस्ति
गतिद्वयमित्यर्थः। वेत्थ यदितोऽधिप्रजाः प्रयन्तीत्यस्य प्रश्नस्य प्रति-
वचनं देवयानोपदेशेन व्याख्यातं। सम्प्रति पितृयाणोपदेशेना-

उ॰ त्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषो मानवः स एनां ब्रह्म गमयत्येष देवयानः पन्था इति ॥ २ ॥ अथ य इमे ग्राम इष्टापूर्त्ते दत्तमित्युपासते ते धूममभि सम्भवन्ति धूमाद्रात्रिꣳ रात्रेरपरपक्षमपरपक्षाद्यान्षड्दक्षिणैति मासाꣳस्तान्नैते

---

भा॰ प्रस्तावनार्थो य इमे गृहस्थाः । ग्राम इति गृहस्थानामसाधारणं विशेषणमरण्यवासिभ्यो व्यावृत्त्यर्थं ।

यथा वानप्रस्थपरिव्राजकानामरण्यं विशेषणं गृहस्थेभ्यो व्यावृत्त्यर्थं तद्वत् । इष्टापूर्त्ते इष्टमग्निहोत्रादि वैदिकं कर्म्म । पूर्त्तं वापीकूपतडागारामादिकरणं । दत्तं च बहिर्वेदि यथा शक्त्यर्हेभ्यो द्रव्यसम्भागो दत्तं । इत्येवंविधं परिचरणपरित्राणाद्युपासते इति शब्दस्य प्रकारदर्शनार्थत्वात् । ते दर्शनवर्जितत्वाद्धूमं धूमाभिमानिनीं देवतामाभिमुख्येन सम्भवन्ति प्रतिपद्यन्ते । तयाऽतिवाहिता धूमाद्रात्रिं रात्रिदेवतां रात्रेरपरपक्षदेवतां एवमेव कृष्णपक्षाभिमानिनीमपरपक्षाद्यान् षण्मासान् दक्षिणा दक्षिणां दिशमेति

---

व्या॰ ऽपि ग्रामनिवासित्वाविशेषादित्याशङ्क्याह । ग्राम इतीति ॥ सपत्नीको हि वासो ग्राम इत्युच्यते । न च सपत्नीकत्वमूर्द्ध्वरेतसां युक्तं तथाच गृहस्थानामेव ग्रामविशेषणमसाधारणं न च तदर्थकमूर्द्ध्वरेतेभ्यस्तेषां व्यावृत्त्यर्थत्वादित्यर्थः । तदेव दृष्टान्तेन स्फुटयति ।

यथेति ॥ वेद्यन्तर्भावव्यासेधाद्बहिर्वेदीति विशेषणमादौ दत्तमिति प्रतीकोपादानं पुनर्व्याख्याऽस्यानुवाद इत्यपुनरुक्तिः । इतिशब्दार्थमाह । इत्येवंविधमिति ॥ परिचर्य्या गुर्व्वादिषु

उ॰ सम्वत्सरमभिप्राप्नुवन्ति ॥ ३ ॥ मासेभ्यः पितृ-
लोकं पितृलोकादाकाशमाकाशाच्चन्द्रमसमेष
सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति ॥ ४ ॥

---

भा॰ सविता। तान् मासान् दक्षिणायनान् षण्मासाभिमानि-
नीर्देवताः प्रतिपद्यन्त इत्यर्थः। सङ्घचारिण्यो हि षण्मासदे-
वता इति मासानिति बहुवचनप्रयोगस्तासु। नैते कर्म्मिणः
प्रकृताः सम्वत्सरं सम्वत्सराभिमानिनीं देवतामभिप्राप्नु-
वन्ति। कुतः पुनः सम्वत्सरप्राप्तिप्रसङ्गो यतः प्रतिषिध्यते।
अस्ति हि सम्वत्सरस्य प्रसङ्गो ह्येकस्यावयवभूते दक्षि-
णोत्तरायणे तत्रार्चिरादिमार्गप्रवृत्तानामुदगयनमासेभ्यो
ऽवयविनः सम्वत्सरस्य प्राप्तिरुक्ता। अत इहापि तदवयव-
भूतानां दक्षिणायनमासानां प्राप्तिं श्रुत्वा तदवयविनः
सम्वत्सरस्यापि पूर्व्ववत्प्राप्तिरापन्नेत्यतस्तत्प्राप्तिं प्रतिषिध्यते
नैते सम्वत्सरमभिप्राप्नुवन्तीति। मासेभ्यः पितृलोकं

---

आ॰ श्रूयमाणां परिचर्यां रक्षणं। आदिपदं नित्यस्वाध्यायादिसङ्ग्रहार्थं।
उपासते तात्पर्य्येणानुतिष्ठन्तीति यावत्। कथमिति शब्दस्य
यथोक्तार्थत्वमिति हस्तोपाध्यायः कथयतीतिवत्प्रकृतमात्रगामि-
त्वादित्याशङ्क्याह। शब्दस्येति॥ देवयानाधिकृतेभ्यः सकाशात्
पितृयाणाधिकृतेषु विशेषान्तरमाह। नैत इति॥ अप्राप्तप्रति-
षेधो ऽयमिति शङ्कते। कुत इति॥

प्राप्तिं दर्शयन्नुत्तरमाह। अस्ति हीति॥ पूर्व्ववद्यथापूर्व्वं देव-
यानेन पथा ऽवयवेभ्यो ऽवयविनः सम्वत्सरस्य प्राप्तिस्तथेति यावत्।
अन्नशब्दस्य यथाश्रुतमर्थं गृहीत्वा चोदयति। नन्विति॥ औप-

भा० पितृलोकादाकाशमाकाशाच्चन्द्रमसं। कोऽसौ यस्तैः प्राप्यः चन्द्रमा य एष दृश्यतेऽन्तरिक्षे सोमो राजा ब्राह्मणानां तदन्नं देवानां तं चन्द्रमसमन्नं देवता इन्द्रादयो भक्षयन्ति। अतस्ते धूमादिना गत्वा चन्द्रभूताः कर्म्मिणो देवैर्भक्ष्यन्ते नन्वनर्थायेष्टादिकरणं यद्यन्नभूता देवैर्भक्ष्येरन् नैष दोषः। अन्नमित्युपकरणमात्रस्य विवक्षितत्वात्। न हि ते कवलोत्क्षेपेण देवैर्भक्ष्यन्ते। किं तर्ह्युपकरणमात्रं देवानां भवन्ति। ते स्त्रीपशुभृत्यादिवत्। दृष्टश्चान्नशब्द उपकरणेषु स्त्रियोऽन्नं पशवोऽन्नं विशोऽन्नं राज्ञामित्यादि॥

न च तेषां स्त्र्यादीनां पुरुषोपभोग्यत्वेऽप्युपभोगो नास्ति। तस्मात्कर्म्मिणो देवतानामुपभोग्यापि सन्तः सुखिनो देवैः क्रीडन्ते। शरीरञ्च तेषां सुखोपभोगयोग्यं चन्द्रमण्डले आप्यमारभ्यते। तदुक्तं पुरस्ताच्छ्रद्धा शब्दा आपो द्युलोकाग्नौ हुताः सोमो राजा सम्भवतीति। ता आपः कर्म्मसमवायिन्य इतरैश्च भूतैरनुगताः द्युलोकं प्राप्य चन्द्रत्वमापन्नाः शरीराद्यारम्भिका इष्टाद्युपासकानां भवन्ति।

---

व्या० चारिकमर्थं गृहीत्वा परिहरति। नैष दोष इति॥ स्वच्छप्रयोगमन्तरेण कथमुपकरणविषयोऽन्नशब्दो व्याख्यायते तत्राह। दृष्टश्चेति॥

भवतु कर्म्मिणां देवान्प्रत्युपकरणत्वं तथापि स्वयमुपभोगाभावादनर्थकमिष्टादिकरणमित्याशङ्क्याह। न चेति॥ अन्योपभोग्यानामपि स्वयं भोगसत्त्वं तस्मादित्युच्यते। तथापि तेषां मृतानामशरीरिणां कथं मुख्योपभोगः सम्भवतीत्याशङ्क्याह। शरीरञ्चेति॥ कथमपां चन्द्रलोके तद्देहारम्भकत्वं तदाह। तदुक्तमिति॥ श्रथापां सोमत्वमेवान्नत्वंप्रतीयते न तु कर्म्मिदेहारम्भकत्वमित्या-

उ॰ तस्मिन्यावत्सम्पातमुषित्वाऽथैतमध्वानं पुनर्निवर्तन्ते

भा॰ अन्त्यायाञ्च शरीराहुतावग्नौ हुतायामग्निना दह्यमाने शरीरे तदुत्था आपो धूमेन सहोर्द्ध्वं यजमानमावेष्ट्य चन्द्रमण्डलं प्राप्य कुशमृत्तिकास्थानीया वाह्यशरीरारम्भिका भवन्ति। तदारम्भेन च शरीरेणेष्टादिफलमुपभुञ्जाना आसते यावत्तद्भूपभोगनिमित्तस्य क्षयः कर्म्मणः। सम्पतन्ति येनेति सम्पातः कर्म्मणः क्षयो यावत्सम्पातं यावत्कर्म्मणः क्षय इत्यर्थः। तावत्तस्मिंश्चन्द्रमण्डले उषित्वा अथाऽनन्तरमेतमेव वक्ष्यमाणमध्वानं मार्गं। पुनर्निवर्त्तन्त इति प्रयोगात्पूर्व्वमप्यसकृच्चन्द्रमण्डलं गता निवृत्ताश्चासन्निति गम्यते। तस्मादिह लोके इष्टादिकर्म्मोपचित्य चन्द्रं गच्छन्ति। तत्क्षये चावर्त्तन्ते। क्षणमात्रमपि तत्र स्थातुं न

व्या॰ शङ्काह। ता आप इति॥ कर्म्मसमवायिनीनामपां कर्म्मापूर्व्वद्वारा यजमानदेहे प्रतिष्ठानां कथं द्युलोकप्रवेशादि सम्भवतीत्याशङ्काह। अन्त्यायाञ्चेति॥ अद्भिरारब्धस्य शरीरस्य भोगायतनत्वं दर्शयति। तदारम्भेनेति॥

तद्देवानामन्नमित्यादि व्याख्याय तस्मिन्नित्यादि व्याचष्टे। यावदिति॥ चन्द्रलोकस्तच्छब्दार्थः। यावत्सम्पातमुषित्वेति श्रूयते। कथमन्यथा व्याख्यायते तत्राह। सम्पतन्तीति॥ पुनःशब्दप्रयोगस्य तात्पर्य्यमाह। पुनरिति॥ अथेत्यादिवाक्यार्थमुपसंहरति। तस्मादिति॥ तच्छब्दपरामृष्टहेतुं स्पष्टयति। स्थितीति॥ यथा दीपस्य स्नेहक्षये स्थितिनिमित्ताभावादस्थितिस्तथा चन्द्रलोके स्थितिनिमित्तस्येष्टादेर्भोगेन क्षयात्तत्र स्थित्यसम्भवादवृत्तिरेवेत्यर्थः। तस्मिन्यावत् सम्पातमुषित्वेत्यत्र विचारयति। किन्त-

भा० लभ्यते। स्थितिनिमित्तकर्म्मक्षयात्। स्नेहक्षयादिव प्रदीपस्य। किं तत्र येन कर्म्मणा चन्द्रमण्डलमारूढस्तस्य सर्व्वस्य क्षये तस्मादवरोहणं किं वा सावशेष इति। किन्ततः॥

यदि सर्व्वस्यैव क्षयः कर्म्मणश्चन्द्रमण्डलस्थस्यैव मोक्षः प्राप्नोतीति। तिष्ठतु तावत्तत्रैव मोक्षः स्यान्नवेति। तत आगतस्येह शरीरोपभोगादि न सम्भवति। ततः शेषेणेत्यादिस्मृतिविरोधश्च स्यात्। नन्विष्टापूर्त्तदत्तव्यतिरेकेणापि मनुष्यलोके शरीरोपभोगनिमित्तानि कर्म्माण्यनेकानि सम्भवन्ति न च तेषां चन्द्रमण्डल उपभोगः। अतः

---

आ० चेति॥ तस्य चन्द्रमण्डलप्रापकस्यातिरिक्तस्य च सर्व्वस्य कर्म्मणः क्षये सतीति यावत्। सावशेषोऽभुक्तात्कर्म्मणः सकाशादतिरिक्तेन केनचित्कर्म्मणा सहितः सन्नित्यर्थः॥ पक्षद्वयेऽपि फलं पृच्छति। किन्तत इति॥

तत्राद्यं पक्षं पूर्व्वपक्षिमुखेन प्रतिक्षिप्सुस्तत्फलमाह। यदीति॥ तत्रैव दूषणान्तरमाह। तिष्ठत्विति॥ चन्द्रमण्डलं सप्तम्यर्थः। ततश्चन्द्रमण्डलादित्येतत्। इहेत्येतल्लोकोक्तिः। आदिपदं शुभाशुभकर्म्मानुसारिसर्व्वव्यापारसंग्रहार्थं। न केवलं सर्व्वकर्म्मक्षयपक्षे मुक्तिरेव विरुध्यते किन्तु स्मृतिश्चेत्याह। तत इति॥ चन्द्रलोके भोक्तव्यस्य कर्म्मणो भोगेन क्षयादूर्द्ध्वं शेषेणानुपभुक्तेन कर्म्मणा जन्म प्रतिपद्यन्त इत्याद्या स्मृतिः सर्व्वकर्म्मक्षयपक्षे विरुध्यत इत्यर्थः। सर्व्वकर्म्मक्षयपक्षे पूर्व्वपक्षिणा ऽन्यथावादिना प्रतिक्षिप्ते सावशेषपक्षमुत्तरवादी प्रतिपद्यते। नन्विति॥ तान्यपि चन्द्रमण्डले भुक्तान्येवेति नावशेषोऽस्तीत्याशङ्क्याह। न चेति॥ न हि सर्व्वकर्म्मवशाच्चन्द्रमण्डलप्राप्तिरिति भावः। तर्हि चन्द्रमण्डले कर्म्मफलोपभोगाभावादलं तदारोहेणेत्याशङ्क्याह। यन्निमित्तमिति॥ अविरोधश्चन्द्रमण्डले भोगस्य शेषकर्म्मसद्भावस्य चेति शेषः॥ यत्तु ततः शेषेणेत्यादिस्मृतिविरोध इति तत्राह।

भा॰ क्षीणानि तानि । यन्निमित्तं चन्द्रमण्डलमारूढस्तान्येव क्षीणानीत्यविरोधः । शेषशब्दस्य सर्व्वेषां कर्मत्वसामान्याद-विरुद्धः ॥

अत एव च तत्रैव मोक्षः स्यादिति दोषाभावः । विरुद्धानेकयोन्युपभोगफलानाञ्च कर्म्मणामेकैकस्य जन्तोरारम्भकत्वसम्भवात् । न चैकस्मिञ्जन्मनि सर्व्वकर्म्मणां क्षय उपपद्यते । ब्रह्महत्यादेश्चैकैकस्य कर्म्मणोऽनेकजन्मारम्भकत्वस्मरणात् । स्थावरादिप्राप्तानाञ्चात्यन्तमूढानामुत्कर्षहेतोः कर्म्मण आरम्भकत्वासम्भवात् । गर्भभूतानाञ्च स्रंसमानानां कर्म्मासम्भवे संसारानुपपत्तिः । तस्मान्नैकस्मि-

---

व्या॰ शेषशब्दस्येति ॥ निःशेषेष्वपि भुक्तेषु कर्म्मस्वभुक्तकर्म्मसु शेषशब्दो न विरुध्यतेऽभुक्तानां कर्म्मणां कर्म्मत्वस्य तुल्यत्वान्नात्र सावशेषपक्षे स्मृतिविरोधोऽस्तीत्यर्थः ॥

यच्चन्द्रमण्डलस्थस्यैव मोक्षः स्यादिति तत्राह । अत एवेति ॥ शेषकर्म्मसद्भावादेवेति यावत् । इतश्च कर्म्मशेषसिद्धिरित्याह । विरुद्धेति ॥ आरम्भकत्वसम्भवादेकजात्युपभोग्यकर्म्मक्षयेऽपि कर्म्मशेषः सम्भवतीति ॥ अथैकस्मिञ्जन्मनि सर्व्वाणि क्षीयन्ते कर्म्माशयस्यैकभविकत्वादित्याशङ्क्याह । न चेति ॥ एकभविकन्यायस्योपरिष्टान्निराकरिष्यमाणत्वादित्यर्थः ॥ इतश्च शेषकर्म्मसिद्धिरित्याह । ब्रह्महत्यादेश्चेति ॥ श्वसूकरखरोष्ट्राणामित्यादिस्मरणं घृतभाण्डस्नेहशेषवत् भुक्तस्यैव कर्म्मणः शेषात्पुनरावृत्तिर्भविष्यतीत्यत आह । स्थावरादीति ॥ शेषकर्म्मसिद्धौ हेत्वन्तरमाह । गर्भभूतानामिति ॥ कर्म्मशेषसद्भावमुपसंहरति । तस्मादिति ॥ एकस्यापि कर्म्मणोऽनेकजन्महेतुत्वं तच्छब्दार्थः । मतान्तरमुत्थापयति । यत्त्विति ॥ यावत्प्रवृत्तफलं कर्म्म न क्षीयते तावत्प्रवृत्तिप्रतिबन्धादन्यानि कर्म्माणि स्वफलं नारभन्ते । मरण-

भा० जन्मनि सर्व्वेषां कर्म्मणामुपभोगः । यत्तु कैश्चिदुच्यते सर्व्वकर्म्माश्रयोपमर्द्देन प्रायेण कर्म्मणां जन्मारम्भकत्वं ॥

तत्र कानिचित्कर्म्माण्यनारम्भकत्वेनैव तिष्ठन्ति कानिचिज्जन्मान्तरमारभन्त इति नोपपद्यते। मरणस्य सर्व्वकर्म्माभिव्यञ्जकत्वात् स्वगोचराभिव्यञ्जकप्रदीपवदिति। तदसत्। सर्व्वस्य सर्व्वात्मकत्वाभ्युपगमात्। न हि सर्व्वस्य सर्व्वात्मकत्वे देशकालनिमित्ताविरुद्धत्वात् सर्व्वात्मनोपमर्द्दः। कस्यचित्क्वचिदभिव्यक्तिर्वा सर्व्वात्मनोपपद्यते। तथा कर्म्मणामपि साश्रयाणामुपमर्द्दो भवेत्। यथा च पूर्व्वानुभूतमनुष्यमयूरमर्कटादिजन्माभिसंस्कृताविरुद्धानेकवासना मर्कटत्व-

---

व्या० काले तु प्रतिबन्धकाभावात्सर्व्वकर्म्माश्रयसङ्घातोपमर्द्देन तेषामुत्तरशरीरारम्भकत्वमविरुद्धमित्यर्थः ॥

तथापि कथं शेषकर्म्मसद्भावासिद्धिरित्यत आह। तत्रेति ॥ अनारब्धकर्म्मणां सर्व्वेषामुत्तरशरीरारम्भकत्वे सतीति यावत् ॥ प्रयाणकाले यानि कर्म्माण्यभिव्यक्तानि तान्येवोत्तरशरीरारम्भकाणि इतरेषान्तु न शरीरारम्भकत्वमिति दूषयति। तदसदिति ॥ मधुब्राह्मणोक्तेन न्यायेन सर्व्वस्य सर्व्वात्मकत्वाङ्गीकारादेहस्यापि तथात्वान्न सर्व्वात्मनोपमर्द्दोपपत्तिरित्यर्थः ॥ उक्तमर्थमुपपादयितुं सामान्यन्यायमाह। न हीति ॥ सर्व्वं सर्व्वस्य कारणं कार्य्यञ्चेति न्यायेन सर्व्वस्य सर्व्वात्मकत्वे स्थिते सति कस्यचित् क्वचित्सर्व्वात्मनोपमर्द्दः। तथाभिव्यक्तिर्व्वानोपपद्यते। प्रतीयमानोपमर्द्दादेर्देशविशेषादिकृतत्वादित्यर्थः ॥ उक्तन्यायं प्रकृते योजयति। तथेति ॥ इतश्च कर्म्मशेषः सम्भवतीति क्रमवत्तायां दृष्टान्तमाह। यथा चेति ॥ पूर्व्वं क्रमेणानुभूतानि यानि मनुष्यादिजन्मानि तैरभिसंस्कृताः सम्पादिता विरुद्धा या भूयस्यो वासनास्तज्जा-

भा० प्रापकेन कर्म्मणा मर्कटजन्मारभ्यमाणेन नोपमृद्यन्ते तथा कर्म्माण्यन्यजन्मप्राप्तिनिमित्तानि नोपमृद्यन्त इति युक्तं ॥

यदि हि सर्व्वाः पूर्व्वजन्मानुभववासना उपमृद्येरन् मर्कटादिजन्मनिमित्तेन कर्म्मणा मर्कटजन्मन्यारब्धे मर्कटस्य जातमात्रस्य मातुः शाखायाः शाखान्तरगमने मातुरुदरसंलग्नत्वादिकौशलं न प्राप्नोति । इह जन्मन्यनभ्यस्तत्वात् । न चातीतानन्तरजन्मनि मर्कटत्वमेवासीत्तस्येति शक्यं वक्तुं । तं विद्याकर्म्मणी समन्वारभेते पूर्व्वप्रज्ञा चेति श्रुतेः । तस्माद्वासनावन्नाशेषकर्म्मोपमर्द्द इति शेषकर्म्मसम्भवः । यत एवं तस्माच्छेषेणोपयुक्तात्कर्म्मणः संसार उपपद्यत इति न कश्चिद्विरोधः । कोऽसावध्वा यं प्रति निवर्त्तन्त इत्युच्यते । यथेतं यथागतं निवर्त्तन्ते । ननु मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्रमसमिति गमन-

---

व्या० तिविशेषप्रापकेन कर्म्मणा तस्मिन्नारभ्यमाणेन निरुद्ध्यन्त इत्यर्थः । दार्ष्टान्तिकमाह । तथेति ॥

दृष्टान्तं विवृणोति । यदि हीति ॥ व्यवहितवासनोच्छेदेऽपि नाव्यवहितदेश उच्छिद्यते ॥ तथाचानन्तरजन्मोत्थवासनासामर्थ्यान्मर्कटशिशोर्यथोक्तकौशलमविरुद्धमित्याशङ्क्याह । न चेति ॥ किञ्च पूर्व्वप्रज्ञा चेत्यविशेषेण पूर्व्वजन्मार्जितवासना जीवमनुगच्छतीति श्रवणादव्यवहितपूर्व्वजन्मवासनैव तमन्वेतीति न शक्यं विशेषतो वक्तुमित्याह । तं विद्येति ॥ दृष्टान्तमुपपाद्य दार्ष्टान्तिकं निगमयति । तस्मादिति ॥ शेषकर्म्मसद्भाव फलितमाह । यत इति ॥ उपयुक्तात्कर्म्मणः शेषेणेति सम्बन्धः । कश्चिदिति श्रौतो वा स्मार्त्तो वा यौक्तिको वा लौकिको वेत्यर्थः ॥ एतमेवाध्वानमिति प्रकृतमध्वानं प्रश्नपूर्व्वकं विशदयति । कोऽसावित्यादिना ॥ यथे-

उ॰ यथेतमाकाशमाकाशाद्वायुं वायुर्भुत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवति ॥ ५ ॥ अभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति त इह व्रीहि

---

भा॰ क्रम उक्तो न तथा निवृत्तिः। किन्तर्ह्याकाशाद्वायुमित्यादि कथं यथेतमित्युच्यते। नैष दोषः। आकाशप्राप्तेस्तुल्यत्वात्पृथिवीप्राप्तेश्च ॥

न चात्र यथेतमेवेति नियमोऽनैवंविधमपि निवर्त्तन्ते पुनर्निवर्त्तन्त इति तु नियमः। अत उपलक्षणार्थमेतद्यथेतमिति। अतो भौतिकमाकाशं तावत्प्रतिपद्यन्ते। यास्तेषां चन्द्रमण्डले शरीरारम्भका आप आसंस्तास्तेषां तत्रोपभोगनिमित्तानां कर्म्मणां क्षये विलीयन्ते। घृत-

---

व्या॰ तमित्युक्तमाक्षिपति। नन्विति ॥ किं यथेतमित्येतदेव न सम्भवति॥ किंवा यथेतमवेति नियमो नोपपद्यते॥ तत्राद्यं दूषयति। नैष दोष इति ॥

द्वितीयं प्रत्याह। न चेति ॥ अत्रेति निवृत्तिरुक्ता। अनैवंविधमपीति यथागतिक्रमो दर्शितो न तथा निवृत्तिर्नियता। किन्तु विधान्तरेणापि सम्भवतीत्यर्थः। निवृत्तेः क्रमनियमाभावे कीदृशो नियमो विवक्षित इत्याशङ्क्याह। पुनरिति ॥ केनाभिप्रायेण तर्हि यथेतमित्युक्तमत आह। अत इति ॥ गतिक्रमवन्निवृत्तिक्रमे नियमाभावोऽतःशब्दार्थः। उक्तञ्च यथेतमनेवंविधञ्चेति। निवृत्तिनियमे फलितमाह। अत इति ॥ परमात्मानं व्यावर्त्तयितुं भौतिकमित्युक्तं। कथं पूर्व्वसिद्धाकाशतादात्म्यापत्तिरवरोहतां सिध्यतीत्याशङ्क्य तत्साम्यगमनमेव तद्भावापत्तिरित्युपचर्य्यते। स्वाभाव्यापत्तिरिति न्यायादित्याह। यास्तेषामिति ॥ घृतस्य संस्थानं काठिन्यतास्त्वाकाशभूतास्तु तत्परिवेष्ठिताः कर्म्मणोऽध्यवरोहन्त

उ० यवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते ऽतो वै खलु दुर्निष्प्रपतरं यो यो ह्यन्नमत्ति यो

---

भा० संस्थानमिवाग्निसंयोगे ता विलीना अन्तरिक्षस्था आकाशभूता इव सूक्ष्मा भवन्ति। ता अन्तरिक्षाद्वायुर्भवन्ति। वायुप्रतिष्ठा वायुभूता इतस्ततोऽमुतश्चोह्यमानास्ताभिः सह क्षीणकर्म्मा वायुभूतो भवति । वायुर्भूत्वा ताभिः सहैव धूमो भवति । धूमो भूत्वाऽभ्रं अब्भरणमात्ररूपो भवति। अभ्रं भूत्वा ततः सेचनसमर्थो मेघो भूत्वा उन्नतेषु प्रदेशेष्वथ-प्रवर्षति। वर्षधारारूपेण शेषकर्म्मा पततीत्यर्थः । त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इत्येवम्प्रकारा क्षीणकर्म्माणो जायन्ते । क्षीणकर्म्मणामनेकत्वाद्बहुवचन-निर्द्देशः । मेघादिषु पूर्व्वेष्वेकरूपत्वादेकवचननिर्द्देशः । यस्माद्गिरितटदुर्गनदीसमुद्रारण्यमरुदेशादिसन्निवेशसह-

---

व्या० खभूता इव भवन्तीत्यर्थः॥ आकाशाद्वायुमित्यस्यार्थं साधयति। ता अन्तरिक्षादिति ॥ उन्नतेषु समुद्रादिव्यतिरिक्तेषु प्रदेशेष्विति यावत्॥ त इत्यनुशायिनो निर्द्दिश्यन्ते। इहेति पृथिवी कथ्यते। कथमस्मिन् वाक्ये बहुवचनेनानुशायिनां बहुतया निर्द्देशस्तत्राह। क्षीणकर्म्मणामिति॥ कथं मेघो भूत्वा प्रवर्षतीत्यादावेकवचन-निर्द्देशस्तत्राह । मेघादिष्विति॥ ये पूर्व्वे मेघादयो नभोऽन्तास्तेषु प्रत्येकमभिमानिदेवतानामेकरूपत्वात्तदुपश्लिष्टानामनुशायिना-मप्येकवचनेन निर्द्देशो युक्त इत्यर्थः॥ अतो वै खल्वित्यादिवाक्यं व्याचष्टे । यस्मादिति ॥ अनुशायिनां दुःशङ्कं निःसरणमित्युक्तं प्रपञ्चयति। यत इत्यादिना॥ मकरादिभिर्भक्षितानामनुशायिनां तेभ्यस्तत्समानजातीयत्वेन समुद्भवो भविष्यतीति चेन्नेत्याह ।

उ॰ रेतः सिञ्चति तद्भूय एव भवति ॥ ६ ॥

भा॰ स्थाणि वर्षधाराभिः पतितानां । अतोऽस्माद्ब्रीह्यादेः खलु दुर्निष्प्रपतरं दुर्निष्क्रमणं दुर्निःसरणं । यतो गिरितटा-दुदकस्रोतसोह्यमाना नदीः प्राप्नुवन्ति ततः समुद्रं । ततो मकरादिभिर्भक्ष्यन्ते । तेऽप्यन्येन मकरेण समुद्रे विलीनाः समुद्राम्भोभिर्जलधरैराकृष्टाः पुनर्वर्षधाराभिर्मरुदेशे शिलातटे वाऽगम्ये पतितास्तिष्ठन्ति । कदाचिद्व्यालमृगादिपीता भक्षितास्तान्यैः ॥

तेऽप्यन्यैरित्येवम्प्रकाराः परिवर्त्तेरन् । कदाचिद-भक्ष्येषु स्थावरेषु जातास्तत्रैव शुष्येरन् । भक्ष्येष्वपि स्थावरेषु प्रजातानां रेतःसिग्देहसम्बन्धो दुर्लभ एव । बहु-त्वात् स्थावराणामिति । अतो दुर्निष्क्रमणत्वं । अथवाऽतो ऽस्माद्ब्रीहियवादिभावाद्दुर्निष्प्रपतरं दुर्निर्गमनतरं । दुर्निष्प्रपतरमिति तकार एको लुप्तो द्रष्टव्यः । ब्रीहिय-

आ॰ तेऽपीति ॥ मकरादयोऽपि जलचारिभिरन्यैर्भक्ष्यन्ते तथाच समुद्रे पतितानामनुशायिनां तत्रैव लयः स्यादित्यर्थः । नन्वेव-मनुशायिनः समुद्रे लीना न ततः पुनरुद्धर्त्तुं शक्यन्ते ॥ तथा च कृतविनाशः स्यादित्याशङ्क्याह । जलधरैरिति ॥ समुद्रोऽम्भो-भिरिति तृतीया सहार्थे ॥ तर्हि सर्पव्याघ्रोपभुक्तानामनुशायिनां तत्समानजातीयदेहभोगः स्यादिति चेन्नेत्याह । भक्षितास्तेति ॥

यैस्तर्हि सर्पादयो भक्ष्यन्ते तेभ्यस्तत्समानजातीयत्वेनानुशायि-नामुद्भवः स्यादिति चेन्नेत्याह । तेऽपीति ॥ तथापि यथोक्तरीत्या परिवर्त्तनान्ते रेतःसिग्योगमपि यदा कदाचित्प्रपद्येरन्निति चेन्ने-

भा० वादिभावो दुर्निष्प्रपततरस्तस्मादपि दुर्निष्प्रपतराद्रेतःसिग्देहसम्बन्धो दुर्निष्प्रपततर इत्यर्थः। यस्मादूर्द्ध्वरेतोभिर्बालैः पुंस्त्वरहितैः स्थविरैर्वा भचिता अन्तराले शीर्य्यन्ते। अनेकत्वादन्नादानां। कदाचित्काकतालीयन्यायेन रेतःसिग्भिर्भक्ष्यन्ते यदा तदा रेतःसिग्भावं गतानां कर्म्मणो वृत्तिलाभः। कथं यो यो ह्यन्नमत्ति अनुशयिभिः संश्लिष्टं रेतःसिक् यश्च रेतः सिञ्चत्यृतुकाले योषिति तद्भूय एव तदाकृतिरेव भवति। रेतोरूपेण तदवयव आकृतिभूयस्त्वं भूय इत्युच्यते रेतोरूपेण योषिति॥

रेतसो रेतःसिगाकृतिभावितत्वात्। सर्व्वेभ्योऽङ्गेभ्यस्तेजः सम्भूतमिति हि श्रुत्यन्तरात्। अतो रेतःसिगाकृतिरेव भवतीत्यर्थः। तथा हि पुरुषात्पुरुषो जायते

---

व्या० त्याह। कदाचिदिति॥ तथापि भक्ष्येषु जातानां रेतः सिग्योगः सुलभः स्यादिति चेन्नेत्याह। भक्ष्येष्वपीति॥ इतिशब्दो यच्छब्देन पूर्व्वत्र सम्बध्यते। पूर्व्वमतःशब्दो हेतुपरतया व्याख्यातः। सम्प्रति व्रीह्याद्यवधिवाचकत्वेन तं व्याचष्टे। अथमेति॥ दुर्निष्प्रपततरमिति तकारसहिते पाठे सति विवक्षितमर्थमाह। व्रीह्यादीति॥ तत्र हेतुमाह। यस्मादिति॥ तर्हि तेषामन्तराले विशीर्णानां देहभागित्वाभावादनुशयवैयर्थ्यमित्याशङ्क्याह। कदाचिदिति॥ काकतालीयया वृत्त्या याटच्छिकन्यायेनेति यावत्॥ अनुशयाख्यस्य कर्म्मणो भाविदेहारम्भार्थं मुख्यं प्रश्नपूर्व्वकं विवृणोति। कथमित्यादिना॥

अनुशायिनो रेतःसिगाकारभाक्त्वे हेतुमाह। रेतस इति॥ तस्य रेतःसिगाकृत्या तदंशेन भावितत्वात्संस्कृतत्वात्तदङ्गसम्भूतत्वात्तद्रूपेण गर्भाशयमनुप्रविष्टोऽनुशयी रेतःसिगाकृतिर्भवतीत्यर्थः। रेतसो रेतःसिगङ्गसमुत्थत्वे प्रमाणमैतरेयकश्रुतिरित्याह। सर्व्वेभ्य इति॥ रेतोरूपेण गर्भाशयं प्रविष्टस्य रेतःसिगाकार-

भा॰ गौर्गवाकृतिरेव न जात्यन्तराकृतिस्तस्मायुक्तं तद्रूप एव भवतीति। ये त्वन्येऽनुशयिभ्यश्चन्द्रमण्डलमनारुह्यैव पापकर्मभिर्घोरैर्व्रीह्यादिभावं प्रतिपद्यन्ते पुनर्मनुष्यादिभावं गतास्तेषां नानुशयिनामिव दुर्निष्प्रपतरं। कस्मात् कर्म्मणा हि तैर्व्रीह्यादिदेह उपात्त इति। तदुपभोगनिमित्तक्षये व्रीह्यादिस्तम्बदेहविनाशे यथा कर्मार्जितं देहान्तरं नवं नवं जलूकावत्सङ्क्रमन्ते सविज्ञाना एव। सविज्ञानो भवति सविज्ञानमेवान्ववक्रामतीति श्रुत्यन्तरात्॥

यद्यप्युपसंहृतकरणाः सन्तो देहान्तरं गच्छन्ति तथापि स्वप्नवद्देहान्तरप्राप्तिनिमित्तकर्मोद्भावितवासना-

---

व्या॰ त्वमुक्तं निगमयति। अत इति॥ अनुशयिनो रेतःसिगाकारत्वे लौकिकानुभवमनुकूलयति। तथेति॥ चन्द्रस्थलस्खलितानामवरोहतां व्रीह्यादिदेहसंश्लिष्टानां द्राघीयसा कालेन देहान्तरलाभस्तेत्तर्हि व्रीह्यादिदेहाभिमानिनामपि दुःशकं निष्क्रमणं॥ व्रीह्यादिदेहसम्बन्धाविशेषादित्यत आह। ये त्विति॥ व्रीह्यादिदेहसम्बन्धाविशेषे कुतस्तद्देहभाजां ततो निःसरणमशक्यं न भवतीत्याशङ्क्य विशेषमाह। कस्मादित्यादिना॥ शरीरजैः कर्म्मदोषैर्याति स्थावरतां नर इत्यादिश्रुतिस्मृत्योर्येषां कर्म्मनिमित्तं स्थावरं जन्म तेषां कर्म्मक्षय एवावधिः। अवरोहतान्तु कर्म्मासङ्कीर्त्तनाद्वैषम्यमित्यर्थः। यथा जलूका तृणात्तृणान्तरं दीर्घभूता सङ्क्रमते न तथाऽनुशयिनो व्रीह्यादिदेहभाजोऽपि तत्त्यागेन देहान्तरं गच्छन्तस्तद्विषयविज्ञानवन्त एव गच्छन्तीत्यत्र वृहदारण्यकश्रुतिं प्रमाणयति। सविज्ञान इति॥

अथोपसंहृतकरणानां विज्ञाने कारणासम्भवात्कथं सविज्ञानत्वं तत्राह। यद्यपीति॥ दृष्टकारणाभावेऽप्यदृष्टमेवैकं वासनात्मकं ज्ञानोत्पत्तौ निमित्तमिति तेन सविज्ञाना एव गच्छन्ति देहान्तरमित्यत्र हेतुमाह। श्रुतिप्रामाण्यादिति॥ श्रुतिरत्र वृह-

भा० ज्ञानेन सविज्ञाना एव देहान्तरं गच्छन्ति। श्रुतिप्रामाण्यात्। तथार्चिरादिना धूमादिना च गमनं। स्वप्न इवोद्भूतविज्ञानेन लब्धवृत्तिकर्म्मनिमित्तत्वाद्गमनस्य। न तथाऽनुशयिनां व्रीह्यादिभावेन जातानां च सविज्ञानमेव रेतःसिग्योषिद्देहसम्बन्ध उपपद्यते। न हि व्रीह्यादिलवनकण्डनपेषणादौ च सविज्ञानानां स्थितिरस्ति। ननु चन्द्रमण्डलादप्यवरोहतां देहान्तरगमनस्य तुल्यत्वाज्जलूकावत्सविज्ञानतैव युक्ता। तथा सति घोरो नरकानुभवः॥

दृष्टापूर्त्तादिकारिणां चन्द्रमण्डलादारभ्य प्राप्तो यावत् ब्राह्मणादिजन्म। तथा च सत्यनर्थायैवेष्टापूर्त्ताद्युपासनं विहितं स्यात्। श्रुतेस्त्वाप्रामाण्यं प्राप्तं वैदि-

---

व्या० दारण्यकश्रुतिः। यथा सविज्ञानानामेव व्रीह्यादिदेहान्तरगमनं तथा ज्ञानिनामर्चिरादिना कर्म्मिणां धूमादिना च गमनं स्वप्नवदुद्भूतवासनात्मकविज्ञानानामेवेत्याह। तथेति॥ तेषां सविज्ञानत्वे हेतुमाह। लब्धवृत्तीति॥ अनुशयिनामपि तर्हि व्रीह्यादिषु संश्लिष्टानां रेतःसिगादिदेहसम्बन्धः सविज्ञानानामेवेति चेन्नेत्याह। न तथेति॥ अनुपपत्तौ हेतुमाह। न हीति॥ व्रीह्यादिसंश्लिष्टानामनुशयिनां सविज्ञानत्वे तल्लवनादौ तज्जीववत्तेषामपि प्रवासप्रसङ्गान्न रेतःसिग्देहसम्बन्धः सिध्येदित्यर्थः। व्रीह्यादिषु देहान्तरं गच्छत्सु विज्ञानत्वोपलम्भादनुशयिष्वपि देहान्तरप्राप्तेरविशेषाद्युक्तं सविज्ञानत्वमिति शङ्कते। नन्विति॥ तृणात्तृणान्तरं प्रति जलूकागमनवदवरोहतामपि देहाद्देहान्तरं प्रति गमनस्य तुल्यत्वाद्व्रीह्यादिवद्युक्ता सविज्ञानतेति योजना। अस्तु तेषां विज्ञानत्वं का हानिरित्यत आह। तथा सतीति॥ इष्टापूर्त्तादिकारिणामन्तराले नरकानुभवः। तथा च सति तदनुष्ठानस्यानर्थार्थं विहितत्वे श्रेयःसाधनविषयककर्म्मकाण्डं विरु-

भा॰ कानां कर्म्मणामनर्थानुबन्धित्वात्। न वृक्षारोहणपतनवत् विशेषसम्भवात् । देहाद्देहान्तरं प्रतिपित्सोः कर्म्मणा लब्धवृत्तित्वात्। कर्म्मणोद्भावितेन विज्ञानेन सविज्ञानत्वं युक्तं । वृक्षाग्रमारोहत इव फलं जिघृक्षोः । तथार्चिरादिना गच्छतां सविज्ञानत्वं भवेत् । धूमादिना च चन्द्रमण्डलमारुरुक्षतां न तथा चन्द्रमण्डलादवरुरुक्षतां वृक्षाग्रादिव पततां सचेतनत्वं । यथा च मुद्गराद्यभिहतानां तदभिघातवेदनानिमित्तसंमूर्च्छितप्रतिबन्धकरणानां स्वदेहेनैव देशाद्देशान्तरं नीयमानानां विज्ञानशून्यता दृष्टा तथा चन्द्रमण्डलान्मानुषादिदेहान्तरं प्रत्यवरुरुक्षतां स्वर्गभोगनिमित्तकर्म्मक्षया-

---

आ॰ ध्येतेत्याह। श्रुतेश्चेति॥ यथा बुद्धिपूर्व्वं वृक्षमारोहतो सविज्ञानत्वेऽपि तस्मादबुद्धिपूर्व्वं पततां न सविज्ञानत्वं विज्ञायते। तथा चन्द्रमण्डलमारोहतां सविज्ञानत्वेऽपि ततोऽवरोहतां नैव तदस्ति। उद्भूतकर्म्माभावात्। इत्यारोहावरोहयोर्ज्ञानविशेषसम्भवान्नैवमिति परिहरति। न वृक्षेति॥ सङ्ग्रहवाक्यं विवृणोति । देहादित्यादिना॥ चकारात् गच्छतां सविज्ञानत्वं भवेदिति सम्बन्धः । अवरोहतां जीवानां सर्व्वथा विज्ञानशून्यत्वमयुक्तं तेषां चैतन्यस्वाभाव्याद्दृष्टान्तासिद्धतामपि विज्ञानमात्रमस्त्येवेत्याशङ्क्योदाहरणान्तरमाह । यथा चेति ॥ तेन मुद्गरादिना योऽभिघातस्तेन हेतुना यद्वेदनाख्यं निमित्तं तेन सम्मूर्च्छितानि प्रतिबद्धानि वा करणानि येषान्तेषामिति यावत् । स्वदितोऽभिनष्टो देहोऽन्नमयः स्थूलो देहो येषां तेषान्तत एव प्रतिबद्धकरणानां युक्ता विज्ञानशून्यतेति सम्बन्धः। यथोक्तदृष्टान्तवशाच्चन्द्रमण्डलादवरोहन्तो विज्ञानशून्याः सिद्ध्यन्तीति निगमयति । अत इति ॥ तथापि मूर्च्छितानां

भा० न्मुदिताब्देहानां प्रतिबद्धकरणानां । अतस्तेऽपरित्यक्तदेह-
बीजभूताभिरद्भिर्मूर्च्छिता इवाकाशादिक्रमेणेमामवरुह्य
कर्मनिमित्तजातिस्थावरदेहैः संश्लिष्यन्ते । प्रतिबद्धकरण-
तयाऽनुद्भूतविज्ञाना एव ॥

तथा लवनकण्डनपेषणसंस्कारभक्षणरसादिपरिणा-
मरेतःसेककालेषु मूर्च्छितवदेव । देहान्तरारम्भकस्य

---

व्या० स्थूलदेहसद्भावाद्देशान्तरगमनं न युक्तं । अवरोहतान्तु तद-
भावे कथं व्रीह्यादिभावः सम्भवतीत्यत आह । अपरित्यक्तेति ॥
न परित्यक्तं देहभावस्य बीजं कर्म्मापूर्व्वं याभिरद्भिस्ताभिरु-
पहिता जीवा मूर्च्छितवद्विज्ञानशून्यगगनादिक्रमेण पृथिवीं
प्राप्य कर्म्मफलभूतजातिस्थावरशरीरैः संश्लिष्यन्त इति सम्बन्धः ।
स्थावरदेहसम्बन्धित्वात्तद्गतजीववत्तदा सविज्ञानत्वं सम्भवती-
त्याशङ्क्याह । प्रतिबद्धेति ॥ व्रीह्यादिसंश्लेषावस्थायामनुशयिनां
कर्म्मणोऽनुद्भूतवृत्तित्वात् करणानां च तत्र वृत्तिलाभाभावादनु-
द्भूतविज्ञानत्वं युक्तमित्यर्थः ।

न केवलं व्रीह्यादिसंश्लेषकालेऽनुद्भूतविज्ञानत्वं किन्तु व्रीह्या-
देर्लवनादिकालेऽपीत्याह । तथेति ॥ पाकसंस्कारो रसादीत्या-
दिशब्देन शोणितमांसमेदोऽस्थिमज्जारेतांस्युच्यन्ते । तस्मिन्
काले मूर्च्छितवदनुद्भूतविज्ञानत्वे देहाद्बहिर्निर्गतानां प्राग्देहा-
न्तरप्राप्तेस्तदस्त्येवेति हेतुमाह । देहेति ॥ अलब्धवृत्तित्वादिति
छेदः कथं पुनरनुशयिनां विज्ञानशून्यत्वे ॥ तद्यथा तृणजला-
युका तृणस्यान्तं गत्वाऽन्यमाक्रममाक्रम्यात्मानमुपसंहरतीत्यादौ
सचेतना जलूका दृष्टान्तत्वेनोपादीयते तत्राह । देहबीजभू-
तेति ॥ सर्व्वास्ववस्थासु तासु व्रीह्यादिसंश्लेषतल्लवनादिवशादिति
यावत् । न चेतनावत्त्व जलूकादृष्टान्ते विवक्षितं । किन्तु सातत्य-
मात्रमिति भावः । जलूकावत्त्वं जलूकासादृश्यमनुशयिनामि-
त्यर्थः । आरोहतां सविज्ञानत्वमवरोहतां विज्ञानराहित्य-
मित्युपपाद्यारोहतामपि यावत्स्थावरस्थानेभ्यः करणान्युपसंहृत्य

भा॰ कर्म्मणोऽस्वप्रवृत्तित्वात् । देहबीजभूतासम्बन्धापरित्यागेनैव सर्व्वास्ववस्थासु वर्त्तन्त इति जलूकावच्चेतनावत्त्वं न विरुध्यते । अन्तराले त्वविज्ञानं मूर्च्छितवदेवेत्यदोषः । न च वैदिकानां कर्म्मणां हिंसायुक्तत्वेनोभयहेतुत्वं शक्यमनुमातुं । हिंसायाः शास्त्रचोदितत्वात् । अहिंसन् सर्व्वभूतान्यन्यत्र तीर्थेभ्य इति श्रुतेः । शास्त्रचोदिताया हिंसाया नाधर्म्महेतुत्वमभ्युपगम्यते । अभ्युपगतेऽप्यधर्म्महेतुत्वे मन्त्रैर्विषादिवत्तदपनयोपपत्तेर्न दुःखकार्य्यारम्भकत्वोपपत्तिर्वैदिकानां कर्म्मणां मन्त्रेणेव विषभक्षणस्येति ॥

---

व्या॰ हृदयेऽवस्थानं तावदेव सविज्ञानत्वं । न देहाद्बहिर्निर्गतानां प्रागदेहान्तरप्राप्तेः । तदस्यनुशयिनां तु चन्द्रमण्डलादवरूढानामपि न भाविदेहपर्य्यन्ता वासना दीर्घा भवति प्रमाणाभावादित्याह । अन्तराले त्विति ॥ चन्द्रमण्डलादवरोहतां देहान्तरगमनस्य तुल्यत्वेऽपि विज्ञानशून्यत्वमदुष्टमित्युपसंहरति । इत्यदोष इति ॥

यत्तु हिंसानुग्रहात्मकत्वादिष्टादिकर्म्मणां स्थावरत्वमपि तत्फलमेव । तथाच वैदिकानां कर्म्मणामनर्थानुबन्धित्वादप्रामाण्यं श्रुतेरिति तत्राह । न चेति ॥ उभयहेतुत्वमर्थानर्थहेतुत्वमिति यावत् ॥ अहिंसन्नित्यादिश्रुतेः शास्त्रचोदितवैदिकेषु कर्म्मसु हिंसा नानर्थहेतुरित्याह । अभ्युपगतेऽपीति ॥ यद्यपि स्वरूपेण हिंसानर्थहेतुरभ्युपगम्यते । तथापि तद्युक्तानां वैदिककर्म्मणां नानर्थारम्भकत्वं । यथा स्वरूपेण विषदध्यादेर्मरणज्वरादिहेतुत्वेऽपि मन्त्रशर्करादिभिः सहोपयुक्तं सन्न तत्कार्य्यारम्भकत्वं । तथा हिंसायाः स्वतोऽधर्म्महेतुत्वेऽपि वैदिककर्म्मनिष्ठाया न तद्धेतुत्वं । वैदिकैरेव कर्म्मभिस्तत्कृतदोषापनयनसिद्धेरित्यर्थः ॥ पूर्व्वोक्तमेव दृष्टान्तं स्पष्टयति । मन्त्रेणेति ॥ तेन सहोपभुक्तस्य विषस्यानर्थाहेतुत्वेन पुष्टिहेतुत्ववद्वैदिककर्म्मानुप्रविष्टाया हिंसायाः पुरुषार्थमेव शुद्धमिति चेन्न शब्दादिति न्यायादित्यर्थः ॥

उ० तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वाथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन्

---

भा० तत्तच तेष्वनुशयिनां य इह लोके रमणीयं शोभनं चरणं शीलं येषां ते रमणीयचरणा रमणीयचरणेनोपलक्षितः शोभनोऽनुशयः पुण्यं कर्म्म येषां ते रमणीयचरणा उच्यन्ते। क्रौर्य्यानृतमायावर्जितानां हि शक्य उपलक्षयितुं शुभानुशयसद्भावः। तेनानुशयेन पुण्येन कर्म्मणा चन्द्रमण्डले भुक्तशेषेणाभ्याशो ह क्षिप्रमेव यदिति क्रियाविशेषणं। ते रमणीयां क्रौर्य्यादिवर्जितां योनिमापद्येरन् प्राप्नुयुः। ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा स्वस्वकर्म्मानुरूपेण॥

अथ पुनर्ये तद्विपरीताः कपूयचरणोपलक्षितकर्म्मा-

---

व्या० तद्भूय एव भवति इत्येतत्प्रसङ्गागतं परिसमाप्य प्रकृतं श्रुतिव्याख्यानमनुवर्त्तयति। तत्तचेति॥ अन्याधिष्ठिते पूर्व्ववदभिलापादिति न्यायेन तेषु ब्रीह्यादिषु संश्लिष्टा येऽनुशयिनस्तेषां मध्ये ये केचिदस्मिन्लोके चन्द्रमण्डलप्राप्तेः प्रागवस्थायामनुष्ठिताभुक्तरमणीयचरणास्ते रमणीयां योनिं प्रापद्येरन्निति सम्बन्धः॥ उक्तमेव स्पष्टयति। शोभनमिति॥ कथं रमणीयचरणानुरोधेन शोभनोऽनुशयो लक्ष्यते तत्राह। क्रौर्य्येति॥ ते खल्वनुशयिनो रेतःसिग्योगानन्तरं तेन कर्म्मणा रमणीयां योनिमापद्येरन्निति यत्तत्क्षिप्रमेवेति योजना। तत्रापि हेतुमाह। स्वकर्म्मेति॥

अथेति प्रतीकं गृहीत्वा व्याचष्टे। पुनरिति॥ तद्विपरीता-

उ॰ श्वयोनिं वा शूकरयोनिं वा चण्डालयोनिं वा ॥ ७ ॥ अथैतयोः पथोर्न कतरेण च न तानीमानि क्षुद्राण्यसकृदावर्त्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत्तृतीयꣳ स्थानं तेनासौ लोको न सम्पूर्य्यते

---

भा॰ णोऽशुभानुशया अभ्याशो ह यत्ते कपूयां यथा कर्म्मयोनिमापद्येरन् कपूयामेव। धर्म्मसम्बन्धवर्जितां जुगुप्सितां योनिमापद्येरन्। श्वयोनिं वा शूकरयोनिं वा चाण्डालयोनिं वा स्वकर्म्मानुरूपेणैव। ये तु रमणीयचरणाद्विजातयस्ते स्वकर्म्मस्थाश्चेदिष्टापूर्त्तादिकारिणस्ते धूमादिना गच्छन्त्यागच्छन्ति। च पुनः पुनर्घटीयन्त्रवद्विद्यां चेत्प्राप्नुयुस्तदार्च्चिरादिना गच्छन्ति। यदा तु न विद्यासेविनो नापीष्टापूर्त्तादिकर्म्म सेवन्ते तदाऽथैतयोः पथोर्यथोक्तयोरर्च्चिर्धूमादिलक्षणयोर्न कतरेणान्यतरेण च नापि यन्ति। तानीमानि भूतानि

---

आ॰ स्तेभ्यो विलक्षणा इति यावत्। ते कपूयां योनिमशुभानुशयवशाद्रेतःसिग्योगानन्तरमापद्येरन्निति यत्तदपि क्षिप्रमेवेति योजना॥ तत्रापि विकल्पे कारणमाह। स्वकर्म्मेति॥ योनिविकल्पे तृतीयं पन्थानमवतारयितुं पूर्व्वोक्तौ पन्थानौ सङ्क्षिप्यानुवदति। ये त्विति॥ शुभानुशयवशाद्ये केचिद्ब्राह्मणादियोनिमापन्नास्ते स्ववर्णाश्रमविहितकर्म्मनिष्ठाः सन्तो यदीष्टादिकर्म्म कृतवन्तस्तदा दक्षिणेन पथा चन्द्रं गच्छन्ति। तत्र च भोक्तव्ये कर्म्मणि भोगेन क्षीणे पुनरवशिष्टेन कर्म्मणा पृथिवीमागच्छन्ति। एवं घटीयन्त्रवत्पुनः पुनरारोहन्तोऽवरोहन्तश्च केवलकर्म्मिणो दृश्यन्ते। यदि चेद् द्विजातयः स्वकर्म्मस्थाः सन्तो ज्ञानं लभेरन्नुत्तरेण

भा० क्षुद्राणि दंशमशककीटादीन्यसकृदावर्त्तीनि भवन्त्यत उभयमार्गपरिभ्रष्टा ह्यसकृज्जायन्ते म्रियन्ते चेत्यर्थः ॥

तेषां जननमरणसन्ततेरनुकरणमिदमुच्यते । जायस्व म्रियस्वेति ईश्वरनिमित्तचेष्टोच्यते । जननमरणलक्षणेनैव कालयापनं भवति । न तु क्रियासु शोभनेषु भोगेषु वा कालोऽस्तीत्यर्थः । एतत्क्षुद्रजन्तुलक्षणं तृतीयं पूर्व्वोक्तौ पन्थानावपेक्ष्य स्थानं संसरतां । येनैवं दक्षिणमार्गगा अपि पुनरागच्छन्ति । अनधिकृतानां ज्ञानकर्म्मणोरगमनमेव दक्षिणेन पथेति । तेनासौ लोको न सम्पूर्य्यते । पञ्चमस्तु प्रश्नः पञ्चाग्निविद्यायां व्याख्यातः । प्रथमो दक्षिणेतरमार्गाभ्यामपाकृतो दक्षिणेतरयोः पथोर्व्यावर्त्तनापि मृतानामग्नौ प्रक्षेपः समानः । ततो व्यावर्त्तनान्यर्चिरादिना यन्त्यन्ये धूमादिना । पुनरुत्तरदक्षिणायने षण्मासान् प्राप्नुवन्तः संयुज्य पुनर्व्यावर्त्तन्ते । अन्ये संवत्सरमन्ये मासेभ्यः

---

व्या० यानेनैतो ब्रह्मलोकं गच्छन्तीत्यर्थः ॥ इदानीं तृतीयस्थानमुपदिशति । यदा त्विति ॥

पौनःपुन्येन लोण्मध्यमैकवचनान्तयोः सर्व्वाख्यातेषु विधानात् पुनः पुनर्जायन्ते म्रियन्ते चेत्यस्मिन्नर्थे जायस्व म्रियस्वेति प्रयोग इत्याह । तेषामिति ॥ यद्वा सर्व्वेश्वरो मार्गद्वयभ्रष्टं दृष्ट्वा तं जायस्व म्रियस्वेति प्रेरयत्येतदिहोच्यत इति द्रष्टव्यं ॥ तेनासावित्यादिवाक्यं व्याचष्टे । येनैवमिति ॥ उक्तया रीत्या निर्णीतान् प्रश्नान् विविच्य प्रतिपत्तिसौकर्य्यार्थं कथयति । पञ्चमस्त्विति ॥ व्यावर्त्तनापि व्याख्यातेत्युत्तरत्र सम्बन्धः । मृतानामविदुषाञ्चेत्यर्थः । अन्त्येष्ट्यनन्तरं विदुषां कर्म्मिणाञ्च संवत्सरमिति ज्ञानिनो गृह्यन्ते । अन्ये पितृलोकमिति केवलकर्म्मिण इति विभागः ।

उ० तस्माज्जुगुप्सेत तदेष श्लोकः॥ ८ ॥स्तेनो हिरण्यस्य सुरां पिबꣳश्च गुरोस्तल्पमावसन् ब्रह्महा चैते पतन्ति चत्वारः पञ्चमश्चाचरꣳस्तैरिति ॥ ९ ॥

---

भा० पितृलोकमिति व्याख्याता । पुनरावृत्तिरपि क्षीणानुशयानां चन्द्रमण्डलादाकाशादिक्रमेणोक्ता । अमुष्य लोकस्यापूरणं स्वशब्देनैवोक्तं। तेनासौ लोको न सम्पूर्य्यत इति ॥ यस्मादेवं कष्टा संसारगतिस्तस्माज्जुगुप्सेत । यस्माच्च जन्ममरणजनितवेदनानुभवकृतक्षणाः क्षुद्रजन्तवो ध्वान्ते घोरे दुस्तरे प्रवेशिताः सागर इवागाधे अप्लवे निराशाश्चोत्तरणं प्रति तस्माच्चैवंविधां संसारगतिं जुगुप्सेत बीभत्सेत घृणीभवेत् । माभूदेवंविधे संसारे महोदधौ घोरे पात इति । तदेतस्मिन्नर्थे एष श्लोकः पञ्चाग्निविद्यास्तुतये॥ स्तेनो हिरण्यस्य ब्राह्मणसुवर्णस्य हर्त्ता।सुरां पिबन् ब्राह्मणः सन् । गुरोश्च तल्पं दारानावसन् । ब्रह्महा ब्राह्मणस्य हन्ता चेत्येते पतन्ति चत्वारः । पञ्चमश्च पतितैः सहाचरन्निति ॥

---

आ० क्षीणानुशयानां चन्द्रलोके भोक्तव्यं कर्म्म भोगेन क्षयितवतामिति यावत् । स्वशब्दमेवानुवदति । तेनेति ॥ किमर्थमेषां महायासवती तीव्रा संसारगतिरुक्तेत्याशङ्क्याह । यस्मादिति ॥ तृतीयस्थानस्य कष्टत्वं स्पष्टयति । यस्माच्चेति ॥ जन्मादिना जनिता या वेदना तदनुभवे कृतः क्षणोऽवसरो नान्यत्र येषां । तथाऽप्लव इति च्छेदः ॥ तृतीयस्थानवदितरयोरावृत्तिमत्त्वात्तुल्या कष्टतेत्यभिप्रेत्याह । तस्माच्चेति ॥ संसारगत्युपवर्णनस्य तात्पर्य्यमुक्त्वा पञ्चाग्निविद्यायामनुष्ठानसिद्ध्यर्थं तस्य स्तावकं श्लोकमुदाहृत्य व्याचष्टे । तदेतस्मिन्नित्यादिना ॥ पञ्चाग्निविद्यामाहात्म्यं समभ्यर्थः ॥

उ० अथ ह य एतानेवं पञ्चाग्नीन् वेद न सह तैरप्याचरन् पाप्मना लिप्यते शुद्धः पूतः पुण्यलोको भवति य एवं वेद य एवं वेद ॥१०॥१०॥

प्राचीनशाल औपमन्यवः सत्ययज्ञः पौलुषिरि-

---

भा० अथ ह पुनर्यो यथोक्तान् पञ्चाग्नीन् वेद स तैरप्याचरन्महापातकिभिः सह न पाप्मना लिप्यते शुद्ध एव। तेन पञ्चाग्निदर्शनेन पावितो यस्मात्पूतः पुण्यलोकः प्राजापत्यादिर्यस्य सोऽयं पुण्यलोको भवति य एवं वेद यथोक्तं समस्तं पञ्चभिः प्रश्नैः पृष्टमर्थजातं वेद। द्विरुक्तिः समस्तप्रश्ननिर्णयप्रदर्शनार्था ॥ १० ॥ दक्षिणेन पथा गच्छतामन्नभाव उक्तस्तद्देवानामन्नं तं देवा भक्षयन्तीति क्षुद्रजन्तुलक्षणा च कष्टा संसारगतिरुक्ता। तदुभयदोषपरिजिहीर्षया वैश्वानरात्मभावप्रतिपत्त्यर्थमुत्तरो ग्रन्थ आरभ्यते। अत्स्यन्नं पश्यसि प्रियमित्यादिलिङ्गादाख्यायिका सुखावबोधार्था विद्यासम्प्रदानन्यायप्रदर्शनार्था च ॥

प्राचीनशाल इति नामत उपमन्योरपत्यमौपमन्यवः।

---

आ० पञ्चमहापातकिनः श्लोके निर्दिश्यन्ते न तु पञ्चाग्निविद्यास्तुतिरिह भातीत्याशङ्क्याह। अथेति ॥ शुद्धत्वे हेतुमाह। तेनेति ॥ कस्येदं फलमित्यपेक्षायां पूर्वोक्तविद्यावन्तमनुवदति। य एवमिति ॥ १० ॥ पूर्वोत्तरयोः सन्दर्भयोः सम्बन्धं दर्शयन्नुत्तरसन्दर्भमवतारयति। दक्षिणेनेत्यादिना ॥ उत्तरग्रन्थस्य वैश्वानरात्मभावप्रतिपत्त्यर्थत्वे गमकमाह। अत्सीति ॥

विद्यायाः सम्प्रदानं शिष्यस्तस्य न्यायो विनयादिसम्पत्तिस्त-

उ॰ न्द्रद्युम्नो भाल्लवेयो जनः शार्कराक्ष्यो बुडिल आश्व-
तराश्विस्ते हैते महाशाला महाश्रोत्रियाः समेत्य
मीमाꣳसाञ्चक्रुः को न आत्मा किं ब्रह्मेति ॥१॥

---

भा॰ सत्ययज्ञो नामतः पुलुषस्यापत्यं पौलुषिः। तथेन्द्रद्युम्नो नामतो भल्लवेरपत्यं भाल्लविस्तस्यापत्यं भाल्लवेयः। जन इति नामतः शर्कराक्ष्यस्यापत्यं शार्कराक्ष्यः। बुडिलो नामतोऽश्वतराश्वस्यापत्यमाश्वतराश्विः। पञ्चापि ते हैते महाशाला महागृहस्था विस्तीर्णाभिः शालाभिर्युक्ताः सम्पन्नाः। महाश्रोत्रियाः श्रुताध्ययनवृत्तसम्पन्ना इत्यर्थः। त एवम्भूताः सन्तः समेत्य सम्भूय क्वचिन्मीमांसां विचारणाञ्चक्रुः कृतवन्त इत्यर्थः। कथं। को नोऽस्माकमात्मा किं ब्रह्मेत्यात्मब्रह्मशब्दयोरितरेतरविशेषणविशेष्यत्वं ब्रह्मेत्यध्यात्मपरिच्छिन्नमात्मानं निर्वर्त्तयत्यात्मेति च आत्मव्यतिरिक्तस्यादित्यादिब्रह्मण उपास्यत्वं निवर्त्तयति। अभेदेनात्मैव ब्रह्म ब्रह्मैवात्मेत्येवं सर्वात्मा वैश्वानरो ब्रह्म स आत्मेत्येतत्सिद्धं भवति॥

---

आ॰ तत्प्रदर्शनार्था चाख्यायिका॥ दृश्यते चात्र प्राचीनशालप्रभृतीनां तत्सम्पत्तिरित्याह। विद्येति॥ कथमात्मब्रह्मशब्दयोरितरेतरविशेषणविशेष्यत्वं व्यावर्त्याभावादित्याशङ्क्याह। ब्रह्मेति॥ उक्तरीत्या मिथो विशेषणविशेष्यत्वे फलितमाह। अभेदेति॥

उ० ते ह सम्पादयाञ्चक्रुरुद्दालको वै भगवन्तोऽयमारुणिः सम्प्रतीममात्मानं वैश्वानरमध्येति तꣳ हन्ताभ्यागच्छामेति तꣳ हाभ्याजग्मुः ॥ २ ॥ स ह सम्पादयाञ्चकार प्रक्ष्यन्ति मामिमे महाशाला महाश्रोत्रियास्तेभ्यो न सर्वमिव प्रतिपत्स्ये हन्ताहमन्यमभ्यनुशासानीति ॥ ३ ॥ तान् होवाचाश्वपतिर्वै भगवन्तो ऽयं कैकेयः सम्प्रतीममा-

---

भा० मूर्द्धा ते व्यपतिष्यदन्धोऽभविष्यदित्यादिलिङ्गात् । ते ह मीमांसन्तोऽपि निश्चयमलभमानाः सम्पादयाञ्चक्रुः सम्पादितवन्त आत्मन उपदेष्टारं। उद्दालको वै प्रसिद्धो नामतः । हे भगवन्तः पूजावन्तो ऽयमारुणिः अरुणस्यापत्यं सम्प्रति सम्यगिममात्मानं वैश्वानरमस्मदभिप्रेतमध्येति स्मरति । तं हन्तेदानीमभ्यागच्छामेत्येवं निश्चित्य तं हाभ्याजग्मुस्तं गतवन्तः। आरुणिः स ह तान् दृष्ट्वैव तेषामागमनप्रयोजनं बुध्वा सम्पादयाञ्चकार । कथं । प्रक्ष्यन्ति मां वैश्वानरं इमे महाशाला महाश्रोत्रियास्तेभ्योऽहं न सर्व्वमिव पृष्टं प्रतिपत्स्ये वक्तुं नोत्सहे । अतो हन्ताहमिदानीमन्यमेषामभ्यनुशासानि वक्ष्याम्युपदेष्टारमित्येवं सम्पाद्य तान् होवाच । अश्वपतिर्वै नामतो भगवन्तोऽयं केकय-

---

व्या० इतस्वोपास्यस्य सर्व्वात्मत्वं गम्यते । परिच्छिन्नोपासनस्य निन्दितत्वाद्भूम्नः क्रतुवज्ज्यायस्त्वमिति न्यायादित्याह । मूर्द्धेति ॥ भग-

उ० त्मानं वैश्वानरमध्येति तꣳ हन्ताभ्यागच्छामेति तꣳ हाभ्याजग्मुः ॥ ४ ॥ तेभ्यो ह प्राप्तेभ्यः पृथगर्हाणि कारयाञ्चकार स ह प्रातः सञ्जिहान उवाच न मे स्तेनो जनपदे न कदर्य्यो न मद्यपो नानाहिताग्निर्नाविद्वान्न स्वैरी स्वैरिणी कुतो यक्ष्यमाणो वै भगवन्तोऽहमस्मि यावदेकैकस्मा ऋत्विजे धनं दास्यामि तावद्भगवद्भ्यो दास्यामि

---

भा० श्वापत्यं कैकेयः सम्यगिममात्मानं वैश्वानरमध्येतीत्यादि समानं। तेभ्यो ह राजा प्राप्तेभ्यः पृथक् पृथगर्हाण्य-र्हणानि पुरोहितैर्भृत्यैश्च कारयाञ्चकार कारितवान् ॥ स हान्येद्यूराजा प्रातः संजिहान उवाच विनयेनोपगम्यैतद्धनं मत्त उपादध्वमिति। तैः प्रत्याख्याता मयि दोषं पश्यन्ति नूनं यतो न प्रतिगृह्णन्ति मत्तो धनमिति मन्वान आत्मनः सद्वृत्ततां प्रतिपिपादयिष्यन्नाह। न मे मम जनपदे स्तेनः परस्वहर्त्ता विद्यते। न कदर्य्योऽदाता सति विभवे। न मद्यपो द्विजोत्तमः सन्। नानाहिताग्निः शतगुः। नाविद्वानधिकारानुरूपं। न स्वैरी परदारेषु गन्ता। अत एव स्वैरिणी कुतो दुष्टचारिणी न सम्भवतीत्यर्थः। तैश्च न वयं धनार्थिन इत्युक्त आहात्वं मत्वैते धनं न गृह्णन्तीति।

---

आ० वन्तः सन्तः सम्पादयाञ्चक्रुरिति पूर्व्वेण सम्बन्धः। अश्वपतिरित्यादौ भगवन्त इति प्राचीनशालप्रभृतयः सम्बोध्यन्ते ॥ सहेत्यादि सोपस्कारं व्याचष्टे। स हान्येद्युरित्यादिना ॥

उ० वसन्तु भगवन्त इति ॥ ५ ॥ ते होचुर्येन हैवार्थेन पुरुषश्चरेत्तꣳ हैव वदेदात्मानमेवेमं वैश्वानरꣳ सम्प्रत्यध्येषि तमेव नो ब्रूहीति ॥ ६ ॥ तान् होवाच प्रातर्वः प्रतिवक्ताऽस्मीति ते ह

---

भा० यक्ष्यमाणो वै कतिभिरहोभिरहं हे भगवन्तोऽस्मि। तदर्थं क्लृप्तं धनं मा यावदेकैकस्मै यथोक्तमृत्विजे धनं दास्यामि तावत्प्रत्येकं भगवद्भ्योऽपि दास्यामि। वसन्तु भगवन्तः पश्यन्तु च मम यागमित्युक्तास्ते होचुः। येन हैवार्थेन प्रयोजनेन यं प्रति चरेद्गच्छेत्पुरुषं तं हैवार्थं वदेत्। इदमेव प्रयोजनमागमनस्येत्ययं न्यायः सतां। वयञ्च वैश्वानरज्ञानार्थिनः॥ आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि सम्यग्जानासि अतस्तमेव नोऽस्मभ्यं ब्रूहीत्युक्तस्तान् होवाच। प्रातर्वो युष्मभ्यं प्रतिवक्तास्मि प्रतिवाक्यं दातास्मीत्युक्तास्ते ह राज्ञोऽभिप्रायज्ञाः समित्पाणयः समिद्भारहस्ता अपरेद्युः पूर्वाह्णे राजानं प्रतिचक्रमिरे गतवन्तः। यत एवं महाशाला महाश्रोत्रिया ब्राह्मणाः सन्तो महाशालत्वाद्यभिमानं हित्वा समिद्भारहस्ता जातितो हीनं राजानं विद्यार्थिनो विनयेनोपजग्मुः। तथाऽन्यैर्विद्योपादित्सुभिर्भवितव्यं।

---

आ० यथोक्तं शास्त्रप्रसिद्धमिति यावत्। किन्तर्हि भगवदागमनप्रयोजनं तदाह। वयञ्चेति॥

तन्ममापि नास्तीति शङ्कां निरस्यति। आत्मानमिति॥ शिष्यभावेनोपसन्नेभ्यो विद्या दातव्या न यथा कथञ्चिदिति राज्ञोऽभि-

उ॰ समित्पाणयः पूर्वाह्णे प्रतिचक्रमिरे तान् हानुपनीयैवैतदुवाच ॥ ७ ॥ ११ ॥

औपमन्यव कं त्वमात्मानमुपास्स इति दिवमेव भगवो राजन्निति होवाचैष वै सुतेजा आत्मा वैश्वानरो ऽयं त्वमात्मानमुपास्से तस्मात्तव सुतं प्रसुतमासुतं कुले दृश्यते ॥ १ ॥ अत्स्यन्नं पश्यसि

---

भा॰ तेभ्यश्चादाद्विद्यां विवचुरनुपनीयैवोपनयनमकृत्वैव तान् यथायोग्येभ्यो विद्यामदात् तथाऽन्येनापि विद्या दातव्येत्याख्यायिकार्थः । एतद्वैश्वानरविज्ञानमुवाचेति वक्ष्यमाणेन सम्बन्धः ॥ ११ ॥

स कथमुवाचेत्याह । औपमन्यव हे कमात्मानं वैश्वानरं त्वमुपास्स इति पप्रच्छ । नन्वयमन्याय आचार्यः सन् शिष्यं पृच्छतीति । नैष दोषः । यद्वेत्थ तेन मोपसीद ततस्त ऊर्द्ध्वं वक्ष्यामीति न्यायदर्शनात् । अन्यत्राप्यप्रतिभानवति शिष्ये प्रतिभोत्पादनार्थः प्रश्नो दृष्टोऽजातशत्रोः । क्वैष तदाऽभूत् कुत एतदागादिति । दिवमेव द्युलोकमेव वैश्वा-

---

व्या॰ प्रायः । ते हेत्यादिवाक्यस्य तात्पर्यं दर्शयति । यत इति ॥ योगक्षेमार्थं राजानं प्रत्युपगमनमिष्टमेवेति मन्वानो विशिनष्टि । विद्यार्थिन इति ॥ तथेत्यत्रातःशब्दो द्रष्टव्यः । उपनयनं पादयोर्निपतनं वक्ष्यमाणवैश्वानरविज्ञानं । तेनैतदित्यस्य सम्बन्ध इति यावत् ॥ आख्यायिकातात्पर्यमुपसंहरति । यथेति ॥ ११ ॥

शिष्या हि प्रष्टारः । आचार्यस्तु प्रतिवक्तेति न्यायेन शङ्कते । नन्विति ॥ वाक्यशेषावष्टम्भेन दूषयति । नैष दोष इति ॥

उ॰ प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते मूर्द्धा त्वेष आत्मन इति होवाच मूर्द्धा ते विपतिष्यद्यन्मां नागमिष्य इति ॥ २ ॥ १२॥ अथ होवाच सत्ययज्ञं पौलुषिं प्राचीनयोग्य कं त्वमात्मानमु-

---

भा॰ नरमुपास्से भगवो राजन्निति होवाच । एष वै सुतेजाः शोभनं तेजो यस्य सोऽयं सुतेजा इति प्रसिद्धो वैश्वानर आत्मा। अयमात्मनोऽवयवभूतत्वात्त्वं त्वमात्मानमात्मैकदेशमुपास्से तस्मात्सुतेजसो वैश्वानरस्योपासनात्तव सुतमभिषुतं सोमरूपं कर्म्माणि प्रसुतं प्रकर्षेण च सुतमासुतञ्चाहर्गणादिषु तव कुले दृश्यन्ते अतीव कर्म्मिणस्त्वत्कुलीना इत्यर्थः । अत्स्यन्नं दीप्ताग्निः सन् पश्यसि च पुत्रपौत्रादिप्रियमिष्टं ॥

अन्योऽप्यन्नमत्ति पश्यति च प्रियं भवत्यस्य सुतं प्रसुतमासुतमित्यादिकर्म्मित्वं ब्रह्मवर्चसं कुले यः कश्चिदेतं यथोक्तमेवं वैश्वानरमुपास्ते मूर्द्धा तु वैश्वानरस्यैष न समस्तो वैश्वानरः । अतः समस्तबुद्ध्या वैश्वानरस्योपासनाच्छिरो मूर्द्धा ते

---

व्या॰ वृहदारण्यकश्रुत्यालोचनायामपि नैतदन्याय्यमित्याह। अन्यत्रापीति ॥ आचार्य्यस्याजातशत्रोरिति सम्बन्धः। तस्यात्मत्वे हेतुमाह। आत्मन इति ॥ एकाहादिरूपो ज्योतिष्टोमादिरहर्गणस्तत्र सुतं सोमरूपं लताद्रव्यं अहीने प्रसुतं सत्रे त्वासुतमिति भेदः। तवेति पुनर्वचनमन्वयदर्शनार्थं ॥

न केवलं प्राचीनशालनिष्ठमिदं फलं किन्त्वन्यस्यापि भवतीत्याह। अन्योऽपीति ॥ तर्हि यथोक्तवैश्वानरज्ञानादेव कृतकृत्य-

उ॰ पास्स इत्यादित्यमेव भगवो राजन्निति होवा-
चैष वै विश्वरूप आत्मा वैश्वानरोऽयं त्वमात्मान-
मुपास्से तस्मात्तव बहु विश्वरूपं कुले दृश्यते
॥ १ ॥ प्रवृत्तोऽश्वतरीरथो दासीनिष्कोऽत्स्यन्नं
पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य
ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते
चक्षुष्ट्वेतदात्मन इति होवाचान्धोऽभविष्यद्यन्मां

भा॰ विपरीतग्राहिणो व्यपतिष्यद्विपतितमभविष्यत् । यद्यदिमां
नागतोऽभविष्यत् साध्वकार्षीर्यन्मामागतोऽसीत्यभिप्रायः
॥ १२ ॥ अथ होवाच सत्ययज्ञं पौलुषिं हे प्राचीनयोग्य कं
त्वमात्मानमुपास्स इत्यादित्यमेव भगवो राजन्निति होवाच।
शुक्लनीलादिरूपत्वाद्विश्वरूपत्वमादित्यस्य सर्व्वरूपत्वाद्वा ॥
सर्व्वाणि रूपाणि हि त्वाष्ट्राणि यतोऽतो वा विश्वरूप
आदित्यस्तदुपासनात्तव बहु विश्वरूपमिहामुत्रार्थमुप-
करणं दृश्यते कुले। किञ्च त्वामनुप्रवृत्तोऽश्वतरीभ्यां युक्तो
रथोऽश्वतरीरथो दासीनिष्को दासीभिर्युक्तो निष्को
हारो दासीनिष्कोऽत्स्यन्नमित्यादि समानं। चक्षुर्वैश्वानरस्य

आ॰ तेत्याशङ्क्याह ।मूर्द्धा त्विति ॥ अक्षरार्थमुक्त्वा विवक्षितार्थमाह।
साध्विति ॥ १२ ॥ अथ प्राचीनशाले तूष्णीम्भूते जिज्ञासमाने
सत्यनन्तरमित्यर्थः । आदित्यस्य शुक्लत्वादिरूपत्वमक्ष्मे स्पष्टी
भविष्यति ॥ तस्य सर्व्वरूपत्वेन विश्वरूपत्वमुपपादयति। सर्व्वा-
णीति ॥ अत्स्यन्नमित्यादि ॥ चक्षुष्ट्वेतदित्यतः प्राक्तनमिति शेषः।
चक्षुष्ट्वेतदित्यादिवाक्यं व्याचष्टे। चक्षुरित्यादिना ॥ तत्रापि तात्पर्य्यं

उ० नागमिथ इति ॥ २ ॥ १३ ॥ अथ होवाचेन्द्रद्युम्नं भाल्लबेयं वैयाघ्रपद्य कं त्वमात्मानमुपास्स इति वायुमेव भगवो राजन्निति होवाचैष वै पृथग्वर्त्मात्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्त्वां पृथग्बलय आयन्ति पृथग्रथश्रेणयोऽनुयन्ति ॥ १ ॥ अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते प्राणस्त्वेष आत्मन इति होवाच प्राणस्त

---

भा० तु सविता। तस्य समस्तबुद्ध्योपासनादन्धो भविष्यस्त्वचुर्हीनो भविष्यो यन्मां नागमिष्य इति पूर्व्ववत् ॥ १३ ॥ अथ होवाचेन्द्रद्युम्नं भाल्लबेयं वैयाघ्रपद्य कं त्वमात्मानमुपास्स इत्यादि समानं। पृथग्वर्त्माऽऽत्मा नाना वर्त्मानि यस्य वायोरावहोद्वहादिभिर्भेदैर्वर्त्तमानस्य सोऽयं पृथग्वर्त्मात्मा वायुः। तस्मात्पृथग्वर्त्मात्मनो वैश्वानरस्योपासनात् पृथङ्नानादिक्कास्त्वां प्रति बलयो वस्त्रान्नादिलक्षणा बलय आयन्ति आगच्छन्ति। पृथग्रथश्रेणयो रथपङ्क्तयोऽपि त्वामनुयन्ति। अत्स्यन्नमित्यादि समानं। प्राणस्त्वेष आत्मन इति

---

व्या० यथा पूर्व्वं द्रष्टव्यमित्याह। पूर्व्ववदिति ॥ १३ ॥ सत्ययज्ञोपरमानन्तरमित्यथशब्दार्थः। पृथगित्यतः प्राक्तनमादिपदेन गृहीतं। पृथग्धर्म्मेति प्रतीकमादाय व्याचष्टे। नानेति ॥ चाभिमुख्येनागच्छन्नावहः। ऊर्द्धेन वहतीत्युद्वहः ॥ तस्मात्त्वामित्यादि व्याचष्टे। तस्मादिति ॥ नानादिक्का नानाविधासु दिक्षुभवा इत्येतत्। अत्स्यन्नमित्यादि समानमित्यन्नादिपदमुपास्ते इत्यन्तवाक्यसङ्ग्र-

उ० उदक्रमिष्यद्यन्मां नागमिष्य इति ॥ २ ॥ १४ ॥
अथ होवाच जनꣳ शार्कराक्ष्य कं त्वमात्मानमु-
पास्स इत्याकाशमेव भगवो राजन्निति होवाचैष
वै बहुल आत्मा वैश्वानरो ऽयं त्वमात्मानमुपास्से
तस्मात्त्वं बहुलोऽसि प्रजया च धनेन च ॥ १ ॥
अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भव-
त्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानर-
मुपास्ते सन्देहस्त्वेष आत्मन इति होवाच सन्दे-

---

भा० होवाच प्राणस्ते तव उदक्रमिष्यदुत्क्रान्तो ऽभविष्यद्यन्मां नागमिष्य इति ॥१४॥ अथ होवाच जनमित्यादि समानं। एष वै बहुल आत्मा वैश्वानरः। बहुलत्वमाकाशस्य सर्व्वगतत्वाद्बहुलगुणोपासनाच्च। त्वं बहुलोऽसि प्रजया पुत्रपौत्रादिलक्षणया धनेन च हिरण्यादिना। सन्देहस्त्वेषः सन्देहो मध्यमशरीरं वैश्वानरस्य। दिहतेर्धातोरुपचर्य्यार्थत्वान्मांसरुधिरास्थ्यादिभिश्च बहुलं शरीरं। तत्सन्देहस्ते तव शरीरं व्यशीर्य्यत शीर्णमभविष्यद्यन्मां नागमिष्य इति॥१५॥

---

आ० हार्थमुत्तरवाक्येऽप्यभिप्रायसाम्यं मत्वाह। प्राणस्त्विति॥ १४॥ इन्द्रद्युम्नोपरमानन्तर्य्यमथशब्दार्थः। अन्नादिपदमेष इत्यास्मात्प्राक्तनवाक्यसंग्रहार्थं। कथमाकाशस्य बहुलत्वमत आह। बहुलत्वमिति॥ कथं शरीरस्य मध्यमे भागे संशयवाची सन्देहशब्दो वर्त्तते तत्राह। दिहतेरिति॥ आकाशस्य सर्व्वगतत्वेन बहुलत्वादेहस्य च परिच्छिन्नत्वेन तदभावात्। कथमाकाशं वैश्वानरस्य शरीरं स्यादित्याशङ्क्याह। मांसेति॥ तच्छरीरमिति सम्बन्धः॥१५॥

उ० हस्ते व्यशीर्य्यद्यन्मां नागमिष्य इति ॥ २ ॥ १५ ॥ अथ होवाच बुडिलमाश्वतराश्विं वै याघ्रपद्य कं त्वमात्मानमुपास्स इत्यप एव भगवो राजन्निति होवाचैष वै रयिरात्मा वैश्वानरो ऽयं त्वमात्मानमुपास्से तस्मात्त्वꣳ रयिमान् पुष्टिमानसि ॥ १ ॥ अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते बस्तिस्त्वेष आत्मन इति होवाच बस्तिस्ते व्यभेत्स्यद्यन्मां नागमिष्य इति ॥ २ ॥ १६ ॥

---

भा० अथ होवाच बुडिलं आश्वतराश्विमित्यादि समानं। एष वै रयिरात्मा वैश्वानरो धनरूपः। अद्भ्योऽन्नं ततो धनमिति। तस्माद्रयिमान् धनवांस्त्वं पुष्टिमांश्च शरीरेण पुष्टेश्चान्ननिमित्तत्वात्। बस्तिस्त्वेष आत्मनो वैश्वानरस्य बस्तिर्मूत्रसङ्ग्रहस्थानं बस्तिस्ते व्यभेत्स्यद्भिन्नो ऽभविष्यद्यन्मां नागमिष्य इति ॥ १६ ॥

---

आ० जनस्योपरमानन्तरमथशब्दार्थः। कथमबात्मको वैश्वानरो रयिरिति धनेन निर्दिश्यते तत्राह। अद्भ्य इति॥ आयुर्वैघृतमितिवत्कार्य्यवाचकेन कारणं लक्ष्यत इत्यर्थः। तस्माद्यथोक्तवैश्वानरोपासनादित्येतद्धनरूपवैश्वानरोपासनाद्धनवानित्येव वक्तव्ये कथं पुष्टिमानित्यधिका वाऽऽपस्तत्राह। पुष्टिश्चेति॥ मूत्राशयो धनुर्वक्रो बस्तिरित्यभिधीयत इत्याशयेनाह। बस्तिरिति॥ १६॥

उ० अथ होवाचौद्दालकमारुणिं गौतम कं त्वमा-
त्मानमुपास्स इति पृथिवीमेव भगवो राजन्निति
होवाचैष वै प्रतिष्ठात्मा वैश्वानरोऽय त्वमात्मान-
मुपास्से तस्मात्त्वं प्रतिष्ठितोऽसि प्रजया च पशु-
भिश्च ॥ १ ॥ अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति
प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं
वैश्वानरमुपास्ते पादौ त्वेतावात्मन इति होवाच
पादौ ते व्यम्लास्येतां यन्मां नागमिष्य इति ॥ २ ॥
१७॥ तान् होवाचैते वै खलु यूयं पृथगिवेममात्मानं

---

भा० अथ होवाचौद्दालकमित्यादि समानं । पृथिवीमेव भगवो राजन्निति होवाच । एष वै प्रतिष्ठा पादौ वैश्वानरस्य । पादौ ते व्यम्लास्येतां विम्लानावभविष्येतां शिथिलीभूतौ यन्मां नागमिष्य इति ॥ १७ ॥ तान् यथोक्तवैश्वानरदर्शनवतो ह उवाच । एते यूयं वै खल्वित्यनर्थकौ यूयं

---

आ० प्राचीनशालप्रभृतिषु पञ्चसु मौनमातिष्ठमानेष्वनन्तरमित्यथशब्दार्थः । उद्दालकान्तेषूपासन्नेषु सामस्त्येन वैश्वानरविद्यां वक्तुकामस्तेषां मिथ्याज्ञानमनुवदति । तानित्यादिना ॥ अनर्थकाविवानर्थकौ निपातौ न त्वनर्थकावेव । तेषां मिथ्याज्ञानत्वसिद्धिस्मारकत्वाद्यूयमित्यन्वयार्थैं । प्रागुक्तमपि पाठक्रमेण पुनरनूद्य पृथगिव विद्वांस इति सम्बन्धः । यथा जात्यन्धा हस्तिदर्शने भिन्नदृष्टयो भवन्ति तथा यूयं वैश्वानरमात्मानमेकमपि सर्व्वात्मकं सन्तं भिन्नमिव विद्वांसः परिच्छिन्नात्तृरूपेणात्मानं बुद्धवन्तः । तथा च मिथ्यादर्शिनो यूयं प्रागेव प्रत्यवायान्मामागतवन्तः साधु कृतवन्त इत्यर्थः ॥ १७ ॥ प्रधानविद्यां वक्तुं पातनिकां

उ॰ वैश्वानरं विद्वाꣳसोऽन्नमत्थ यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति ॥ १ ॥

---

भा॰ पृथगिवापृथक् सन्तमिममेकं वैश्वानरं विद्वाꣳसोऽन्नमत्थ परिच्छिन्नात्मबुद्ध्या एतद्धस्तिदर्शन इव जात्यन्धाः ॥ यस्त्वेतमेवं यथोक्तावयवैर्द्युमूर्द्धादिभिर्विशिष्टमेकं प्रादेशमात्रं प्रादेशैर्द्युमूर्द्धादिभिः पृथिवीपादान्तैरध्यात्मं मीयते ज्ञायत इति प्रादेशमात्रं। मुखादिषु वा करणेष्वकर्तृत्वेन मीयत इति प्रादेशमात्रः। द्युलोकादिपृथिव्यन्तप्रदेशपरिमाणो वा प्रादेशमात्रः। प्रकर्षेण शास्त्रेणादिश्यन्त इति प्रादेशा द्युलोकादय एव तावत्परिमाणः प्रादेशमात्रः। शाखान्तरे तु मूर्द्धादिश्चिबुकप्रतिष्ठ इति प्रादेशमात्रं कल्पयन्ति। इह तु न तथाभिप्रेतः। तस्य ह वा एतस्यात्मन इत्याद्युपसंहारात्॥ प्रत्यगात्मतया ऽभिविमीयतेऽह-

---

व्या॰ कृत्वा तामिदानीमुपदिशति। यस्त्वित्यादिना॥ एतमेवम्भूतं यस्तूपास्ते स सर्वेष्वन्नमत्तीति सम्बन्धः॥ एवं शब्दार्थमाह। यथोक्तेति॥ एवं समस्तं त्रैलोक्यात्मकमिति यावत्। प्रादेशमात्रमित्येतद्विभजते। प्रादेशैरिति। यथोक्तैराधिदैविकावयवैरध्यात्मं प्रत्यगात्मन्येवायं मीयत इति व्युत्पत्त्या प्रादेशमात्रस्तमिति यावत्॥ प्रकारान्तरेण व्याचष्टे। मुखादिषु वेति॥ तेषु हि प्रदेशेष्वयमकर्तृत्वेन साक्षितया मीयत इति व्युत्पत्त्या तथोच्यत इत्यर्थः। विधान्तरेण व्याचष्टे। द्युलोकादिति॥ अर्थान्तरमाह। प्रकर्षेणेति॥ आमनन्ति चैनमस्मिन्निति न्यायेन पक्षान्तरमाह। शाखान्तरे त्विति॥ अस्तु तर्हि जाबालश्रुत्यनुसारेण मूर्द्धानमारभ्याधरफल-

उ॰ तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्द्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मात्मा सन्देहो बहुलो बस्तिरेव रयिः पृथिव्येव पादा उर

---

भा॰ मिति ज्ञायत इत्यभिविमानस्तमेतमात्मानं वैश्वानरं विश्वान्नरान्नयति पुण्यपापानुरूपां गतिं। सर्व्वात्मैष ईश्वरो वैश्वानरो विश्वो नर एव वा सर्व्वात्मत्वात्। विश्वैर्वा नरैः प्रत्यगात्मतया प्रविभज्य नीयत इति वैश्वानरः। तमेवमुपास्ते यः सोऽदन्नन्नादी सर्व्वेषु लोकेषु द्युलोकादिषु सर्व्वेषु भूतेषु चराचरेषु सर्व्वेष्वात्मसु शरीरेन्द्रियमनोबुद्धिषु तेषु ह्यात्मकल्पनाव्यपदेशः प्राणिनामन्नमत्ति। वैश्वानरवित्सर्व्वात्मा सन्नन्नमत्ति। न यथाज्ञः पिण्डमात्राभिमानः सन्नित्यर्थः। कस्मादेवं। यस्मात्तस्य ह वै प्रकृतस्यैवैतस्यात्मनो वैश्वानरस्य मूर्द्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मात्मा सन्देहो बहुलो बस्तिरेव रयिः पृथिव्येव पादौ

---

व्या॰ पर्य्यन्ते देहावयवे सम्पादितो वैश्वानरः प्रादेशमात्र इति नेत्याह। इह त्विति॥ सर्व्वात्मत्वेन वैश्वानरस्योपसंहारदर्शनाज्जाबालश्रुतिरनुसर्त्तव्येत्यर्थः॥ विशेषणान्तरं व्याचष्टे। प्रत्यगात्मतयेति॥ सर्व्वेश्वरत्वं सर्व्वात्मत्वं सर्व्वप्रत्यक्त्वं वा हेतूकृत्य वैश्वानरशब्दमनेकधा व्याकरोति। विश्वानित्यादिना॥ ईश्वरो वैश्वानर इत्यत्र वैश्वानरपदमुभयत्र सम्बध्यते। स वैश्वानरविदन्नमदन् सर्व्वेषु लोकादिषु स्थित्वाऽन्नमत्तीति सम्बन्धः। कथमात्मशब्देन शरीरादयो गृह्यन्ते तत्राह। तेषु हीति॥ सर्व्वेषु लोकेष्वित्यादिवाक्यस्य तात्पर्य्यार्थं दर्शयति। वैश्वानरविदिति॥ वैश्वानरोपासकः सर्व्वात्मा सन्नन्नमत्तीत्येवं कस्माद्धेतोर्निश्चितमित्याशङ्का-

उ० एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनो ऽन्वाहार्य्यपचन आस्यमाहवनीयः ॥ १८ ॥ तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयꣳ स यां प्रथमामाहुतिं जुहुयात्तां जुहुयात्प्राणाय स्वाहेति प्राणस्तृप्यति ॥ १ ॥ प्राणे तृप्यति चक्षुस्तृप्यति

---

भा० अथ वा विध्यर्थमेतद्वचनमेव उपास्य इति। अथेदानीं वैश्वानरविदो भोजनेऽग्निहोत्रं संपिपादयिषन्नाह एतस्य वैश्वानरस्य भोक्तुरुर एव वेदिराकारसामान्यात्। लोमानि बर्हिर्वेद्यामिवोरसि लोमान्यास्तीर्णानि दृश्यन्ते। हृदयं गार्हपत्यो हृदयाद्धि मनः प्रणीतमिवानन्तरीभवति। अतो ऽन्वाहार्य्यपचनोऽग्निर्मनः। आस्यं मुखमाहवनीयः। आहवनीयो हूयतेऽस्मिन्नन्नमिति॥१८॥ तत्रैवं सति यद्भक्तं भोजनकाले आगच्छेद्भोजनार्थं तद्धोमार्थं तद्धोमीयं

---

व्या० मनूद्य हेतुप्रदर्शनपरत्वेनोत्तरं वाक्यमुपादत्ते। कस्मादित्यादिना॥ वैश्वानरस्य सर्व्वात्मत्वात्तदुपासकस्यापि तदात्मतया सर्व्वात्मत्वादसौ सर्व्वात्मभूतः सर्व्वत्रान्नमत्तीति युक्तमित्यर्थः॥ तस्येत्यादिवाक्यस्य तात्पर्य्यान्तरमाह। अथ वेति॥ प्रधानविद्यामुक्ता तदङ्गप्राणाग्निहोत्रं दर्शयितुकामो भूमिकां करोति। अथेति॥ सम्पादयितुमिच्छन्नादौ तदङ्गान्यश्वपतिराहेत्यर्थः। वेदिरिति स्थण्डिलमात्रं गृह्यते। अग्निहोत्रे तावन्मात्रस्योपयुक्तत्वादितरस्य दर्शपूर्णमासाद्यं गत्वा वेद्यामास्तीर्य्यन्ते ये दर्भा बर्हिःशब्देनोच्यन्ते। हृदयस्य गार्हपत्यत्वं मनः प्रणयनहेतुत्वात्प्रणीतमुत्पन्नमिवेत्यर्थः। आहवनीयसादृश्यं च मुखस्य दर्शयति। आहवनीय इति॥१८॥ एवं सतीत्युक्तन्यायेनाग्निहोत्रे सम्पा-

उ॰ चक्षुषि तृप्यत्यादित्यस्तृप्यत्यादित्ये तृप्यति द्यौस्तृप्यति दिवि तृप्यन्त्यां यत्किञ्च द्यौश्चादित्यश्चाधितिष्ठतस्तत्तृप्यति तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥ १९ ॥ अथ यां द्वितीयां जुहुयात्तां जुहुयाद्व्यानाय स्वाहेति व्यानस्तृप्यति ॥ १ ॥ व्याने तृप्यति श्रोत्रं तृप्यति श्रोत्रे तृप्यति चन्द्रमास्तृप्यति चन्द्रमसि तृप्यति दिशस्तृप्यन्ति दिक्षु तृप्यन्तीषु यत्किञ्च दिशश्च चन्द्रमाश्चाधितिष्ठन्ति तत्तृप्यति तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥ २० ॥ अथ यां तृतीयां जुहुयात्तां जुहुयादपानाय स्वाहेत्यपानस्तृप्यति ॥ १ ॥ अपाने

---

भा॰ तद्धोतव्यं अग्निहोत्रसम्पन्मात्रस्य विवक्षितत्वान्नाग्निहोत्राङ्गेति कर्त्तव्यताप्राप्तिः । तत्र स भोक्ता यां प्रथमामाहुतिं जुहुयात्तां कथं जुहुयादित्याह । प्राणाय स्वाहेत्यनेन मन्त्रेणाहुतिशब्दादवदानप्रमाणमन्नं प्रक्षिपेदित्यर्थः । तेन

---

घ्या॰ दिते सतीत्यर्थः। सम्पादितस्याग्निहोत्रत्वस्य सामान्यादग्न्युद्धरणादीनि तदङ्गान्यत्र भवेयुरित्याशङ्क्य तद्बुद्धिमात्रस्य विवक्षितत्वान्मैवमित्याह। अग्निहोत्रेति॥ इहेति वैश्वानरविदो भोजनमुच्यते॥ प्रकृतहोमान्तावान्तरविभागमाह । स भोक्तेति ॥ कथमिति मन्त्रो वा द्रव्यपरिमाणं वा फलं वा पृच्छ्यते तत्र प्रथमं प्रत्याह ।

उ॰ तृप्यति वाक्तृप्यति वाचि तृप्यत्यामग्निस्तृप्यत्यग्नौ तृप्यति पृथिवी तृप्यति पृथिव्यां तृप्यत्यां यत्किञ्च पृथिवी चाग्निश्चाधितिष्ठतस्तत्तृप्यति तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥ २१ ॥ अथ यां चतुर्थीं जुहुयात्तां जुहुयात् समानाय स्वाहेति समानस्तृप्यति ॥ १ ॥ समाने तृप्यति मनस्तृप्यति मनसि तृप्यति पर्जन्यस्तृप्यति पर्जन्ये तृप्यति विद्युत्तृप्यति विद्युति तृप्यत्यां यत्किञ्च विद्युच्च पर्जन्यश्चाधितिष्ठतस्तत्तृप्यति तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥ २२ ॥ अथ यां पञ्चमीं जुहुयात्तां जुहुयादुदानाय स्वाहेत्युदानस्तृप्यति ॥ १ ॥ उदाने तृप्यति वायुस्तृप्यति वायौ तृप्यत्याकाश-

---

भा॰ द्यौश्चेत्यादि तृप्यति प्राणस्तृप्यति प्राणे तृप्यति चक्षुस्तृप्यति चक्षुरादित्यो यच्चान्यद्द्यौश्चादित्यश्च स्वामित्वेनाधितिष्ठत-स्तच्च तृप्यति तस्य तृप्तिमनु स्वयं भुञ्जानस्तृप्यत्येवं प्रत्यक्षं । किञ्च प्रजादिभिश्च। तेजः शरीरस्था दीप्तिरुज्ज्वलत्वं प्रागल्भ्यं

---

आ॰ प्राणायेति ॥ यदि द्वितीयस्तत्राह । आहुतीति ॥ अवदानस्य प्रमाणं परिमाणं कर्म्मिणां परिमाणं प्रसिद्धं तेन परिमितमिति यावत् । तृतीयश्चेत्तत्राह । तेनेति ॥ भुञ्जानस्य तृप्तौ प्रत्यक्षं प्रमाणं प्राणादेस्तृप्तौ शास्त्रमिति विभागमभिप्रेत्याह । प्रत्यक्ष-

उ० स्तृप्यत्याकाशे तृप्यति यत्किञ्च वायुश्चाकाशश्चाधितिष्ठतस्तत्तृप्यति तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति॥२॥२३॥

स य इदमविद्वानग्निहोत्रं जुहोति यथाङ्गारानपोह्य भस्मनि जुहुयात्तादृक् तत्स्यात्॥१॥ अथ

---

भा० वा ब्रह्मवर्चसं वृत्तस्वाध्यायनिमित्तं तेजः॥ १९ ॥ अथ यां द्वितीयां॥ २० ॥ अथ यां तृतीयां ॥ २१ ॥ अथ यां चतुर्थीं ॥ २२ ॥ अथ यां पञ्चमीमिति समानं ॥ २३ ॥

स यः कश्चिदिदं वैश्वानरदर्शनं यथोक्तमविद्वान्सन्नग्निहोत्रं प्रसिद्धं जुहोति यथाङ्गारानाहुतियोग्यानपोह्यानाहुतिस्थाने भस्मनि जुहुयात्तादृक् तत्तुल्यं तस्य तदग्निहोत्रहवनं स्याद्वैश्वानरविदोऽग्निहोत्रमपेक्ष्येति प्रसिद्धाग्निहोत्रनिन्दया वैश्वानरविदोऽग्निहोत्रं स्तूयते। अतश्चैतद्विशिष्टमग्निहोत्रं कथं अथ य एतदेवं विद्वान-

---

आ० मिति॥ प्रजादिभिश्च भोक्ता तृप्यतीति सम्बन्धः॥१९॥२०॥ ॥२१॥२२॥२३॥

प्रसिद्धाग्निहोत्रनिन्दाद्वारेण वैश्वानरविदो यथोक्तमग्निहोत्रमवश्यकर्त्तव्यतायै स्तौति। स यः कश्चिदित्यादिना॥ प्राणाग्निहोत्रस्य वैशिष्ट्ये हेत्वन्तरमतःशब्दोपात्तं प्रश्नपूर्व्वकं प्रकटयति। कथमित्यादिना॥ नैयमिकाग्निहोत्रनिन्दाद्वारा प्राणाग्निहोत्रस्तुत्यन्तरं विधान्तरेण तस्यैव निरवद्यता कीर्त्त्यत इत्यथशब्दार्थः। एतदिति वैश्वानरदर्शनमुक्तं। एवमिति॥ वैश्वानरस्योक्तसर्व्वात्मत्वादिप्रकारेणेत्यर्थः। अग्निहोत्रमिति साम्यादिकर्माग्निहोत्रं गृह्यते। कथमिदमुक्तार्थं सर्व्वेषु लोकेष्वन्नमत्तीति

उ॰ य एतदेवं विद्वानग्निहोत्रं जुहोति तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु हुतं भवति ॥ २ ॥
तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवꣳ हास्य सर्वे पाप्मानः प्रदूयन्ते य एतदेवं विद्वानग्नि-

---

भा॰ ग्निहोत्रं जुहोति तस्य यथोक्तवैश्वानरविज्ञानवतः सर्व्वेषु लोकेष्वित्याद्युक्तार्थं। हुतमन्नमत्तीत्यनयोरेकार्थत्वात्॥

किञ्च तद्यथा इषीकायास्तूलमग्रमग्नौ प्रोतं प्रक्षिप्तं प्रदूयेत प्रदह्येत क्षिप्रमेवं हास्य विदुषः सर्व्वात्मभूतस्य सर्व्वान्नानामत्तुः सर्व्वे निरवशिष्टाः पाप्मानो धर्म्माधर्म्माख्या अनेकजन्मसञ्चिता इह च प्राक् ज्ञानोत्पत्तेर्ज्ञानसहभाविनश्च प्रदूयन्ते प्रदह्येरन्। वर्त्तमानशरीरारम्भकपापवर्ज्जं लक्ष्यं प्रतिमुक्तेषुवत् प्रवृत्तफलत्वात्तस्य न दाहः।

अथ य एतदेवं विद्वानग्निहोत्रं जुहोति भुङ्क्ते। यद्यपि चण्डालायोच्छिष्टानर्हायोच्छिष्टं प्रयच्छेदुच्छिष्टं दद्यात् प्रतिषिद्धमुच्छिष्टदानं यद्यपि कुर्य्यादात्मनि हैवास्य चण्डा-

---

व्या॰ वाक्यं व्याख्यातं। तस्य सर्व्वेषु लोकादिषु हुतं भवति इत्यन्यादृशमिदं वाक्यं तन्नाह। हुतमिति॥

इतश्च वैश्वानरविद्यावतोऽग्निहोत्रं विशिष्टमिति वक्तुं वैश्वानरविद्यां स्तौति। किञ्चेति॥ तत्र वैश्वानरविद्यामाहात्म्ये दृष्टान्त इति यावत्। ईषिका मुञ्जामध्यवर्त्तिदृशास्येतत्॥ सर्व्वशब्दात्प्रारब्धकर्म्मणोऽपि दाहमाशङ्क्याह। वर्त्तमानेति॥

वैश्वानरविद्याया महाफलत्वे सिद्धे तद्वतोऽग्निहोत्रं विशिष्टमिति तत्कर्त्तुः सर्व्वदोषास्पर्शित्वमित्याशयेनाह। य एतदिति॥

उ० होत्रं जुहोति ॥ ३ ॥ तस्मादु हैवंविद्यपि चण्डालायोच्छिष्टं प्रयच्छेदात्मनि हैवास्य तद्वैश्वानरे हुतꣳ स्यादिति तदेष श्लोकः॥ ४॥ यथेह क्षुधिता बाला मातरं पर्य्युपासत एवꣳ सर्वाणि भूतान्यग्निहोत्रमुपासत इत्यग्निहोत्रमुपासत इति ॥ ५ ॥ २४ ॥ इति छान्दोग्योपनिषत्सु पञ्चमः प्रपाठकः॥ ॐ तत्सत् ॥

---

भा० तदेहस्थे वैश्वानरे तद्धुतं स्यान्नाधर्म्मनिमित्तमिति विद्यामेव स्तौति । तदेतस्मिन्स्तुत्यर्थे श्लोको मन्त्रोऽप्येष भवति । यथेह लोके क्षुधिता बुभुक्षिता बाला मातरं पर्य्युपासते कदा नो मातान्नं प्रयच्छतीत्येवं सर्व्वाणि भूतान्यन्नादान्येवंविदोऽग्निहोत्रं भोजनमुपासते कदा त्वसौ भोच्यत इति जगत्सर्व्वं विद्वद्भोजनेन तृप्तं भवतीत्यर्थः । द्विरुक्तिरध्यायपरिसमाप्त्यर्था ॥ २४ ॥ इति श्रीमद्गोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्य्यस्य श्रीमच्छङ्करभगवतः कृतौ छान्दोग्योपनिषद्विवरणे पञ्चमः प्रपाठकः ॥ ५ ॥

---

था० विद्यामेव विद्यास्तुतिद्वाराऽग्निहोत्रमिति यावत् स्तुत्यर्थेऽग्निहोत्रस्य स्तुतिरूपो योऽर्थस्तस्मिन्नित्येतन्मन्त्रस्य तात्पर्य्यार्थं दर्शयति । जगदिति ॥ विदुषो वैश्वानरात्मनः सर्व्वात्मत्वादित्यर्थः ॥ ॥ २४ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्य्यश्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानकृतायां छान्दोग्यभाष्यटीकायां पञ्चमः प्रपाठकः समाप्तः ॥ ५ ॥

ॐ तत्सत् ॥

उ॰ हरिः ॐ ॥ श्वेतकेतुर्हारुणेय आस तꣳ ह पितोवाच श्वेतकेतो वस ब्रह्मचर्य्यं न वै सोम्याऽस्मत्कुलीनोऽननूच्य ब्रह्मबन्धुरिव भवतीति ॥

---

भा॰ ॐश्वेतकेतुर्हारुणेय आसेत्याद्यध्यायसम्बन्धः। सर्व्वं खल्विदं ब्रह्म तज्जलानित्युक्तं कथं तस्माज्जगदिदं जायते तस्मिन्नेव च लीयतेऽनिति च तेनैवेत्येतद्वक्तव्यं। अनन्तरञ्चै-कस्मिन्भुक्ते विदुषि सर्व्वं जगत्तृप्तं भवतीत्युक्तं तदेकत्वे स-दात्मनः सर्व्वभूतस्थस्योपपद्यते नात्मभेदे कथञ्च तदेक-त्वमिति तदर्थोऽयं षष्ठोऽध्याय आरभ्यते। पितापुत्रा-ख्यायिका विद्यायाः सारिष्ठत्वप्रदर्शनार्था। श्वेतकेतुरिति नामतो ह इत्यैतिह्यार्थं। आरुणेयोऽस्य पौत्र आस बभूव। तं पुत्रं ह्यारुणिः पिता योग्यं विद्याभाजनं मन्वानस्तस्यो-पनयनकालात्ययञ्च पश्यन्नुवाच हे श्वेतकेतोऽनुरूपं गुरुं कुलस्य नो गत्वा वस ब्रह्मचर्य्यं। न चैतद्युक्तं यदस्मत्कुलीनो

---

ष्या॰ ॐ वर्त्तिष्यमाणाध्यायस्याऽतीतेन सन्दर्भेण सम्बन्धं वक्तुं प्रतीकं गृहीत्वा तं प्रतिजानीते। श्वेतकेतुरिति॥ तमेव प्रकटयन्प्रथमं तृतीयेनाध्यायेनास्य सम्बन्धं कथयति। सर्व्वमिति॥ एतद्वक्तव्यं तदर्थोऽयं षष्ठोऽध्याय आरभ्यत इति सम्बन्धः। व्यवहितसम्बन्धमु-क्त्वाऽव्यवहितं तमादर्शयति। अनन्तरञ्चेति॥ अध्यायतात्पर्य्यमुक्त्वा-ऽऽख्यायिकातात्पर्य्यमाह। पितेति॥ पिता प्रतिवक्ता पुत्रश्च प्रष्टे-त्येवं विधेयमाख्यायिका। सा च विद्यायाः सारिष्ठत्वद्योतनार्था। पिता हि पुत्राय सारतममेवोपदिशतीत्यर्थः। कुलस्यानुरूपमि-त्यादिवचनान्न कुलाधमस्य गुरुत्वमिति गम्यते ब्रह्मचर्य्यमध्ययना-र्थमिति शेषः। गत्वेत्यादिवचनान्माणवकाधीनमध्ययनमिति

उ॰ स ह द्वादशवर्ष उपेत्य चतुर्विंशतिवर्षः सर्वान् वेदानधीत्य महामनाऽनूचानमानी स्तब्ध एयाय तꣳ हि पितोवाच श्वेतकेतो यन्नु सौम्येदं महामनाऽअनूचानमानी स्तब्धोऽस्युत तमादेशम-

भा॰ हे सोम्याननूच्यानधीत्य ब्रह्मबन्धुरिव भवतीति ब्राह्मणान् बन्धून् व्यपदिशति न स्वयं ब्राह्मणवृत्त इति ॥

तस्मातः प्रवासोऽनुमीयते पितुः । येन स्वयं गुणवान् सन्पुत्रं नोपनेष्यति स पित्रोक्तः श्वेतकेतुर्द्वादशवर्षः सन्नुपेत्याचार्य्यं यावच्चतुर्विंशतिवर्षो वभूव तावत्सर्व्वान् वेदांश्चतुरोऽप्यधीत्य तदर्थञ्च बुद्ध्वा महामना महद्गम्भीरं मनो यस्य स ममात्मानमन्यैर्मन्यमानं मनो यस्य सोऽयं महामना अनूचानमान्यनूचात्मानं मन्यत इत्येवं शीलो यः सोऽनुचानमानी स्तब्धोऽप्रणतस्वभाव एयाय गृहं । तमेवम्भूतं ह्यात्मनोऽनुरूपं शीलं स्तब्धं मानिनं पुत्रं दृष्ट्वा पितोवाच सद्धर्मावतारचिकीर्षया श्वेतकेतो यन्न्विदं महामना अनूचानमानी स्तब्धश्चासि कस्तेऽतिशयः प्राप्त उपाध्यायादुतापि तमादेशमादिश्यत इत्यादेशः । केवलशास्त्राचार्य्योपदेशगम्यमित्येतद्येन वा परं ब्रह्मादिश्यते ऽसावादेशस्तमप्राक्ष्यः पृष्टवानस्याचार्य्यं तमादेशं विशिनष्टि येनादेशेन श्रुते-

आ॰ सूचितं । माभूदुपनयनमध्ययनस्वेत्याशङ्क्याह । न चैतद्युक्तमिति ॥

किमिति पिता स्वयमेवोपनीय पुत्रं नाध्यापयति तत्राह । तस्येति ॥ अतःशब्दः सङ्गृहविषयः । अनुमानं कल्पनं तत्र

उ॰ प्राक्ष्यो येनाश्रुतꣳ श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति कथं नु भगवः स आदेशो भवतीति यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं

---

भा॰ नाश्रुतमप्यन्यच्छ्रुतं भवत्यमतं मतमतर्कितं तर्कितं भवत्यविज्ञातं विज्ञातमनिश्चितं निश्चितं भवतीति ॥ सर्व्वानपि वेदानधीत्य सर्व्वं चान्यद्वेद्यमधिगम्याप्यकृतार्थ एव भवति यावदात्मतत्त्वं न जानात्याख्यायिकाऽतोऽवगम्यते। तदेतदद्भुतं श्रुत्वाह कथञ्चेत्तदप्रसिद्धमन्यविज्ञानेनान्यद्विज्ञातं भवतीत्येवं मन्वानः पृच्छति कथं नु केन प्रकारेण हे भगवः स आदेशो भवतीति। यथा स आदेशो भवति तच्छृणु हे सोम्य। यथा लोके एकेन मृत्पिण्डेन रुचककुम्भादिकारणभूतेन विज्ञातेन सर्व्वमन्यत्तद्विकारजातं मृण्मयं मृद्विकारजातं विज्ञातं स्यात्। कथं मृत्पिण्डे कारणे विज्ञाते कार्य्यमन्यद्विज्ञातं स्यात्। नैष दोषः। कारणेनानन्यत्वात् कार्य्यस्य

---

आ॰ कल्पकमाह। येनेति ॥ अनूचानोऽनुवचनसमर्थः। कर्म्मव्युत्पत्त्या करणव्युत्पत्त्या चादेशशब्दो व्याख्यातः ॥ किमित्यधीत्य सर्व्ववेदमधिगततदर्थं च पुत्रमात्मविद्यामधिकृत्य पिता पृच्छति तस्य सर्व्ववेदाध्ययनादिनैव कृतार्थत्वादित्याशङ्क्याह। सर्व्वानपीति ॥ तदेतदद्भुतं श्रुत्वा हेत्युक्तं विवृणोति। कथं न्विति ॥ मृण्मयमित्यस्य व्याख्या मृद्विकारजातमिति। तद्यथा मृत्पिण्डेन विज्ञातेन विज्ञातं स्यात्तथाऽन्यदपि सर्व्वं कारणेन विज्ञातेन तद्विकारजातं विज्ञातं भवतीति योजना ॥ अन्यविज्ञानादन्यविज्ञानमदृष्टत्वादश्लिष्टमिति शङ्कते। कथमिति ॥ कार्य्य-

उ० स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यं ॥ ४ ॥ यथा सोम्यैकेन लोहमणिना सर्वं लोहमयं विज्ञातꣳ स्याद्वाचारम्भणं विकारो नामधेयं लोहमित्येव सत्यं ॥ ५ ॥ यथा सोम्यैकेन नखनिकृन्तनेन सर्वं कार्ष्णायसं विज्ञातꣳ स्याद्वा-

---

भा० यन्मन्यसेऽन्यस्मिन् विज्ञातेऽन्यन्न ज्ञायत इति । सत्यमेवं स्यात् । यद्यन्यत्कारणात्कार्य्यं स्यान्न त्वेवमन्यत्कारणात्कार्य्यं ॥ कथं तर्हीदं लोके इदं कारणमयमस्य विकार इति । शृणु वाचारम्भणं वागारम्भणं वागालम्बनमित्येतत् । कोऽसौ । विकारो नामधेयं । नामैव नामधेयं स्वार्थे धेयट्प्रत्ययः । वागालम्बनमात्रं नामैव केवलं विकारो नामवस्त्वस्ति परमार्थतो मृत्तिकेत्येव मृत्तिकैव सत्यं वस्त्विति ॥ यथा च सोम्यैकेन लोहमणिना सुवर्णपिण्डेन सर्व्वमन्यद्विकारजातं कटकमुकुटकेयूरादिविज्ञातं स्यात् । वाचारम्भणमित्यादि समानं । यथा सोम्यैकेन नखनिकृन्तनेनोपलक्षितेन कृष्णायसपिण्डेनेत्यर्थः । सर्व्वं कार्ष्णायसं कृष्णायसो विकारजातं विज्ञातं स्यात् । समानमन्यत् । अनेकदृष्टान्तोपादानं दार्ष्टा-

---

आ० कार्य्यायोरन्यत्वासिद्धेर्म्मैवमिति परिहरति । नैष दोष इति ॥ तदेव स्फुटयति । यन्मन्यस इत्यादिना ॥ अन्यत्वाभावे लोकप्रसिद्धिविरोधं शङ्कते । कथं तर्हीति ॥ वाचारम्भणमित्यत्र वाचेति तृतीया षष्ठ्यर्थे द्रष्टव्या ॥ नामधेयमित्यस्यार्थं कथयति । नामैवेति ॥ विकारस्य मिथ्यात्वे किं परमार्थतोऽस्तीत्याशङ्क्याह ॥

उ० वारम्भणं विकारो नामधेयं कृष्णायसमित्येव सत्यं एवꣳ सोम्य स आदेशो भवतीति ॥ ६ ॥ न वै नूनं भगवन्तस्त एतदवेदिषुर्यद्ध्येतदवेदिष्यन्

---

भा० न्तिकानेकभेदानुगमार्थं दृढप्रतीत्यर्थञ्चैव सोम्य स आदेशो यो मयोक्तो भवतीत्युक्तवति पितर्य्याहेतरो न वै नूनं भगवन्तः पूजावन्तो गुरवो मम ये ते एतद्भगवदुक्तवस्तुनाऽवेदिषुर्न विज्ञातवन्तो नूनं ॥ यद्यदि ह्यवेदिष्यन् विदितवन्त एतद्वस्तु कथं मे गुणवते भक्तायानुगताय नावक्ष्यन्नोक्तवन्तस्तेनाहं मन्ये न विदितवन्त इति । अवाच्यमपि गुरोर्न्यग्भावमवादीत्पुनर्गुरुकुलं प्रति प्रेषणभयात् । अतो भगवांस्त्वेव मे मह्यं तद्वस्तु येन सर्व्वज्ञत्वं ज्ञातेन मे स्यात्तद्ब्रवीतु कथयत्वित्युक्तः पितोवाच तथास्तु सोम्येति ॥ १ ॥ सदेव । सदित्यस्तितामात्रं वस्तु सूक्ष्मं निर्विशेषं सर्व्वगतं । एकं निरञ्जनं निरवयवं विज्ञानं यदवगम्यते

---

व्या० मृत्तिकेत्येवेति ॥ एकेनैव दृष्टान्तेन विवक्षितार्थसिद्धौ किमनेकदृष्टान्तोपादानेनेत्याशङ्क्याह । अनेकेति ॥ न वा इत्यादि प्रतीकमादाय व्याचष्टे । भगवन्त इति ॥ तेषामज्ञाने हेतुमाह । यदित्यादिना ॥ ननु श्वेतकेतुर्गुरूणामज्ञानमाचक्षाणो गुरुद्रोही प्रत्यवायी स्यादित्याशङ्क्याह । अवाच्यमपीति ॥ गुरूणामज्ञानमतःशब्दार्थः ॥ १ ॥ यद्विज्ञानेन सर्व्वविज्ञानं लभ्यते तद्विज्ञानं प्रतिज्ञातं प्रकटीकर्त्तुं सर्व्वस्य सन्मात्रत्वं प्रतिजानीते । सदेवेति ॥ सच्छब्दस्य सामान्यविषयत्वं व्युदस्यति । सदितीति ॥ तस्य पृथिव्यादिभ्यो विशेषं दर्शयति । सूक्ष्ममिति ॥ आकाशादिभ्यो विशेषमाह । निर्विशेषमिति ॥ अन्यविशेषव्यावृत्त्यर्थं विशेष-

उ॰ कथं मे नावक्ष्यन्निति भगवाꣳस्त्वेवमेतद्ब्रवी-
त्विति तथा सोम्येति होवाच ॥७॥१॥ सदेव
सोम्येदमग्र आसीदेकमेवाऽद्वितीयं ॥

---

भा॰ सर्व्ववेदान्तेभ्यः। एवशब्दोऽवधारणार्थः। किन्तदवध्रियत
इत्याह। इदं जगन्नामरूपक्रियावद्विकृतमुपलभ्यते यत्त-
त्सदेवासीदित्यासीच्छब्देन सम्बध्यते। कदा सदेवेदमासी-
दित्युच्यते अग्रे जगतः प्रागुत्पत्तेः॥

किं नेदानीमिदं सद्येनाग्रऽआसीदिति विशेष्यते न
कथं तर्हि विशेषणं इदानीमपीदं सदेव किन्तु नामरू-
पविशेषणवदिदंशब्दबुद्धिविषयं चेतीदञ्च भवति। प्रागु-
त्पत्तेस्त्वग्रे केवलसच्छब्दबुद्धिमात्रगम्यमेवेति सदेवेद-

---

ग्रा॰ माह। सर्वगतमिति॥ तस्य ताटस्थ्यं व्यावर्त्तयति। एकमिति॥
प्रत्यगभिन्नस्य तस्य संसारित्वं वारयति। निरञ्जनमिति॥
निष्क्रियत्वेन तत्कूटस्थत्वमाह। निरवयवमिति॥ यथोक्ते वस्तुनि
प्रमाणमाह। यदवगम्यत इति॥

विशेषणानुसारेण शङ्कते। किं नेदानीमिति॥ वर्त्तमानदशा-
यामसत्त्वं जगतो नास्तीत्याह। नेति॥ सदा सत्त्वाविशेषे विशे-
षणं न निर्वहतीति शङ्कते। कथमिति॥ किं विशेषणसामर्थ्यादि-
दानीमसत्त्वं जगतश्चोद्यते किंवा विशेषणस्यार्थवत्त्वं पृच्छ्यते तत्राद्यं
दूषयति। इदानीमपीति॥ प्रत्यक्षविरोधान्न वर्त्तमानावस्थायां
जगदसत्त्वसिद्धिरित्यर्थः॥ द्वितीयं प्रत्याह। किन्त्विति॥ यच्चेदं
वर्त्तमानं जगन्नामरूपविशेषणवदालक्ष्यते तदिदंशब्दस्य तद्बुद्धेश्च
विषयभावेन स्थितं भवतीति ह्यत्वेदमिदानीमित्यपि व्यवह्रियते
तदेव त्वग्रे प्रागुत्पत्तेः सच्छब्दस्तद्बुद्धिश्चेत्येतावन्मात्रगम्यमेव न
त्विदंशब्दस्य तद्बुद्धेश्च विषया भवतीत्यग्रे सदेवेदमग्र आसीदि-

भा० मग्र आसीदित्यवधार्य्यते । न हि प्रागुत्पत्तेर्नामवद्रूपवद्वेदमिति ग्रहीतुं शक्यं वस्तु । सुषुप्तकाल इव । यथा सुषुप्तादुत्थितः सत्त्वमात्रमवगच्छति सुषुप्ते सन्मात्रमेव केवलं वस्त्विति तथा प्रागुत्पत्तेरित्यभिप्रायः ॥

यथेदमुच्यते लोके । पूर्व्वाह्णे घटादिसिसृक्षुणा कुलालेन मृत्पिण्डं प्रसारितमुपलभ्य ग्रामान्तरं गत्वा आगतोऽपराह्णे तत्रैव घटशरावाद्यनेकभेदभिन्नं कार्य्यमुपलभ्य मृदेवेदं घटशरावादि केवलं पूर्व्वाह्ण आसीदिति तथेहोच्यते सदेवेदमग्र आसीदिति ॥ एकमेवेति । स्वकार्य्यपतितमन्यन्नास्तीत्येकमेवेत्युच्यते । अद्वितीयमिति ॥ मृद्व्यतिरेकेण मृदो यथाऽन्यद्घटाद्याकारेण

---

व्या० त्यवधार्य्यते तस्माद्विशेषणमिदंशब्दबुद्धिव्यावृत्त्यपेक्षं प्राक्कालीने जगत्यविरुद्धमित्यर्थः ॥ यथावर्त्तमानावस्थायामपि जगतः सत्त्वे किमिति तत्रेदंशब्दबुद्धिर्न क्रमतेऽत आह । न हीति ॥ यथा सुषुप्ते काले सदपि वस्तु नेदंशब्दबुद्ध्योर्गोचरं तथा प्रागुत्पत्तेः सदपि जगन्नामवत्त्वेन रूपवत्त्वेन चेदमिति न व्यवहर्त्तुं शक्यं करणोपसंहारस्योभयत्र तुल्यत्वादित्यर्थः ॥ सुषुप्तेऽपि वस्तुनो न सत्त्वं मानाभावादित्याशङ्क्याह । यथेति ॥ तत्र वस्तुनोऽसत्त्वमुत्थितस्य परामर्शादनुभूतस्यानुभवितुश्चाभावे तदयोगात् । न च तत्र विभक्तं वस्तु दृश्यते सुषुप्त्यभावप्रसङ्गादतस्तत्र केवलसन्मात्रं वस्त्विति यथावगमस्तथा प्रागुत्पत्तेरपि सर्व्वं सन्मात्रमुक्तमेवेत्यर्थः । उक्तमेवार्थं सम्प्रतिपन्नेनोदाहरणान्तरेण समर्थयते ॥ यथेत्यादिना ॥ किमिदं सदित्यपेक्षायां तल्लक्षणमाह । एकमिति ॥ अवतारिते लक्षणवाक्ये प्रथमं विशेषणयोरर्थमाह । स्वकार्य्येति ॥ स्वजातीयस्वगतभेदहीनमित्यर्थः ॥ विशेषणान्तरमादाय व्याकरोति । अद्वितीयमिति ॥ विजातीयभेदशून्यमित्यर्थः । यदुक्तं

उ॰ तद्धैक आहुरसदेवेदमग्रआसीदेकमेवाद्वितीयं तस्मादसतः सज्जायेत ॥ १ ॥

---

भा॰ परिणमयितृकुलालादिनिमित्तकारणं दृष्टं तथा सद्व्यतिरेकेण सतः सहकारिकारणं द्वितीयं वस्त्वन्तरं प्राप्तं प्रतिषिध्यते। अद्वितीयमिति नास्य द्वितीयं वस्त्वन्तरं विद्यत इत्यद्वितीयं। ननु वैशेषिकपक्षेऽपि सत्सामानाधिकरण्यं सर्व्वस्योपपद्यते। द्रव्यगुणादिषु सच्छब्दबुद्ध्यनुवृत्तेः। सद्द्रव्यं सन् गुणः सत् कर्म्मेत्यादिदर्शनात्। सत्यमेवं स्यादिदानीं प्रागुत्पत्तेस्तु नैवेदं कार्य्यं सदेवासीदित्यभ्युपगम्यते। वैशेषिकैः प्रागुत्पत्तेः कार्य्यस्यासत्त्वाभ्युपगमात्। न चैकमेव सदद्वितीयं प्रागुत्पत्तेरिच्छन्ति। तस्माद्वैशेषिकपरिकल्पितात् सतोऽन्यत्कारणमिदं सदुच्यते॥

मृदादिदृष्टान्तेभ्यस्तत्त्र हैतस्मिन् प्रागुत्पत्तेर्वस्तुनिरूपणे एके वैनाशिका आहुर्वस्तु निरूपयन्तोऽसदभावमात्रं प्रागुत्पत्तेरिदं जगदेकमेवाग्रेऽद्वितीयमासीदिति। सद-

---

आ॰ सत्सामानाधिकरण्यात्सदेव सर्व्वमिति तत्रारम्भवादी शङ्कते। नन्विति। किं कार्य्यस्य सत्सामानाधिकरण्यं वर्त्तमानदशायां परपक्षेऽपि सम्भवतीत्युच्यते किं वा प्रागवस्थायामपीति विकल्प्याद्यमङ्गीकरोति। सत्यमिति॥ द्वितीयं दूषयति। प्रागुत्पत्तेस्त्विति। लक्षणवाक्यञ्च परपक्षे दुर्य्योज्यमित्याह। न चेति। वाक्यद्वयपर्य्यालोचनया परपक्षासम्भवमुपसंहरति। तस्मादिति॥

दृष्टान्तदार्ष्टान्तिकयोरैकरूप्याद्दृष्टान्तानां कार्य्यकारणाभेदनिष्ठत्वाच्च वैशेषिकपक्षासिद्धिरित्याह। मृदादीति॥ वैशे-

भा॰ भावमात्रं हि प्रागुत्पत्तेरसत्त्वं कल्पयन्ति बौद्धाः। न तु सत्प्रतिद्वन्द्विवस्त्वन्तरमिच्छन्ति। यथा सच्चासदिति गृह्यमाणं यथा भूतं तद्विपरीतं तत्त्वं भवतीति नैयायिकाः॥ ननु सदभावमात्रं प्रागुत्पत्तेश्चेदभिप्रेतं वैनाशिकैः। कथं प्रागुत्पत्तेरिदमासीदसदेकमेवाद्वितीयञ्चेति कालसम्बन्धः सङ्ख्यासम्बन्धोऽद्वितीयत्वं चोच्यते तैः॥

बाढं। न युक्तं तेषां भावाभावमात्रमभ्युपगच्छतां। असत्त्वमात्राभ्युपगमोऽप्ययुक्त एवाभ्युपगन्तुरनभ्युपगमानुपपत्तेः। इदानीमभ्युपगन्ताभ्युपगम्यते न प्रागुत्पत्तेरिति

---

व्या॰ धिकपक्षासम्भवेऽपि वैनाशिकपक्षो भविष्यतीति शङ्कते। तन्नेति॥ असच्छब्दस्य तुच्छव्यावृत्तिविषयत्वं वारयति। अभावमात्रमिति॥ सतोऽन्यदसदिति स्थितेरसदादिनाऽपि प्रतियोगिभूतं सदा स्थितमित्याशङ्क्याह। सदभावमात्रमिति॥ तदेव वैधर्म्यदृष्टान्तेन स्फुटयति। यथेति॥ सदिति यथाभूतमसदिति चेत्तो विपरीतं गृह्यमाणं सच्चासच्चेति द्विविधं तत्त्वं भवतीति यथा नैयायिका वदन्ति द्वे तत्त्वे सदसती भावाभावाविति तैरभ्युपगमान्न तथा बौद्धैर्द्विविधं तत्त्वमिष्टं सदत्यन्ताभावोऽसदित्यभ्युपगमात्। अप्रतीतप्रतियोगिकाभावस्यात्यन्ताभावतया शशविषाणं नास्तीत्यादौ प्रसिद्धत्वादित्यर्थः॥ तमिमं वैनाशिकपक्षं शिष्यमुखेन दूषयति। नन्वित्यादिना॥

शिष्योक्तमङ्गीकरोति। बाढमिति॥ भावस्य योऽभावस्तन्मात्रमसदित्यभ्युपगच्छतां तेषां पक्षे न युक्तं कालसम्बन्धाद्यसत इति युक्तमेव त्वयोक्तमित्यर्थः। किञ्च तन्मते यस्य कस्य चिदसत्त्वमिष्टं॥ सर्व्वस्य वेति विकल्पाद्यमुपेत्य द्वितीयं दूषयति। असत्त्वेति॥ किमभ्युपगन्ता यदा कदाचिदभ्युपगन्तव्यः किं वा प्रागवस्थायामपीति विकल्पाद्यमङ्गीकृत्य द्वितीयं दूषयन्नाशङ्कते। इदानीमिति॥ स किं तदानीमसत्त्वान्नाभ्युपगम्यते तथा प्रागवस्थायामभ्युपगन्ता

भा॰ चेत । न । प्रागुत्पत्तेः सदभावस्य प्रामाणाभावात् । प्रागुत्पत्तेरसदेवेति कल्पनानुपपत्तिः । ननु कथं वस्त्वाकृते शब्दार्थत्वे ऽसदेवमेवाद्वितीयमिति पदार्थवाक्यार्थोपपत्तिस्तदनुपपत्तौ चेदं वाक्यमप्रमाणं प्रसज्येतेति चेत् । नैष दोषः । सद्ग्रहणनिवृत्तिपरत्वाद्वाक्यस्य ॥

सदित्ययं तावच्छब्दः सदाकृतिवाचकः । एकमेवाद्वितीयमित्येतौ च सच्छब्देन च समानाधिकरणौ । तथेदमासीदिति च । तत्र नञ् सद्वाक्ये प्रयुक्तः सद्वाक्यमेवावलम्ब्य सद्वाक्यार्थविषयां बुद्धिं सदेकमेवाद्वितीयमिदमासीदित्येवं-

---

व्या॰ सन्नित्यस्याप्यभ्युपगन्तुरिदानीमभ्युपगमसम्भवान्न हि प्रागुत्पत्तेस्तत्त्वे मानाभावः । विमतः कालो दृष्टसत्तावान् कालत्वात्सम्मतवदित्यनुमानादित्याह । प्रागुत्पत्तेरिति ॥ परपक्षं दूषयित्वा वाक्यतात्पर्यं दर्शयितुं चोदयति । नन्विति ॥ अन्यापोहस्य शब्दार्थत्वे सत्यपोह्य वस्तुनोऽसत्त्वे वा कथमसदिति शब्दस्यार्थसिद्धिराकृतेश्च मीमांसकप्रक्रियया शब्दार्थत्वे सदेवमद्वितीयमितिपदयोराकृतिवाचकत्वायोगादर्थानुपपत्तिस्तदभावे पदार्थसंसर्गात्मनो वाक्यार्थस्यानुपपत्तिः । वाक्यार्थस्यानुपपत्तौ च निर्विषयमिदं वाक्यमप्रमाणं स्यादित्यर्थः । सदभिनिवेशनिवृत्त्यर्थमिदं वाक्यं न तु शून्यमेव साक्षादभिधत्ते ॥ तत्र वाक्याप्रामाण्यमिति परिहरति । नैष दोष इति ॥

तथापि कथमसदादिशब्दानामगृहीतशक्तित्वे वाक्यार्थोपपत्तिरित्याशङ्क्याह । सदित्ययमिति ॥ एकमद्वितीयमितिशब्दद्वयवदिदमासीदिति च शब्दौ सच्छब्देन समानाधिकरणावेवेत्याह । तथेति ॥ सदेवेत्यादिवाक्यस्योक्तविधयार्थवत्त्वेऽपि कथमसदेवेत्यादिवाक्यमर्थवदित्याशङ्क्याह । तत्रेति ॥ इवशब्दो यद्यदस्मिन्नर्थे तद्वदिति पृथक्प्रयोगादित्यर्थः ॥ किमिति वाक्यस्य सदभिनिवेशनिवृत्तिपरत्वं सदभावपरत्वमेव किं न स्यादित्याशङ्क्याह । न

उ॰ कुतस्तु खलु सोम्यैवꣳ स्यादिति होवाच कथमसतः सज्जायेतेति ॥

भा॰ यञ्चर्णां ततः सद्वाक्यार्थान्निवर्त्तयति। अश्वारूढ इवाश्वालम्बनेऽश्वं तदभिमुखविषयान्निवर्त्तयति तद्वत्। न तु पुनः सदभावमेवाभिधत्तेऽतः पुरुषस्य विपरीतग्रहणनिवृत्त्यर्थपरमिदमसदेवेत्यादि वाक्यं प्रयुज्यते। दर्शयित्वा हि विपरीतग्रहणं ततो निवर्त्तयितुं शक्यत इत्यर्थवत्त्वाऽसदादिवाक्यस्य श्रौतत्वं प्रामाण्यञ्च सिद्धमित्यदोषः। तस्मादसतः सर्व्वाभावरूपात्सद्विद्यमानमजायत समुत्पन्नं। अडाभावश्छान्दसः। तदेतद्विपरीतग्रहणं महावैनाशिकपक्षं दर्शयित्वा प्रतिषेधति। कुतस्तु प्रमाणात् खलु हे सोम्य एवं स्यादसतः सज्जायेत इत्येवं कुतो भवेन्न कुतश्चित्प्रमा-

आ॰ णेति॥ सदभावस्यात्यन्ताभावरूपत्वस्य तुच्छत्वाच्छब्दशक्त्यगोचरत्वासम्भवादित्यर्थः॥ अन्यपरत्वासम्भवे सदभिनिवेशनिवृत्तिपरत्वं वाक्यस्य सिद्धमित्युपसंहरति। अत इति॥ प्रश्नकाले पुरुषस्य सदभिनिवेशनिवृत्तिरत्र विवक्षिता चेत्तर्हि नञ्पदमेव प्रयोक्तव्यं किमित्यसदेवेदमग्र आसीदिति प्रयुक्तमित्याशङ्क्याह। दर्शयित्वा हीति॥ अथवा सदेवेत्यादिना स्वपक्षमुक्त्वा तद्दृढीकरणार्थत्वेनासदेवेत्यादिनानुवादोऽयमिति तात्पर्यान्तरमाह। दर्शयित्वा हीति॥ प्रथमे पक्षे तस्मादित्यादिवाक्यस्यार्थाभावाद्द्वितीयः पक्षो गृहीतः। तत्र कारणस्यासत्त्वमुक्तमिदानीं कार्य्यस्यापि तद्दर्शयति। तस्मादिति॥ अजायतेति वक्तव्ये कथं श्रुत्या जायतेति प्रयुक्तमित्याशङ्क्याह। अडाभाव इति॥ कुतस्तु खल्वित्यादिवाक्यालोचनायामपि द्वितीयः पक्षो ग्राह्य इत्यभिप्रेत्याह। तदेत-

भा॰ णादेवं सम्भवतीत्यर्थः। यदपि बीजोपमर्द्देऽङ्कुरो जायमानो दृष्टोऽभावादेवेति तदप्यभ्युपगमविरुद्धं तेषां। कथं ये तावद्बीजावयवा बीजसंस्थानविशिष्टास्तेऽङ्कुरेऽप्यनुवर्त्तन्त एव न तेषामुपमर्द्दोऽङ्कुरजन्मनि। यत्पुनर्बीजाकारसंस्थानं तद्बीजावयवव्यतिरेकेण वस्तुभूतं न वैनाशिकैरभ्युपगम्यते यदङ्कुरजन्मन्युपमृद्येताथ तदस्त्यवयवव्यतिरिक्तं वस्तुभूतं तथाच सत्यभ्युपगमविरोधः। अथ संवृत्त्याभ्युपगतं बीजसंस्थानरूपमुपमृद्यत इति चेत्। केयं संवृत्तिर्नाम किमसावभाव उत भाव इति। यद्यभावो दृष्टान्ताभावः॥

अथ भावस्तथापि नाभावादङ्कुरोत्पत्तिः। बीजावयवेभ्यो ह्यङ्कुरोत्पत्तिः। अवयवा अप्युपमृद्यन्त इति चेत्। न। तदवयवेषु तुल्यत्वात्। यथा वैनाशिकानां बीजसंस्थानरूपोऽ-

---

व्या॰ दिति॥ विमतमभावपुरस्सरं कार्य्यत्वादङ्कुरवदिति प्राप्ते। यदपीति॥ अप्रसिद्धविशेषणत्वं मत्वा परिहरति। तदपीति॥ बीजोपमर्द्देनाङ्कुरोत्पत्तेरिष्टत्वात्कथमप्रसिद्धविशेषणतेति प्राप्ते। कथमिति॥ किमङ्कुरोत्पत्तौ बीजावयवा उपमृद्यन्ते किं वा बीजाकारसंस्थानमिति विकल्प्याद्यं प्रत्याह। ये तावदिति॥ द्वितीयं दूषयति। यत्पुनरिति॥ तत्किं परमार्थवस्तु किं वा संवृत्तिसिद्धं। नाद्योऽभ्युपगमविरोधादित्युक्तं द्वितीयमुत्थापयति। अथ संवृत्त्येति॥ संवृत्तिं विकल्पयति। केयमिति॥ आद्ये भावस्याभावादुत्पत्तौ दृष्टान्ताभावः संवृत्तेरवस्तुत्वेन च बीजसत्त्वासाधकत्वादित्याह। यदीति॥

द्वितीयमनूद्य दूषयति। अथेति॥ तत्त्वं यया संव्रियते आच्छाद्यते सा संवृत्तिर्लौकिकी बुद्धिः सा चेद्भावरूपेष्टा तर्हि तया बीजावयवानामङ्कुराकारपरिणामसिद्धेर्दृष्टान्तासिद्धिरित्यर्थः॥ लौकिकबुद्धिमनाश्रित्य परमतमेवादाय प्राप्ते। अवयवा इति॥

भा॰ वयवी नास्ति। तथावयवा अपीति। तेषामप्युपमर्द्दानुपपत्तिः। वीजावयवानामपि सूक्ष्मावयवास्तदवयवानामप्यन्ये सूक्ष्मास्तदवयवा इत्येवं प्रसङ्गस्याऽनिवृत्तेः सर्व्वत्रोपमर्द्दानुपपत्तिः। सद्बुद्ध्यनुवृत्तेः सत्त्वानिवृत्तिश्चेति सद्वादिनां सत एव सदुत्पत्तिः सेत्स्यति। न त्वसद्वादिनां दृष्टान्तोऽस्त्यसतः सदुत्पत्तेः। मृत्पिण्डाद्घटोत्पत्तिर्दृश्यते सद्वादिनां तद्भावे च भावात्तदभावे चाभावात्॥ यद्यभावादेव घट उत्पद्येत घटार्थिना मृत्पिण्डेनोपादीयेत॥

अभावशब्दबुद्ध्यनुवृत्तिश्च घटादौ प्रसज्येत न त्वेतद-

---

व्या॰ व्यसत्यवयविन्युपमर्दायोगवदवयवेष्वपि तदयोगस्य तुल्यत्वान्नेदं चोद्यमित्युत्तरमाह। न तदवयवेष्विति॥ तदेव स्फुटयति। यथेति॥ नन्वस्मत्पक्षे परमावयवो नास्त्यवयवास्तु सन्त्येवेति तत्राह। वीजावयवानामपीति॥ तर्हि तेषामङ्कुरजन्मन्युपमर्दः स्यादिति चेत्तत्राह। तदवयवानामपीति॥ न चाङ्कुरजन्मन्यवयवपरम्पराविश्रान्तिभूमिरुपपद्यते तस्याः शून्यत्वे तदुपमर्दे सत्कार्य्यवादापातात्। अशून्यत्वेऽपि कार्य्यत्वे कादाचित्कद्रव्यस्य सावयवत्वेनोक्तदोषतादवस्थ्यादकार्य्यत्वे भावस्यैवोपमर्दासिद्धिरभावस्येत्तदुपमर्दे सत्कार्य्यवादापत्तिरेवेति भावः॥ असद्वादस्याप्रामाणिकत्वमुक्त्वा सद्वादस्य प्रामाणिकत्वमाह। सद्बुद्धीति॥ परमते दृष्टान्ताभावमुक्तमनूद्य स्वमते तत्सत्त्वं च समुच्चिनोति। न त्विति॥ घटस्याप्यभावादेवोत्पत्तेरिष्टत्वाद्दृष्टान्तासम्प्रतिपत्तिरित्याशङ्क्याह। यदीति॥

किञ्च यद्यस्योपादानं दृष्टं तच्छब्दप्रत्ययौ तत्रानुवर्त्तेते यथा तथा भावश्चेद्घटादेरुपादानं तच्छब्दधियौ तत्रानुवृत्ते स्यातां॥

भा० स्यतो नामतः सदुत्पत्तिः । यदप्याङ्गर्मृद्बुद्धिर्घटबुद्धेर्निमित्तमिति मृद्बुद्धिर्घटबुद्धेः कारणमुच्यते न तु परमार्थत एव मृद्घटो वास्तीति तदपि मृद्बुद्धिर्विद्यमानाविद्यमानाया एव घटबुद्धेः कारणमिति नासतः सदुत्पत्तिः । मृद्बुद्धिघटबुद्ध्योर्निमित्तनैमित्तिकतयानन्तर्य्यमात्रं न तु कार्य्यकारणत्वमिति चेत् । न । बुद्धीनां नैरन्तर्य्ये गम्यमाने वैनाशिकानां बहिर्दृष्टान्ताभावात् । अतः कुतस्तु खलु सोम्यैवं स्यादिति होवाच कथं केन प्रकारेणासतः सज्जायेतेति । असतः सदुत्पत्तौ न कश्चिदपि दृष्टान्तप्रकारोऽस्तीत्यभिप्रायः । एवमसद्वादिपक्षमुन्मथ्योपसंहरति सत्त्वेव सोम्येदमग्र आसीदिति स्वपक्षसिद्धिः ॥

---

व्या० न चानुवर्त्तते तस्मादसतः सदुत्पत्तिरयुक्तेत्याह । अभावेति ॥ भावस्य सतो मृत्पिण्डस्य घटादिकारणत्वमन्वयव्यतिरेकाभ्यामुक्तं तत्रान्वयव्यतिरेकयोरन्यथासिद्धिमुद्भावयति । यदपीति ॥तस्मिन्नपि पक्षे न मत्पक्षक्षतिरित्युत्तरमाह । तदपीति ॥ यदुक्तं सद्रूपाया बुद्धेः सद्रूपां बुद्धिं प्रति कारणत्वमिति तदसिद्धमिति शङ्कते । मृद्बुद्धिघटबुद्ध्योरिति ॥ सत्त्वसिद्धौ हि पूर्व्वभावित्वं कारणत्वं कार्य्यत्वञ्चोत्तरभावित्वं युक्तं बुद्धीनाञ्चासत्त्वादानन्तर्य्यमात्रेण व्यवह्रियते निमित्तनैमित्तिकत्वमित्यर्थः । असतीनामपि बुद्धीनामानन्तर्य्येण निमित्तनैमित्तिकत्वमित्येतन्न शक्यं सम्भावयितुं दृष्टान्ताभावादित्युत्तरमाह । न बुद्धीनामिति ॥ कुतस्तु खल्वित्यादि वाक्यं व्याख्यातमुपसंहरति । अत इति । पूर्व्वमसतः सदुत्पत्तौ दृष्टान्ताभाव उक्त इदानीमन्यदुपसंहृतमिति शङ्कां वारयति । असत इति ॥ स्वपक्षसिद्धिमुपसंहरतीति सम्बन्धः ॥

भा॰ ननु सद्वादिनोऽपि सतः सदुत्पद्यत इति नैव दृष्टान्तोऽस्ति। घटाद्घटान्तरोत्पत्त्यदर्शनात्। सत्यमेवं न सतः सदन्तरमुत्पद्यते किं तर्हि सदेव संस्थानान्तरेणावतिष्ठते। यथा सर्पः कुण्डली भवति। यथा च मृच्चूर्णं पिण्डघटकपालादिप्रभेदैः। यद्येवं सदेव सर्व्वप्रकारावस्थं कथं प्रागुत्पत्तेरिदमासीदित्युच्यते। ननु न श्रुतं त्वया सदेवेत्यवधारणमिदंशब्दवाच्यस्य कार्य्यस्य प्राप्तं तर्हि प्रागुत्पत्तेरसदेवासीन्नेदंशब्दवाच्यमिदानीमिदं जातमिति। न सत एवेदंशब्दबुद्धिविषयतयावस्थानाद्यथा मृदेव पिण्डघटादिशब्दबुद्धिविषयत्वेनावतिष्ठते तद्वत्॥

---

व्या॰ सिद्धान्तेऽपि दृष्टान्तासिद्धिस्तुल्येति शङ्कते। नन्विति॥ यद्यपि मृदो घटोत्पत्तिर्दृष्टा तथापि न मृदो मृदन्तरं घटाद्घटान्तरमुत्पद्यमानमुपलभ्यते तस्मान्न सतः सदन्तरोत्पत्तिरित्यर्थः। किं सदन्तरस्य सतः सकाशादुत्पत्तिरेव वार्य्यते किंवा कारणत्वं सतो निराक्रियते तत्राद्यमङ्गीकरोति। सत्यमिति॥ द्वितीयं निराकरोति। किं तर्हीति॥ तत्रापि दृष्टान्ताभावमाशङ्क्याह। यथेति॥ कुण्डलीभावे कार्य्यत्वप्रसिद्धिर्नास्तीत्याशङ्क्योदाहरणान्तरमाह। यथा चेति॥ प्रभेदैरवतिष्ठत इति सम्बन्धः। सत एव सर्व्वप्रकारेणावस्थाने प्राक्कालिकं कार्य्यस्य सत्त्ववचनमयुक्तं तस्य सर्व्वदा सत्त्वाविशेषादिति शङ्कते। यद्येवमिति॥ प्रागवस्थं हि कारणं सन्मात्रत्वं च कार्य्यस्यावधार्य्यते तथाच कारणस्यैव सतस्तेन तेनाकारेणावस्थानमित्यङ्गीकारेऽपि कार्य्यस्य प्राक्कालिकं सत्त्वावधारणमविरुद्धमित्युत्तरमाह। नन्विति॥ कार्य्यस्य कारणमात्रत्वस्यैवमवधृतं तर्हि कारणमेवासीन्न कार्य्यं तदसदेवेदानीं जातमित्यसत्कार्य्यवादिमतमायातमिति शङ्कते। प्राप्तमिति॥ कारणस्यैव कार्य्यरूपेणावस्थानान्नासत्कार्य्यवादापत्तिरिति दृष्टान्तेन परिहरति। नेत्यादिना॥

भा॰ ननु यथा मृद्वस्त्वेवं पिण्डघटाद्यपि तद्वत्सद्बुद्धेरन्यबुद्धिविषयत्वात्कार्य्यस्य सतोऽन्यद्वस्त्वन्तरं स्यात्कार्य्यजातं यथाऽश्वाद्गौर्न पिण्डघटादीनामितरेतरव्यभिचारेऽपि । मृत्त्वाव्यभिचारात्। यद्यपि घटः पिण्डं व्यभिचरति पिण्डश्च घटं तथापि पिण्डघटौ मृत्त्वं न व्यभिचरतस्तस्मान्मृन्मात्रं पिण्डघटौ व्यभिचरत्यश्वं गौरश्वो वा गां । तस्मान्मृदादिसंस्थानमात्रं घटादयः । एवं सत्संस्थानमात्रमिदं सर्व्वमिति युक्तं प्रागुत्पत्तेः सदेवेति । वाचारम्भणमात्रत्वाद्विकारसंस्थानमात्रस्य। ननु निरवयवं सन्निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनं दिव्यो ह्यमूर्त्तः पुरुषः सबाह्याभ्यन्तरो ह्यज इत्यादिश्रुतिभ्यो निरवयवस्य सतः कथं विकारसंस्थानमुपपद्यते॥

---

आ॰ विमतमुपादानाद्भिद्यते तद्विलक्षणबुद्धिविषयत्वाद्यथाश्वबुद्धिविलक्षणो विषयो महिषस्ततो भिद्यते। तथाच कथं सत एवेदंधीविषयता निर्व्वाच्यावस्थाङ्गीकारेणासत्कार्य्यवादापत्तिसमाधिरिति चोदयति। नन्विति॥ विलक्षणबुद्धिविषयत्वस्य भेदमात्रसाधकत्वे सिद्धसाधनं तात्त्विकभेदे साधकत्वे दृष्टान्तासिद्धिरित्यभिप्रेत्याह। नेति॥ किञ्च कार्य्यस्य व्यभिचारित्वेन रज्जुसर्पादिवन्मिथ्यात्वानुमानादनिर्व्वाच्यसंस्थानादेव कार्य्यबुद्ध्यालम्बनत्वं सतोऽङ्गीकर्त्तव्यमित्याह। पिण्डेति॥ तदेव स्फुटयति। यद्यपीति॥ मृदन्तरेण पिण्डघटयोः स्वरूपाभावादितितच्छब्दार्थः। अव्यभिचारेण गोत्वमित्यादिदृष्टान्तः॥ अव्यभिचारफलमाह। तस्मादिति॥ दृष्टान्तगतमर्थं दार्ष्टान्ते समर्थयति। एवमिति॥ पृथगेव प्रथमानस्य कार्य्यस्य कथं सन्मात्रत्वमित्याशङ्क्याह। वाचारम्भणेति॥ कार्य्यमिथ्यात्वं स्फुटीकर्त्तुं चोदयति। नन्विति॥

उ० एकमेवाद्वितीयं॥ २॥ तदैक्षत बहु स्यां प्रजायेयेति

भा० नैष दोषो रज्ज्वाद्यवयवेभ्यः सर्पादिसंस्थानवद्बुद्धिपरिकल्पितेभ्यः सदवयवेभ्यो विकारसंस्थानोपपत्तेः। वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमेवं सदेव सत्यमिति श्रुतेः। एकमेवाद्वितीयं परमार्थत इदंबुद्धिकालेऽपि तत्सत् ऐचतेचां दर्शनं कृतवान्। अतश्च न प्रधानं साङ्ख्यपरिकल्पितं जगत्कारणं। प्रधानस्याचेतनत्वाभ्युपगमात्। इदन्तु सच्चेतनमीक्षितृत्वात्तत्कथमैचतेत्याह बहु प्रभूतं स्यां भवेयं प्रजायेय प्रकर्षेणोत्पद्येय। यथा मृद्घटाद्याकारेण यथा वा रज्ज्वादि सर्पाद्याकारेण बुद्धिपरिकल्पितेन। असदेव तर्हि सर्व्वं यद्गृह्यते रज्जुरिव सर्पाद्याका-

---

व्या० यथा खल्वज्ञातेभ्यो रज्ज्वाद्यवयवेभ्यः सर्पादिसंस्थानमनिर्व्वाच्यमिष्टं तथा श्रुतिजनितजगत्कारणत्वबुद्ध्यनुपपत्त्या कल्पितेभ्यः सतो मायोपाधिकस्यावयवेभ्यो विकारसंस्थानमुपपद्यते। तस्मादयं द्वैतप्रपञ्चो ब्रह्मविवर्त्तः सम्भवतीति परिहरति। नैष दोष इति॥ ब्रह्मविवर्त्तो जगदित्यत्र श्रुतिमनुकूलयति। वाचारम्भणमिति॥ प्रपञ्चमिथ्यात्वे फलितमुपसंहरति। एकमेवेति॥ अद्वितीयत्वसमर्थनार्थमुत्तरवाक्यमुत्थाप्य व्याचष्टे। तत्सदिति॥ सच्छब्दवाच्यं जगत्कारणं प्रधानमिति केचित्तदप्येतेन निरस्तमित्याह। अतश्चेति॥ ईक्षापूर्व्वकारित्वादिति यावत्। अचेतनत्वाभ्युपगमान्न तस्येक्षापूर्व्वकं स्रष्टृत्वमिति शेषः। परिणामविवर्त्तवादावाश्रित्योदाहरणद्वयं। बहु स्यामित्यादि श्रुतितात्पर्य्यं वक्तुं निरस्तमेव चोद्यमुद्भावयति। असदेवेति॥ बहु स्यां प्रजायेयेत्यनेनेक्षितुरेव कार्य्यकारापत्तिवचनेन वैशेषिकादिम-

भा॰ रेण। न सत एव द्वैतभेदेनान्यथा गृह्यमाणत्वान्नासत्त्वं कस्यचित्क्वचिदिति ब्रूमः॥

यथा सतोऽन्यद्वस्त्वन्तरं परिकल्प्य पुनस्तस्यैव प्रागुत्पत्तेः प्रध्वंसाच्चोर्ध्वमसत्त्वं ब्रुवते तार्किका न तथाऽस्माभिः कदाचित्क्वचिदपि सतोऽन्यदभिधानमभिधेयं वा वस्तु परिकल्प्यते सदेव तु सर्व्वमभिधानमभिधीयते च यदन्यबुद्ध्या यथा रज्जुरेव सर्पबुद्ध्या सर्प इत्यभिधीयते यथा वा पिण्डघटादिर्मृदोऽन्यबुद्ध्या पिण्डघटादिशब्देनाभिधीयते लोके रज्जुविवेकदर्शिनां तु सर्पाभिधानबुद्धी निवर्त्तेते यथा च मृद्विवेकदर्शिनां घटादिशब्दबुद्धी तद्वत्सद्विवेकदर्शिनामन्यविकारशब्दबुद्धी निवर्त्तेते। यतो वाचो निवर्त्तन्तेऽप्राप्य मनसा सहेति अनिरुक्तेऽनिलयन इत्यादिश्रुतिभ्यः। एवमीक्षित्वा तत्तेजोऽसृजत तेजः सृष्टवत्।

व्या॰ तमेतन्निरस्तमिति श्रुतितात्पर्यं दर्शयन्नुत्तरमाह। नेत्यादिना॥

तदेव प्रपञ्चयति। यथेत्यादिना॥ प्रतिज्ञातमर्थं मतद्वयानुसारेण दृष्टान्ताभ्यां स्पष्टयति। यथा रज्जुरिति॥ अज्ञानान्वयव्यतिरेकाभ्यां रज्जुसर्पादेरज्ञानमयत्वं च द्वैताभिनिवेशस्य सन्मात्राविवेके सत्येवोत्पत्तेर्विचारेण तद्विवेके चानुत्पत्तेस्तदप्यज्ञानमयमेव तस्य तु तत्त्वं सन्मात्रमधिष्ठानं वाङ्मनसातीतमित्यर्थः॥ तस्य वाङ्मनसातीतत्वे प्रमाणमाह। यत इति॥ अन्यदेव तद्विदितादित्यादिवाक्यमादिपदार्थः। तैत्तिरीयकश्रुतिविरोधमाशङ्कते। नन्विति॥ तथापि कथं विरोधधीरित्याशङ्क्याह। इति विरुद्धमिति॥ अस्यां श्रुतौ सतः सकाशादेव प्राथम्येन तेजः सृज्य-

उ॰ तत्तेज ऐक्षत बहु स्यां प्रजायेयेति तदपो-
ऽसृजत ॥

---

भा॰ ननु तस्माद्वा एतस्मादात्मन आकाशः सम्भूत इति श्रुत्य-
न्तरः। आकाशाद्वायुस्तत्तृतीयं तेजः श्रुतमिह कथं प्राथ-
म्येन तस्मादेव तेजः सृज्यते तत एव चाकाशमिति विरुद्धं॥
नैष दोषः। आकाशवायुसर्गानन्तरं तत्सत्तेजोऽसृजतेति
कल्पनोपपत्तेः। अथ वाऽविवक्षित इह सृष्टिक्रमः सत्का-
र्य्यमिदं सर्व्वमतः सदेकमेवाद्वितीयमित्येतद्विवक्षितं।
मृदादिदृष्टान्तात्। अथ वा त्रिवित्करणस्य विवक्षित-
त्वात्। तेजोबन्नानामेव सृष्टिमाचष्टे। तेज इति प्रसिद्धं

---

व्या॰ मानमुच्यते श्रुत्यन्तरे तु तस्मादेव सतः सकाशादाकाशं प्राथम्येन सृष्टमित्युपदिष्टं तथा च कथमिदं मिथो विरुद्धं सिध्यतीत्यर्थः॥

तैत्तिरीयश्रुत्यनुसारेण छान्दोग्यश्रुतेर्व्याख्यानसम्भवान्न विरोधोऽस्तीति परिहरति। नैष दोष इति॥ सृष्टिक्रमस्य विवक्षितत्वमङ्गीकृत्योक्तं तदेव नास्त्यद्वितीयत्वं तु सतो विवक्षितमिति पक्षान्तरमाश्रित्याह। अथ वेति॥ तत्र गमकं दर्शयति। मृदादीति॥ मृदादिकार्य्यं घटादि तद्व्यतिरेकेण नास्ति मृदाद्येव तु सत्यमिति दृष्टान्तोपादानाद्ब्रह्मणः सतस्तेजोबन्नादिकार्य्यं तदतिरेकेण नास्ति सन्मात्रमेव सत्यमिति दार्ष्टान्तिकेऽपि विवक्षितं प्रतिभातीत्यर्थः॥ तत्तेजोऽसृजतेत्यादिश्रुतेस्तात्पर्य्यान्तरमाह। अथवा त्रिवित्करणस्येति॥ तासां त्रिवितं त्रिवितमेकैकां करवाणीत्यादौ त्रिवित्करणस्येष्टत्वात्तयाणामेव भूतानामिह सृष्टिरुच्यते। न चैवं पञ्चीकरणमविवक्षितमिति वाच्यं भूतत्रयसृष्टिश्रुतौ श्रुत्यन्तरसिद्धाकाशादिसृष्टेरुपलक्षणवत् त्रिवित्करणश्रुत्या पञ्चीकरणोपलक्षणं तथाच श्रुत्यन्तरसिद्धयोराकाश-

उ॰ तस्माद्यत्र क्व च शोचति स्वेदते वा पुरुषस्तेजस एव तदध्यापो जायन्ते॥३॥ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहीति ता अन्नमसृजन्त तस्माद्यत्र

---

भा॰ लोके दग्धृपक्तृप्रकाशकं रोहितञ्चेति तत्सृष्टं तेज ऐक्षत। तेजोरूपसंस्थितं सदैक्षतेत्यर्थः। बहु स्यां प्रजायेयेति पूर्व्ववत्तदपोऽसृजत। आपो द्रवाः स्निग्धाः स्यन्दिन्यः शुक्लाश्चेति प्रसिद्धं लोके॥

यस्मात्तेजसः कार्य्यभूता आपस्तस्माद्यत्र क्व च देशे काले वा शोचति सन्तप्यते स्वेदते प्रस्विद्यते वा पुरुषस्तेजस एव तदापोऽधिजायन्ते। ता आप ऐक्षन्तेति पूर्व्ववदेव वाकारसंस्थितं सदैक्षतेत्यर्थः। बह्व्यः प्रभूताः स्याम भवेम प्रजायेम उत्पद्येमहीति। ता अन्नमसृजन्त पृथिवीलक्षणं। पार्थिवं ह्यन्नं यस्मादप्कार्य्यमन्नं। तस्माद्यत्र क्व च वर्षति देशे तत्तत्रैव भूयिष्ठं बहुतरमन्नं भवति। अतोऽद्भ्य एव तदन्नाद्यमधिजायत इति। ता अन्नमसृजन्तेति पृथिव्युक्ता पूर्व्वमिह

---

आ॰ वाय्वोस्तेजःप्रभृतिष्वन्तर्भावमभिप्रेत्य लघूपायेन सर्व्वस्य सन्मात्रत्वं मन्तव्यमिति मन्वाना श्रुतिस्त्रिवृत्करणमेवाचख्याणा तदनुरोधेन त्रयाणामेव सृष्टिमाहेत्यर्थः। तेजसोऽचेतनस्य कथमीक्षितृत्वमित्याशङ्क्य वाक्यार्थमाह। तेजोरूपेति॥

अपां तेजःकार्य्यत्वे लोकानुभवमनुकूलयति। यस्मादिति॥ पृथिव्यामन्नशब्दप्रयोगे हेतुमाह। पार्थिवं हीति॥ अपां कार्य्यमन्नमित्यत्रापि लोकप्रसिद्धिं दर्शयति। यस्मादिति॥ ता अन्नमसृजन्तेत्यत्राद्भ्योऽन्नसृष्टिरुपदिष्टा। दृष्टान्तेऽपि ताभ्यस्तत्सृष्टिरुपदिश्यते। तथाच पौनरुक्त्यमित्याशङ्क्यार्थविशेषं दर्शयति। अन्नमिति॥

उ॰ क्व च वर्षति तदेव भूयिष्ठमन्नं भवत्यद्भ्य एव तदध्यन्नाद्यं जायते ॥ ४ ॥ २ ॥

---

भा॰ दृष्टान्तेऽन्नञ्च तदद्यञ्चेति विशेषणाद्व्रीहियवाद्या उच्यन्ते ऽन्नञ्च गुरु स्थिरञ्च धारणं कृष्णञ्च रूपतः प्रसिद्धं । ननु तेजःप्रभृतिष्वीक्षणं न गम्यते हिंसादिप्रतिषेधाभावात्त्रासादिकार्य्यानुपलम्भाच्च तत्र कथं तत्तेज ऐक्षतेत्यादि । नैष दोषः । ईक्षितृकारणपरिणामत्वात्तेजःप्रभृतीनां सत एवेक्षितुर्नियतक्रमविशिष्टकार्य्योत्पादकत्वाच्च तेजःप्रभृतीक्षत इवेक्षित इत्युच्यते भूतं ॥

ननु सतोऽप्युपचरितमेवेक्षितृत्वं । न सदीक्षणस्य केवलशब्दगम्यत्वान्न शक्यमुपचरितं कल्पयितुं । तेजःप्रभृतीनां त्वनुमीयते मुख्य ईक्षणाभाव इति युक्तमुपचरितं कल्पयितुं। ननु सतोऽपि मृद्वत्कारणत्वादचेतनत्वं शक्यमनुमातुं ।

---

व्या॰ तत्तेज ऐक्षतेत्यादौ यथाश्रुतमर्थं गृहीत्वा चोदयति । नन्विति ॥ प्राणिषु हिंसाप्रतिषेधवदनुग्रहविधानाच्च तेजःप्रभृतिषु तदभावात्तेष्वीक्षणकार्य्यदृष्टिः तदेतेषु तद्दृष्ट्यभावाच्च नैतेष्वीक्षणं प्रामाणिकं । तथा च प्रकृतं वाक्यं प्रमत्तगीतमित्यर्थः ॥ तेषां गौणमीक्षितृत्वमुपेत्य परिहरति । नैष दोष इति ॥

सतोऽपि गौणमीक्षणमुपचारप्राये पाठादिति शङ्कते । नन्विति ॥ सन्निधेः शब्दस्य बलीयस्त्वमुपेत्य परिहरति । न सदीक्षणस्येति ॥ तुल्यं तेजःप्रभृतिष्वपि शब्दगम्यत्वमीक्षणस्येति चेन्नेत्याह । तेजःप्रभृतीनान्त्विति ॥ विमतमीक्षितृ न भवत्यचेतनत्वात्कुम्भवदित्यनुमानात्तेजोमुखे जगतीक्षणासम्भवात्तत्र श्रुतं तदौपचारिकमुचितमित्यर्थः । साङ्ख्योऽनुमानावष्टम्भेन

भा॰ अतः प्रधानस्यैवाचेतनस्य सतश्चेतनार्थत्वान्नियतकालक्रमविशिष्टकार्य्योत्पादकत्वाच्चेक्षत इवेक्षत इति शक्यमनुमातुमुपचरितमेवेक्षणं । दृष्टश्च लोकेऽचेतने चेतनवदुपचारः । यथा कूलं पिपतिषतीति । तद्वत्सतोऽपि स्यात् । न तत्सत्यं । स आत्मेति तस्मिन्नात्मोपदेशात् । आत्मोपदेशोऽप्युपचरित इति चेत् । यथा ममात्मा भद्रसेन इति सर्व्वार्थकारिण्यनात्मन्यात्मोपचारं तद्वत् । न सदस्मीति सत्सत्याभिसन्धस्य तस्य तावदेव चिरमिति मोक्षोपदेशात् ॥

मोक्षोऽप्युपचार इति चेत् । प्रधानात्माभिसन्धस्य मोक्षसामीप्यं वर्त्तत इति मोक्षोपदेशोऽप्युपचरित एव । यथा लोके ग्रामं गन्तुं प्रस्थितः प्राप्तवानहं ग्राममिति ब्रूयाद्दूरापेक्षया तद्वत् । न येन विज्ञानेनाविज्ञातं विज्ञातं भव-

---

व्या॰ शङ्कते । नन्विति ॥ अचेतनस्य कथमीक्षणमित्याशङ्क्याह । अत इति ॥ अनुमातुं कल्पयितुमिति यावत् । कथमचेतने चेतनवदुपचारस्तत्राह । दृष्टश्चेति ॥ आत्मशब्दावष्टम्भेन परिहरति । नेत्यादिना ॥ आत्मोपदेशोऽपि प्रधाने गौणो भविष्यतीति शङ्कते । आत्मोपदेशोऽपीति ॥ तामेव शङ्कां दृष्टान्तद्वारा विवृणोति । यथेति ॥ इदं परिहरन्नस्मिन्नात्मोपदेशो गौणो न भवति तन्निष्ठस्य मोक्षोपदेशादित्युत्तरमाह । नेत्यादिना ॥

मोक्षोपदेशोऽप्युपचरितो भविष्यतीति शङ्कते । सोऽपीति ॥ शङ्कामेव विवृणोति । प्रधानात्मेति ॥ एकविज्ञानेन सर्व्वविज्ञानोपदेशमाश्रित्य परिहरति । न येनेति ॥ उक्तमेव विवृणोति । सत्येकस्मिन्निति ॥ सतोऽन्यस्य ज्ञातव्यस्याप्रामाणिकत्वाच्च सतो ज्ञाने सर्व्वज्ञानोपदेशो युक्तिमानित्याह । न चेति ॥ सम्प्रति हि प्रधानज्ञाने तद्विकारस्य तदभिन्नस्य ज्ञानं तस्य च पुरुषार्थत्वात्तज्ज्ञाने पुरुषाणामपि ज्ञानमुपचर्य्यते । तस्मादेक-

उ॰ तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्त्याण्डजं जीवजमुद्भिज्जमिति ॥ १ ॥

भा॰ तीत्युपक्रमात्। यत्येकस्मिन्विज्ञाते सर्व्वं विज्ञातं भवति तदनन्यत्वाच्च सर्व्वस्याद्वितीयवचनाच्च । न चान्यद्विज्ञातव्यमवशिष्टं श्रावितं श्रुत्या ऽनुमेयं वालिङ्गतोऽस्ति येन मोचोपदेश उपचरितः स्यात्। सर्व्वस्य च प्रपाठकस्योपचरितत्वपरिकल्पनायां वृथा श्रमः परिकल्पयितुः स्यात् पुरुषार्थसाधनविज्ञानस्य तर्केणैवाधिगतत्वात्तस्य। तस्माद्वेदप्रामाण्यान्न युक्तः श्रुतार्थपरित्यागः । अतश्चेतनावत्कारणं जगत इति सिद्धं ॥ २ ॥

तेषां जीवाविष्टानां खल्वेषां पच्चादीनां भूतानामेषामिति प्रत्यक्षनिर्द्देशान्नतु तेजःप्रभृतीनां तेषां त्रिवृ-

आ॰ विज्ञानेन सर्व्वविज्ञानोपदेशान्न मोक्षोपदेशमुख्यत्वसिद्धिरित्याशङ्क्याह। सर्व्वस्य चेति ॥ कथमुपनिषदारम्भो वृथेत्युच्यते। पुमर्थसाधनज्ञानार्थत्वादित्याशङ्क्याह । पुरुषार्थेति ॥ तस्यानुमानवादिनः साङ्ख्यस्य मते मुक्तिहेतोर्ज्ञानस्य जडाजडयोरैक्यानुपपत्तिरित्यादिना तर्केणैव सिद्धत्वादुपनिषदारम्भो व्यर्थो वेत्यर्थः । श्रुतेर्मुख्यार्थत्वे बाधकाभावात्तत्परित्यागायोगादीक्षत्यधिकरणन्यायेन प्रधानवादासिद्धिरिति परमतनिरसनमुपसंहरति। तस्मादिति ॥ प्रधानवादाभावे परिशेषापातं स्वमतं निगमयति । अत इति ॥ २ ॥

महाभूतानामचेतनानां ब्रह्मकार्य्यतोक्ता सम्प्रति जीवाविष्टानां भौतिकानामपि परम्परया ब्रह्मकार्य्यतैवेति वक्तुं तान्यनुवदति। तेषामिति ॥ पूर्व्वाध्याये येषां गत्यागती दर्शिते तृतीयञ्च स्थानमुक्तं तानि तच्छब्देन परामृश्यन्ते। तेषां प्रसि-

भा॰ त्करणस्य वक्ष्यमाणत्वादसति चित्तत्करणे प्रत्यक्षनिर्देशानुपपत्तिः। देवताशब्दप्रयोगाच्च तेजःप्रभृतिषु इमास्तिस्रो देवता इति। तस्मात्तेषां खल्वेषां भूतानां पशुपक्षिस्थावरादीनां त्रीण्येव नातिरिक्तानि बीजानि कारणानि भवन्ति। कानि तानीत्युच्यन्ते। आण्डजमण्डाज्जातं अण्डजमेवाण्डजं पक्ष्यादि। पक्षिसर्पादिभ्यो हि पक्षिसर्पादयो जायमाना दृश्यन्ते। तेन पक्षी पक्षिणां बीजं। सर्पः सर्पाणां बीजं। तथाऽन्यदप्यण्डाज्जातं तज्जातीयानां बीजमित्यर्थः॥

नन्वण्डाज्जातमण्डजमुच्यते ऽतोऽण्डमेव बीजमिति युक्तं कथमण्डजं बीजमुच्यते। सत्यमेवं स्याद्यदि त्वदिच्छातन्त्रा श्रुतिः स्यात्स्वतन्त्रा श्रुतिर्यत आहाण्डजाद्येव बीजं नाण्डा-

---

व्या॰ द्गतद्योतनार्थं खल्वित्युक्तं। भूतानां त्रीण्येव बीजानि भवन्तीत्युत्तरत्र सम्बन्धः। भूतशब्दस्य तेजःप्रभृतिषु रूढत्वात्तेषामिह ग्रहणं किं न स्यादित्याशङ्क्याह। एषामितीति॥ भूतानां प्रत्यक्षत्वमेषामिति निर्दिश्यते। सम्भवति च पक्ष्यादीनां प्रत्यक्षतेति। तान्येवात्र भूतानि विवक्षितानि न तु तेजःप्रभृतीनि। तेषां प्रत्यक्षत्वायोगादित्यर्थः। तेजःप्रभृतीनां प्रत्यक्षत्वायोगादेषामिति निर्देशानुपपत्तिं समर्थयति। तेषामिति॥ तेषां प्रत्यक्षतया निर्देशासम्भवे हेत्वन्तरमाह। देवताशब्देति॥ देवतानां परोक्षत्वप्रसिद्धेरेतेषु च देवताप्रयोगान्नैतेषां प्रत्यक्षत्वोपपत्तिरित्यर्थः। तस्मान्महाभूतानामत्र भूतशब्देनोपादानायोगादित्यर्थः॥ अण्डजं पक्ष्यादीत्येतत्प्रत्यक्षेणोपपादयति। पक्षिसर्पादिभ्यो हीति॥ अन्यदपीति गोधाद्युच्यते॥

अण्डाज्जातमिति व्युत्पत्त्यनुसारेणाण्डमेव बीजं न त्वण्डजमिति शङ्कते। नन्विति॥ पौरुषेयी व्युत्पत्तिः श्रुत्या बाध्येति परिह-

उ॰ सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवताः

भा॰ दीति। दृश्यते चाण्डजाद्यभावे तज्जातीयसन्तत्यभावो नाण्डाद्यभावे। अतोऽण्डजादीन्येव बीजान्यण्डजादीनां। तथा जीवाज्जातं जीवजं जरायुजमित्येतत्पुरुषपश्वादि। उद्भिज्जं उद्भित्स्थावरं ततो जातमुद्भिज्जं धाना वोद्भिन्नतो जायत इत्युद्भिज्जं स्थावरबीजं स्थावराणां बीजमित्यर्थः। स्वेदजसंशोकजयोराण्डजोद्भिज्जयोरेव यथा सम्भवमन्तर्भावः। एवं ह्यवधारणं त्रीण्येव बीजानीत्युपपन्नं भवति॥

सेयं प्रकृता सदाख्या तेजोबन्नयोनिर्देवतोक्ता ईक्षतेक्षितवती यथा पूर्व्वं बहु स्यामिति। तदेव बहुभवनं

व्या॰ इति। सत्यमित्यादिना॥ न केवलं श्रुतेरेषा व्यवस्था किन्तूपपत्तेश्चाह। दृश्यते चेति॥ सत्येवाण्डजादे तज्जातीयमण्डजादि सन्तत्या जायते। तदभावे तदभाव इत्यन्वयव्यतिरेकाभ्यामण्डजाद्येवाण्डाजादिकार्य्यं। यद्यप्यण्डाद्यभावेनाण्डादि जायते तथाप्यण्डाद्यभावेऽण्डजाद्यभावेऽपि तद्भवतीति नान्वयः। तस्मादण्डजादीनामण्डजान्येव बीजानि नाण्डादीनीत्यर्थः। धानाशब्दो बीजविषयः॥ ननु स्वेदजं संशोकजमिति बीजद्वयमवशिष्यते तत्किमिति न व्युत्पाद्यते तत्राह। स्वेदजेति॥ स्वेदमुद्भिद्य जायमानं दंशमशकादि तदुद्भिज्जेऽन्तर्भवति। संशोकादौष्ण्याज्जायमान यूकादि तदण्डजेऽन्तर्भवति। यद्वा स्वेदजं यूकादि तदण्डजेऽन्तर्भूतं संशोकादौष्ण्याद्भूमिमुद्भिद्य जातं मशकादि तस्योद्भिज्जेऽन्तर्भावः। तथा च न तयोरस्ति पृथग्व्युत्पादनापेक्षेत्यर्थः। स्वेदजादेरण्डजादावन्तर्भावस्य प्रापकमाह। एवमिति॥

जीवाविष्टानां भूतानां सत्कार्य्यत्वं प्रकरणप्रामाण्यादुक्तं। इदानीं जीवानां विशिष्टरूपत्वेन ब्रह्मकार्य्यत्वेऽपि न स्वरूपेण तत्कार्य्यत्वं ब्रह्मैवोपाधिप्रविष्टं। जीवव्यवहारास्पदमित्यङ्गीक्रो-

उ० अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकर-
वाणीति ॥ २ ॥

भा० प्रयोजनं नाद्यापि निर्वृत्तमित्यत ईक्षां पुनः कृतवती बहुभवनमेव प्रयोजनमुररीकृत्य। कथं हन्तेदानीमहमिमा यथोक्तास्तेजआद्यास्तिस्रो देवता अनेन जीवेनेति स्वबुद्धिस्थं पूर्व्वसृष्ट्यनुभूतं प्राणधारणमात्मानमेव स्मरन्त्याहानेन जीवेनात्मनेति। प्राणधारणकर्त्रात्मनेति वचनात्। स्वात्मनोऽव्यतिरिक्तेन चैतन्यस्वरूपतया अविशिष्टेनेत्येतद्दर्शयति॥

अनुप्रविश्य तेजोबन्नभूतमात्रासंसर्गेण लब्धविशेषविज्ञाना सती नाम च रूपञ्च नामरूपे व्याकरवाणि विस्पष्टमाकरवाणि असौ नामायमिदं रूपमिति व्याकुर्य्यामीत्यर्थः। ननु न युक्तमिदमसंसारिण्याः सर्व्वज्ञाया देवताया

आ० रात्। तथा च ब्रह्मणि विज्ञाते जीवविज्ञानं सेत्स्यति॥ जीवानाञ्च भोगायतनानि भौतिकानि कार्य्याणि। तेषां नामरूपञ्च निर्म्माणं वक्तव्यमित्यभिप्रेत्योत्तरग्रन्थमादाय व्याकरोति। सेयमित्यादिना॥ यथा बहु स्यामिति पूर्व्वमीक्षितवती तथा किमिति पुनरैक्षत प्रयोजनाभावादित्याशङ्क्याह। तदेवेति॥ इदानीं महाभूतसृष्टेरनन्तरमिति यावत्। ब्रह्मणो मायोपाधिकस्य कारणत्वान्मायोपाधिवशात्पूर्व्वसृष्टावनुभूतत्वं तत्संस्कारस्य बुद्धिस्थत्वं स्मरणञ्चेत्यादि न विरुद्धमिति द्रष्टव्यं॥ आत्मनेति विशेषणस्य तात्पर्य्यमाह। प्राणेति॥

निर्व्विकल्पचिन्मात्ररूपा देवता मायावशान्महाभूतानि सृष्ट्वा तेषु यदा प्रविष्टा तदारब्धेषु सूत्रविराट्प्रभृतिषु समष्टिव्यष्ट्यात्मसु देहेषु प्रविश्य तत्तद्देहाभिमानवती देवदत्तादिनाम्ना रूपेण

भा० बुद्धिपूर्व्वकमनेकशतसहस्रानर्थाश्रयं देहमनुप्रविश्य दुःख-मनुभविष्यामीति सङ्कल्पनं। अनुप्रवेशश्च स्वातन्त्र्येसति। सत्यमेवं न युक्तं स्याद्यदि स्वेनैवाविकृतेन रूपेणानुप्रविशेयं दुःखमनुभवेयमिति च सङ्कल्पितवती नत्वेवं। कथं तर्ह्यनेन जीवेनात्मनानुप्रविश्येति वचनात्। जीवो हि नामदेवताया आभासमात्रं॥

बुद्ध्यादिभूतमात्रासंसर्गजनित आदर्श इव प्रविष्टः पुरुषप्रतिबिम्बो जलादिष्विव च सूर्य्यादीनां। अचिन्त्यानन्तशक्तिमत्या देवताया बुद्ध्यादिसम्बन्धः। चैतन्यावभासो देवतास्वरूपविवेकाग्रहणनिमित्तः। सुखी दुःखी मूढ

---

व्या० च शौक्ल्यादिना संयोज्य पियङ्ं व्याकरोतीत्याह। अनुप्रविश्येति॥ देवतायाः सर्व्वज्ञत्वादसंसारित्वात्स्वातन्त्र्याच्च संकल्पप्रवेशावयुक्ताविति शङ्कते। नन्विति॥ किं साक्षादनुप्रवेशादि विरुध्यते किंवा जीवद्वारामीति विकल्प्याद्यमङ्गीकरोति। सत्यमिति॥ साक्षादनुप्रवेशादि नास्ति चेत्तर्हि कथं तदित्याकाङ्क्षापूर्व्वकं द्वितीयं दूषयति। कथमिति॥ देवताया जीवद्वारेणानुप्रवेशाद्य-विरुद्धमिति शेषः। अविरोधमेव साधयितुं जीवस्वरूपमाह। जीवो हीति॥ आभिमुख्येनाहमित्यापरोक्ष्येणाभासत इत्याभासः। स्वतोऽपरोक्षश्चित्प्रतिविम्बस्तन्मात्रं जीवो नामेत्यर्थः॥

तस्य स्वरूपेणानादित्वेऽपि विशिष्टरूपेण सादित्वं दर्शयति। बुद्ध्यादीति॥ बुद्ध्यादिभिः भूतमात्रादिभिश्चिदात्मनः संसर्गस्तेन जनितस्तत्तच्चेति यावत्। ननु चिदात्मा कूटस्थोऽसङ्गोऽद्वितीयश्चेष्यते स कथं बुद्ध्यादिभिर्भूतमात्रादिभिश्च संसृज्यते तत्राह। अचिन्त्येति॥ सत्त्वादिप्रकारैरप्रमेयचिन्तनीयाऽनादिरनिर्व्वाच्या सम्यग्ज्ञानमन्तरेण नाशशून्या दृश्यमाना या मायाशक्तिस्तस्या विषयत्वेनाश्रयत्वेन च परा देवता वर्त्तिष्यते। तस्याश्च स्वनिष्ठमायाशक्तिवशाद्बुद्ध्यादिभिरात्मनः सम्बन्धः सिध्य-

भा॰ इत्याद्यनेकविकल्पप्रत्ययहेतुः । छायामात्रेण जीवरूपेणानुप्रविष्टत्वात् देवता न देहिकैः स्वतः सुखदुःखादिभिः सम्बध्यते । यथा पुरुषादित्यादय आदर्शोदकादिषु छायामात्रेणानुप्रविष्टा आदर्शोदकादिदोषैर्न सम्बध्यन्ते तद्वद्देवतापि ॥

सूर्य्यो यथा सर्व्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैरेकस्तथा सर्व्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्य आकाशवत्। सर्व्वगतश्च नित्य इति हि काठके। ध्यायतीव लेलायतीवेति च वाजसनेयके। ननु वाचारम्भणमात्रञ्चेज्जीवो मृषैव प्राप्तः तथा परलोकेहलोकादि च कथं तस्य। नैष दोषः। सदात्मना सत्यत्वाभ्युपगमात्। सर्व्वञ्च

आ॰ तीत्यर्थः॥ बुद्ध्यादिसम्बन्धफलमाह। चैतन्येति॥ तदाभासो जीवशब्दवाच्यः सिध्यतीति शेषः॥ बुद्ध्यादिभिरात्मनः सम्बन्धे मायाशक्तिरूपादानमित्युक्तं तत्रैव निमित्तकारणमाह। देवतेति॥ आवरणविक्षेपशक्तिसम्पन्ना हि मायाशक्तिस्ततोऽविद्योत्थदेशकालाद्यनवच्छिन्नदेवतास्वरूपोऽहमिति विशेषाग्रहणमावरणं निमित्तं कृत्वा बुद्ध्याद्यध्यासः सिध्यतीत्यर्थः॥ बुद्ध्याद्यध्यासस्य कार्य्यान्तरं दर्शयति। सुखीति॥ यद्येवं तर्हि देवता संसारिणी स्यादिति चेत्सत्यं। अज्ञानद्वारा बुद्ध्यादिसम्बन्धमनुभूय जीवत्वं प्राप्य सैव संसरतीत्याह। छायामात्रेणेति॥ परस्या देवतायाः स्वतः संसाराभावं दृष्टान्तेन स्पष्टयति। यथेत्यादिना।

तस्याः स्वतो दुःखाद्यसम्बन्धे श्रुतिं प्रमाणयति। सूर्य्य इति॥ उपाधिद्वारा तस्याः संसारित्वे च श्रुतिरस्तीत्याह। ध्यायतीति॥ प्रतिबिम्बे छायाशब्दप्रयोगान्मिथ्यात्वमिष्टमिति मन्वानः शङ्कते। नन्विति॥ तन्मृषात्वमिष्टमेवेत्याशङ्क्याह। तथेति॥ जीवस्य मृषात्वे स्वीकृते सति तस्येहलोकपरलोकौ तद्धेतुर्मोक्षस्तद्धेतुश्चेति सर्व्वं मृषा स्यादित्यर्थः॥ विशिष्टरूपेण मिथ्यात्वेऽपि स्वरूपेण

उ॰ तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति सेयं

भा॰ नामरूपादि सदात्मनैव सत्यं विकारजातं स्वतस्त्वनृतमेव॥ वाचारम्भणं विकारो नामधेयमित्युक्तत्वात्। तथा जीवो-ऽपीति। यच्चानुरूपो हि बलिरिति न्यायप्रसिद्धिः॥

अतः शब्दात्मना सर्व्वव्यवहाराणां सर्व्वविकाराणाञ्च सत्यत्वं सतोऽन्यत्वे चानृतत्वमिति न कश्चिद्दोषस्तार्किकै-रिहानुवक्तुं शक्यः। यथेतरेतरविरुद्धद्वैतवादाः स्वबुद्धिवि-कल्पनामात्रा अतत्त्वनिष्ठा इति शक्यं वक्तुं। सेवं तिस्रो देवता अनुप्रविश्य स्वात्मावस्थे वीजभूतेऽव्याकृते नामरूपे व्याकरवाणीतीक्षित्वा तासाञ्च तिसृणां देवतानामेकैकां त्रिवृतं त्रिवृतं करवाणि एकैकस्याः त्रिवित्करणे एकै-

आ॰ सत्यत्वाज्जीवस्य ब्रह्मास्मीतिज्ञानान्मुक्तिः सम्भवतीति समाधत्ते। नैष दोष इति॥ यत्तु परलोकेहलोकादि मृषा स्यादिति तत्राह। सर्व्वञ्चेति॥ कथं तर्हि तस्य मिथ्यात्वोक्तिरित्याशङ्क्याह। स्वत इति॥ यथा प्रपञ्चो ब्रह्मात्मना सत्योऽपि स्वरूपेण मिथ्येत्युक्तं तथा जीवशब्दवाच्योऽपि ब्रह्मात्मना सत्यस्वरूपेण मिथ्येति स्वीकर्त्त-व्यमित्याह। तथेति॥ अथ भोक्ता स्वरूपेणापि सत्योऽस्तु भोग्य-प्रपञ्चस्यैव मिथ्यात्वमिष्यतामित्याशङ्क्याह। यच्चानुरूपो हीति॥ लौकिकन्यायानुसारेण भोग्यप्रपञ्चस्य मिथ्यात्वे भोक्तुरपि विभक्त-स्वरूपेण तत्प्रसिद्धिरतो जीवशब्दवाच्यस्य मिथ्यात्वेऽपि तल्लक्ष्यस्य सन्मात्रसत्यत्वमिति व्यवस्थेत्यर्थः॥

यच्च तार्किकैरुच्यते प्रपञ्चस्य मिथ्यात्वे सौगतमतानुमतिः। सत्य-त्वे चाद्वैतव्याहतिरिति तदप्युक्तन्यायेन निरस्तमित्याह। अत इति॥ अद्वैतवाद दोषाभावं वैधर्म्यदृष्टान्तेन स्पष्टयति। यथेति॥ व्याकरवाणीत्येतदन्तं वाक्यं व्याख्याय तदनूद्य तासामित्यादि व्याचष्टे। सेवमित्यादिना॥ व्याकरवाणीत्यैक्षतेति सम्बन्धः। कथं

उ॰ देवतेमास्तिस्रो देवता अनेनैव जीवेनात्मनानुप्रविश्य नामरूपे व्याकरोत् ॥ ३ ॥ तासां

---

भा॰ कस्याः प्राधान्यं द्वयोर्द्वयोर्गुणभावोऽन्यथा हि रज्वा द्वैकमेव त्रिवित्करणं स्यात्। न तु तिसृणां पृथक् त्रिवित्करणमिति। एवं हि तेजोबन्नानां पृथङ्नामप्रत्ययलाभः स्यात्तेज इदमिमा आपोऽन्नमिदमिति च। पृथङ्नामप्रत्ययलाभे देवतानां सम्यग्व्यवहारस्य प्रसिद्धिः प्रयोजनं स्यात्।

एवमीक्षित्वा सेयं देवतेमास्तिस्रो देवता अनेनैव यथोक्तेनैव जीवेन सूर्य्यबिम्बवदन्तः प्रविश्य वैराजं पिण्डं प्रथमं देवतादीनां च पिण्डाननुप्रविश्य यथा सङ्कल्पमेव नामरूपे व्याकरोदसौनामायमिदंरूप इति तासाञ्च देवतानां गुणप्रधानभावेन त्रिवृतं त्रिवृतमेकैकामकरोत्करोति देवता। तिष्ठतु तावद्देवतादिपिण्डानां नामरूपाभ्यां व्याकृतानां तेजोबन्नमयत्वेन त्रिधात्वं यथा तु

---

व्या॰ पुनरिदं त्रिवित्करणमित्याशङ्क्य प्रथममेकैकां देवतां द्विधा द्विधा विभज्य पुनरेकैकं भागं द्विधा द्विधा कृत्वा तदितरभागयोर्निःक्षिप्य त्रिवित्करणं विवक्षितमित्याह। एकैकस्या इति। गुणप्रधानभावानङ्गीकारे समानपरिमाणसूत्रत्रयनिर्म्मितरज्जुवत्त्रिवृत्करणमेकमेव स्यादित्याह। अन्यथेति॥ एवकारार्थं दर्शयति। न त्विति। गुणप्रधानभावेन त्रिवित्करणमुपसंहर्त्तुमिति शब्दः॥ इतश्च गुणप्रधानभावेन त्रिवित्करणमेष्टव्यमित्याह। एवं हीति॥ पृथङ्नामप्रत्ययलाभेनापि किं स्यादित्याशङ्क्याह। पृथगिति॥

सेयमित्यादि व्याचष्टे। एवमित्यादिना॥ सङ्क्षेपेण त्रिवृत्करणं प्रतिज्ञायोदाहरणतः स्फुटीकर्त्तुमारभमाणा दर्शे त्रिवृत्करण॰

उ॰ त्रिवितं त्रिवितमेकैकामकरोद्यथा नु खलु सोम्येमास्तिस्रो देवतास्त्रिवृत्त्रिवृदेकैका भवति तन्मे विजानीहीति ॥ ४ ॥ ३ ॥

यदग्ने रोहितꣳ रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागादग्नेरग्नित्वं वाचा-

---

भा॰ खलु वह्निरिमाः पिण्डेभ्यस्तिस्रो देवतास्त्रिवृत्त्रिवृदेकैका भवति तन्मे मम निगदतो विजानीहि विस्पष्टमवधारयोदाहरणतः ॥ ३ ॥ यत्तद्देवतानां त्रिवृत्करणमुक्तं तस्यैवोदाहरणमुच्यते। उदाहरणं नामैकदेशप्रसिद्ध्याशेषप्रसिद्ध्यर्थमुदाह्रियत इति ॥

तदेतदाह यदग्नेः त्रिवृत्कृतस्य रोहितं रूपं प्रसिद्धं लोके तदत्रिवृत्कृतस्य तेजसो रूपमिति विद्धि। तथा च यच्छुक्लं रूपमग्नेरेव तदपामत्रिवृत्कृतानां यत्कृष्णं तस्यैवाग्ने रूपं तदन्नस्य पृथिव्या अत्रिवित्कृताया इति विद्धि। तत्रैवं सति रूपत्रयव्यतिरेकेणाग्निरिति यन्मन्यसे त्वं तस्याग्नेरग्नित्वमिदानीमपागादपगतं। प्राग्रूपत्रयविवेक-

---

व्या॰ स्यायै स्फुटीकर्त्तव्यत्वाद्देवतातिरिक्तेषु प्रथमं तदुदाहर्त्तुमुपक्रमते। तिष्ठतु तावदिति ॥ ३ ॥ कथमुदाहरणतोऽवधारणमित्याशङ्क्यानन्तरवाक्यमवतारयति। यत्तदिति ॥ उदाहरणशब्दं व्युत्पादयति। उदाहरणं नामेति ॥

तत्रैव श्रुतिमवतार्य्य व्याचष्टे। तदेतदित्यादिना ॥ अत्रिवृत्कृतानां रूपमिति विद्धीति सम्बन्धः। तत्रामो रूपत्रये पूर्व्वोक्तरीत्या पृथक्कृते सतीति यावत्। इदानीं विवेकदशायामित्यर्थः।

उ० रम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यं ॥ १ ॥ यदादित्यस्य रोहितꣳ रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागादादित्यादित्यस्यादित्यत्वं वाचारम्भणं विकारो नामधेय त्रीणि रूपाणीत्येव सत्यं ॥ २ ॥ यच्चन्द्रमसो

---

भा० विज्ञानाद्याग्निबुद्धिरासीत्तेजसाग्निबुद्धिरपगताग्निशब्दश्चेत्यर्थः । यथा दृश्यमानरक्तोपधानसंयुक्तः स्फटिको गृह्यमाणः पद्मरागोऽयमितिशब्दबुद्ध्योः प्रयोजको भवति प्रागुपधानस्फटिकयोर्विवेकविज्ञानात्तद्विवेकविज्ञाने तु पद्मरागशब्दबुद्धी निवर्त्तेते तद्विवेकविज्ञातुस्तद्वत् । ननु किमत्र बुद्धिशब्दकल्पनया क्रियते प्राग्रूपत्रयविवेककरणादग्निरेवासीत्तदग्नेरग्नित्वं रोहितादिरूपविवेककरणादपागादिति युक्तं । यथा तन्त्वपकर्षणे पटाभावः । नैवं बुद्धिशब्दमात्रमेव ह्यग्निर्यत आह वाचारम्भणमग्निर्नाम विकारो नामधेयं नाममात्रमित्यर्थोऽतोऽग्निबुद्धिरपि मृषैव । तर्हि किं तत्र सत्यं त्रीणि रूपाणीत्येव

---

था० अक्षरार्थमुक्त्वा तात्पर्यमाह । प्रागिति ॥ रूपत्रयविवेकात्प्रागवस्थायामग्निशब्दबुद्धिस्तद्विवेकादूर्द्ध्वं तन्निवृत्तिरित्येतमर्थं दृष्टान्तेन समर्थयते । यथेत्यादिना ॥ अग्निविषय श्रुतं हित्वाधिककल्पनायां नास्ति निबन्धनमिति शङ्कते । नन्विति ॥ रोहितादिरूपत्रयं विवेके सत्यग्नेरग्नित्वमपगच्छतीत्यत्र दृष्टान्तमाह । यथेति ॥ शब्दबुद्धिप्रक्षेपेऽपि न श्रुतत्यागोऽस्तीति परिहरति । नैवमिति ॥ तत्र प्रमाणत्वेनानन्तरवाक्यमादाय व्याचष्टे । यत इति ॥

उ॰ रोहितꣳ रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागाच्चन्द्राच्चन्द्रत्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यं ॥ ३ ॥ यद्विद्युतो रोहितꣳ रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागाद्विद्युतो विद्युत्त्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यं ॥ ४ ॥

---

भा॰ सत्यं नाणुमात्रमपि रूपत्रयव्यतिरेकेण सत्यमस्तीत्यवधारणार्थः। तथा यदादित्यस्य यच्चन्द्रमसो यद्विद्युत इत्यादि समानं। ननु यथा नु खलु सोम्येमास्तिस्रो देवतास्त्रिवृत्त्रिवृदेकैका भवति तन्मे विजानीहीत्युक्त्वा तेजस एव चतुर्भिरप्युदाहरणैरग्न्यादिभिस्त्रिवृत्करणं दर्शितं नाबन्नयोरुदाहरणं दर्शितं त्रिवृत्करणे॥

नैष दोषः। अबन्नविषयाण्युदाहरणान्येवमेव च द्रष्टव्यानीति मन्यते श्रुतिः। तेजस उदाहरणमुपलक्षणार्थं। रूपवत्त्वात्स्पष्टार्थत्वोपपत्तेश्च। गन्धरसयोरनुदाहरणं

---

व्या॰ रूपमेतन्नाममात्रमतःशब्दार्थः॥ प्रक्रमपर्य्यालोचनायामुदाहरणे न्यूनत्वमस्तीति शङ्कते। नन्विति॥

यद्यपीकूपादे रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्य यच्च व्रीहियवादे रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्येत्युदाहरणासम्भवान्न न्यूनतेति परिहरति। नैष दोष इति॥ तर्हि तेजोविषयमप्युदाहरणमूहनीयं किमित्युदाहृतमित्याशङ्क्याह। तेजस इति॥ यदि क्वचिदपि नोदाहरणमुच्यते नोपलक्षणमेव सिद्ध्येदतस्त्रयाणां रूपवत्त्वेन यथोक्तरूपविभागस्य तेषु स्फुटत्वसम्भवात्तेजसो दृष्टान्तप्रदर्शनम-

भा॰ त्रयाणामसम्भवात् न हि गन्धरसौ तेजसि स्तः। स्पर्शश-ब्दयोरनुदाहरणं विभागेन दर्शयितुमशक्यत्वात्॥

यदि सर्व्वं जगत्त्रिवृत्कृतमित्यग्न्यादिवत्त्रीणि रूपाणी-त्येव सत्यमग्नेरग्नित्ववदपागाज्जगतो जगत्त्वं। तथाऽन्न-स्यापि अप्शुङ्गत्वादाप इत्येव सत्यं वाचारम्भणमात्रमन्नं। तथापामपि तेजःशुङ्गत्वाद्वाचारम्भणत्वे तेज इत्येव सत्यं। तेजसोऽपि सच्छुङ्गत्वाद्वाचारम्भणत्वं सदित्येव सत्यमित्येषो ऽर्थो विवक्षितः। ननु वाय्वन्तरिक्षे त्वत्रिवृत्कृते तेजः-

आ॰ न्नादिविषयोदाहरणोपलक्षणार्थं तेनोपेक्षितमित्यर्थः। अब-न्नयोरपि त्रिवृत्करणमुपलक्षितं चेत्तर्हि तत्र रसगन्धयोस्त्रिवृ-त्करणमुदाहर्त्तव्यमित्याशङ्क्याह। गन्धरसयोरिति॥ यथा यदबन्नयोर्भास्वरं लोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्येति शक्यते रूपं विवेक्तुं न तथाऽमुको रसो गन्धो वा तेजसोऽपामन्नस्यास्तीति ज्ञातुं शक्यमित्यनुदाहरणं तयोरित्यर्थः। ननु त्रिवृत्करणेषु त्रिष्वपि रूपवद्गन्धरसौ सम्भा-वितौ तत्कथं तयोस्त्रयाणामसम्भवोक्तिस्तत्राह। न हीति। सम्भा-वितावपि तौ त्रिषु विवेक्तुमशक्यावित्यनुदाहरणीयावित्यर्थः। तर्हि सर्व्वेषु भूतेषु सम्भावितयोः स्पर्शशब्दयोरुदाहरणं किं न स्यादित्याशङ्क्याह। स्पर्शशब्दयोरिति॥ यथा लोहितादिरूपत्रयं त्रयाणां विभागेन दर्शयितुं शक्यं न तथा शब्दत्रयं स्पर्शत्रयं च त्रयाणां विभागेन दर्शयितुं शक्यं न खल्वेकत्रोष्णशीतानुष्णाशीत-त्रयं दृश्यते नापि खरमधुरमध्यमशब्दत्रयमेकत्रोपलब्धमित्यर्थः॥

सर्व्वस्य त्रिवृत्कृतत्वे फलितमाह। यदीति॥ यथाऽग्न्यादि त्रिवृत्कृतं तथा सर्व्वमेव जगद्यदि त्रिवृत्कृतमित्यङ्गीकृतं तदाग्ने-रग्नित्ववज्जगतो जगत्त्वमपगतं त्रीणि रूपाणीत्येव सत्यमिति योजना॥ तथापि कथं सन्मात्रपरिशेषः स्यादित्याशङ्क्याह। तथेति॥ रूपत्रयव्यतिरेकेण जगतोऽभाववत्कृष्णस्यापि रूपस्य पृथिवीशब्दितस्य शुक्लरूपमात्रजलकार्य्यत्वात्तदतिरेकेणासत्त्वं

भा॰ प्रकृतिष्वनन्तर्भूतत्वादविशिष्येते। एवं गन्धरसशब्दस्पर्शा-स्त्रावशिष्टा इति। कथं सतो विज्ञानेन सर्व्वमन्यदविज्ञातं भवेत्तद्विज्ञाने वा प्रकारान्तरं वाच्यं। नैष दोषो रूप-वद्द्रव्ये सर्व्वस्य दर्शनात्।

कथं तेजसि तावद्रूपवति शब्दस्पर्शयोरप्युपलम्भादाय्व-न्तरिचयोस्तत्र स्पर्शशब्दगुणवतोः सद्भावोऽनुमीयते। तथा बन्नयो रूपवतो रसगन्धान्तर्भाव इति। रूपवतां त्रयाणां तेजोऽबन्नानां त्रिवृत्करणप्रदर्शनेन सर्व्वं तदन्तर्भूतं सद्वि-कारत्वात्त्रीण्येव रूपाणि विज्ञातं मन्यते श्रुतिः। न हि मर्त्तं रूपवत् द्रव्यं प्रत्याख्याय वाय्वाकाशयोस्तद्गुणयो-

---

आ॰ पृथिवीवदपामपि शुक्लरूपमात्राणां लोहितरूपमात्रतेजोविका-रत्वात्तद्व्यतिरेकेणाभावस्तस्यापि सत्कार्य्यत्वात्ततो भेदेनासत्त्वं सन्मात्रमेव परिशिष्टमित्येतत्त्रिवृत्करणप्रकरणे विवक्षितमि-त्यर्थः। त्रिवृत्करणपक्षे नैकविज्ञानेन सर्व्वविज्ञानं सिद्ध्यति॥ परि-शिष्टविज्ञेयसद्भावादिति शङ्कते। नन्विति॥ इतिपदं कथमि-त्यादिना सम्बध्यते। गन्धादयश्च शब्दान्ता गुणा गुणिष्वनन्तर्भूताः सन्तीति न सद्विज्ञानेन तद्विज्ञानोपपत्तिरित्याह। गन्धेति॥ तद्विज्ञानं सद्विज्ञानेन वाय्वादिविज्ञानं तत्र प्रकारान्तरं तत्कार्य्यत्वादतिरिक्तमिति यावत्॥ आकाशादेस्त्रिष्वेवान्तर्भाव-सम्भवान्न परिशिष्टविज्ञेयमस्तीति परिहरति। नैष दोष इति॥ कथं तेजोऽबन्नेषु सर्व्वस्याकाशादेर्दर्शनमित्याह। कथमिति॥

तत्र शब्दस्पर्शयोराकाशवाय्वोश्च भूतत्रये प्रत्यक्षानुमानाभ्या-मुपलब्धिं दर्शयति। तेजसीति॥ तेजोग्रहणमबन्नयोरुपलक्षणं तत्रापि स्पर्शाद्युपलब्धेरविशेषाद्यत्तु गन्धादि ज्ञेयान्तरमिति तत्राह। तथेति॥ भूतत्रये स्पर्शाद्यन्तर्भाववदिति यावत्॥ त्रिष्वेवान्तर्भावे फलितमाह। रूपवतामिति॥ भूतत्रये रूपव-त्याकाशादेरन्तर्भावं व्यतिरेकद्वारा समर्थयते। न हीति॥ अन्त-

उ॰ एतद्ध स्म वै तद्विद्वाꣳस आहुः पूर्वे महाशाला महाश्रोत्रिया न नोऽद्य कश्चनाश्रुतममतमविज्ञात-

---

भा॰ गन्धरसयोर्वा ग्रहणमस्ति। अथवा रूपवतामपि त्रिवृत्करणं प्रदर्शनार्थमेव मन्यते श्रुतिः। यथा तु त्रिवृत्कृते त्रीण्येव रूपाणीत्येव सत्यं तथा पञ्चीकरणेऽपि समानो न्याय इत्यतः सर्व्वस्य सद्विकारत्वात्सतो विज्ञानेन सर्व्वमिदं विज्ञातं स्यात्सदेकमेवाद्वितीयं सत्यमिति सिद्धमेव भवति॥

तदेकस्मिन् सति ज्ञाते सर्व्वमिदं ज्ञातं भवतीति सूक्तं। एतद्विद्वांसो विदितवन्तः पूर्व्वेऽतिक्रान्ता महाशाला महाश्रोत्रिया आहुः स्म वै किल। किमुक्तवन्त इत्याह। न नोऽस्माकं कुलेऽद्येदानीं यथोक्तविज्ञानवतां कश्चन कश्चिदप्यश्रुतममतमविज्ञातमुदाहरिष्यति नोदाहरिष्यति सर्व्वं

---

आ॰ भावोक्तिप्रयासं परिहर्त्तुं पक्षान्तरमाह। अथवेति॥ प्रदर्शनार्थं पञ्चीकरणस्येति शेषः॥ कथं पञ्चीकरणे सन्मात्रपरिशेषः सिद्ध्यतीत्याशङ्क्याह। यथेति॥ यदा पञ्चापि भूतानि प्रत्येकं द्वेधा विभज्य पुनरेकैकं भागं चतुर्धा कृत्वा स्वभागातिरिक्तेषु पूर्व्वेषु भागेष्वेकैकशो निक्षिप्यन्ते तदा पञ्चीकरणं श्रुत्युपलक्षितं लभ्यते तत्रापि पञ्चानां भागानां पृथक्करणे पञ्चैव तन्मात्राण्यवशिष्यन्ते तान्यपि पृथिव्यादीन्यबादिकार्य्यत्वात्तत्कारणव्यतिरेकेण न सिद्ध्यन्तीति त्रिवृत्करणवत्पञ्चीकरणेऽपि न्यायसाम्यात्सर्व्वस्य सद्विकारत्वात्तद्व्यतिरेकेणाभावात्तेन विज्ञातेन तदपि विज्ञातमेव स्यात्सन्मात्रं तु परमार्थसत्यं परिशिष्टं भवतीत्यर्थः॥

उक्तन्यायेनैकविज्ञानेन सर्व्वविज्ञानश्रुतिरविरुद्धेत्युपसंहरति। तदेकस्मिन्निति। त्रिवृत्करणपक्षेऽप्येकविज्ञानेन सर्व्वविज्ञानश्रुतिरविरुद्धेत्युपपाद्य त्रिवृत्करणमुदाहरणान्तरेण दर्शयितु-

उ० मुदाहरिष्यतीति ह्येभ्यो विदाञ्चक्रुः ॥ ५ ॥ यदु रोहितमिवाभूदिति तेजसस्तद्रूपमिति तद्विदाञ्चक्रुः यदु शुक्लमिवाभूदित्यपाᳬं रूपमिति तद्विदाञ्चक्रुर्यदु कृष्णमिवाभूदित्यन्नस्य रूपमिति

भा० विज्ञातमेवास्मत्कुलीनानां सद्विज्ञानत्वादित्यभिप्रायः । ते पुनः कथं सर्व्वं विज्ञातवन्त इत्याह । एभ्यस्त्रिभ्यो रोहितादिरूपेभ्यस्त्रिवृत्कृतेभ्यो विज्ञातेभ्यः सर्व्वमप्यन्यच्छिष्टमेवमेवेति विदाञ्चक्रुर्विज्ञातवन्तो यस्मात्तस्मात्सर्व्वज्ञा एव सद्विज्ञानात्त आसुरित्यर्थः । अथवैभ्यो विदाञ्चक्रुरित्यग्न्यादिभ्यो दृष्टान्तेभ्यो विज्ञातेभ्यः सर्व्वमन्यद्विदाञ्चक्रुरित्येतत्कथं यदन्यद्रूपेण सन्दिह्यमाने कपोतादिरूपे रोहितमेव यद्गृह्यमाणमभूत्तेषां पूर्व्वेषां ब्रह्मविदां तत्तेजसो रूपमिति विदाञ्चक्रुः ॥

तथा यच्छुक्लमिवाभूद्गृह्यमाणं तदपां यत्कृष्णमिव गृह्यमाणं तदन्नस्येति विदाञ्चक्रुरेवमेवात्यन्तदुर्लक्ष्यं यत्तु अप्यविज्ञातमिव विशेषतो गृह्यमाणमभूत्तदप्येतासा-

आ० मारभते । एतदिति ॥ त्रिवृत्करणमिति यावत् । ते पुनरिति त्रिवृत्करणविज्ञानवन्तो निर्द्दिश्यन्ते ॥ वेदनप्रकारमेवाकाङ्क्षापूर्व्वकं प्रकटयति । कथमित्यादिना ॥ अन्यदग्न्यादिभ्यः सकाशादिति शेषः । यदनेकरूपत्वात्कपोतादिरूपेण सन्दिह्यमानमेतद्दृश्यते तस्मिन्कपोतादिस्वरूपे यत्किञ्चिद्रोहितमिव रूपं गृह्यमाणं पूर्व्वेषामासीत्तत्तेजसो रूपमिति ते विदितवन्त इति योजना ॥

अत्यन्तदुर्लक्ष्यं नामरूपाभ्यां दुर्ज्ञानं द्वीपान्तरादागतं पक्ष्यादीत्यर्थः । अगृह्यमाणमिति च्छेदः । यथा नु खलु इत्यादिवाक्यं वृत्तानु-

उ॰ तद्विदाञ्चक्रुः ॥ ६ ॥ यद्वविज्ञातमेवाभूदित्येता षामेव देवतानाᳬं समास इति तद्विदाञ्चक्रुर्यथा नु खलु सोम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका भवति तन्मे विजानीहीति ॥ ७ ॥ ४ ॥ अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत्पुरीषं भवति यो मध्यमस्तन्माᳬंसं योऽणिष्ठस्तन्मनः ॥ १ ॥

---

भा॰ मेव तिसृणां देवतानां समासः समुदाय इति विदाञ्चक्रुः। एवं तावद्वाह्यं वस्त्वग्न्यादिवद्विज्ञातं तथेदानीं यथा नु खलु सोम्येमा यथोक्तास्तिस्रो देवताः पुरुषं शिरःपाण्यादिलक्षणं कार्य्यकारणसङ्घातं प्राप्य पुरुषेणोपयुज्यमानास्त्रिवृत्त्रिवृदेकैका भवति तन्मे विजानीहि निगदत इत्युक्त्वा आह ॥ ४ ॥ अन्नमशितं भुक्तं त्रेधा विधीयते जाठरेणाग्निना पच्यमानं त्रिधा विभजते। कथं तस्यान्नस्य त्रेधा विधीयमानस्य यः स्थविष्ठः स्थूलतमो धातुः स्थूलतमं वस्तु विभक्तस्य स्थूलोंऽशस्तत्पुरीषं भवति। यो मध्यमोंऽशो धातुरन्नस्य तद्रसादिक्रमेण

---

आ॰ वादपूर्व्वकमवतारयति। एवं तावदिति ॥ यथा खल्वेकैका देवता पुरुषं प्राप्य त्रिवृत्त्रिवृद्भवति तथेदानीं तदाध्यात्मिकं त्रिवृत्करणमेवेति जानीहीति सम्बन्धः। अध्यात्मं त्रिवृत्करणमिति शेषः ॥४॥ कथं त्रेधा विभज्यमानत्वं कथं वा तस्य विनियोग इति प्रश्नपूर्व्वकं विवृणोति। कथमित्यादिना ॥ रसादीत्यादिशब्देन रुधिरादि गृह्यते। तस्य कर्म्मफलस्य नाडीचरो भोक्तेति हिता-

उ॰ आपः पीतास्त्रेधा विधीयन्ते तासां यः स्थविष्ठो धातुस्तन्मूत्रं भवति यो मध्यमस्तल्लोहितं यो-

---

भा॰ परिणम्य मांसं भवति योऽणिष्ठोऽणुतमो धातुः स ऊर्द्ध्वं हृदयं प्राप्य सूक्ष्मासु हिताख्यासु नाडीष्वनुप्रविश्य वागादिकरणसङ्घातस्य स्थितिमुत्पादयन्मनोभवति । मनोरूपेण ,वपरिणमन्मनस उपचयं करोति । ततश्चान्नोपचितत्वान्मनसो भौतिकत्वमेव न वैशेषिकतन्त्रोक्तं लक्षणं नित्यं निरवयवञ्चेति गृह्यते । यदपि मनोऽस्य दैवञ्चक्षुरिति वक्ष्यति तदपि न नित्यत्वापेक्षया किं तर्हि सूक्ष्मव्यवहितविप्रकृष्टादिसर्व्वेन्द्रियविषयव्यापकत्वापेक्षया । यच्चान्येन्द्रियविषयापेक्षया नित्यत्वं तदप्यापेक्षिकमेवेति वक्ष्यामः । सदेकमेवाद्वितीयमिति श्रुतेः । तथापः पीतास्त्रेधाविधीयन्ते तासां यः स्थविष्ठो धातुस्तन्मूत्रं भवति । यो मध्यमस्तल्लोहितं भवति । योऽणिष्ठः स प्राणो भवति ।

---

व्या॰ स्या नाड्यस्तास्विति यावत्॥ कथमन्नोपयोगात्प्रागेव मनसः सिद्धत्वात्तन्मनो भवतीत्युच्यते तत्राह । मनोरूपेणेति ॥ मनसोऽन्नोपचितत्ववचनाद्वैशेषिकपरिभाषापि दूषिता वेदितव्येत्याह । ततश्चेति ॥ मनसो दैवत्वविशेषणान्नित्यत्वसिद्धिरित्याशङ्क्याह । यदपीति ॥ केनाभिप्रायेण तर्हि विशेषणमित्याशङ्क्याह । किं तर्हीति ॥ तर्हि चक्षुरादिभ्यो वैलक्षण्यादस्ति तदपेक्षया नित्यत्वमित्याशङ्क्याह । यच्चेति ॥ यद्वा चक्षुरादिष्वसत्स्वपि मनसः सत्त्वोपलम्भात्तदपेक्षया तस्य नित्यत्वमेष्टव्यमित्याशङ्क्याह । यच्चेति ॥

आत्मवन्मनसो किं न स्यादित्याशङ्क्याह । सदिति ॥ भुक्तस्यान्नस्य त्रैविध्यमुक्त्वा पीतानामपामपि त्रैविध्यमाह । तथेति ॥

उ॰ ऽणिष्ठः स प्राणः ॥ २ ॥ तेजोऽशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तदस्थि भवति यो मध्यमः स मज्जा योऽणिष्ठः सा वाक् ॥ ३ ॥

---

भा॰ वक्ष्यति ह्यापोमयः प्राणो न पिबतो विच्छेत्स्यत इति। तथा तेजोऽशितं तैलघृतादि भक्षितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत् अस्थि भवति। यो मध्यमः स मज्जा ऽस्थ्यन्तर्गतस्नेहः। योऽणिष्ठः सा वाक्। तैलघृतादिभक्षणाद्धि वाग्विशदाभाषणे समर्था भवतीति प्रसिद्धं लोके। यत एवमन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वाक्। ननु केवलान्नभक्षिण आखुप्रभृतयो वाग्मिनः प्राणवन्तश्च। तथाऽब्मात्रभक्ष्याः सामुद्रा मीनमकरप्रभृतयो मनस्विनो वाग्मिनस्तथा स्नेहपानानामपि प्राणवत्त्वं मनस्वित्वं चानुमेयं यदि सन्ति तत्र कथमन्नमयं हि सोम्य मन इत्याद्युच्यते ॥

नैष दोषः। सर्व्वस्य त्रिवृत्करणत्वात्सर्व्वत्र सर्व्वोपपत्तेः। न ह्यत्रिवृत्कृतमन्नमश्नाति कश्चिदापो वा अत्रिवृत्कृताः

---

व्या॰ कथं तेजसोऽग्न्यादेरशनमित्याशङ्क्य विशिनष्टि। तैलेति॥ मज्जाशब्दार्थमाह। अस्थीति॥ योऽणिष्ठः सा वागित्युक्तं व्याकरोति। तैलघृतादीति॥ भुक्तस्यान्नस्य पीतानामप्यपामशितस्य तैलादेश्च योऽणिष्ठा धातवस्ते मनोवाक्प्राणा इत्येवं यतः सिद्धमतस्तेषामन्नादिमयत्वं युक्तमित्याह। यत इति॥ तेषामन्नादिमयत्वं व्यतिरेकसिद्धिमाश्रित्याक्षिपति। नन्विति॥

आखुप्रमुखानां स्फुटोदपानाद्यनुपलम्भेपि यत्तेषां भक्ष्यं तत्रैवोदकाद्यन्तर्भावसम्भवात्प्राणादेरब्मयत्वाद्युपपन्नमित्युत्तरमाह।

उ॰ अन्नमयꣳ हि सोम्य मन आपोमयः प्राणस्तेजो-
मयी वागिति भूय एव मा भगवान् विज्ञा-
पयत्विति तथा सोम्येति होवाच ॥ ४ ॥ ५ ॥

---

भा॰ पीयन्ते तेजो वा त्रिवृत्कृतमश्नाति कश्चिदित्यन्नादानामाखुप्रभृतीनां वाग्मित्वं प्राणवत्त्वञ्चेत्याद्यविरुद्धं। इत्येवं प्रत्यायितः श्वेतकेतुराह भूय एव पुनरेव मा मा भगवानन्नमयं हि सोम्य मन इत्यादि विज्ञापयतु दृष्टान्तेनावगमयतु नाद्यापि ममास्मिन्नर्थे सम्यङ्निश्चयो जातः। यस्मात्तेजोऽबन्नमयत्वेनाविशिष्टे देह एकस्मिन्नुपयुज्यमानान्यबन्नस्नेहभक्ष्याणि जातान्यणिष्ठधातुरूपेण मनःप्राणवाचमुपचिन्वन्ति स्वजात्यनतिक्रमेणेति दुर्विज्ञेयमित्यभिप्रायोऽतो भूय एवेत्याद्याह। तमेवमुक्तवन्तं तथास्तु

---

व्या॰ नष दोष इति ॥ सर्व्वस्यान्नादेस्त्रिवृत्करणस्योक्तत्वात्तस्य सर्व्वस्यैव भक्ष्यस्य भूतत्रयात्मत्वसम्भवादेकैकं भक्षयतोऽपि सर्व्वभक्षकत्वोपपत्तेर्मनआदेरन्नादिमयत्वमविरुद्धमित्यर्थः। उक्तमेव व्यक्तीकरोति। न हीत्यादिना ॥ उक्तरीत्या मनआदेरन्नादिमयत्वप्रत्यायनद्वारा प्रनाड्या सन्मात्रपरिशेषे प्रत्यायिते सति श्वेतकेतुश्चोदयतीत्याह। इत्येवमिति ॥ सर्व्वेषां सन्निधानाविशेषेऽन्नस्य सूक्ष्मांशो मन एवोपचिनोति। न प्राणमिति ॥ निश्चयासिद्धिरित्याह। नाद्यापीति ॥ पार्थिवमेवोपचिनोतीति विशेषमाशङ्क्याह। यस्मादिति ॥ एकस्मिन्नुदरे प्रविष्टानामन्नादीनां मिश्रीभूतत्वान्मनसश्च सर्व्वभूतगुणव्यञ्जकत्वेन सर्व्वभूतारब्धत्वात्पार्थिवत्वासिद्धिर्नोक्तो विशेषः सम्भवतीत्यर्थः। यस्मादेवमभिप्रायः श्वेतकेतोरत इति योजना ॥ मनआदेरन्नादिमयत्वमुपपादयितुमुत्तरग्रन्थमवतारयति। तमेवमिति ॥ यत्त्वं मन-

उ० दध्नः सोम्य मथ्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति तत्सर्पिर्भवति ॥ १ ॥ एवमेव खलु सोम्यान्नस्याश्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति तन्मनो भवति ॥ २ ॥ अपाᳫं सोम्य पीयमानानां योऽणिमा स ऊर्ध्वः समुदीषति स

---

भा० सोम्येति होवाच पिता शृणु एव यत्र दृष्टान्तं यथैतदुपपद्यते यत्पृच्छसि ॥ ५ ॥

दध्नः सोम्य मथ्यमानस्य योऽणिमाणुभागः स ऊर्ध्वः समुदीषति सम्भूयोर्ध्वं नवनीतभावेन गच्छति तत्सर्पिर्भवति। यथाऽयं दृष्टान्त एवमेव खलु सोम्यान्नस्यौदनादेरस्य भुज्यमानस्यौदर्य्येणाग्निना वायुसहितेन खजेनैव मथ्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति तन्मनो भवति। मनोऽवयवैः सह सम्भूय मन उपचिनोति इत्येतत्। तथापां सोम्य पीयमानानां योऽणिमा स ऊर्ध्वः समुदीषति स प्राणो भवत्येवमेव खलु सोम्य तेजसोऽश्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति सा वाग्भवत्यन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वागिति युक्तमित्य-

---

व्या० आदेरन्नादिमयत्वं कथमिति पृच्छसि तदिदं यथोपपाद्य तथा ते तत्रान्नादिमयत्वे तस्य दृष्टान्तमुच्यमानं शृण्विति योजना ॥ ५ ॥

मिश्रीभावेऽपि सूक्ष्मभागस्य पृथगेव कार्य्यकारणत्वे दृष्टान्तमाह । दध्न इति ॥ दृष्टान्तमनूद्य दार्ष्टान्तिकमाह । यथेति ॥ खजो मन्थास्तेन मथ्यमानस्य दध्नो यथाणिमा तथा

उ॰ प्राणो भवति ॥ ३ ॥ तेजसः सोम्याश्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति सा वाग्भवति ॥ ४ ॥ अन्नमयꣳ हि सोम्य मन आपोमयः प्राणस्तेजोमयी वागिति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥ ५ ॥ ६ ॥

षोडशकलः सोम्य पुरुषः पञ्चदशाहानि माशीः काममपः पिबापोमयः प्राणो न पिबतो

---

भा॰ भिप्रायोऽतोऽप्तेजसोरस्तु एतत्सर्वमेवं । मनस्त्वन्नमयमित्यत्र नैकान्तेन मम निश्चयो जातो भूय एव मा भगवान्मनसोऽन्नमयत्वं दृष्टान्तेन विज्ञापयत्विति । तथा सोम्येति होवाच पिता ॥ ६ ॥

अन्नस्य भुक्तस्य योऽणिष्ठो धातुः स मनसि शक्तिमधात्सोऽन्नोपचिता मनसः शक्तिः षोडशधा प्रविभज्य पुरुषस्य कलात्वेन निर्दिदीचिता । तया मनस्यन्नोपचितया

---

आ॰ यथोक्तस्यान्नस्य योऽणिमेति योज्यं॥ कथं तन्मनो भवतीत्युच्यते प्रागपि मनसः सिद्धत्वादित्याशङ्क्याह । मनोऽवयवैरिति ॥ मनआदेरन्नादिमयत्वमुपसंहरति । अन्नमयं हीति ॥ अतो भवदभिप्रायादिति यावत् ॥ एतत्सर्वमिति प्राणस्याबमयत्वं वाचस्तेजोमयत्वञ्चोच्यते । हृदयप्रदेशे प्राणादिसन्निधानाविशेषे कथं मनस एवान्नरसेनोपचय इत्येतन्नाद्यापि समाहितमित्याह। मनस्त्विति ॥ मनसो विशेषतोऽन्नमयत्वमुपपादयितुमुत्तरग्रन्थम् उत्थापयति । तथेति ६ ॥

अन्वयव्यतिरेकाभ्यां मनसोऽन्नरसोपचितत्वं दर्शयितुमन्नर-

उ० विच्छेत्स्यत इति ॥ १ ॥ स ह पञ्चदशाहानि नाशाथ हैनमुपससाद किं ब्रवीमि भो इत्यृचः सोम्य यजु-

---

भा० शक्त्या षोडशधा प्रविभक्तया संयुक्तस्तद्वान् कार्य्यकारणसङ्घातलक्षणो जीवविशिष्टः षोडशकल उच्यते। यस्यां सत्यां द्रष्टा श्रोता मन्ता बोद्धा कर्त्ता विज्ञाता सर्व्वक्रियासमर्थः पुरुषो भवति हीयमानायां च तस्यां सामर्थ्यहानिः। वक्ष्यति चान्नस्यापि द्रष्टेत्यादि। सर्व्वस्य कार्य्यकारणसङ्घातस्य सामर्थ्यं मनःकृतमेव। मानसेन हि बलेन सम्पन्ना बलिनो दृश्यन्ते लोके। ध्यानाहाराश्च केचिदन्नस्य सर्व्वात्मकत्वात्। अतोऽन्नकृतं मानसं वीर्य्यं। षोडशकला यस्य पुरुषस्य सोऽयं षोडशकलः पुरुष एतच्चेत्प्रत्यक्षीकर्त्तुमिच्छसि पञ्चदशसङ्ख्याकान्यहानि माशीरशनं माकार्षीः काममिच्छातोऽपः पिब यस्मान्न पिबतोऽपस्ते प्राणो विच्छेदमापत्स्यते तस्मादापोमयोऽब्विकारः प्राण इत्यवोचाम। न हि कार्य्यं स्वकारणोपष्टम्भमन्तरेणाविभ्रंशमानं स्थातुमुत्सहते स ह एवं श्रुत्वा मनसोऽन्नमयत्वं प्रत्यक्षीकर्त्तुमिच्छन्पञ्चदशाहानि नाशाशनं न कृतवान्।

---

व्या० सजनितां शक्तिं कलात्वेन कल्पयति। चान्नस्येत्यादिना ॥ षोडशादिनावच्छेदेन षोडशधा कल्पनं द्रष्टव्यं तथापि पुरुषस्य कथं षोडशकलवत्त्वमत आह। तयेति ॥ तामेव प्रकृतामन्नरसकृतां शक्तिं विशिनष्टि। यस्यामिति ॥ तया संयुक्तपुरुषः षोडशकल इति पूर्व्वेण सम्बन्धः। चान्नरसजनितं मानसशक्तिप्रयुक्तं सङ्घातस्य सामर्थ्यमित्यत्र वाक्यशेषं प्रमाणयति। वक्ष्यति चेति ॥ चापो-

उ० ᳪषि सामानीति स होवाच न वै मा प्रतिभान्ति भो इति ॥ २ ॥

तᳪ होवाच यथा सोम्य महतोऽभ्याहितस्यैकोऽङ्गारः खद्योतमात्रः परिशिष्टः स्यात्तेन ततोऽपि न बहु दहेदेवᳪ सोम्य ते षोडशानां कलानामेका कलातिशिष्टा स्यात्तयैतर्हि वेदान्नानु-

भा० अथ षोडशेऽहनि हैनं पितरमुपससादोपगतवानुपगम्य होवाच किं ब्रवीमि भो इति इतर आह ऋचः सोम्य यजूंषि सामान्यधीष्वेत्येवमुक्तः पिताह। न वै मा मामृगादीनि प्रतिभान्ति मम मनसि न दृश्यन्त इत्यर्थो हे भो भगवन्नित्येवमुक्तवन्तं पिताह शृणु॥ तत्र कारणं येन ते तान्यृगादीनि न प्रतिभान्तीति तं होवाच यथा लोके हे सोम्य महतो महत्परिमाणस्याभ्याहितस्योपचितस्येन्धनैरग्नेरेकोऽङ्गारः खद्योतमात्रः खद्योतपरिमाणः शान्तस्य परिशिष्टोऽवशिष्टः स्यात्तेनाङ्गारेण ततोऽपि तत्परिमाणादीषदपि न बहु दहेदेवमेव खलु सोम्य ते तवान्नोपचितानां षोडशानामेका कलावयवोऽतिशिष्टाऽ-

आ० ऽलाभेऽस्यास्तीत्यपि यावदन्नं प्राप्यातो भवति तावदेवास्य द्रष्टेत्यादिव्यवहारः सम्भवतीत्यर्थः॥ उक्तेऽर्थे लोकानुभवमनुकूलयति। सर्वस्येति॥ तदेव स्पष्टयति। मानसेति॥ किञ्च केचिन्मानसेनैव बलेन ध्यानाद्दारा दृश्यन्ते तच्च ध्यानमन्नपरम्परापरिनिष्पन्नमन्नस्यैव देहादिरूपेण परिणतत्वादित्याह। ध्यानेति॥ एवं पातनिकां कृत्वा षोडशकलशब्दार्थमाह।

उ॰ भवस्यशान ॥ ३ ॥ अथ मे विज्ञास्यसीति स हा-
शाथ हैनमुपससाद तꣳ ह यत्किञ्च पप्रच्छ सर्वꣳ
ह प्रतिपेदे तꣳ होवाच ॥ ४ ॥ यथा सोम्य महतो-
ऽभ्याहितस्यैकमङ्गारं खद्योतमात्रं परिशिष्टं तं
तृणैरुपसमाधाय प्राज्वलयेत् । तेन ततोऽपि

---

भा॰ वशिष्टा स्यात्तया त्वं खद्योतमात्राङ्गारतुल्यतयैतर्हीदानीं
वेदान्नानुभवसि न प्रतिपद्यसे श्रुत्वा च मे मम वाचम-
थाशेषं विज्ञास्यस्यशान भुङ्क्ष्व तावत्स ह तथैवाश भुक्तवान-
थानन्तरं हैनं पितरं शुश्रूषुरुपससाद तं होपागतं पुत्रं
यत्किञ्चर्गादिषु पप्रच्छ ग्रन्थरूपमर्थजातं वा पिता स श्वेत-
केतुः सर्व्वं हैतत्प्रतिपेदे ऋगाद्यर्थतो ग्रन्थतश्च तं होवाच
पुनः पिता यथा सोम्य महतोऽभ्याहितस्येत्यादिसमानमे-
कमङ्गारं शान्तस्याग्नेः खद्योतमात्रं परिशिष्टं तत् तृणैश्चू-
र्णैश्चोपसमाधाय प्रज्वालयेद्वर्द्धयेत् । तेनेद्धेनाङ्गारेण
ततोऽपि पूर्व्वपरिमाणाद्वह्व दहेदेवं सोम्य ते षोडशा-
नामन्नकलानां सामर्थ्यरूपाणामेका कलातिशिष्टाऽभू-

---

व्या॰ ष्यत इति ॥ यतोऽन्नकृतं मानसं वीर्य्यं अतस्तदेव षोड़शधा
विभज्य कला यस्येति योजना। एतच्छब्देनान्नकृतं मानसं
वीर्य्यं परामृश्यते विच्छेत्स्यते विच्छेदमापत्स्यते यस्मात्तस्मादपः
पिबेति पूर्व्वेण सम्बन्धः ॥ अपां पानपरित्यागे प्राणविच्छेदे
कारणमाह । यस्मादिति ॥ प्राणस्याम्मयत्वेऽपि किमित्यपां
परित्यागे तस्योच्छेदकत्वमाह । नहीति ॥ ऋगाद्यप्रतिभानं
तर्हि तेनोच्यते ईषदपि न दहेत्कुतो बहु दहेदिति योजना। व्यावृत्ति-

उ॰ बहु दहेत् ॥ ५ ॥ एवꣳ सोम्य ते षोडशानां कलानामेका कलातिशिष्टाभूत्साऽन्नेनोपसमाहिता प्राज्वालीत्तयैतर्हि वेदाननुभवस्यन्नमयꣳ हि सोम्य मन आपोमयः प्राणस्तेजोमयी वागिति तद्धास्य विजज्ञाविति विजज्ञाविति ॥ ६ ॥ ७ ॥

---

भा॰ इतिशिष्टासीत्पञ्चदशाहान्यभुक्तवत एकैकेनाह्नैका कला चन्द्रमस इवापरपक्षे क्षीणातिशिष्टा कला तवान्नेन भुक्तेनोपसमाहिता वर्द्धितोपचिता प्राज्वालीत्। दैर्घ्यं छान्दसं। प्रज्वलिता वर्द्धितेत्यर्थः। प्राज्वलीदिति पाठान्तरं। तदा तेनोपसमाहिता सुप्रज्वलितवतीत्यर्थः॥ तया वर्द्धितयैतर्हीदानीं वेदाननुभवस्युपलभसे। एवं व्यावृत्त्यनुवृत्तिभ्यामन्नमयत्वं मनसः सिद्धमित्युपसंहरत्यन्नमयं हि सोम्य मन इत्यादि। यथैतन्मनसोऽन्नमयत्वं तव सिद्धं तथापोमयः प्राणस्तेजोमयी वागित्येतदपि सिद्धमेवेत्यभिप्रायस्तदेतद्धास्य पितुरुक्तं मनआदीनामन्नादिमयत्वं विजज्ञौ विज्ञातवान् श्वेतकेतुः। द्विरभ्यासस्त्रिवृत्करणप्रकरणपरिसमाप्त्यर्थः ॥ ७ ॥

---

व्या॰ व्यतिरेकोऽन्नोपयोगाभावे मनसः सामर्थ्याभावः। अनुवृत्तिरन्वयोऽन्नोपयोगे मनसः सामर्थ्यमिति भेदः। मनसोऽन्नमयत्वमुपपादयितुमुपक्रान्तमापोमयः प्राण इत्यादि कथमिहोच्यते तत्राह। यथैतदिति ॥ विद्यासमाप्तिमन्तरेण कथं द्विर्वचनमित्याशङ्क्याह। द्विरभ्यास इति ॥ ७ ॥

उ॰ उद्दालको हारुणिः श्वेतकेतुं पुत्रमुवाच स्वप्नान्तं

---

भा॰ यस्मिन्मनसि जीवेनात्मनानुप्रविष्टा परा देवतादर्श इव पुरुषः प्रतिबिम्बेन जलादिष्विव सूर्य्यादयः प्रतिबिम्बैः। तन्मनोऽन्नमयं तेजोऽम्मयाभ्यां वाक्प्राणाभ्यां सङ्गतमधिगतं। यन्मयो यत्स्थस्य जीवो मननदर्शनश्रवणादिव्यवहाराय कल्पते तदुपरमे च स्वं देवतारूपमेव प्रतिपद्यते। तदुक्तं श्रुत्यन्तरे। ध्यायतीव लेलायतीव सधीः स्वप्नो भूत्वेमं लोकमतिक्रामति स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमय इत्यादिस्वप्नेन शारीरमित्यादि प्राणन्नेव प्राणो नाम भवतीत्यादि। तस्यास्य मनस्थस्य मनआख्यां गतस्य मनउपशमद्वारेणेन्द्रियविषयेभ्यो निवृत्तस्य यस्यां देवतायां स्वात्मभूतायां यदवस्थानं तत्पुत्रायाचिख्यासुरुद्दालको ह किलारुणिः श्वेतकेतुं पुत्रमुवाचोक्तवान्। स्वप्नान्तं स्वप्नमध्यं स्वप्न इति दर्शनवृत्तेः स्वप्नस्याख्यातस्य मध्यं स्वप्नान्तं सुषुप्तमित्येतत्। अथवा स्वप्नान्तं स्वप्नसतत्त्वमित्यर्थः॥

---

व्या॰ त्रिवृत्करणनिर्णयविषयमवान्तरप्रकरणं परिसमाप्य महाप्रकरणं सद्विषयमेवानुवर्त्तयन्मनसो लये सुषुप्तौ जीवस्य सत्सम्पत्तिं वक्तुं मनउपाधिकत्वमुक्तमनुवदति। यस्मिन्निति॥ उपाधेः स्वरूपमुक्तं स्मारयति। तन्मन इति उपाध्युपहिते कार्य्यकरत्वं दर्शयति। यन्मय इति। मनसो भावे जाग्रत्स्वप्नव्यवहारसिद्धिरित्युक्त्वा तदभावे सुषुप्तिमवतारयति। तदुपरमे चेति॥ आत्मनि मनोवशादेव दर्शनादिव्यवहारो न स्वारस्येनेत्यत्र बृहदारण्यकश्रुतिं प्रमाणयति। तदुक्तमिति॥

उ॰ मे सोम्य विजानीहीति यत्रैतत्पुरुषः स्वपिति

भा॰ तत्रापि अर्थात्सुषुप्तमेव भवति। स्वमपीतो भवतीति वचनात्। न ह्यन्यत्र सुषुप्तात्स्वमपीतिं जीवस्येच्छन्ति ब्रह्मविदः। तत्र ह्यादर्शापनयने पुरुषप्रतिबिम्ब आदर्शगतो यथा स्वमेव पुरुषमपीतो भवत्येवं मनआद्युपरमे चैतन्यप्रतिबिम्बरूपेण जीवेनात्मना मनसि प्रविष्टा नामरूपव्याकरणाय परा देवता सा स्वमेवात्मानं प्रतिपद्यते जीवरूपतां मन आख्यां हित्वा। अतः सुषुप्त एव स्वप्नान्तशब्दवाच्य इत्यवगम्यते। यत्र तु सुप्तः स्वप्नान् पश्यति तत्स्वाप्नं दर्शनं सुखदुःखसंयुक्तमिति पुण्यापुण्यकार्य्यं। पुण्यापुण्ययोर्हि सुखदुःखारम्भकत्वं प्रसिद्धं। पुण्यापुण्ययोश्चाविद्याकामोपष्टम्भेनैव सुखदुःखतद्दर्शनकार्य्यारम्भकत्वमुपपद्यते

व्या॰ द्वितीये वाक्ये सधीरित्येतदुपयुज्यते। तृतीयेतु विज्ञानमयो मनोमय इति च पदद्वयमुपजीव्यते॥ एवं भूमिकां कृत्वा समनन्तरवाक्यमादत्ते। तस्येति॥ तत्पुत्रायेत्यत्र तस्यां देवतायां तदवस्थानमिति तच्छब्दार्थः॥ तत्रेति द्वितीयपद्योक्तिः। अर्थादिति स्वप्नस्य हि कार्य्यस्य सतत्त्वं कारणं तच्च सुषुप्तमेव सुषुप्ताख्यं तमोऽज्ञानं वीजं स्वप्नप्रबोधयोरित्युभयापगमनात्। द्वितीयव्याख्याने सुषुप्तमेवार्थवशात्फलतीत्यर्थः। इतस्च स्वप्नान्तशब्देन साक्षादर्थाद्वा सुषुप्तमेवोक्तमित्याह। स्वमिति॥ नन्ववस्थान्तरेऽपि स्वमपीतो भवतीतिवचनमविरुद्धमिति चेन्नेत्याह। नहीति॥ तत्रापि कथं स्वापः स्यादित्याशङ्क्याह। तत्रेति॥ स्वपितिनामनिर्वचनसामर्थ्यसिद्धमर्थं निगमयति। अत इति॥ ननु स्वप्नान्तशब्दो वुद्धान्तशब्दवद्यदा स्वप्नमेवान्वाचष्टे। तदापि स्वमपीतो भवतीत्यविरुद्धं सर्व्वदा जीवस्य

उ॰ नाम सता सोम्य तदा सम्पन्नो भवति स्वमपीतो

भा॰ नान्यथेत्यविद्याकामकर्म्मभिः संसारहेतुभिः संयुक्त एव स्वप्न इति न स्वमपीतो भवति ॥ अनन्वागतं पुण्येनानन्वागतं पापेन तीर्णो हि तदा सर्व्वाञ्छोकान् हृदयस्य भवति तद्वाऽस्यैतदतिच्छन्दा एष परम आनन्द इत्यादिश्रुतिभ्यः सुषुप्त एव स्वं देवतारूपं जीवत्वविनिर्म्मुक्तं दर्शयिष्यामीत्याह । स्वप्नान्तं मे मम निगदतो हे सोम्य विजानीहि विस्पष्टमवधारयेत्यर्थः । कदा स्वप्नान्तो भवतीत्युच्यते । यत्र यस्मिन्काले एतन्नाम भवति पुरुषस्य स्वप्स्यतः प्रसिद्धं हि लोके स्वपितीति गौणञ्चेदं नामेत्याह । यदा स्वपितीत्युच्यते पुरुषस्तदा तस्मिन्काले सता सच्छब्दवाच्यया प्रकृतया देवतया सम्पन्नो भवति सङ्गत एकीभूतो भवति मनसि प्रविष्टं मन आदिसंसर्गकृतं जीवरूपं परित्यज्य स्वं सद्रूपं यत्परमार्थसत्य-

टा॰ सद्रूपब्रह्मप्राप्तेस्तुल्यत्वादत आह । यत्र त्विति ॥ स्वप्नदर्शनस्य पुण्यापुण्यकार्य्यत्वं प्रकटयति । पुण्यापुण्ययोर्हीति ॥ न केवलं पुण्यापुण्याभ्यामेव स्वप्ने संयुज्यते किन्त्वविद्यादिभिश्चेति न तत्र स्वाप्ययः सम्भवतीत्याह । पुण्यापुण्ययोश्चेति ॥ तर्हि स्वप्नवन्न सुषुप्तेऽपि स्वाप्ययः स्यात्तत्रापि कामकर्म्मादिसम्बन्धसम्भवादित्याशङ्क्याह । अनन्वागतमिति ॥ सति जीवरूपे कथं देवताभावः सम्भवतीत्याशङ्क्याह । मनसीति ॥ तस्मादित्यस्यातःशब्दो व्याख्यातस्तेन परामृष्टं हेतुमेव स्पष्टयति । स्वमात्मानमिति ॥ स्वपितिनामनिर्वचनफलं दर्शयति । गुणेति ॥ सुषुप्ते

उ॰ भवति तस्मादेनꣳ स्वपितीत्याचक्षते स्वꣳह्य-
पीतो भवति ॥ १ ॥

---

भा॰ मपीतोऽपि गतो भवति अतस्तस्मात्स्वपितीत्येनमाचक्षते लौकिकाः। स्वमात्मानं हि यस्मादपीतो भवति। गुणानामप्रसिद्धतोऽपि स्वात्मप्राप्तिर्गम्यत इत्यभिप्रायः। कथं पुनर्लौकिकानां प्रसिद्धा स्वात्मसम्पत्तिः॥ जाग्रच्छ्रमनिमित्तोद्भवत्वात्स्वापस्येत्याहुः। जागरिते हि पुण्यापुण्यनिमित्तसुखदुःखाद्यनेकायासानुभवाच्छ्रान्तो भवति ततश्चायस्तानां करणानामनेकव्यापारनिमित्तग्लानानां स्वव्यापारेभ्य उपरमो भवति। श्रुतेश्च श्राम्यत्येव वाक् श्राम्यति चक्षुरित्येवमादि। तथा च गृहीता वाक् गृहीतञ्चक्षुर्गृहीतं श्रोत्रं गृहीतं मन इत्येवमादीनि करणानि प्राणग्रस्तानि प्राण एकोऽश्रान्तो देहे कुलाये यो जागर्त्ति तदा जीवः श्रमापनुत्तये स्वं देवतारूपमात्मानं प्रतिपद्यते। नान्यत्र स्वरूपावस्थानाच्छ्रमापनोदः स्यादिति

---

घा॰ स्वरूपावस्थानस्य मुख्यस्यासम्भवान्मुक्तत्वेनानुत्थानप्रसङ्गात्स्वरूपावस्थानप्रसिद्धेर्निमित्तं वक्तव्यमिति पृच्छति। कथं पुनरिति॥ ज्वरादिरोगग्रस्तस्य स्वभावस्थितौ प्रसिद्धः श्रमाभावः। सुषुप्तश्च श्रमापनोदावस्थानं। तथाच तत्र स्वरूपस्थितिप्रसिद्धिरविरुद्धेत्याह। जाग्रदिति॥ सङ्गृहीतं समाधानं विवृणोति। जागरिते हीति॥ करणानामनेकव्यापारनिमित्ता या ग्लानिर्भवतीत्यत्र मानमाह। श्रुतेश्चेति॥ अनुभवसमुच्चयार्थश्चकारः। सुषुप्त्यवस्थायां करणानामुपरतौ प्रमाणमाह। तथाचेति॥ सुषुप्तौ प्राणस्यापि नागादिवदुपसंहृतत्वमाशङ्क्याह। करणानीति॥

उ० स यथा शकुनिः सूत्रेण प्रबद्धो दिशं दिशं पतित्वाऽन्यत्रायतनमलब्ध्वा बन्धनमेवोपश्रयत एवमेव खलु सोम्य तन्मनो दिशं दिशं पतित्वाऽ

---

भा० युक्ता प्रसिद्धिर्लौकिकानां स्वं ह्यपीतो भवतीति । दृश्यते हि लोके ज्वरादिरोगग्रस्तानां तद्विनिर्मोके स्वात्मस्थानां विश्रमणं तद्वदिहापि स्यादिति युक्तं ॥ तद्यथा श्येनो वा सुपर्णो वा विपरिपत्य श्रान्त इत्यादिश्रुतेश्च । तत्रायं दृष्टान्तो यथोक्तेऽर्थे स यथा शकुनिः पक्षी शकुनिघातकस्य हस्तगतेन सूत्रेण प्रबद्धः पाशितो दिशं दिशं बन्धनमोक्षार्थी सन् प्रतिदिशं पतित्वान्यत्र बन्धनादायतनमाश्रयं विश्रमणायालब्ध्वाऽप्राप्य बन्धनमेवोपश्रयते । एवमेव यथाऽयं दृष्टान्तः खलु हे सोम्य तन्मनस्तत्प्रकृतं षोडशकलमन्नोपचितं मनोनिर्द्धारितं तत्प्रविष्टस्तत्स्थस्तदुपलक्षितो जीवस्तन्मन इति निर्द्दिश्यते । मञ्चाक्रोश-

---

व्या० अन्यथा मृतभ्रान्तिः स्यादिति भावः । जीवस्यापि वह्निर्व्यापारः स्यादिति चेन्नैवं कारणाभावादित्याह । तदेति ॥ ननु सुषुप्ते श्रमापनोदमात्रं न स्वरूपावस्थानं तत्कुतो लौकिकी प्रसिद्धिरित्याशङ्क्याह । नान्यत्रेति ॥ उक्तमर्थं लौकिकदृष्टान्तेन स्पष्टयति । दृश्यते हीति ॥

बृहदारण्यकश्रुत्यालोचनायामपि सुषुप्त्यवस्थायामवस्थाद्वयजनितश्रमापोहार्थं ब्रह्मनीडप्राप्तिर्गम्यत इत्याह । तद्यथेति ॥ तत्रेति सुषुप्त्यवस्थोच्यते । यथोक्तोऽर्थो हि जीवस्य ब्रह्मण्यवस्थानं तस्मिन्निति यावत् । सशब्दो दृष्टान्तविषयः शकुनिर्विषयो वा अप्राप्येति च्छेदः । यथा मञ्चाक्रोशनेन मञ्चस्थो देवदत्तो लक्ष्यते

उ॰ न्यत्रायतनमलब्ध्वा प्राणमेवोपश्रयते प्राणबन्धनꣳ हि सोम्य मन इति ॥ २ ॥ अशनापिपासे मे सोम्य विजानीहीति यत्रैतत्पुरुषोऽशिशि-

---

भा॰ नवत्स मन आख्योपाधिर्जीवोऽविद्याकामकर्म्मोपदिष्टो दिशं दिशं सुखदुःखादिलक्षणां जाग्रत्स्वप्नयोः पतित्वा गत्वानुभूयेत्यर्थः। अन्यत्र सदाख्यात्स्वात्मन आयतनं विश्रमणस्थानमलब्ध्वा प्राणमेव प्राणेन सर्व्वकार्य्यकारणाश्रयेणोपलक्षिता प्राण इत्युच्यते सदाख्या परा देवता। प्राणस्य प्राणं प्राणशरीरो भारूप इत्यादिश्रुतेः। अतस्तां देवतां प्राणं प्राणाख्यामेवोपश्रयते। प्राणो बन्धनं यस्य मनसस्तत् प्राणबन्धनं हि यस्मात्सोम्य मनः प्राणोपलक्षितदेवताश्रयं मन इति तदुपलक्षितो जीव इति॥ एवं स्वपितिनामप्रसिद्धिद्वारेण यज्जीवस्य सत्यं स्वरूपं जगतो मूलं पुत्रस्य दर्शयित्वाह। अन्नादिकार्य्यकारणपरं परयापि जगतो मूलं सद्दिदर्शयिषुरशनापिपासे अशितुमिच्छाशना सन् यलोपेन। पातुमिच्छा पिपासा ते अशनापि-

---

आ॰ तथा तन्मनसि स्थितो जीवो लक्ष्यो भवतीत्याह। मस्थानोऽश्नवदिति॥ न केवलं प्रकरणात्प्राणशब्देन परा देवता लक्ष्यते ऽन्यत्र प्रयोगदर्शनाच्चेत्याह। प्राणस्येति॥ प्राणशब्देन परदेवतालक्षणायां फलितमाह। अत इति॥

प्राणमेवोपश्रयति। विज्ञानात्मेति॥ अत्र हेतुमाह। प्राणबन्धनमिति॥ वृत्तमनूद्यानन्तरवाक्यमुत्थापयति॥ एवमिति॥ आहाशनापिपासे सोम्येत्यादीति शेषः। किमभिप्रायः सन् पिता पुत्रं

उ॰ षति नामाप एव तदशितं नयन्ते तद्यथा गोना-
योऽश्वनायः पुरुषनाय इत्येवं तदप आचक्षते
ऽशनायेति तत्रैतच्छुङ्गमुत्पतितꣳ सोम्य विजा-

भा॰ पासेऽशनापिपासयोः सतत्त्वं विजानीहीत्येतत् । यत्र यस्मिन् काले एतन्नामपुरुषो भवति । किं तदशिशिषत्यशितुमिच्छतीति । तदा तस्य पुरुषस्य किं निमित्तं नाम भवतीत्याह । यत्तत्पुरुषेणाशितमन्नं कठिनं पीता आपो नयन्ते द्रवीकृत्य रसादिभावेन विपरिणामयन्ते तदा भुक्तमन्नं जीर्य्यते । अथच भवत्यस्य नामाशिशिषतीति गौणं । जीर्णे ह्यन्नेऽशितुमिच्छति सर्वो हि जन्तुः । तत्रापामशितनेतृत्वादशनाया इति नाम प्रसिद्धमित्येतस्मिन्नर्थे । यथा गोनायो गां नयतीति गोनायो गोपाल

आ॰ प्रत्येवमाहेत्याकाङ्क्षायामाह । अन्नादीति ॥ अन्नादीनि कार्य्याणि कारणान्यबादीनि तेषां या परम्परा तयापि जगतो यत्सत्त्वाख्यं मूलं तद्दर्शयितुमिच्छन् पिता पुत्रं प्रत्यशनेत्यादिकं वाक्यमाहेत्यर्थः । अशनेत्यस्य सन्नन्तत्वाभावेऽपि कथं तदर्थो व्याख्यायते तत्राह । अशनेति ॥ यकारस्य लोपेनास्मिन्प्रयोगे सम्प्रत्ययः प्रत्युक्तस्तथाच तदर्थोक्तिरविरुद्धेत्यर्थः । तत्राशनापिपासयोः सतत्त्वं विज्ञापयति ॥ यत्रेति ॥ सामान्येनोक्तं नाम विशेषतो ज्ञातुं पृच्छति । किन्तदिति ॥ यत्कठिनमन्नं पुरुषेणाशितं तत्पीता आपोनयन्त इतिसम्बन्धः । तदेति परिणामावस्थोक्तिः । अथेत्यन्नस्य भुक्तस्य जीर्णत्वानन्तर्य्यमुच्यते ॥ कथं तदा नाम्नो गौणत्वं तदाह । जीर्णेहीति ॥

तद्यथेत्यत्र तच्छब्दार्थमाह । तत्रेति ॥ एतस्मिन्नर्थे दृष्टान्त उच्यत इति शेषः । अशनायेति कथमपामाख्यामशनाया इति

उ० नीहि नेदममूलं भविष्यतीति ॥ ३ ॥ तस्य क्व मूलꣳ स्यादन्यत्रान्नादेवमेव खलु सोम्यान्नेन शुङ्गे-

---

भा० इत्युच्यते। तथाश्वान्नयतीत्यश्वनायोऽश्वपाल इत्युच्यते। पुरुषनायः पुरुषान्नयतीति राजा सेनापतिर्वा। एवं तत्तदाप आचक्षते लौकिका अशनायेति विसर्जनीयलोपेन। तत्रैवं सत्यद्भीरसादिभावेन नीतेनाशितेनान्नेन निष्पादितमिदं शरीरं वटकणिकायामिव शुङ्गोऽङ्कुरोत्पत्तित उद्गतस्तमिमं शुङ्गं कार्य्यं शरीराख्यं वटादिशुङ्गवदुत्पतितं हे सोम्य विजानीहि। किं तत्र विज्ञेयमित्युच्यते। शृण्विदं शुङ्गवत्कार्य्यत्वाच्छरीरं नामूलं मूलरहितं भविष्यतीत्युक्त आह श्वेतकेतुः। यद्येवं समूलमिदं शरीरं वटादिशुङ्गवत्तस्यास्य शरीरस्य क्व मूलं स्याद्भवेदित्येवं पृष्ट आह पिता। तस्य क्व मूलं स्यादन्यत्रान्नादन्नं मूलमित्यभिप्रायः। कथं। अशितं ह्यन्नमद्भिर्द्रवीकृतं जाठरेणाग्निना पच्यमानं रसादिभावेन परिणमते। रसाच्छोणितान्मांसं मांसान्मेदो मेदसोऽस्थीन्यस्थिभ्यो मज्जा मज्जातः शुक्रं। तथा योषिद्भुक्तञ्चान्नं रसादिक्रमेणैव परिणतं लोहितं भवति। ताभ्यां शुक्रशोणिताभ्यामन्नकार्य्याभ्यां संयुक्ताभ्यामन्नेनैवं प्रत्यहं भुज्यमानेनापूर्य्यमाणाभ्यां कुड्य-

---

आ० हि वक्तव्यं तत्राह। विसर्ज्जनीयेति॥ तत्रेत्यस्य व्याख्यानं। एवं सतीत्यपामशितनेतृत्वे सतीत्यर्थः। अद्भिः पीताभिरिति शेषः। तत्रेति शरीरनिर्द्देशः॥ अन्यस्य देहमूलत्वमाकाङ्क्षापूर्व्वकं व्युत्पा-

उ॰ नापो मूलमन्विच्छाद्भिः सोम्य शुङ्गेन तेजो मूलमन्विच्छ तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः ॥ ४ ॥ अथ यत्रैतत्पुरुषः पिपासति

---

भा॰ मिव मृत्पिण्डैः प्रत्यहमुपचीयमानोऽन्नमूलो देहशुङ्गः परिनिष्पन्न इत्यर्थः ॥ यत्तु देहशुङ्गस्य मूलमन्नं निर्दिष्टं तदपि देहवद्विनाशोत्पत्तिमत्त्वात्कस्माच्चिन्मूलादुत्पन्नं तं शुङ्गमेवेति कृत्वा आह। यथा देहशुङ्गोऽन्नमूलः एवमेव खलु सोम्यान्नेन शुङ्गेन कार्यभूतेनापो मूलमन्नस्य शुङ्गस्यान्विच्छ प्रतिपद्यस्व । अपामपि विनाशोत्पत्तिमत्त्वाच्छुङ्गत्वमेवेति। अद्भिः सोम्य शुङ्गेन कार्येण कारणं तेजोमूलमन्विच्छ । तेजसोऽपि विनाशोत्पत्तिमत्त्वाच्छुङ्गत्वमिति । तेजसा सोम्य शुङ्गेन सन्मूलं एकमेवाद्वितीयं परमार्थसत्यं । यस्मिन्सर्वमिदं वाचारम्भणं विकारो नामधेयमनृतं रज्ज्वामिव सर्पादिविकल्पजातमध्यस्तं। अविद्यया तदस्य जगतो मूलं अतः सन्मूलाः सत्कारणा हे सोम्येमाः स्थावरजङ्गमलक्षणाः

---

व्या॰ इयति । कथमित्यादिना ॥ तथा पुरुषभुक्तान्नवदिति यावत् ॥ तथापि कथं सतो मूलस्य सिद्धिरत आह। यत्त्विति ॥ सतो मूलस्य वास्तवं रूपं दर्शयति । एकमिति ॥ तस्य सर्वकल्पनाधिष्ठानत्वेन परिणामवादं व्युदस्यति । यस्मिन्निति ॥ अध्यासे मूलकारणमाह । अविद्ययेति ॥ प्रजाः सर्वाः सन्मूलाः सदायतनाश्चेत्युक्तमर्थं दृष्टान्तेन समर्थयते । न हीति ॥ सत्प्रतिष्ठाः सदायतनाश्चेत्यनयोरर्थभेदभावमाशङ्क्याह । अन्ते चेति ॥ प्रति-

उ० नाम तेज एव तत्पीतं नयते तद्यथा गोनायोऽश्वनायः पुरुषनाय इत्येवं तत्तेज आचष्ट उदन्येति तत्रैतदेव शुङ्गमुत्पतितꣳ सोम्य विजानीहि नेदममूलं भविष्यतीति ॥ ५ ॥ तस्य क्व मूलꣳ

---

भा० सर्व्वाः प्रजा न केवलं सन्मूला एव। इदानीमपि स्थितिकाले सदायतनाः सदाश्रया एव। नहि मृदमनाश्रित्य घटादेः सत्त्वं स्थितिर्वाऽस्ति। अतो मृद्वत्सदायतनं यासां प्रजानां तन्मूलत्वात्सदायतनाः प्रजाः। अन्ते च सत्प्रतिष्ठाः सदेव प्रतिष्ठा लयः समाप्तिरवसानं परिशेषो यासान्ताः सत्प्रतिष्ठाः। अथेदानीमप्शुङ्गद्वारेण सतो मूलस्यानुगमः कार्य्य इत्याह। यत्र यस्मिन् काल एतन्नाम पिपासति पातुमिच्छतीति पुरुषो भवति। अशिशिषतीतिवदिदमपि गौणमेव नाम भवति। द्रवीकृतस्याशितस्यान्नस्य नेत्र्य आपोऽन्नशुङ्गं देहं क्लेदयन्त्यः शिथिलीकुर्य्युरब्बाहुल्याद्यदि तेजसा न शोष्यते। नितरांच तेजसा शोष्यमाणास्वप्सु देहभावेन परिणममानासु पातुमिच्छा पुरुषस्य

---

आ० ष्ठाशब्दस्य लयवाचित्वादायतनशब्दस्य चाश्रयविषयत्वान्न पौनरुक्त्यमित्यर्थः॥ लयशब्दस्य सुषुप्त्यादिविषयत्वं वारयति। समाप्तिरिति॥ सम्यगाप्तिः समाप्तिरिति प्राप्तिरत्र विवक्षितेति शङ्कां वारयति। अवसानमिति॥

तस्याभावत्वेन तुच्छरूपत्वं निरस्यति। परिशेष इति॥ अन्नाख्यशुङ्गद्वारा सतोमूलस्याधिगतेरनन्तरमित्यथशब्दार्थः। पिपासतीत्येतन्नामा पुरुषो यस्मिन्काले भवतीति योजना। कथं पिपा-

उ॰ स्यादन्यत्राद्भ्योऽद्भिः सोम्य शुङ्गेन तेजो मूलमन्विच्छ तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ सन्मूलाः सोम्येमाः सर्व्वाः प्रजाः सदायतनाः

---

भा॰ जायते तदा पुरुषः पिपासतीति नाम तदेतदाह। तेज एव तत्तदा पीतमबादि शोषयेद्देहगतलोहितप्राणभावेन नयते परिणमयति। तद्यथा गोनाय इत्यादि समानमेव। तत्तेज आचष्टे लोकः। उदन्येति उदकं नयतीत्युदन्यं उदन्येतीति छान्दसं। तत्रापि पूर्व्ववत् अपामप्येतदेव शरीराख्यं शुङ्गं नान्यदित्येवमादि। समानमन्यत्। सामर्थ्यात्तेजसोऽप्येतदेव शरीराख्यं शुङ्गं। अतोऽप्शुङ्गेन देहेनापो मूलं गम्यते। अद्भिः शुङ्गेन तेजो मूलं गम्यते।

---

व्या॰ सतीत्येतन्नाम पुरुषस्य गौणमित्याशङ्क्याह। नवीकृतेति॥ भवत्वपां तेजसा शोष्यमाणत्वं किं तावतेत्याशङ्क्याह। नितरामेवेति॥ तदा पानेच्छावस्थायामित्यर्थः॥ तेजसो यदुदकनेतृत्वमुक्तं तत्र श्रुतिमवतार्य्य व्याचष्टे। तदेतदाहेति॥ उदकमिति वक्तव्ये कथमुदन्येतीत्युक्तं तत्राह। छान्दसमिति॥ तत्रापि तेजस्यपीत्येतत्॥ यथाऽशनायेति छान्दसं तथा तेजस्युदन्येतीत्यपि छान्दसमेवेत्याह। पूर्व्ववदिति॥ अन्नद्वारा सतो मूलस्याधिगमवदम्बुद्वारापि तस्याधिगतिरस्तीत्याह। अपामपीति॥

तेजः शुङ्गद्वारापि सतो मूलस्य प्रतिपत्तिरस्तीत्याह। सामर्थ्यादिति॥ त्रिवृत्करणावशादिति यावत्। शरीरस्य भूतत्रयकार्य्यत्वमतःशब्दार्थः॥ यथा पूर्व्वमन्नशुङ्गेन देहेनान्नाख्यं मूलं गम्यते इत्यादि व्याख्यातं तथा तेजःशुङ्गेन देहेन तेजो मूलं गम्यत इत्यादि व्याख्येयमित्याह। पूर्व्ववदिति॥ वृत्तानुवादपूर्व्वकं यथेत्यादिवाक्यमादत्ते। एवं हीति॥ उक्तया रीत्या नामद्वयप्रसि-

उ॰ सत्प्रतिष्ठा यथा तु खलु सोम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका भवति तदुक्तं पुर-

भा॰ शुङ्गेन सन्मूलं गम्यते पूर्ववत्। एवं हि तेजोबन्नमयस्य देहशुङ्गस्य वाचारम्भणमात्रस्यान्नादिपरम्परया परमार्थसत्यं सन्मूलमभयमसन्त्रासं निरायासं सन्मूलमन्विच्छेति पुत्रं गमयित्वाऽशिशिषति पिपासतीति नामप्रसिद्धिद्वारेण। यदन्यदिहास्मिन् प्रकरणे तेजोबन्नानां पुरुषेणोपयुज्यमानानां कार्य्यकरणसङ्घातस्य देहशुङ्गस्य स्वजात्या साङ्कर्य्येणोपचयकरत्वं वक्तव्यं प्राप्तं तदिहोक्तमेवेष्टव्यमिति पूर्वोक्तं व्यपदिशति। यथा तु खलु। येन प्रकारेणेमास्तेजोबन्नाख्यास्तिस्रोदेवताः पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका भवति तदुक्तं पुरस्तादेव। भवत्यन्नमशितं त्रेधाविधीयत इत्यादि। तत्रैवोक्तं अन्नादीनामशितानां ये

आ॰ द्विद्वारेण यथोक्तदेहाख्यशुङ्गस्यान्नादिकारणपरम्परया सदाख्यं मूलमुक्तविशेषणं सन्मूलमन्विच्छेत्युपदेशेन श्वेतकेतुं ज्ञापयित्वा व्यवस्थया शरीरमेकैकभूतारब्धमित्याक्षेपे प्राप्ते यदास्मिन्प्रकरणे तेजःप्रभृतीनामुपयुज्यमानानां स्वस्वभावानुसारेण सङ्घातस्योपचयकरत्वं वक्तव्यं प्राप्तं। तदा हि सर्व्वशरीरेषु सर्व्वभूतकार्य्योपलम्भाद्यवस्थायां प्रमाणाभावाद्दृश्यमाने सङ्घाते कस्य भूतस्य कियत्कार्य्यमित्यपेक्षायामन्नमशितमित्यादावुक्तमेव द्रष्टव्यमिति पूर्व्वोक्तं व्यपदिशतीति योजना॥ सतो मूलस्य व्यवहारसत्यत्वं वारयति। परमार्थेति॥ वस्तुतो नाविद्यासम्बन्धस्तस्यास्तीत्याह। अभयमिति॥ अविद्याकार्य्यसम्बन्धोऽपि परमार्थतो न तस्यास्तीत्याह। असन्त्रासमिति॥ उभयसम्बन्धाभावे समुत्खातनिखिलदुःखत्वेन परमानन्दत्वं तस्य सिद्ध्यतीत्याह। निरायासमिति॥

उ॰ स्तादेव भवत्यस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां

---

भा॰ मध्यमा धातवस्ते साप्तधातुकं शरीरमुपचिन्वन्तीत्युक्तं। मांसं भवति लोहितं भवति मज्जा भवत्यस्थि भवति ये त्वणिष्ठा धातवो मनः प्राणं वाचं देहस्यान्तःकरण सङ्घातमुपचिन्वन्तीति चोक्तं तन्मनो भवति स प्राणो भवति सा वाग्भवति। सोऽयं प्राणः करणसङ्घातो देहे विशीर्णे देहान्तरं जीवाधिष्ठितो येन क्रमेण पूर्वदेहात्प्रच्युतो गच्छति तदा ह्यस्य हे सोम्य पुरुषस्य प्रयतो म्रियमाणस्य वाङ्मनसि सम्पद्यते मनस्युपसंह्रियते। अथ तदाज्ञातयो न वदतीति। मनःपूर्व्वको हि वाग्व्यापारः। यद्वै मनसा ध्यायति तद्वाचा वदतीति श्रुतेः। वाच्युपसंहृतायां मनसि मननव्यापारेण केवलेन वर्त्तते। मनोऽपि यदोपसंह्रियते तदा मनः प्राणे सम्पन्नं भवति सुषुप्तकाल इव। तदा पार्श्वस्था ज्ञातयो न विजानातीत्याहुः। प्राणश्च तदोर्द्धोच्छ्वासी स्वात्मन्युपसंहृतवाह्य-

---

व्या॰ पूर्व्वोक्तमेव व्यक्तीकरोति। तन्वेवेति॥ किन्तदन्नमशितमित्यादावुक्तं तत्राह। अन्नादीनामिति॥ सप्तधातुकं त्वगसृङ्मांसमेदोमज्जास्थि-शुक्राख्याः सप्तधातवस्तेषां संहतिरूपमित्यर्थः। तेजोबन्नकार्य्यभूतदेहसृङ्गद्वारा सतत्त्वं निरूपितं इदानीं मरणद्वारेणापि तन्निरूपयितुमारभते। सोऽयमिति॥ तदाहेत्यत्र क्रमवद्गमनं तदित्युक्तं॥ वाग्व्यापारस्य मनसि लये हेतुमाह। मनःपूर्व्वकोहीति॥ प्राणसम्पत्तिर्मनसस्तदधीनत्वं मनोव्यापारनिवृत्त्यवस्था तदेत्युच्यते। प्राणश्च तदेत्यविज्ञानावस्था कथ्यते। कथं

उ० देवताया स य एषोऽणिमा ॥ ६ ॥ एतदात्म्य-
मिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि श्वेत-

भा० करणः संवर्गविद्यायां दर्शनाद्धस्तपादादीन् विक्षिपन्म-
र्मस्थानानि निकृन्तत इवोत्सृजन् क्रमेणोपसंहृतकरण-
स्तेजसि सम्पद्यते । तदाऽऽहुर्ज्ञातयो न चलतीति । मृतो
नेति वा विचिकित्सन्तो देहमालभमाना उष्णञ्चोपलभ-
माना देह उष्णो जीवतीति यदा तदाप्यौष्ण्यलिङ्गं तेज
उपसंह्रियते । तदा तत्तेजः परस्यां देवतायां प्रशाम्यति ।
तदेवं क्रमेणोपसंह्रियते । स्वमूलं प्राप्तेच मनसि तत्स्थो-
जीवोऽपि सुषुप्तकालवन्निमित्तोपसंहारादुपसंह्रियमाणः
सन् सत्याभिसन्धिपूर्वकं चेदुपसंह्रियते सदेव सम्पद्यते न
पुनर्देहान्तराय सुषुप्तादिवोत्तिष्ठति ॥

यथा लोके सभये देशे वर्त्तमानः कथञ्चिदेवाभयं देशं
प्राप्तस्तद्वत् । इतरस्त्वनात्मज्ञस्तस्मादेव मूलात्सुषुप्तादिवो-

आ० प्राणस्य स्वात्मन्युपसंहृतवाह्यकरणत्वं तदाह । संवर्गविद्याया-
मिति ॥ तत्र हि प्राणः संवृङ्क्ते वागादीनीति दृष्टं अतो युक्तं
तस्य स्वात्मन्युपसंहृतकरणत्वमित्यर्थः । तेजसीति भौतिकमा-
ध्यात्मिकं तेजो गृह्यते । जीवतीत्याहुरिति सम्बन्धः । सक-
रणसप्राणस्य च भूतसर्गस्य परस्यां देवतायामुक्तक्रमेणोपसंहा-
रेऽपि जीवस्य किमायातमित्याशङ्क्याह । तदेवमिति ॥ तस्यां
परस्यां देवतायामुक्तेन क्रमेण तेजस्युपसंहृते सतीति यावत् ।
स्वमूलं मनसो मूलं भूतपञ्चकं । निमित्तोपसंहारादित्यत्र निमित्तं
मनो विवक्षितं ॥

सत्सम्पन्नस्य सत्याभिसन्धेनापुनरुत्थानमित्येतद्दृष्टान्तेन स्पष्ट-
यति । यथेति ॥ अभयं देशं प्राप्तो न पुनः सभयं देशं गन्तुमि-

उ॰ केतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ॥ ७ ॥ ८ ॥

भा॰ त्थाय मृत्वा पुनर्देहजालमाविशति। यस्मान्मूलादुत्थाय देहमाविशति जीवः ॥ स यः सदाख्य एष उक्तोऽणिमाऽणुभावो जगतो मूलमैतदात्म्यमेतत्सदात्मा यस्य सर्व्वस्य तदेतदात्मा तस्य भाव ऐतदात्म्यं। एतेन सदाख्येनात्मनात्मवत्सर्व्वमिदं जगत्। नान्योऽस्यास्त्यात्मा संसारी नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोत्रित्यादिश्रुत्यन्तरात्। येन चात्मनात्मवत्सर्व्वमिदं जगत्तदेव सदाख्यं कारणं सत्यं परमार्थसत्। अतः स एवात्मा जगतः प्रत्यक्स्वरूपं सतत्त्वं याथात्म्यं। आत्मशब्दस्य निरुपपदस्य प्रत्यगात्मनि गवादिशब्दवन्निरूढत्वात्। अतस्तत्सत्त्वमसीति हे श्वेतकेतो इत्येवं प्रत्यायितः पुत्र आह भूय एव मा भगवान्विज्ञापयतु यद्भवदुक्तं तत्सन्दिग्धं मम। अहन्यहनि सर्व्वाः प्रजाः सुषुप्तौ सत्सम्पद्यन्ते इत्येतत्। ये न सत्सम्पद्य न विदुः सत्सम्पन्ना

आ॰ स्मेतीति शेषः। यस्त्वनृताभिसन्धो यथोक्तया रीत्या न सत्सम्पन्नस्तत्राह। इतरस्त्विति ॥ अस्येति षष्ठ्या सर्व्वं जगदुक्तमसंसारी वेतिच्छेदः। मूलादेर्विशेषं दर्शयति। परमार्थेति ॥ कल्पितस्य जगतः स्वरूपं प्रत्यग्भूतमतात्त्विकमिति शङ्कां वारयति। सतत्त्वमिति ॥ तत्त्वेन सहितमपि सतत्त्वमित्याशङ्क्याह। याथात्म्यमिति॥ कथमेवमर्थवत्त्वमात्मशब्दस्य लभ्यते तत्राह। आत्मशब्दस्येति ॥ सतो भवत्वात्मत्वं मम किं स्यादित्याशङ्क्याह। अत इति ॥ सन्देहस्येदमेव विशिनष्टि। अहन्यहनीति ॥ सन्देहे हेतुमाह। येनेति ॥ तेन सन्दिग्धमेतदिति पूर्व्वेण सम्बन्धः ॥ सन्देहव्यावृत्ति-

उ॰ यथा सोम्य मधु मधुकृतो निस्तिष्ठन्ति नानात्ययानां वृक्षाणाꣳ रसान् समवहारमेकताꣳ रसं गमयन्ति ॥ १ ॥ ते यथा तत्र न विवेकं लभन्तेऽमु-

भा॰ वयमिति। अतो दृष्टान्तेन मां प्रत्याययत्वित्यर्थः। एवमुक्तस्तथाऽस्तु सोम्येति होवाच पिता ॥ ८ ॥

यत्पृच्छस्यहन्यहनि सत्सम्पद्य न विदुः सत्सम्पन्नाः स्म इति तत्कस्मादित्यत्र शृणु दृष्टान्तं। यथा लोके सोम्य मधुकृतो मधु कुर्व्वन्तीति मधुकृतो मधुकरमक्षिका मधु निस्तिष्ठन्ति मधु निष्पादयन्ति तत्पराः सन्तः। कथं नानात्ययानां नानागतीनां नानादिक्काख्यानां वृक्षाणां रसान् समवहारं समाहृत्यैकतामेकभावं मधुत्वेन रसान् गमयन्ति मधुत्वमापादयन्ति। ते रसा यथा मधुत्वेनैकतां गतास्तत्र मधूनि विवेकं न लभन्ते। कथममुष्याहमाम्रस्य पनसस्य वा वृक्षस्य रसोऽस्मीति च। यथा हि लोके बहूनां चेतनावतां समेतानां प्राणिनां विवेकलाभो भवत्यमुष्याहं पुत्रो नप्तास्मीति। ते च लब्धविवेकाः सन्तो न सङ्कीर्य्यन्ते न

आ॰ तर्हि कथमित्यत आह। अत इति ॥ पुत्रस्य प्राप्तसन्देहापोहार्थमुत्तरग्रन्थमुत्थापयति। एवमिति ॥ ८ ॥

यथेत्यादिदृष्टान्तमवतारयति। यत्पृच्छसीति ॥ प्रत्यहं सुषुप्ते सर्व्वाः प्रजाः सत्सम्पद्य सत्सम्पन्नाः स्मो वयमिति यन्न विदुस्तदज्ञानं कस्मात्कारणादिति यन्मां पृच्छसि तत्र सुषुप्तादावज्ञाने कारणभूतं दृष्टान्तमुच्यमानं शृणु त्वमिति योजना॥ यथा दृष्टान्तः स्पष्टो भवति तथोच्यत इत्याह। यथेति॥ पुनर्मधुपदं क्रियापदेन

उ॰ थाहं वृक्षस्य रसोऽस्मीत्येवमेव खलु सोम्येमाः सर्वाः प्रजाः सति सम्पद्य न विदुः सति सम्पद्यामह इति ॥ २ ॥ त इह व्याघ्रो वा सिꣳहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दꣳशो वा

---

भा॰ तथेहानेकप्रकारवृक्षरसानामपि मधुराम्लतिक्तकटुकादीनां मधुत्वेनैकतां गतानां मधुरादिभावेन विवेको गृह्यत इत्यभिप्रायः। यथाऽयं दृष्टान्त इत्येवमेव खलु सोम्येमाः सर्वाः प्रजा अहन्यहनि सति सम्पद्य सुषुप्तकाले मरणप्रलययोश्च न विदुर्न विजानीयुः सति सम्पद्यामह इति सम्पन्ना इति वा। यस्माच्चैवमात्मनः सद्रूपतामज्ञात्वैव सत्सम्पद्यन्ते। अतस्त इह लोके यत्कर्म्मनिमित्ताः यां यां जातिं प्रतिपन्ना आसुर्व्याघ्रादीनां व्याघ्रोऽहं सिंहोऽहमित्येवं। ते तत्कर्म्मज्ञानवासनाङ्किताः सन्तः सत्प्रविष्टा अपि तद्भावेनैव पुनराभवन्ति। पुनः सत आगत्य व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा

---

व्या॰ सम्बन्धप्रदर्शनार्थं मधुकृतां मधुनिष्पादकत्वमाकाङ्क्षापूर्व्वकं दर्शयति। कथमित्यादिना॥ नानागतीनां नानाफलानामित्येतद्भिन्नानां रसानां कथमेकतेत्याशङ्क्याह। मधुत्वेनेति॥ तदेव स्पष्टयति॥ मधुत्वमिति॥ ते यथेत्यादि व्याचष्टे। ते रसा इति॥ उक्तमर्थं वैधर्म्यदृष्टान्तेन स्पष्टयति। यथा हीत्यादिना॥ इहेति प्रकृतदृष्टान्तोक्तिः। दृष्टान्तमनूद्य दार्ष्टान्तिकमाह। यथेति॥ रसानामचेतनत्वेन विवेकानर्हत्वात्कथं चेतनावतामिव दृष्टान्तः स्यादित्याशङ्क्याह। यस्माच्चेति॥ एवं यथोक्तरसदृष्टान्तवशेन यावच्चेतनानामपि सुषुप्त्यादौ जाड्याक्रन्दिततया रस-

उ॰ मशको वा यद्यद्भवन्ति तदा भवन्ति ॥ ३ ॥ स य एषो ऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ॥ ४ ॥ ९ ॥

---

भा॰ दंशो वा मशको वा यद्यत्पूर्वमिह लोके भवन्ति सम्बभूवुरित्यर्थः । तदेव पुनरागत्य भवन्ति । युगसहस्रकोट्यन्तरितापि संसारिणो जन्तोर्या पुरा भाविता वासना सा न नश्यतीत्यर्थः । यथाप्रज्ञं हि सम्भवा इतिश्रुत्यन्तरात् । ताः प्रजा यस्मिन् प्रविश्य पुनराविर्भवन्ति । ये त्वितोऽन्ये सत्सत्यात्माभिसन्धा यमणुभावं सदात्मानं प्रविश्य नावर्त्तन्ते । स य एषोऽणिमेत्यादि व्याख्यातं । यथा लोके स्वकीये गृहे सुप्त उत्थाय ग्रामान्तरं गतो जानाति स्वगृहादागतोऽस्मीत्येवं सत आगतोऽस्मीति च जन्तूनां कस्माद्विज्ञानं न भवतीति भूयएव मा भगवान् विज्ञापयत्वित्युक्तस्तथा सोम्येति होवाच पिता ॥ ९ ॥

---

आ॰ तुल्यत्वात्तेषां विवेकानर्हावस्थापत्तिमात्रे प्रकृतमुदाहरणमविरुद्धमिति भावः । सता सम्पन्नानामपि तत्स्यादित्याशङ्क्याह । संसारिण इति ॥ स य एषोऽणिमेत्याद्यवतारयति । ताः प्रजा इति ॥ इतः सद्विज्ञानरहितेभ्यः सकाशादिति यावत् । यमणुभावमिति यच्छब्दोऽध्याहर्त्तव्यः । प्रश्नान्तरं दृष्टान्तबलादुत्थापयति । यथेति ॥ सतोऽहमागतोऽस्मीत्युत्थितस्य ज्ञानाभावं दृष्टान्तेनोपपादयितुमुत्तरग्रन्थमुत्थापयति । इत्युक्त इति ॥ ९ ॥

उ० इमाः सोम्य नद्यः पुरस्तात्प्राच्यः स्यन्दन्ते पश्चात्प्रतीच्यस्ताः समुद्रात्समुद्रमेवापि यन्ति समुद्र एव भवन्ति ता यथा तत्र न विदुरियमहमस्मीयमहमस्मीति ॥ १ ॥ एवमेव खलु सोम्येमाः सर्वाः प्रजाः सत आगम्य न विदुः सत आगच्छामह इति त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा सम्पद्य भवन्ति तदा भवन्ति ॥ २ ॥ स य एषोऽणिमै-

भा० शृणु तत्र दृष्टान्तं यथा सोम्येमा नद्यो गङ्गाद्याः पुरस्तात्पूर्वां दिशं प्रति प्राच्यः प्रागञ्चनाः स्यन्दन्ते स्रवन्ति । पश्चात्प्रतीचीं दिशं प्रति सिन्ध्वाद्याः प्रतीचीमञ्चन्ति गच्छन्तीति प्रतीच्यस्ताः समुद्रादम्भोनिधेर्जलधरैराक्षिप्ताः पुनर्वृष्टिरूपेण पतिता गङ्गादिनदीरूपिण्यः पुनः समुद्रमम्भोनिधिमेवापि यन्ति ससमुद्रा एव भवन्ति ता नद्यो यथा तत्र समुद्रे समुद्रात्मनैकताङ्गता न विदुर्नजानन्तीयं गङ्गाहमस्मीयं यमुनाहमस्मीतीयमहमस्मीति चैवमेव खलु सोम्येमाः सर्व्वाः प्रजा यस्मात्सति सम्पद्य न विदुस्तस्मात्सत आगम्य न विदुः सत आगच्छामह आगता इति वा । त इह व्याघ्र इत्यादि समानमन्यत् । दृष्टं लोके जले वीची-

आ० आगमनावध्यपरिज्ञानं तत्रेत्युक्तं ॥ प्रश्नान्तरं व्याचष्टे । दृष्टमिति ॥ विनष्टा इति लोके दृष्टमिति सम्बन्धः । जीवास्तु प्रत्यहं सुषुप्त्यवस्थायां मरणप्रलययोश्च कारणभावं गच्छन्तोऽपि

उ॰ तदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापय-त्विति तथा सोम्येति होवाच ॥ ३ ॥ १० ॥

अस्य सोम्य महतो वृक्षस्य यो मूलेऽभ्याहन्या-ज्जीवन् स्रवेद्यो मध्येऽभ्याहन्याज्जीवन् स्रवेद्योऽग्रे-ऽभ्याहन्याज्जीवन् स्रवेत्स एष जीवेनात्मनानुप्र-भूतः पेपीयमानो मोदमानस्तिष्ठति ॥ १ ॥ यस्य

---

भा॰ तरङ्गफेनबुद्बुदादय उत्थिताः पुनस्तद्भावङ्गता विनष्टा इति । जीवास्तु तत्कारणभावं प्रत्यहं गच्छन्तोऽपि सुषुप्ते मरणप्रलययोश्च न विनश्यन्तीत्येतत् । भूय एव मा भगवान् विज्ञापयतु दृष्टान्तेन । तथा सोम्येति होवाच पिता ॥१०॥

शृणु दृष्टान्तमस्य हे सोम्य महतोऽनेकशाखादियुक्तस्या-स्येत्यग्रतः स्थितं वृक्षं दर्शयन्नाह । यदि कश्चिदस्य मूले-ऽभ्याहन्यात्परश्वादिना सकृद्घातमात्रेण न शुष्यतीति जीवन्नेव भवति तदा तस्य रसः स्रवेत् । तथा यो मध्येऽभ्या-हन्याज्जीवं स्रवेत्तथा योऽग्रेऽभ्याहन्याज्जीवं स्रवेत्स एष

---

व्या॰ न विनश्यन्तीति यदेतत्तदिति योजना । जीवविनाशं शङ्कमा-नस्य प्रतिबोधनार्थमुत्तरं वाक्यमुत्थापयति । तथेति ॥ १० ॥

जीवस्य नाशाभावं वक्तुमादौ दृष्टान्तमाह । शृण्विति ॥ ननु रोगग्रस्तायां वातोपहतायां वा शाखायां प्रायोपसंहारेऽपि कुतो जीवोपसंहारः सम्भवति तत्राह । वागिति ॥ ननु वृक्षे जीवस्य सद्भावे तत्रोपसंहारानुपसंहारौ वक्तव्यौ । तत्र तस्य सत्त्वन्तु कुत-स्त्यमत आह । जीवेन चेति ॥ रसरूपेण वर्द्धयदिति सम्बन्धः ॥

उ॰ यदेकाᳬं शाखा जीवो जहात्यथ सा शुष्यति द्वितीयां जहात्यथ सा शुष्यति तृतीयां जहात्यथ सा शुष्यति सर्व्वं जहाति सर्व्वः शुष्यत्येवमेव खलु सोम्य विद्धीति होवाच ॥ २ ॥ जीवापेतं वाव

भा॰ वृक्ष इदानीं जीवेनात्मनानुप्रभूतोऽनुव्याप्तः पेपीयमानोऽत्यर्थं पिबन्नुदकं भौमांश्च रसान्मूलैर्गृह्णन्मोदमानो हर्षं प्राप्नुवंस्तिष्ठति। तस्यास्य यदेकां शाखां रोगग्रस्तामाहतां वा जीवो जहात्युपसंहरति शाखायां विप्रसृतमात्मांशं। अथ सा शुष्यति। वाङ्मनः प्राणकरणग्रामानुप्रविष्टो हि जीव इति तदुपसंहारे उपसंह्रियते। जीवेन च प्राणयुक्तेनाशितं पीतञ्च रसतां गतं जीववच्छरीरं वृक्षञ्च वर्द्धयद्रसरूपेण जीवस्य सद्भावे लिङ्गं भवति॥ अशितपीताभ्यां हि देहे जीवस्तिष्ठति ते चाशितपीते जीवकर्म्मानुसारिणीति। तस्यैकाङ्गवैकल्यनिमित्तं कर्म्म यदोपस्थितं भवति तदा जीव एकां शाखां जहाति शाखाया आत्मानमुपसंहरति। अथ तदा सा शाखा शुष्यति। जीवस्थितिनिमित्तो रसो जीवकर्म्माक्षिप्तो जीवोपसंहारे न तिष्ठति। रसापगमे च

आ॰ वृक्षशरीरे जीवस्य सत्त्वेऽपि किमित्यसौ कदाचित्तदीयामेकां शाखां जहातीत्याशङ्क्याह। अशितेति॥ जीवोपसंहारे किमिति शाखा शुष्यति तत्राह। जीवस्थितीति॥ जीवस्य स्थितिर्निमित्तं तस्येति विग्रहस्तथा शाखायामुक्तप्रकारेणेति यावत्॥ यत्तु वैशेषिकवैनाशिकाभ्यां स्थावराणां निर्जीवत्वमचेतनत्वमुक्तं तदेतन्निरस्तमित्याह। वृक्षस्येति॥ आदिशब्दो वृद्धिमोदादिसङ्ग्र-

उ॰ किलेदं म्रियते न जीवो म्रियत इति स य एषो ऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा

भा॰ शाखाशोषमुपैति। तथा सर्वं वृक्षमेव यदायं जहाति तदा सर्वोऽपि वृक्षः शुष्यति। वृक्षस्य रसस्रवणशोषणादिलिङ्गाज्जीवत्वं। दृष्टान्तश्रुतेश्च चेतनावन्तः स्थावरा इति। बौद्धकाणादमतमचेतनाः स्थावरा इत्येतदसारमिति दर्शितं भवति। यथाऽस्मिन्वृक्षदृष्टान्ते दर्शितं जीवेन युक्तो वृक्षोऽशुष्को रसपानादियुक्तो जीवतीत्युच्यते यदपेतश्च म्रियत इत्युच्यते। एवमेव खलु सोम्य विद्धीति होवाच। जीवापेतं जीववियुक्तं वाव किलेदं शरीरं म्रियते न जीवो म्रियत इति। कार्य्यशेषे च सुप्तोत्थितस्य ममेदं कार्य्यशेषमपरिसमाप्तमिति स्मृत्वा समापनदर्शनात्। जातमात्राणाञ्च जन्तूनां स्तन्याभिलाषभयादिदर्शनाच्चातीतजन्मान्तरानुभूतस्तनपानदुःखानुभवस्मृतिर्गम्यते। अग्निहोत्रादीनां च कर्मणामर्थवत्त्वान्न जीवो म्रियत इति। स

व्या॰ इत्यर्थः। स एव वृक्षो जीवेनात्मनानुप्रभूत इति दृष्टान्तश्रुतिः। श्रुतिदृष्टान्तेन विवक्षितमंशमनूद्य दार्ष्टान्तिकमाह। यथेत्यादिना॥ जीवस्य सुषुप्ते नाशाभावे हेत्वन्तरमाह। कार्य्यशेषे चेति॥ तस्मिन् सति सुषुप्तो भूत्वा पुनरुत्थितस्य कार्य्यस्य शेषो ऽस्ति यस्मिन्कर्म्मणि तदिदं ममासमाप्तमिति स्मृत्वा तस्य समापनदर्शनान्न स्वापे जीवो नश्यतीत्यर्थः॥ मरणकाले तन्नाशाभावे हेत्वन्तरमाह। जातमात्राणामिति॥ चाद्यश्चकारः समुच्चये द्वितीयोऽवधारणे। जीवस्य प्रलयादावविनाशे कारणान्तर-

उ० तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान्
विज्ञापयत्विति तथा सोम्येति होवाच ॥ ३ ॥ [illegible]
न्यग्रोधफलमत आहरेतीदं भगव इति भि-
न्धीति भिन्नं भगव इति किमत्र पश्यसीत्यण्व्य

---

भा० य एषोऽणिमेत्यादि समानं। कथं पुनरिदं पृथिव्या-दिनामरूपवज्जगदत्यन्तसूक्ष्मात्सद्रूपान्नामरूपरहितात्सतो जायते इत्येतद्दृष्टान्तेन भूय एव मा भगवान् विज्ञापयत्विति। तथास्तु सोम्येति होवाच पिता॥ ११ ॥

यद्येतत्प्रत्यक्षीकर्त्तुमिच्छसि अतोऽस्मान्महतो न्यग्रोधात्फलमेकमाहरेत्युक्तस्तथा चकार। स इदं भगव उपाहृतं फलमिति दर्शितवन्तं प्रत्याह फलं भिन्धीति। भिन्नमित्याहेतरः। तमाह पिता किमत्र पश्यसीत्युक्त आहाण्व्योऽणुतरा इवेमा धाना बीजानि पश्यामि भगव इति। आसां धानानामेकां धानामङ्ग हे वत्स भिन्धीत्युक्त आह भिन्ना भगव इति॥ यदि भिन्ना धाना तस्यां भिन्नायां किं पश्यसीत्युक्त

---

आ० माह। अग्निहोत्रादीनामिति॥ इतिशब्दो जीवस्य नित्यत्वोपसंहारार्थः॥ यदुक्तं सन्मूलाः सोम्येत्यादि तत्र चोदयति। कथं पुनरिति॥ विलक्षणयोर्न कार्य्यकारणत्वमिति शङ्कमानं प्रति बोधयितुमुत्तरवाक्यमुपादत्ते। तथेति॥ ११॥

स्थूलस्य कार्य्यस्य सूक्ष्मं मुख्यकारणत्वमेतदित्युच्यते॥ अस्य सोम्य महतो वृक्षस्येति प्रकृतं वृक्षं परामृशति। अत इति॥ यमेतमणिमानं न पश्यस्येतस्याणिम्नो बीजस्येति सम्बन्धः। तथापीति अत्यन्ताणुत्वाददर्शनेऽपीत्यर्थः। अत्यन्तसूक्ष्माद्बीजादत्यन्तस्थूलस्य

उ० इवेमा धाना भगव इत्यासामङ्गैकां भिन्धीति भिन्ना भगव इति किमत्र पश्यसीति किञ्चन न भगव इति ॥१॥ तᳬं होवाच यं वै सोम्यैतमणिमानं न निभालयस एतस्य वै सोम्यैषोऽणिम्न एवं महान्यग्रोधस्तिष्ठति ॥२॥ श्रद्धत्स्व सोम्येति स य एषोऽणिमैतदात्म्यमिदᳬं सर्वं तत्सत्यᳬं स आत्मा

---

भा० आह न किञ्चन पश्यामि भगव इति। तं पुत्रं होवाच वटधानायां भिन्नायां यं वटबीजाणिमानं हे सोम्य एतं न निभालयसे न पश्यसि। तथाप्येतस्य वै किल सोम्य एष महान्यग्रोधो बीजस्याणिम्नः सूक्ष्मस्यादृश्यमानस्य कार्य्यभूतः स्थूलशाखास्कन्धफलपलाशवांस्तिष्ठत्युत्पन्नस्तिष्ठतीति वोच्छब्दोऽध्याहार्य्योऽतः श्रद्धत्स्व सोम्य सत एवाणिम्नः स्थूलं नामरूपादिमत्कार्य्यं जगदुत्पन्नमिति। यद्यपि न्यायागमाभ्यां निर्द्धारितोऽर्थस्तथैवेत्यवगम्यते तथाप्यत्यन्तसूक्ष्मेष्वर्थेषु बाह्यविषयासक्तमनसः स्वभावप्रवृत्तस्यासत्यां गुरुतरायां श्रद्धायां दुरवगमत्वं स्यादित्याह श्रद्धत्स्वेति। श्रद्धायान्तु सत्यां मनसः समाधानं बुभुत्सितेऽर्थे भवेत्ततश्च

---

आ० वृक्षस्योत्पत्त्युपलम्भोऽतःशब्दार्थः। सन्मूलाः सोम्येत्यादिश्रुत्या दृश्यते त्विति न्यायेन च जगतः सत्कार्य्यत्वे सिद्धे श्रद्धामन्तरेणापि तन्निर्णयसम्भवात्किमिति श्वेतकेतुः श्रद्धत्स्वेति पित्रानुयुज्यते तत्राह॥ यद्यपीति॥ सत्यामपि श्रद्धायां कथं बाह्यविषयासक्तमनसोऽत्यन्तसूक्ष्मेष्वर्थेष्ववगमः स्यादित्याशङ्क्याह। श्रद्धायान्त्विति॥ मनःसमाधानवशाद्बुभुत्सितस्यार्थस्यावगतिरित्यर्थः बृहदारण्य-

उ० तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ॥ ३ ॥ १२ ॥

लवणमेतदुदकेऽवधायाथ मा प्रातरुपसीदथा इति स ह तथा चकार तꣳ होवाच यद्दोषा लवणमुदकेऽवाधा अङ्ग तदाहरेति तद्धावमृश्य

---

भा० तदर्थावगतिः । अन्यत्रमना अभूवमित्यादिश्रुतेः । स य इत्याद्युक्तार्थं । यदि तत्सज्जगतो मूलं कस्मान्नोपलभ्यत इत्येतद्दृष्टान्तेन मामां भगवान् भूय एव विज्ञापयत्विति । तथा सोम्येति होवाच पिता ॥ १२ ॥

विद्यमानमपि वस्तु नोपलभ्यते प्रकारान्तरेण तूपलभ्यत इति शृणु च दृष्टान्तं। यदि चेममर्थं प्रत्यक्षीकर्त्तुमिच्छसि पिण्डरूपं लवणमेतत् घटादावुदकेऽवधाय प्रक्षिप्याथ मा मां श्वः प्रातरुपसीदथा उपगच्छेथा इति। स ह पित्रोक्तमर्थं प्रत्यक्षीकर्त्तुमिच्छन् तथा चकार। तं होवाच परेद्युः प्रातो यल्लवणं दोषा रात्रौ उदकेऽवधा निक्षि-

---

आ० कश्रुतिः संवादयति । अन्यत्रेति ॥ प्रत्यक्षतोऽनुपलभ्यमानत्वान्नास्तीति मन्वानः पृच्छते । यदीति ॥ अनुपलभ्यमानस्यापि सत्त्वमाशङ्क्याह । इत्येतदिति ॥ अप्रत्यक्षस्यापि जगन्मूलस्यास्तित्वं प्रतिपादयितुमुत्तरग्रन्थमवतारयति । तथेति ॥ १२ ॥

नोपलभ्यते स्वेन प्रकारेणेति शेषः । इतीममर्थं प्रत्यक्षीकर्त्तुं यदीच्छसि तर्हि दृष्टान्तमत्र शृण्विति योजना। रात्रेरत्ययानन्तर्यमथशब्दार्थः। जगन्मूलं स्वतोऽप्रत्यक्षमपि प्रत्यक्षमुपायान्तरेणेति पित्रोक्तोऽर्थस्तं प्रत्यक्षीचिकीर्षुर्घटादावुदके पिण्डरूपं

उ० न विवेद यथा विलीनमेवाङ्ग ॥ १ ॥ अस्यान्ता-दाचामेति कथमिति लवणमिति मध्यादाचामेति कथमिति लवणमित्यन्तादाचामेति कथमिति लवणमित्यभिप्राश्यैनदथ मोपसीदथा इति तद्ध

---

भा० ग्रवानसि अङ्ग हे वत्स तदाहरेत्युक्तस्तल्लवणमाजिहीर्षुर्ह किलावम्टश्योदके न विवेद न विज्ञातवान्। यथा तल्लवणं विद्यमानमपि सत् अप्सु लीनं संश्लिष्टमभूत् यथा विलीनं लवणं न वेत्थ तथापि तच्चक्षुषा स्पर्शनेन च पिण्डरूपं लवणमगृह्यमाणं विद्यत एवाप्सु लभ्यते चोपायान्तरेणे-त्येतत्पुत्रं प्रत्याययितुमिच्छन्नाहाङ्गास्योदकान्तादुपरि गृहीत्वाऽऽचामेत्युक्त्वा पुत्रं तथाकृतवन्तमुवाच कथमितीतर आह लवणं स्वादुत इति। तथा मध्यादुदकस्य गृहीत्वाऽऽ-चामेति कथमिति लवणमिति। तथान्तादधोदेशाद्गृहीत्वा-ऽऽचामेति कथमिति लवणमिति। यद्येवमभिप्रायस्य परित्यज्यैतदुदकमाचम्याथ मोपसीदथा इति तद्ध तथा

---

व्या० लवणं रात्रौ प्रक्षिप्य तदत्ययानन्तरं प्रातःकाले पितृसमीपे श्वेत-केतुर्गतवानित्याह ॥ स हेति ॥ यथा तत्पिण्डरूपं लवणं प्रक्षेपात् प्रागभूत्तथा न विज्ञातवानिति सम्बन्धः ॥ उदके प्रक्षिप्तं लवणं विमृश्यापि न ज्ञायते चेदसदेव तर्हि तदित्याशङ्क्याह। विद्य-मानमेवेति ॥ किमिति चक्षुषा स्पर्शेन वा नोपलभ्यते तत्राह। अप्स्विति ॥ कथं तर्हि विद्यमानत्वमवगतं तत्राह। यथेति ॥ यद्यपि पिण्डरूपं लवणमुदके क्षिप्तमवमृश्यापि चक्षुःस्पर्शनाभ्यां न त्वं वेत्थ तथापि तत्तत्र विद्यत एव। यतस्ताभ्यामगृह्यमाणमपि

उ॰ तथा चकार तच्छश्वत्संववृते तꣳ होवाचात्र वाव किल सत्सोम्य न निभालयसेऽत्रैव किलेति ॥ २ ॥
स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा

---

भा॰ चकार लवणं परित्यज्य पितृसमीप आजगामेत्यर्थः। इदं वचनं ब्रुवण् तल्लवणं तस्मिन्नेवोदके यन्मया रात्रौ क्षिप्तं श्वश्वन्नित्यं संवर्त्तते विद्यमानमेव सत्सम्यग्वर्त्तत इत्येवमुक्तवन्तं ह उवाच पिता। यथेदं लवणं दर्शनस्पर्शनाभ्यां पूर्व्वगृहीतं पुनरुदके विलीनं ताभ्यामगृह्यमाणमपि विद्यत एवोपायान्तरेण जिह्वयोपलभ्यमानत्वात्। एवमेवात्रैवास्मिन्नेव तेजोबन्नादिकार्य्ये शुङ्गे देहे। वाव किलेत्याचार्य्योपदेशस्मरणप्रदर्शनार्थौ। सत्तेजोबन्नादिशुङ्गकारणं वटवीजाणिमवद्विद्यमानमेवेन्द्रियैर्नोपलभसे न निभालयसे। यथात्रैवोदके दर्शनस्पर्शनाभ्यामनुपलभ्यमानं लवणं विद्यमानमेव जिह्वयोपलब्धवानसि एवमेवात्रैव किल विद्यमानं सज्जगन्मूलमुपायान्तरेण लवणमिव तदुपलप्स्यसे इति वाक्य-

---

व्या॰ तत्रोपायान्तरेणोपलभ्यत इत्येतमर्थं पुत्रं प्रत्याययितुमुत्तरं वाक्यमित्यर्थः॥ यथाशब्दो यद्यपीत्यर्थे॥ तद्धेत्यादि व्याचष्टे। लवणमिति॥ संवर्त्तत इतीदं वचनं ब्रुवन्नन्वाजगामेति सम्बन्धः॥ दृष्टान्तमनूद्य दार्ष्टान्तिकमाह। इत्येवमुक्तवन्तमित्यादिना॥ सतो जगन्मूलस्यास्मिन्देहे सत्त्वं त्वया कथमवगतमित्यत आह। उवाचेति॥ अत्र वावेत्यादिनाऽत्रैव किलेत्यस्य पौनरुक्त्यमाशङ्क्यार्थविशेषं दर्शयति। यथात्रेत्यादिना॥ उपायान्तरजिज्ञासया पृच्छति। यद्ये-

उ० भगवान् विज्ञापयत्विति तथा सोम्येति होवाच
॥ ३ ॥ १३ ॥

यथा सोम्य पुरुषं गन्धारेभ्योऽभिनद्धाक्षमानीय तं ततोऽतिजने विसृजेत्स यथा तत्र प्राङ्वा

---

भा० शेषः । स य इत्यादि समानं । यद्येवं लवणमिव तदिन्द्रियैरनुपलभ्यमानमपि जगन्मूलं सदुपायान्तरेणोपलब्धुं शक्यते यदुपलम्भात्कृतार्थः स्यामनुपलम्भाच्चाकृतार्थः स्यामहं तस्योपलब्धौ क उपाय इत्येतद्भूय एव मा भगवान् विज्ञापयतु दृष्टान्तेन तथा सोम्येति होवाच ॥ १३ ॥

यथा लोके हे सोम्य पुरुषं यं कश्चिद्गन्धारेभ्यो जनपदेभ्योऽभिनद्धाचं बद्धचक्षुषमानीय द्रव्यहर्त्ता तस्करस्तमभिनद्धाक्षमेव बद्धहस्तमरण्ये ततोऽप्यतिजनेऽतिगतजनेऽत्यन्तविगतजने देशे विसृजेत् स तत्र दिग्भ्रमोपेतो यथा प्राङ्वा प्रागञ्चनः प्राङ्मुखो वेत्यर्थः । तथोदङ्वाऽधराङ्वा प्रत्यङ्वा प्रध्मायित शब्दं कुर्य्याद्विक्रोशेत् । अभि-

---

व्या० वमिति ॥ तर्हि तदेत्यध्याहृतस्य तस्येत्यादिना सम्बन्धः । सतो मूलस्योपलम्भेऽनुपलम्भे वा किं स्यादित्याशङ्क्याह । यदुपलम्भादिति ॥ बुभुत्सितमुपायमुपदर्शयितुमुत्तरग्रन्थमुपादत्ते । तथेति ॥ १३ ॥

यथायमुपायः शक्यो ज्ञातुं तथा लोके प्रदृश्यते दृष्टान्त इत्याह । यथेति ॥ तमेव दृष्टान्तं व्याचष्टे । हे सोम्येति ॥ यथा दिग्भ्रमोपेतो यत्किञ्चिद्दिगभिमुखो विक्रोशति तथा स तत्र विजने देशे शब्दं कुर्य्यादिति सम्बन्धः ॥ प्राङित्यस्यार्थमाह । प्रागञ्चन इति ॥

उ० उदङ्गाऽधराङ्गा प्रध्मायीताभिनद्धाक्ष आनीतोऽभिनद्धाक्षो विसृष्टः ॥ १ ॥ तस्य यथाभिनहनं

---

भा० नद्धाक्षोऽहं गन्धारेभ्यस्तस्करेणानीतोऽभिनद्धाक्ष एव विसृष्ट इत्येवं विक्रोशतस्तस्य यथाभिनहनं यथा बन्धनं प्रमुच्य मुक्त्वा कारुणिकः कश्चिदेतां दिशमुत्तरतो गन्धारा एतां दिशं व्रजेति प्रब्रूयात् स एवं कारुणिकेन बन्धनान्मोचितो ग्रामाद्ग्रामान्तरं पृच्छन्पण्डित उपदेशवान्मेधावी परोपदिष्टग्रामप्रवेशमार्गावधारणसमर्थः सन् गन्धारानेवोपसम्पद्येत नेतरो मूढमतिर्देशान्तरदर्शनतृष्णा। यथाऽयं दृष्टान्तो वर्णितः स्वविषयेभ्यो गन्धारेभ्यः पुरुषस्तस्करैरभिनद्धाक्षोऽविवेको दिङ्मूढोऽशनायापिपासादिमान् व्याघ्रतस्कराद्यनेकभयानर्थव्रातयुतमरण्यं प्रविशितो दुःखार्त्तो विक्रोशन् बन्धनेभ्यो मुमुक्षुस्तिष्ठति स कथञ्चिदिव कारुणिकेन केनचिन्मोचितः स्वदेशान्

---

आ० तस्यैव विवक्षितमर्थं कथयति। प्राङ्मुख इति ॥ वक्ष्यमाणप्रकारैर्विकल्पार्थो वाशब्दः। यथा बन्धनं बन्धनमनुसृत्येति यावत् ॥ पण्डितो मेधावीति विशेषणद्वयस्य व्यवच्छेद्यं दर्शयति। नेतर इति ॥ व्याख्यातं दृष्टान्तं सोपस्करणमनुवदति। यथेत्यादिना ॥ दार्ष्टान्तिकं व्याचष्टे। एवमिति ॥ आदिशब्देन वाय्वाकाशौ गृह्येते। मयट्विकारार्थः ॥ देहारण्यस्यानेकानर्थसङ्कटत्वं कथयति। वातेति ॥ शीतोष्णादीत्यादिपदेन रागद्वेषादि द्वन्द्वं गृह्यते। तेनानेकेन द्वन्द्वेन जातं सुखं च तदुपेतमिदं देहारण्यमित्येतत्। बन्ध्वादीत्यादिशब्दो मित्रद्वेषादिविषयः। पुण्यापुण्यादीत्यादिपदं अविद्याकामवासनासङ्ग्रहार्थं। देहारण्यं प्रविष्टस्य

प्रमुच्य प्रब्रूयादेतां दिशं गन्धारा एतां दिशं व्रजेति स ग्रामाद्ग्रामं पृच्छन् पण्डितो मेधावी

---

भा० गान्धारानेवापन्नो निर्वृतः सुखभूत्तथा। एवमेव मतो जगदात्मनः स्वरूपात्तेजोबन्नादिमयं देहारण्यं वातपित्तकफरुधिरमेदोमांसास्थिमज्जाशुक्रक्रमिमूत्रपुरीषवच्छीतोष्णाद्यनेकद्वन्द्वदुःखवच्चेदं मोहपटाभिनद्धाचो भार्य्यापुत्रपशुबन्ध्वादिदृष्टादृष्टानेकविषये तृष्णापाशितः पुण्यापुण्यादिकर्मतस्करैः प्रवेशितोऽहममुष्य पुत्रो ममैते बान्धवाः सुख्यहं दुःखी मूढः पण्डितो धार्म्मिको बन्धुमान् जातो मृतो जीर्णः पापी पुत्रो मे मृतो धनं मे नष्टं हा हतोऽस्मि कथं जीविष्यामि का मे गतिः किं मे त्राणमित्येवमनेकशतसहस्रानर्थजालवानिव क्रोशन् कथञ्चिदिव पुण्यातिशयात्परमकारुणिकं कञ्चित्सद्ब्रह्मात्मविदं विमुक्तबन्धनं ब्रह्मिष्ठं यदाऽऽसादयति तेन च ब्रह्मविदा

---

व्या० जन्तोर्विक्रोशनप्रकारं सकारणं सूचयति। अहमित्यादिना॥ तस्य सदा दुःखित्वशङ्कां वारयति। कथञ्चिदिवेति॥ आपाततो ब्रह्मवित्त्वमात्रेण मुक्तबन्धनत्वासिद्धेर्विशिनष्टि। ब्रह्मिष्ठमिति॥ यदाऽऽसादयति तदा सुखी स्यादित्युत्तरत्र सम्बन्धः। संसारविषयं दोषदर्शनं तस्य त्वयिष्णुत्वादिज्ञानं तस्य मार्गो विवेकः स यस्याचार्य्येण दर्शितविद्यातः सदर्शितसंसारविषयदोषदर्शनमार्गः॥ आचार्य्येण साधनचतुष्टयसम्पन्नस्याधिकारिणः संसारान्मोचितत्वप्रकारं दर्शयति। नासीति॥ यद्यपि वाक्यार्थज्ञाने वाक्यमेवोपायस्तथाप्याचार्य्योपदेशजनितातिशयदर्शनात्तदुपदेशोऽवगत्यन्तवाक्यार्थज्ञाने प्रथमो हेतुरुपदेशमात्रा-

उ॰ गन्धारानेवोपसम्पद्येतैवमेवेहाचार्य्यवान् पुरुषो

---

भा॰ कारुण्याद्दर्शितसंसारविषयदोषदर्शनमार्गो विरक्तः संसार-विषयेभ्यः । नासि त्वं संसार्य्यमुष्य पुत्रत्वादिधर्म्मवान् किन्तर्हि सद्यत्तत्त्वमसीत्यविद्यामोहपटाभिनहनान्मोचितो गन्धारपुरुषवच्च स्वं सदात्मानमुपसम्पद्य सुखी निर्वृतः स्यादित्येतमेवार्थमाहाचार्य्यवान् पुरुषो वेदेति तस्या-स्यैवमाचार्य्यवतो मुक्ताविद्याभिनहनस्य तावदेव तावा-नेव कालश्चिरं चेपः सदात्मस्वरूपसम्पत्तेरिति वाक्यशेषः। कियान् कालश्चिरमित्युच्यते यावन्न विमोक्ष्ये न विमोक्ष्य-ते इत्येतत्पुरुषव्यत्ययेन। सामर्थ्यात्। येन कर्म्मणा शरीर-मारब्धं तस्योपभोगेन चयाद्देहपातो यावदित्यर्थः। अथ तदैव सत्सम्पत्स्यत इति पूर्व्ववत्। न हि देहमोक्षस्य सत्स-

---

आ॰ यस्य नावगत्यन्तवाक्यार्थधीस्तस्य प्रमाणाद्यसम्भावनानिरसन-समर्थो विचारो मेधाविशब्देन विहितस्तस्य प्रज्ञातिशयवति प्रयोगादिति भावः॥ पुरुषव्यत्यये हेतुमाह। सामर्थ्यादिति॥ अस्मद्युपपदेऽसत्युत्तमपुरुषप्रयोगानुपपत्तेर्देहादिस्थित्यनुपपत्तेर्वे-त्यर्थः॥ यावदित्यादिवाक्यार्थं स्पष्टयति। येनेति॥ पूर्व्ववदिति सामर्थ्यात्पुरुषव्यत्ययं लक्षयति। अथ शब्दस्य सत्सम्पत्तेर्देहमो-क्षादानन्तर्य्यमर्थो भविष्यतीत्याशङ्क्याह। न हीति॥ अथ सम्पत्स्य इति विदेहमुक्तिमुक्तामाक्षिपति। नन्विति॥ अप्रवृत्तफलानीति-च्छेदः। उत्पन्ने चेति चकारोऽप्यर्थः। विमतानि कर्म्माणि ब्रह्मज्ञा-नेन न क्षीयन्ते कर्म्मत्वात्प्रवृत्तफलकर्म्मवदित्यर्थः॥ क्षीयन्ते चास्य कर्म्माणि। ज्ञानाग्निः सर्व्वकर्म्माणीत्यादि श्रुतिस्मृतिविरोधात्काला-त्ययापदिष्टतेति शङ्कते। अथेति॥ अतिप्रसङ्गान्न श्रुतिस्मृत्योर्यथा-श्रुतार्थतेति परिहरति। तदेति॥ ज्ञानस्यानर्थक्यमुक्ता

उ० वेद तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ

भा० सम्पत्तेश्च कालभेदोऽस्ति येनाथशब्द आनन्तर्य्यार्थः स्यात्। ननु यथा सद्विज्ञानानन्तरमेव देहपातः सत्सम्पत्तिश्च न भवति कर्म्मशेषवशात्तथाऽप्रवृत्तफलानि प्राग्ज्ञानोत्पत्तेर्जन्मान्तरसञ्चितान्यपि कर्म्माणि सन्तीति तत्फलोपभोगार्थं पतितेऽस्मिन् शरीरान्तरमारब्धव्यं। उत्पन्ने च ज्ञाने यावज्जीवं विहितानि प्रतिषिद्धानि वा कर्म्माणि करोत्येवेति तत्फलोपभोगार्थञ्चावश्यं शरीरान्तरमारब्धव्यं ततश्च कर्म्माणि ततः शरीरान्तरमिति ज्ञानानर्थक्यं। कर्म्मणां फलवत्त्वात्। अप्रवृत्तफलानि कर्म्माणि न ब्रह्मज्ञानेन क्षीयन्ते कर्म्मत्वात्प्रवृत्तफलकर्म्मवदित्युक्तं तच्च ज्ञानाग्निः सर्व्वकर्म्माणीति स्मृतिविरोधः। अथ ज्ञानवतः क्षीयन्ते कर्म्माणि। तदा ज्ञानप्राप्तिसमकालमेव ज्ञानस्य

---

व्या० माह। देशान्तरेति॥ यथा ग्रामप्राप्त्युपायोऽश्वो रथो वेति ज्ञाने सत्यसत्यन्तराये कस्यचिदेव ग्रामप्राप्तिर्भवति न त्वन्तरायवतस्तज्ज्ञानेऽपि तत्प्राप्तिर्यथा तथा समुत्पन्नज्ञानस्यापि कस्यचिदेव भोगेन क्षीणकर्म्माशयस्य मोक्षो न ज्ञानमात्रादित्यनियतफलत्वमित्यर्थः॥ कर्म्मत्वहेतोरप्रयोजकत्वं वदन्नुत्तरमाह। न कर्म्मणामिति॥ सङ्ग्रहवाक्यमेव प्रपञ्चयन्नादौ नञर्थं स्फुटयति। यदुक्तमिति॥ तत्र हेतुमाह। विदुष इति॥ प्रामाण्याद्देहान्तरारम्भे तद्विरोधप्रसङ्गादिति शेषः॥ श्रुत्यन्तरमाश्रित्य शङ्कते। नन्विति॥ तथाचानारब्धकर्म्मवशाद्विदुषोऽपि देहान्तरमारब्धव्यमिति शेषः। तत्प्रामाण्यमङ्गीकरोति। सत्यमेवमिति॥ तर्हि विदुषोऽपि देहान्तरमनारब्धकर्म्मवशादारब्धव्यं नेत्याह। तथापीति॥ विशेषमेवाकाङ्क्षाद्वारा विशदयति। कथमित्यादिना॥ प्रवृत्तफलत्व-

उ० सम्पत्स्य इति ॥ २ ॥ स य एषोऽणिमैतदात्म्य-
मिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि श्वेत-

---

भा० मत्सम्पत्तिहेतुत्वान्मोक्षः स्यादिति शरीरपातः स्यात्। तथा चाचार्य्याभाव इत्याचार्य्यवान् पुरुषो वेदेति अनुपपत्तिज्ञानान्मोक्षाभावप्रसङ्गश्च । देशान्तरप्राप्त्युपायज्ञानवदनैकान्तिकफलत्वं वा ज्ञानस्य । न कर्म्मणां प्रवृत्ताप्रवृत्तफलवत्त्वविशेषोत्पत्तेः । यदुक्तमप्रवृत्तफलानां कर्म्मणां ध्रुवफलवत्त्वाद्ब्रह्मविदः शरीरे पतिते शरीरान्तरमारब्धव्यमप्रवृत्तकर्म्मफलोपभोगार्थमित्येतदसत् । विदुषस्तस्य तावदेव चिरमिति श्रुतेः प्रामाण्यात्। ननु पुण्यो वै पुण्येन कर्म्मणा भवतीत्यादिश्रुतेरपि प्रामाण्यमेव। सत्यमेवं तथापि प्रवृत्तफलानामप्रवृत्तफलानाञ्च कर्म्मणां विशेषोऽस्ति कथं यानि प्रवृत्तफलानि कर्म्माणि। यैर्विदच्छरीरमारब्धन्तेषामुपभोगेनैव क्षयः। यथारब्धवेगस्य लक्षमुक्तेष्वादर्वेग-

---

व्या० मेव स्फुटयति। यैरिति ॥ उक्तमर्थं दृष्टान्तेन स्पष्टयति। यथेति ॥ लक्ष्यस्य वेधो भेदनं तत्समकालमेवेष्वादेरूर्द्ध्वं गतिप्रयोजनं नास्तीति न स्थितिलक्ष्यमुद्दिश्य मुक्तस्य तस्यारब्धवेगस्याप्रतिबन्धेन तेन वेगेनासादितस्य मुक्तस्य वेगक्षयादेव स्थितिर्दृष्टान्तवद्विद्यार्थो देहे विद्यालाभानन्तरं फलं नास्तीति न कर्म्माणि निवर्त्तन्ते किन्तु भोगक्षयादेव तस्य लब्धवृत्तित्वादित्यर्थः ॥ प्रवृत्तफलेभ्योऽप्रवृत्तफलानां कर्म्मणां विशेषमाह। अन्यानि त्विति ॥ न चाप्रवृत्तफलानां कर्म्मणां क्षयो ऽप्रसिद्धस्तथाविधस्यैव पापस्य प्रायश्चित्तेनैव क्षयोपयोगादित्याह। प्रायश्चित्तेनेति ॥ आरब्धफलातिरिक्तानां कर्म्मणां ज्ञानान्निवृत्तौ श्रुतिस्मृती दर्शयति। ज्ञाना-

उ॰ कैतो इति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥ ३ ॥ १४ ॥

---

भा॰ क्षयादेव स्थितिर्न तु लक्ष्यवेधसमकालमेव प्रयोजनं नास्तीति तद्वत्। अन्यानि त्वप्रवृत्तफलानीह प्राग्ज्ञानोत्पत्तेरूर्ध्वं च कृतानि वा क्रियमाणानि वाऽतीतजन्मान्तरकृतानि वाऽप्रवृत्तफलानि ज्ञानेन दह्यन्ते। प्रायश्चित्तेनेव। ज्ञानाग्निः सर्व्वकर्म्माणि भस्मसात्कुरुते तथेति स्मृतेश्च। क्षीयन्ते चास्य कर्म्माणीति चाथर्वणे। अतो ब्रह्मविदो जीवनादिप्रयोजनाभावेऽपि प्रवृत्तफलानां कर्म्मणामवश्यमेव फलोपभोगः स्यादिति मुक्तेपुवत्तस्य तावदेव चिरं इति युक्तमेव चोक्तं यथोक्तदोषचोदनानुपपत्तिः। ज्ञानोत्पत्तेरूर्द्ध्वं च ब्रह्मविदः कर्म्माभावमवोचाम। ब्रह्मसंस्थोऽमृतत्वमेतीत्यत्र तच्च स्मर्त्तुमर्हसि स य इत्याद्युक्तार्थं।

---

व्या॰ भिरित्यादिना॥ प्रवृत्ताप्रवृत्तफलेषु कर्म्मसु सिद्धे विशेषे फलितमाह। अत इति॥ जीवनादित्यादिशब्देन पुत्रकलत्रादि गृह्यते। मुक्तस्याप्रतिबन्धेष्वादेर्यावद्देगच्छयं गतिश्चीव्यव्यवहारवदारब्धकर्म्मणां फलभोगोऽवश्यमेव स्यादिति सम्बन्धः। यतस्वारब्धकर्म्मणां भोगादेव क्षयस्तस्येत्यादिना यच्चिरत्वं सत्सम्पत्तेरुक्तं तद्युक्तमेवेति कृत्वा यथोक्तस्य दोषस्य सद्यः शरीरपातादिलक्षणस्याशङ्कानुपपत्तिरित्युपसंहरति। इतीति॥ क्षयस्येतिशब्दस्य तस्येत्यनेन सम्बन्धः॥ यत्तूत्पन्नेऽपि ज्ञाने यावज्जीवविहितानि करोत्येवेति तत्राह। ज्ञानोत्पत्तेरिति॥ ज्ञानस्य नानर्थक्यमविद्यातत्कार्य्यनिवर्त्तनेन सत्सम्पत्तिहेतुत्वाज्ज्ञाप्यनैकान्तिकफलत्वमन्तरायाभावादित्युक्तमिदानीमर्चिरादिमार्गप्राप्त्या वाऽत्रैवाविद्यानिवृत्तिमात्रेण वा सत्सम्पत्तिरिति सन्दिहानः पृच्छति। आचार्य्य-

उ० पुरुषꣳ सोम्योतोपतापिनं ज्ञातयः पर्य्युपासते जानासि मां जानासि मामिति तस्य यावन्न वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायां तावज्जानाति ॥ १ ॥ अथ यदास्य वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्ते-

---

भा० आचार्य्यवानिव। तद्वान् येन क्रमेण सत्सम्पद्यते तं क्रमदृष्टान्तेन भूय एव मा भगवान्विज्ञापयत्विति। तथा सोम्येति होवाच॥ १४ ॥

पुरुषं हे सोम्य उपतापिनं ज्वराद्युपतापवन्तं ज्ञातयो बान्धवाः परिवार्य्योपासते मुमूर्षुं जानासि मां तव पितरं पुत्रं भ्रातरञ्चेति पृच्छन्तस्तस्य मुमूर्षोर्यावन्न वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायामित्येतदुक्तार्थं। संसारिणो यो मरणक्रमः स एवायं विदुषोऽपि सत्सम्पत्तिक्रम इत्येतदाह परस्यां देवतायां तेजसि सम्पन्नेऽथ न जानाति। अविद्वांस्तु तत उत्थाय प्राग्भावितं व्याघ्रादिभावं देवमनुष्यादिभावं वा विशति। विद्वांस्तु शास्त्राचार्य्योपदेशजनितज्ञानदीपप्रकाशितं सद्-

---

व्या० वानिति ॥ संशयानस्य सम्बोधनार्थमुत्तरं वाक्यमवतारयति। तथेति ॥ १४ ॥

नन्वेष संसारिणो मरणक्रमो नतु विदुषः सत्सम्पत्तिक्रमस्तयोर्विशेषस्य वक्तव्यत्वादत आह। संसारिण इति॥ करणोपरमे तेजःसहचरितभूतसूक्ष्मोपसंहारे च विशेषविज्ञानाभावः समान एव विद्वदविदुषोरित्यर्थः॥ कस्तर्हि तयोर्विशेषस्तत्राह। अवि-

उ॰ ऽसि तेजः परस्यां देवतायामथ न जानाति ॥ २ ॥ स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो इति

---

भा॰ ब्रह्मात्मानं प्रविश्य नावर्त्तत इत्येष सत्सम्पत्तिक्रमः। अन्ये तु मूर्द्धन्यया नाड्योत्क्रम्यादित्यादिद्वारेण सद्गच्छन्तीत्याहुस्तदसत्। देशकालनिमित्तफलाभिसन्धानेन गमनदर्शनात्। न हि सदात्मैकत्वदर्शिनः सत्याभिसन्धस्य देशकालनिमित्तफलाद्यनृताभिसन्धिरुपपद्यते। विरोधात्। अविद्याकामकर्म्मणाञ्च गमननिमित्तानां सद्विज्ञानहुताशनविप्लुष्टत्वाद्गमनानुपपत्तिरेव। पर्य्याप्तकामस्य कृतात्मनस्त्विहैव सर्व्वे विलीयन्ते कामा इत्याद्याथर्वणे। नदीसमुद्रदृष्टान्तश्रुतेश्च। स य इत्यादि समानं। यदि म्रियमाणो मुमुक्षुतश्च तुल्या

---

व्या॰ द्वानिति ॥ ततस्तस्मादज्ञानात्सदात्मनः सकाशादिति यावत्। एकदेशिमतमुत्थाप्य प्रत्याचष्टे। अन्ये त्विति ॥ भवतु विदुषोऽपि तदभिसन्धिपूर्व्वकं गमनमित्याशङ्क्याह। न हीति ॥ आदिशब्देन गत्यागतिर्गृह्यते ॥ सद्विज्ञानवतो गमनायोगे हेत्वन्तरमाह। अविद्येति ॥ विदुषोऽविद्याकामकर्म्मणामभावे प्रमाणमाह। पर्य्याप्तकामस्येति ॥ ननु कामप्रविलय एवात्र श्रूयते नाविद्याकामकर्म्मनिम्माकस्तत्राह। नदीति। यथा नद्यो गङ्गाद्या नामरूपे विहाय समुद्रं प्रविशन्ति तथा विद्वान्नामरूपे हित्वा परं पुरुषमुपैतीति दृष्टान्तपूर्व्वको यः श्रुतेर्न्नामरूपबीजावस्थाविद्याया लयो गम्यते नचाविद्याकामयोरभावे कर्म्मोपपत्तिस्तस्मान्न विदुषो गतिपूर्व्विका सत्सम्पत्तिरित्यर्थः। विमतः सत्सम्पन्नः पुनरावृत्तिमर्हति सत्सम्पन्नत्वान्मरणकाले सत्सम्पन्नवद्विमतो वा विशेषविज्ञानाभावेनात्यन्तिका विदुषो विज्ञानाभावत्वान्मरण-

उ॰ भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ॥ ३ ॥ १५ ॥

पुरुषꣳ सोम्योत हस्तगृहीतमानयन्त्यपहार्षी-त्स्तेयमकार्षीत्परशुमस्मै तपतेति स यदि तस्य कर्ता भवति तत एवानृतमात्मानं कुरुते सोऽनृ-ताभिसन्धोऽनृतेनात्मानमन्तर्धाय परशुं तप्तं प्रति-

---

भा॰ सत्सम्पत्तिस्तत्र विद्वान् सत्सम्पन्नो नावर्त्तते आवर्त्ततेऽविद्वा-नित्यत्र कारणं दृष्टान्तेन भूय एव मा भगवान् विज्ञा-पयत्विति तथा सोम्येति होवाच ॥ १५ ॥

शृणु यथा सोम्य पुरुषं चौर्य्यकर्म्मणि सन्दिह्यमानं निग्रहाय परीक्षणाय चोतापि हस्तगृहीतं बद्धहस्तमान-यन्ति राजपुरुषाः। किं कृतवानयमिति पृष्टाश्चाहुरपहा-र्षीद्धनमस्यायं। ते चाहुः किमपहरणमात्रेण बन्धनम-र्हति। अन्यथा दत्तेऽपि धने बन्धनप्रसङ्गादित्युक्ताः पुन-राहुः स्तेयमकार्षीच्चौर्य्येण धनमपहार्षीदिति। तेष्वेवं वदत्सु इतरोऽपह्नुते नाहं तत्कर्त्ता इति। ते चाहुः सन्दिह्य-मानाः स्तेयमकार्षीस्त्वमस्य धनस्येति। तस्मिंश्चापह्नुवति

---

व्या॰ कालीनविशेषविज्ञानाभाववदित्यनुमानाद्विद्वदविदुषोरविशेषं मन्वानः शङ्कते। यदीति॥ तत्रानृताभिसन्धत्वं तादृगभिसन्धि-मनिष्टत्वस्योपाधिरित्यनुमानद्वयं दूषयितुमुत्तरग्रन्थमुत्थापयति। तथेति॥ परीक्षणाय परीक्षाद्वारेणार्थमिति यावत्॥ १५॥

परस्वग्रहणमात्रेण बन्धने प्रतिग्रहीतुरपि बन्धनप्रसङ्गान्न तन्मात्रं बन्धनकारणमित्याह। अन्यथेति॥ तत एवानृताभिस-

उ॰ गृह्णाति स दह्यतेऽथ हन्यते ॥ १ ॥ अथ यदि तस्याकर्त्ता भवति तत एव सत्यमात्मानं कुरुते स सत्याभिसन्धः सत्येनात्मानमन्तर्द्धाय परशुं तप्तं

---

भा॰ आहुः परशुमस्मै तपतेति शोधयत्वात्मानमिति। स यदि तस्य स्तैन्यस्य कर्त्ता भवति बहिश्चापह्नुते स एवम्भूतस्तत एवानृतमन्यथा भूतं सन्तमन्यथा आत्मानं कुरुते स तथा-नृताभिसन्धोऽनृतेनात्मानमन्तर्द्धाय व्यवहितं कृत्वा परशुं तप्तं मोहात्प्रतिगृह्णाति स दह्यतेऽथ हन्यते राजपुरुषैः स्वकृतेनानृताभिसन्धिदोषेण। अथ यदि तस्य कर्म्मणोऽ-कर्त्ता भवति तत एव सत्यमात्मानं कुरुते स तथा स्तैन्याक-र्त्तृतयात्मानमन्तर्द्धाय परशुं तप्तं प्रतिगृह्णाति सत्या-भिसन्धः सन्न दह्यते सत्यव्यवधानादथ मुच्यते च मृषा-भियोक्तृभ्यः। तप्तपरशुहस्ततलसंयोगस्य तुल्यत्वेऽपि स्तेय-कर्त्त्रकर्त्त्रोरनृताभिसन्धो दह्यते न तु सत्याभिसन्धः। स यथा सत्याभिसन्धस्तप्तपरशुग्रहणकर्म्मणि सत्यव्यवहित-हस्ततलत्वान्नादाह्येत न दह्यते इत्येतदेवं सद्ब्रह्म सत्याभि-सन्धेतरयोः शरीरपातकाले च तुल्यायां सत्सम्पत्तौ विद्वान् सत्सम्पद्य न पुनर्व्याघ्रदेवादिदेहग्रहणायावर्त्तते

---

आ॰ न्यत्वादेवेत्यर्थः॥ तत एवेति स्तैन्यस्य कर्म्मणोऽकर्त्तृत्वादेवेत्यर्थः॥ दृष्टान्ते विवक्षितमंशमनुवदति। तस्मेति॥ तदनुवादपूर्व्वकं दार्ष्टान्तिकमाह। स यथेति॥ स य एषोऽणिमेत्यादि व्याचष्टे। सदात्मेति॥ त्वं तदसीति त्वमर्थोद्देशेन तदर्थभावो विधीयते

उ० प्रतिगृह्णाति स न दह्यतेऽथ मुच्यते ॥ २ ॥ स यथा तत्र नादाह्येतैतदात्म्यमिदँ सर्वं तत्सत्यँ स आत्मा तत्त्वमसि श्वेतकेतो इति तद्धास्य विज-

---

भा० अविद्वांस्तु विकारानृताभिसन्धः पुनर्व्याघ्रादिभावं देवतादिभावं वा यथा कर्म्म यथा श्रुतं प्रतिपद्यते। यदात्माभिसन्ध्यनभिसन्धिकृते मोक्षबन्धने यच्च मूलं जगतो यदायतनाः यत्प्रतिष्ठाश्च सर्व्वाः प्रजाः यदात्मकञ्च सर्व्वं यच्चाजममृतमभयं शिवमद्वितीयं तत्सत्यं स आत्मा तवातस्तत्त्वमसि हे श्वेतकेतो इत्युक्तार्थमसकृद्वाक्यं। कः पुनरसौ श्वेतकेतुस्त्वंशब्दार्थः । योऽहं श्वेतकेतुरुद्दालकस्य पुत्र इति वेदात्मानमादेशं श्रुत्वा मत्वा विज्ञाय चाश्रुतममतमविज्ञातं विज्ञातुं पितरं पप्रच्छ कथं नु भगवः स आदेशो भवतीति। स एषोऽधिकृतः श्रोता मन्ता विज्ञाता तेजोबन्नमयकार्य्यकरणसङ्घातं प्रविष्टापरैव देवता नामरूपव्याकरणायादर्शे इव पुरुषः सूर्य्यादिरिव जलादौ प्रतिबिम्बरूपेण स आत्मानं कार्य्यकारणेभ्यः प्रविभक्तं सद्रूपं सर्व्वात्मानं प्राक् पितुः श्रवणान्न विजज्ञौ। अथेदानीं

---

व्या० तत्रोद्देश्यस्य शरीरद्वयविशिष्टस्य विरोधादशरीरं ब्रह्मात्मत्वं विधातुमशक्यमिति मन्वानश्चोदयति। कः पुनरिति ॥ त्वंपदेन वाच्यस्य लक्ष्यस्य वा ब्रह्मत्वायोगस्त्वयोच्यते। नाद्योऽङ्गीकारान्न द्वितीयो शरीरद्वयवैशिष्ट्योपलक्षितस्य श्रोतृत्वाद्यध्यासास्पदस्य त्वंपदलक्ष्यस्य ब्रह्मत्वविधाने विरोधाऽस्फुरणादिति परिहरति। योऽहमिति॥ विज्ञाय च वेदेति पूर्व्वेण सह सम्बन्धः। तस्य सतः

उ॰ ज्ञाविति विजज्ञाविति ॥ २ ॥ ॥ १६ ॥ इति छान्दोग्योपनिषत्सु षष्ठः प्रपाठकः ॥ ६ ॥

---

भा॰ पित्रा प्रतिबोधितस्तत्त्वमसीतिदृष्टान्तैर्हेतुभिश्च तत्पितुरस्य ह किलोक्तं सदेवाहमस्मीति विजज्ञौ विज्ञातवान्। द्विर्वचनमध्यायपरिसमाप्त्यर्थं ॥ १६ ॥

किं पुनरत्र षष्ठे वाक्यप्रमाणेन जनितं फलमात्मनि कर्तृत्वभोक्तृत्वयोरधिकृतत्वं विज्ञाननिवृत्तिस्तस्य फलं वयमवोचाम। त्वंशब्दवाच्यमर्थं श्रोतुं मन्तुञ्चाधिकृतमविज्ञातविज्ञानफलार्थं। प्राक्तेतस्मादिज्ञानादहमेवं करिष्याम्यग्निहोत्रादीनि कर्माण्यहमत्राधिकृतः। एषाञ्च कर्मणां फलमिहामुत्र च भोक्ष्ये कृतेषु वा कर्मसु कृतकर्त्तव्यः स्यामित्येवं कर्तृत्वभोक्तृत्वयोरधिकृतोऽस्मीत्यात्मनि यद्विज्ञानमभूत्तस्य यत्सज्जगतो मूलमेकमेवाद्वितीयं तत्त्वमसीत्यनेन वाक्येन प्रतिबुद्धस्य निवर्त्तते। विरोधात्।

---

आ॰ सकाशादौपाधिको भेदो वस्तुतस्त्वैक्यमिति मत्वाह। तेजोऽबन्नमयमिति ॥ त्वंपदार्थं श्वेतकेतुं निर्द्धार्य्य तद्धास्येत्यादि व्याचष्टे। आत्मानमिति ॥ १६ ॥

अज्ञातार्थप्रकाशनं मानफलं तस्य स्वप्रकाशे ब्रह्मणि नोपपत्तिरिति मन्वानश्चोदयति। किं पुनरिति ॥ अत्रात्मनीति सम्बन्धः। स्वप्रकाशे स्वप्रकाशातिशयस्य मानफलस्यासम्भवेऽप्यध्यस्तव्यावृत्तिस्तत् फलं भविष्यतीत्युत्तरमाह। कर्त्तृत्वेति ॥ अश्रुतस्य श्रवणायामतस्य मननायाविज्ञातस्य विज्ञानफलसिद्धये चाधिकृतं यमर्थं त्वम्पदवाच्यमवोचाम। तस्य स्वात्मनि क्रियाकर्त्तृत्वे फलभोक्तृत्वे च यन्मिथ्यैवाधिकृतत्वविज्ञानं तन्निवृत्तिर्मान-

भा० न ह्येकस्मिन्नद्वितीय आत्मन्ययमहमस्मीति विज्ञाते ममेदमनेन कर्त्तव्यमिदं कृत्वाऽस्य फलं भोक्ष्य इति वा भेदविज्ञानमुपपद्यते। तस्मात् सत्याद्वितीयात्मविज्ञाने विकारानृतजीवात्मविज्ञानं निवर्त्तत इति युक्तं ॥ ननु तत्त्वमसीत्यत्र त्वंशब्दवाच्येऽर्थे सद्बुद्धिरादिश्यते। यथा आदित्यमनआदिषु ब्रह्मादिबुद्धिः। यथा च लोके प्रतिमादिषु विष्णवादिबुद्धिस्तद्वत्। ननु सदेव त्वमिति यदि सदेव श्वेतकेतुः स्यात् कथमात्मानं न विजानीयात् येन तस्मै तत्त्वमसीत्युपदिश्यते। न। आदित्यादिवाक्यवैलक्षण्यात्। आदित्यो ब्रह्मेत्यादावितिशब्दव्यवधानान्न साक्षा-

---

व्या० फलमिति योजना॥ यथोक्तं मानफलमेव प्रपञ्चयति। प्राक् चेति॥ अहमेवात्राधिकृतस्येति चकारस्य सम्बन्धस्तस्येत्यहस्येत्यर्थः॥ विरोधमेव स्फोरयति। न हीति॥ प्रमाणफलमुपसंहरति। तस्मादिति॥ तत्त्वमसीति वाक्यं मुख्यैकत्वपरमिति स्वपक्षमुक्त्वा परपक्षं शङ्कते। नन्विति॥ आध्यासिकमेकत्वं सामानाधिकरण्यालम्बनमिति स्वपक्षं दृष्टान्तेनोक्त्वा सिद्धान्तं दूषयति। नन्विति॥ श्वेतकेतोः सन्मात्रत्वे तदज्ञानायोगादसकृदुपदेशासिद्धिरित्यर्थः। किमध्यासवाक्यसामान्यादाध्यासिकमेकत्वं सामानाधिकरण्यालम्बनं किं वा मुख्यैकत्वे बाधकसद्भावादिति विकल्प्याद्यं दूषयति। नेत्यादिना॥ यथा लोके शुक्तिकां रजतमिति प्रत्येतीत्यादावितिशब्दपरं सामानाधिकरण्यं न वस्तुनिष्ठं दृष्टं तथाऽध्यासवाक्यानामप्यादित्यो ब्रह्मेत्यादेश इत्यादीनामितिशब्दपरसामानाधिकरण्यवशादवस्तुनिष्ठत्वं गम्यते न तथा तत्त्वमसिवाक्यस्यावस्तुनिष्ठत्वमितिशब्दपरत्वाभावेन सामानाधिकरण्यस्य स्वरूपपर्य्यवसायित्वनिश्चयादित्यर्थः। इह त्विति प्रकरणोक्तिः। इह प्रवेशं दर्शयित्वेत्यत्र तेजोबन्नमयं सङ्घातमिहेति व्यपदिशति। जीवब्रह्मणोर्भेदग्राहिप्रमाणविरोधान्न मुख्य-

भा॰ ब्रह्मत्वं गम्यते। रूपादिमत्त्वाच्चादित्यादीनामाकाशमनसो-
श्चेति शब्दव्यवधानादेवाब्रह्मत्वमिह तु सत एव देहप्रवेशं
दर्शयित्वा तत्त्वमसीति निरङ्कुशं सदात्मभावमुपदिशति।
ननु पराक्रमादिगुणैः सिंहोऽसि त्वमितिवत्तत्त्वमसीति
स्यात् न मृदादिवत्सदेकमेवाद्वितीयं । सत्यमित्युपदे-
शात् । न चोपचारविज्ञानात्तस्य तावदेव चिरमिति
सत्सम्पत्तिरुपदिश्यते । मृषात्वादुपचारविज्ञानस्य । त्व-
मिन्द्रो यम इतिवत् ।नापि स्तुतिरनुपास्यत्वात्श्वेतकेतोः।
नापि सत्श्वेतकेतुत्वोपदेशेन स्तूयते। न हि राजा दास-
स्त्वमिति स्तुतः स्यात्। नापि सतः सर्व्वात्मन एकदेशनि-

---

व्या॰ मेकत्वं किन्तु चैतन्यगुणयोगाद्गौणमिति द्वितीयं प्रकृते। नन्विति॥
यथा मृदादि कारणमेव घटादि कार्य्यं न पृथगस्ति तथा सर्व्व-
मिदमाकाशादिकार्य्यं सन्मात्रं तच्च सर्व्वप्रकारभेदरहितमेक-
रसमबाधितमित्युपदेशदर्शनान्न गौणमेकत्वमित्युत्तरमाह ।
नेत्यादिना॥ इतश्च नोपचरितमेकत्वमित्याह । नचेति॥ औप-
चारिकविज्ञानस्य मृषात्वे दृष्टान्तमाह। त्वमिति॥ किञ्च गौण-
त्वमेकत्वं वदता स्तुत्यर्थं विधिपरत्वं वा वाक्यस्य वक्तव्यं। आद्ये-
ऽपि श्वेतकेतोः सतो वा वस्तुनः स्तुतिरिति विकल्प्याद्यं दूषयति।
नापीति॥ उपास्यत्वात्सतः स्तुतिरिति द्वितीयमाशङ्क्य दूषयति।
नापि सदिति ॥ इतश्च श्वेतकेतुत्वोपदेशेन सतो न स्तुतिरि-
त्याह। नापि सत इति॥ श्वेतकेतोरुपास्यत्वेन स्तुत्यसम्भवेऽपि
कर्तृत्वात्कर्म्मसु तत्स्तावकत्वं वाक्यस्य युक्तमित्याशङ्क्य कर्म्मविध्य-
सन्निधानात्सदात्मत्वमात्रप्रतीतेश्च नैवमित्याह। न चेति॥ विक-
ल्पान्तरमुद्भावयति। ननु सदस्मीतीति॥ एकविज्ञानेन सर्व्व-
विज्ञानवचनविरोधान्न दृष्टिविधिपरत्वमित्युत्तरमाह । न-
न्विति ॥ गौणपक्षेऽपि तुल्यानुपपत्तिरित्यपेरर्थः। एकविज्ञा-
नेन सर्व्वविज्ञानश्रुतेर्न विरोधोऽस्तीति पूर्व्ववाद्याह । नेति ॥

भा० रोधो युक्तः । तत्त्वमसीति देशाधिपतिरिव ग्रामाध्यक्षत्व-
मिति। न चान्या गतिरिह सदात्मत्वोपदेशादर्थान्तरभूता
सम्भवति । ननु सदस्मीति बुद्धिमात्रमिह कर्त्तव्यतया
चोद्यते नत्वज्ञातं सदस्मीति ज्ञाप्यत इति चेत्॥ नन्वस्मिन्
पक्षेऽप्यश्रुतं श्रुतं भवतीत्याद्यनुपपन्नं। न। सदस्मीति बुद्धि-
विधेः स्तुत्यर्थत्वात्। नाचार्य्यवान् पुरुषो वेद। तस्य ताव-
देव चिरमित्युपदेशात्। यदि हि सदस्मीति बुद्धिमात्रं
कर्त्तव्यतया विधीयते नतु त्वंशब्दवाच्यस्य सद्रूपत्वमेव
तदा नाचार्य्यवान्वेदेति ज्ञानोपायोपदेशो वाच्यः स्यात्।
यथाग्निहोत्रं जुहुयादित्येवमादिष्वर्थप्राप्तमेवाचार्य्यवत्त्व-

---

व्या० नेदमेकविज्ञानेन सर्व्वविज्ञानं दृष्टिविधिस्तुतिः कार्य्यकारणा-
नन्यत्वादियुक्तिभिरुपपादितत्वाद्विपक्षे चासम्भावनादिनिरास-
समर्थाचार्य्यवत्त्वोपदेशानर्थक्यादौपदेशिकज्ञानमात्रेण विध्यनु-
ष्ठानसिद्धेर्विध्यपेक्षितं तस्य च तेनैवाक्षेपादित्युत्तरमाह ।
नाचार्य्यवानिति ॥ तदेव विवृणोति। यदि हीति॥ आचार्य्य-
वत्त्वमिति नोपदिश्यत इति शेषः॥ इतश्च नेदं वाक्यं दृष्टिविधि
परमेकत्वमित्याह । तस्येति ॥ सदात्मत्वसाक्षात्कारात्तत्त्वेऽपि
सकृदनुष्ठितपरोक्षबुद्धिमात्रान्मोक्षसम्भवाद्विलम्बाभिधानमनर्थक
मापद्येत। यथा सकृदनुष्ठितादपि यागाद्भवति स्वर्गस्तद्वदिह
च चिरमिति क्षेपकरणं मोक्षस्येति। तस्मान्नेदं दृष्टिविधि-
परमित्यर्थः॥ किञ्च विधिवादिना प्रतीयमानेऽर्थे वाक्यस्या-
प्रामाण्यं विपर्य्यासलक्षणं वा वाच्यं तदुभयं दुर्वाच्यमित्याह ।
नचेति॥ तत्त्वमसीत्यधिकारिणं प्रत्युक्ते सति प्रमाणभूतेन तेन
वाक्येन जनिता सद्ब्रह्माहमिति या तस्य बुद्धिस्तां निवर्त्तयितुं
नाहं सदिति बलवती बुद्धिरुत्पन्नेति न शक्यते वक्तुं। विवेकवतः
श्रुतवाक्यस्य तथाविधबुद्ध्यनुत्पादान्न वाधिकारिणः श्रुतवाक्यस्य
सद्ब्रह्माहमिति बुद्धिर्नोत्पन्नेति वक्तुं शक्यं। अधिकारिणः प्रमिति-

भा० मिति तद्वत्। तस्य तावदेव चिरमिति चाक्षेपकरणं न युक्तं स्यात्। सदात्मतत्त्वे विज्ञातेऽपि सत्कर्तुबुद्धिमात्रकरणे मोक्षप्रसङ्गात्। नच तत्त्वमसीत्युक्तेनाहं सदितिप्रमाण-वाक्यजनिता बुद्धिर्निवर्त्तयितुं शक्या नोत्पन्नेति वाक्यं वक्तुं। सर्व्वोपनिषद्वाक्यानां तत्परतयैवोपक्षयात्। यथाग्निहोत्रादिविधिजनिताग्निहोत्रादिकर्त्तव्यताबुद्धीना-मतथार्थत्वमनुत्पन्नत्वं वा न शक्यते वक्तुं तद्वत्। यदुक्तं सदात्मा सन्नात्मानं कथं न जानीयादिति। नायं दोषः। कार्य्यकारणसङ्घातव्यतिरिक्तोऽहं जीवः कर्त्ता भोक्ते-त्यपि स्वभावतः प्राणिनां विज्ञानादर्शनात् किमु तस्य

व्या० जनको वेद इति न्यायात्। न च वेदप्रत्ययो यथोक्ताया बुद्धेर्बाधक-स्तस्य स्वाप्नभेदप्रत्ययवन्मिथ्यात्वानुमानादित्यर्थः॥ इतश्च तत्त्वमसि-वाक्यं वस्तुपरमेवेत्याह। सर्व्वोपनिषदिति॥ तत्त्वमसिवाक्यान्न यथार्था बुद्धिर्नापि न भवत्येव बुद्धिरित्येतमर्थं दृष्टान्तेनाह। यथेति॥ जीवे भासमानेऽप्यनवभासमानत्वान्न स्वभावो ब्रह्मे-त्युक्तमनूद्य दूषयति। यदुक्तमिति॥ लोकायतातिरिक्तानां देहादतिरेको जीवस्य स्वाभाविकोऽपि नावभासते तथा ब्रह्म-भावोऽपि। तस्यानाद्यनिर्वाच्याज्ञानसामर्थ्यादेव नावभासिष्यते। तथाच तस्मिन् भासमानेऽप्यनवभासमानत्वान्न स्वभावो ब्रह्मेत्य-युक्तं व्याप्त्यभावादित्याह। कार्य्येति॥ देहव्यतिरिक्तात्मवादि-नामात्मनि भाति देहव्यतिरिक्तोऽपि भात्येवेति व्याप्तिसिद्धि-रित्याशङ्क्याह। कथमिति॥ देहादिसङ्घातादतिरिक्तोऽहमित्येवं व्यतिरिक्तविज्ञाने सति कथं तेषां कर्तृत्वादिविज्ञानं सम्भवति। न हि सङ्घाताभिमानविगमे तद्युज्यते। नच तन्नास्त्येव दृश्य-मानत्वादित्यर्थः॥ सिद्धे दृष्टान्ते दार्ष्टान्तिकमाह। तद्वदिति॥ देहाद्यतिरिक्तस्य सतोऽप्यप्रतिभानवत्सदात्मकस्यापि श्वेतकेतो-र्देहादिष्वात्माभिमानित्वात्सदात्मनि ब्रह्मणि विज्ञानं न स्यादत·

उ० ॥ॐ॥अधीहि भगव इति होपससाद सनत्कुमारं नारदस्तꣳ होवाच यद्वेत्थ तेन मोपसीद

---

भा० सदात्मविज्ञानं ॥ कथमेवं व्यतिरिक्तविज्ञाने सति तेषां कर्तृत्वादिविज्ञानं सम्भवति । दृश्यते च । तद्वत्तस्यापि देहादिष्वात्मबुद्धित्वान्न स्यात्सदात्मविज्ञानं । तस्मादिकारानृताधिकृतजीवात्मत्वविज्ञाननिवर्त्तकमेवेदं वाक्यं तत्त्वमसीति सिद्धमिति ॥ इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्य्यस्य श्रीशङ्करभगवतः कृतौ छान्दोग्योपनिषद्विवरणे षष्ठः प्रपाठकः सम्पूर्णः ॥ ६ ॥

ॐ तत्सत् ॥ परमार्थतत्त्वोपदेशप्रधानपरः षष्ठोऽध्यायः सदात्मैकत्वनिर्णयपरतयैवोपयुक्तः । न सतोऽर्वा-

---

व्या० स्तत्स्वभावस्यापि ब्रह्मभावस्याप्रतिभानमज्ञानकृतमित्यर्थः ॥ वाक्यस्यार्थान्तरपरत्वासम्भवे फलितमुपसंहरति । तस्मादिति ॥ महावाक्यस्योक्तया विधयार्थान्तरपरत्वासम्भवाद्विकारेऽनृताभिसन्धिकृतोऽयं जीवात्मेत्येवं रूपं यन्मिथ्याज्ञानं तस्य सनिदानस्य निवर्त्तकमेवेदं तत्त्वमसिवाक्यं न त्वभूतप्रादुर्भावफलमित्येवं जीवब्रह्मणोरैक्यं सर्व्वोपनिषत्सारभूतं स्थितमित्यर्थः ॥ इति श्रीपरमहंसपरिव्राजकश्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानकृतायां श्रीशङ्करभगवत्कृतच्छान्दोग्यभाष्यटीकायां षष्ठोऽध्यायः समाप्तः ॥ ६ ॥ ॐ तत् सत् ॥

ॐ । षष्ठसप्तमयोरध्याययोः सम्बन्धं वक्तुकामः षष्ठे वृत्तं कीर्त्तयति । परमार्थेति ॥ उत्तमाधिकारिणं प्रत्यबाधिततत्त्वबोधनं प्रधानं तत्परोऽतीतोऽध्यायः स सतो ब्रह्मणः प्रत्यगूनिश्चयपरत्वेनैव व्याख्यात इत्यर्थः ॥ अध्यायान्तरभूमिकामारचयति । न सत इति ॥ मध्यममधिकारिणं प्रति परम्परया

उ॰ ततस्त उर्द्ध्वं वक्ष्यामीति ॥ १ ॥ स होवाचर्ग्वेदं भगवोऽध्येमि यजुर्वेदꣳ सामवेदमाथर्व्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यꣳ राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्म-

---

भा॰ ग्विकारलक्षणानि तत्त्वानि निर्दिष्टानीत्यतस्तानि नामादीनि प्राणान्तानि क्रमेण निर्दिश्य तद्द्वारेणापि भूमाख्यं निरतिशयं तत्त्वं निर्देक्ष्यामीति शाखाचन्द्रदर्शनवदितीमं सप्तमं प्रपाठकमारभते । अनिर्दिष्टेषु हि सतोऽर्वाक्तत्त्वेषु सन्मात्रे च निर्दिष्टेऽन्यदप्यविज्ञातं स्यादित्याशङ्का कस्यचित्स्यात्सा मा भूदिति वा तानि निर्दिदिक्षति । अथवा सोपानारोहणवत्स्थूलादारभ्य सूक्ष्मं सूक्ष्मतरञ्च बुद्धिविषयं ज्ञापयित्वा तदतिरिक्ते स्वाराज्येऽभिषेक्ष्यामीति नामादीनि निर्दिदिक्षति । अथवा नामाद्युत्तरोत्तरविशिष्टानि तत्त्वान्यतितराञ्च तेषामुत्कृष्टतमं भूमाख्यं

---

आ॰ ब्रह्मात्मत्वमुपदेष्टुं सप्तमप्रपाठकप्रवृत्तिरित्यर्थः । नन्वत्रापि ब्रह्मात्मत्वमेवोपदेष्टुमिष्टञ्चेत्किमिति तर्हि नामादीनि तत्त्वानि निर्दिश्यन्ते तत्राह । अनिर्दिष्टेष्विति ॥ वाशब्दः शङ्कानिरासार्थेत्यर्थः । यद्वा द्वयोरध्याययोरद्वितीयब्रह्मात्मविषयत्वाविशेषेऽपि साक्षात्पारम्पर्य्याभ्यामपौनरुक्त्यमुक्तं सम्प्रति नामादीनामुत्तरोत्तरभूयस्त्वविशिष्टानां सन्मात्रविज्ञानेनाज्ञानादेकविज्ञानेन सर्व्वविज्ञानमयुक्तमित्याशङ्क्य ब्रह्मविदः सर्व्वज्ञत्वं स्पष्टीकर्त्तुमुत्तरग्रन्थान्तरप्रारम्भ इत्याह । निर्दिष्टेष्विति ॥ नामादिसङ्कीर्त्तनस्य तात्पर्य्यान्तरमाह । अथवेति ॥ अधमोऽधिकारी नामादीनि ब्रह्मत्वेनोपास्य तत्फलञ्च भुक्त्वा क्रमेण साक्षाद्ब्रह्मभावं

उ० विद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्याꣳ सर्पदेव-
जनविद्यामेतद्भगवोऽध्येमि ॥ २ ॥ सोऽहं भगवो
मन्त्रविदेवास्मि नात्मवित् श्रुतꣳ ह्येव मे भग-
वद्दृशेभ्यस्तरति शोकमात्मविदिति सोऽहं भग-

---

भा० तत्त्वमिति तत्स्तुत्यर्थं नामादीनां क्रमेणोपन्यासः। आ-
ख्यायिका तु परविद्यास्तुत्यर्था। कथं नारदो देवर्षिः
कृतकर्त्तव्यः सर्व्वविद्योऽपि सन्ननात्मज्ञत्वाच्छुशोचैव किमु
वक्तव्यमन्योऽल्पविज्जन्तुरकृतपुण्यातिशयोऽकृतार्थ इति।
अथवा नान्यदात्मज्ञानान्निरतिशयश्रेयःसाधनमस्तीत्ये-
तत्प्रदर्शनार्थं सनत्कुमारनारदाख्यायिकाऽऽरभ्यते।
येन सर्व्वज्ञानसाधनशक्तिसम्पन्नस्यापि नारदस्य देवर्षेः
श्रेयो न बभूव येनोत्तमाभिजनविद्यावृत्तसाधनशक्ति-
सम्पत्तिनिमित्ताभिमानं हित्वा प्राकृतपुरुषवत्सनत्कुमार-
मुपससाद श्रेयःसाधनप्राप्तयेऽतः प्रख्यापितं भवति
निरतिशयप्राप्तिसाधनत्वमात्मविद्याया इति। अधीहि
अधीष्व भगवो भगवन्निति ह किलोपससाद। अधी-

---

आ० प्राप्नोतीति प्रदर्शयितुमुत्तरो ग्रन्थ इत्यर्थः॥ शाखाचन्द्रनिदर्श-
नन्यायेन मध्यमस्याधिकारिणो ब्रह्मसिद्धिस्वीकारार्थं मध्यमस्या-
धिकारिणो ध्यानार्थं वा नामादिसङ्कीर्त्तनमित्युक्तमिदानीमुत्त-
ममेवाधिकारिणमधिकृत्य भूमस्तुत्यर्थं नामादिवचनमिति मता-
न्तरमाह। अथवा नामादीति॥ अध्यायसम्बन्धमुक्त्वाऽऽख्या-
यिकासम्बन्धमाह। आख्यायिका त्विति॥ स्तुत्यर्थत्वमेव प्रश्न-
पूर्व्वकं प्रकटयति। कथमित्यादिना॥ तथा च परविद्यया

उ॰ वः शोचामि तं मा भगवाञ्छोकस्य पारं तारय-
त्विति तꣳ होवाच यद्वै किञ्चैतदध्यगीष्ठा नामै-
वैतत् ॥ ३ ॥ नाम वा ऋग्वेदो यजुर्वेदः साम-

भा॰ ह्वि भगव इति मन्त्रः । सनत्कुमारं योगीश्वरं ब्रह्मनिष्ठं नारद उपसन्नवान् । तं न्यायेनोपसन्नं होवाच यदात्मविषये किञ्चिद्वेत्थ तेन तत्प्रख्यापनेन मामुपसीदेदमहं जाने इति ततोऽहं भवतो विज्ञानात्ते तुभ्यमूर्द्धं वक्ष्यामीत्युक्तवति स होवाच नारद ऋग्वेदं भगवोऽध्येमि स्मरामि । यद्वेत्थेति विज्ञानस्पृष्टत्वात्तथा यजुर्वेदं सामवेदमाथर्व्वणं चतुर्थं वेदं वेदशब्दस्य प्रकृतत्वादितिहासपुराणं पञ्चमं वेदं वेदानां भारतपञ्चमानां वेदं व्याकरणमित्यर्थः । व्याकरणेन ह्वि पदादिविभागश ऋग्वेदादयो ज्ञायन्ते । पित्र्यं श्राद्धकल्पं । राशिगणितं दैवमुत्पातज्ञानं । निधिं महाकालादिनिधिशास्त्रं । वाकोवाक्यं तर्कशास्त्रं । एकायनं नीतिशास्त्रं । देवविद्यां निरुक्तं । ब्रह्मण ऋग्यजुःसामा-

व्या॰ कृतार्थत्वात्तस्याः स्तुतिरुच विवक्षितेति शेषः । अतीताध्यायादिषु सदात्मत्वविज्ञानादन्यदेव देवतोपासनं मोक्षसाधनमित्याशङ्क्य तन्निषेधे सदात्मविज्ञानस्यैव मोक्षसाधनं द्रढीकर्त्तुमाख्यायिका प्रवृत्तेति पक्षान्तरमाह । अथवेति ॥ द्वितीयमाख्यायिकातात्पर्य्यं प्रपञ्चयति । येनेत्यादिना ॥ सर्व्वस्यापि श्रेयस्य सद्विज्ञानं तस्य साधनमुत्पादनं तत्र शक्तया सम्पन्नो वेदवेदाङ्गाभिज्ञत्वं तस्यापीति यावत् । अस्ति ह्वि नारदस्योत्तमाभिजने जन्म । ब्रह्मणो मानसपुत्रत्वादस्ति कोत्तमकर्म्मविद्या अस्ति च

उ० वेद आथर्व्वणश्चतुर्थ इतिहासपुराणः पञ्चमो वेदानां वेदः पित्र्यो राशिर्दैवो निधिर्वाकोवा-

---

भा० ख्यस्य विद्या ब्रह्मविद्या शिक्षाकल्पछन्दश्चितयस्ताः । भूतविद्यां भूततन्त्रं। क्षत्रविद्यां धनुर्वेदं। नक्षत्रविद्यां ज्योतिषं। सर्पदेवजनविद्यां सर्पविद्यां गारुडं। देवजनविद्यां गन्धयुक्तिनृत्यगीतवाद्यशिल्पादिविज्ञानानि । एतत्सर्व्वं हे भगवोऽध्येमि । सोऽहं भगव एतत्सर्व्वं जानन्नपि मन्त्रविदेवास्मि शब्दार्थमात्रविज्ञानवानेवास्मीत्यर्थः। सर्व्वो हि शब्दोऽभिधानमात्रमभिधानं च सर्व्वं मन्त्रेष्वन्तर्भवति । मन्त्रविदेवास्मि। मन्त्रवित्कर्म्मविदित्यर्थः। मन्त्रेषु कर्म्माणीति हि वक्ष्यति नात्मविन्नात्मानं वेद्मि॥ नन्वात्मापि मन्त्रैः प्रकाश्यत एवेति कथं मन्त्रविच्च नात्मवित्। न। अभिधानाभिधेयभेदस्य विकारत्वात्। नच विकार आत्मेष्यते। नन्वात्मात्मशब्देनाभिधीयते। न। यतो वाचो निवर्त्तन्ते। यत्र

---

व्या० वृत्तं सदाचरणमस्ति च श्रवणध्यानादिसाधनादिसाधनशक्तीनां धर्म्माधर्म्मसाधनस्य वा शरीरस्य शक्तेः सम्पत्तिश्च जन्मादयो निमित्तमस्याभिमानस्य तं त्यक्तेति यावत्। इतिशब्दोऽध्यायाख्यायिकयोः सम्बन्धोक्तिसमाप्त्यर्थः। अध्ययनेन ज्ञानं लक्ष्यते॥ तथा चाधीष्व ज्ञापयेत्यर्थः। मन्त्र उपसदनस्येति शेषः। न्यायतः समित्पाणिरित्यादिशास्त्रोक्तविधिवशादिति यावत्॥ अध्ययनवाचि पदं स्मरणपरतया कथं व्याख्यातमित्याशङ्क्याह। यदेत्येति॥ गन्धयुक्तिः कुङ्कुमादिसम्पादनं॥ तर्हि सर्व्वज्ञः स्वतन्त्रत्वं कृतकृत्योऽसीत्याशङ्क्याह। सोऽहमिति॥ कथं मन्त्रविदित्यस्य कर्म्मविदिति व्याख्यानमित्याशङ्क्याह। मन्त्रेष्विति॥ ब्रह्म-

उ॰ ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यं राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्र-विद्यां नक्षत्रविद्यां सर्पदेवजनविद्यां नामैवैतन्ना-

भा॰ नान्यत्पश्यतीत्यादिश्रुतेः। कथं तर्ह्यात्मैवाधस्तात् आत्मे-त्यादिशब्दा आत्मानं प्रत्याययन्ति। नैष दोषः। देहवति प्रत्यगात्मनि भेदविषये प्रयुज्यमानः शब्दो देहादीनामा-त्मात्मत्वे प्रत्याख्यायमाने यत्परिशिष्टं सदवाच्यमपि प्रत्या-ययति। यथा सराजिकायां दृश्यमानायां छत्रध्वजपता-कादिव्यवहितेऽदृश्यमानेऽपि राजन्येष राजा दृश्यत इति भवति शब्दप्रयोगस्तत्र कोऽसौ राजेति राजविशेष-निरूपणायां दृश्यमानेतरप्रत्याख्यानेऽन्यस्मिन्नदृश्यमाने-ऽपि राजनि राजप्रतीतिर्भवेत्तद्वत्। तस्मात्सोऽहं मन्त्रवि-त्कर्मविदेवास्मि कर्म कार्य्यञ्च सर्वं विकार इति विका-रज्ञ एवास्मिनात्मविन्नात्मप्रकृतिस्वरूपज्ञ इत्यर्थः। अत एवोक्तमाचार्य्यवान् पुरुषो वेदेति। यतो वाचो निवर्त्तन्त

व्या॰ विदेव नात्मविदित्यत्र विरोधं चोदयति। नन्विति॥ मन्त्रवित्त्वेत-त्प्रकाश्यात्मवित्त्वमपि स्यात्तदभावे मन्त्रवित्त्वमपि न युक्तमित्यर्थः। अभिधानमभिधेयमित्येवं रूपस्य भेदस्य विकारत्वेन मिथ्यात्वादा त्मनश्च विकारत्वानङ्गीकारान्मन्त्रप्रकाश्यत्वाभावान्न विरोध इति परिहरति। नाभिधानेति॥ आत्मनो विकारत्वाभावेऽप्यभिधेय-त्वमेष्टव्यमिति शङ्कते। नन्विति॥ श्रुत्यन्तरावष्टम्भेन निराचष्टे। नेत्यादिना॥ आत्मशब्देनात्मनोऽभिधेयत्वाभावे वाक्यशेषादिवि-रोधः स्यादित्याशङ्कते। कथं तर्हीति॥ आत्मशब्देनावाच्यस्यात्मन-स्तेन लक्षणया प्रतिपत्तिसम्भवान्नोपक्रमोपसंहारविरोधोऽस्तीत्यु-त्तरमाह। नैष दोष इति॥ विशिष्टे गृहीतशब्दो विशेषणे

उ० मोपास्स्वेति ॥ ४॥ स यो नाम ब्रह्मेत्युपास्ते याव-
न्नाम्नो गतं तत्रास्य यथा कामचारो भवति यो

भा० इत्यादिश्रुतिभ्यश्च। श्रुतमागमज्ञानमस्त्येव हि यस्मान्मे मम भगवद्दृशेभ्यो युष्मत्सदृशेभ्यस्तरत्यतिक्रामति शोकं मनस्तापमकृतार्थबुद्धितामात्मविदित्यतः सोऽहमनात्मवित्त्वात् हे भगवः शोचाम्यकृतार्थबुद्ध्या सन्तप्ये सर्व्वदा तं मा मां शोकस्य शोकसागरस्य पारं तं भगवांस्तारयत्वात्मज्ञानोडुपेन कृतार्थबुद्धिमापादयत्वभयं गमयत्वित्यर्थः। तमेवमुक्तवन्तं होवाच यद्वै किञ्चैतदध्यगीष्ठा अधीतवानस्यध्ययनेन तदर्थज्ञानमुपलक्ष्यते ज्ञातवानसीत्येतन्नामैवैतत्। वाचारम्भणं विकारो नामधेयमिति श्रुतेः। नाम वै ऋग्वेदो यजुर्वेद इत्यादि। नामैवैतत्। नामोपास्व ब्रह्मेति ब्रह्मबुद्ध्या।

व्या० प्रत्युक्ते यत्सन्मात्रं परिशिष्टं तदवाच्यमपि लक्षणया बोधयतीत्यर्थः। केवलात्मविषयस्यात्मशब्दस्य तद्दर्शनमन्तरेण विशिष्टात्मदृष्टिमात्रेण कथं प्रयोगः कथं वा तत्प्रयोगेऽपि विवक्षितात्मधीरित्याशङ्क्य दृष्टान्तेन परिहरति। यथेत्यादिना॥ आत्मनो मुख्यवृत्त्या मन्त्रप्रकाश्यत्वाभावे फलितमाह। तस्मादिति॥ शब्दार्थज्ञानमात्रेणात्मवित्त्वं न भवतीत्यनेनाचार्य्योपदेशजनितज्ञानवत एवात्मवित्त्वमित्युक्तं तत्र प्रमाणमाह। अत एवेति॥ औपदेशिकज्ञानविषयत्वं तर्हि स्वीकृतमित्याशङ्क्याह। यत इति॥ मा तर्हि तवात्मविद्या भूदित्याशङ्क्य शोकनिवृत्त्युपायत्वेन तदपेक्षां सूचयति। श्रुतमिति॥ आत्मज्ञानोडुपेनात्मज्ञानाख्येन प्लवेनेति यावत्॥ कथं मदीयमर्थज्ञानं सर्व्वं नाममात्रमित्याशङ्क्याह। वाचारम्भणमिति॥ उक्तमुपपादयति। नाम वेति॥ तदुपसंहरति। नामैवेति॥ केन रूपेणेदं नामादत्तव्यमित्या-

उ० नामब्रह्मेत्युपास्तेऽस्ति भगवो नाम्नो भूय इति नाम्नो वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ ५॥ १ ॥

वाग्वाव नाम्नो भूयसी वाग्वा ऋग्वेदं विज्ञापयति यजुर्वेदꣳ सामवेदमाथर्वणं चतुर्थमिति-

---

भा० यथा प्रतिमां विष्णुबुद्ध्योपास्ते तद्वत्। स यस्तु नामब्रह्मेत्युपास्ते तस्य यत्फलं भवति तच्छृणु यावन्नाम्नो गतं यावन्नाम्नो गोचरं। तत्र तस्मिन्नामविषयेऽस्य यथा कामचारः कामचरणं राज्ञ इव स्वविषये भवति। यो नामब्रह्मेत्युपास्ते इत्युपसंहारः। किमस्ति भगवो नाम्नो वाव भूयोऽधिकतरं यद्ब्रह्म दृष्ट्यर्हमन्यदित्यभिप्रायः। सनत्कुमार आह नाम्नो वाव भूयोऽस्तीवेत्युक्त आह यद्यस्ति तन्मे भगवान् ब्रवीत्विति॥ १ ॥

वाग्वाव। वागितीन्द्रियजिह्वामूलादिष्वष्टसु स्थानेषु स्थितं वर्णानामभिव्यञ्जकं। वर्णश्च नामेति नाम्नो वाग्भूयसेत्युच्यते।

---

व्या० शङ्काह। नामेति॥ उपास्तिप्रकारं दृष्टान्तेन स्फुटयति। यथेति॥ नाम्नि ब्रह्मदृष्ट्योपास्यमाने किं स्यादित्याह। स यस्त्विति॥ यो नामेत्यादिवाक्यस्य पौनरुक्त्यमित्याशङ्क्याह। यो नामेति ॥ १॥

वाग्वाव नाम्नो भूयसीत्युक्तं वाङ्नाम्नोरेकत्वाद्व्याप्यव्यापकत्वानुपपत्तिरित्याशङ्क्य व्याचष्टे। वागितीन्द्रियमिति॥ जिह्वामूलादिष्वित्यादिशब्देनोरःकण्ठशिरोदन्तौष्ठनासिकातालूनि गृह्यन्ते। वागिन्द्रियस्य वर्णेभ्योऽभिव्यङ्ग्येभ्यो भूयस्त्वेऽपि नाम्नस्तु भूयस्त्वं कुतस्त्यमित्याशङ्क्याह। वर्णश्चेति॥ तयोर्व्यङ्ग्यव्यञ्जकभावे

उ० हासपुराणं पञ्चमं वेदानां वेदं पित्र्यꣳ राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्याꣳ सर्पदेवजनविद्यां दिवञ्च पृथिवीञ्च वायुञ्चाकाशञ्चापश्च तेजश्च देवाꣳश्च मनुष्याꣳश्च पशूꣳश्च वयाꣳसि च तृणवनस्पतीञ्छ्वापदान्याकीटपतङ्गपिपीलकं धर्म्मञ्चाधर्म्मञ्च सत्यञ्चानृतञ्च साधु चासाधु च हृदयज्ञञ्चाहृदयज्ञञ्च यद्वै वाङ्नाभविष्यन्न धर्म्मो नाधर्म्मो व्यज्ञापयिष्यन्न सत्यं नानृतं न साधु नासाधु न हृदयज्ञो नाहृदयज्ञो वागेवैतत्सर्वं विज्ञापयति वाचमुपास्वेति ॥ १ ॥ स यो वाचं ब्रह्मेत्युपास्ते यावद्वाचो गतं तत्रास्य यथा कामचारो भवति यो वाचं ब्रह्मेत्युपास्तेऽस्ति भगवो वाचो भूय

भा० कार्य्याद्धि कारणं भूयो दृष्टं लोके। यथा पुत्रात्पिता तद्वत्। कथं च वाङ्नाम्नो भूयसीत्याह। वाग्वा ऋग्वेदं विज्ञापयत्ययमृग्वेद इति। तथा यजुर्वेदमित्यादि समानं। हृदयज्ञं हृदयप्रियं। तद्विपरीतमहृदयज्ञं। यद्यदि वाङ्नाभविष्यद्वागभावेऽध्यापनाभावस्तदर्थं श्रवणाभावस्तच्छ्रवणाभावे धर्म्मादि न व्यज्ञापयिष्यन्नविज्ञातमभविष्यदित्यर्थः। तस्मा-

आ० ऽपि कथं व्याप्यव्यापकत्वमित्याशङ्क्याह। कार्य्याद्धीति॥ वाचो नाम्नो भूयस्त्वं प्रश्नपूर्व्वकं प्रपञ्चयति। कथञ्चेत्यादिना॥ इतश्च वाचो भूयस्त्वमैश्वर्य्यमित्याह। यद्यदीति॥ अन्वयव्यतिरेकाभ्यां

उ० इति वाचो वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ २ ॥ २ ॥

मनो वाव वाचो भूयो यथा वै द्वे वामलके द्वे वा कोले द्वौ वाक्षौ मुष्टिरनुभवत्येवं वाचञ्च नाम च मनोऽनुभवति स यदा मनसा मनस्यति मन्त्रानधीयीयेत्यथाधीते कर्म्माणि कुर्व्वीयेत्यथ कुरुते

भा० वागेवैतच्छब्दोच्चारेण सर्व्वं विज्ञापयत्यतो भूयसी वाङ्नाम्नस्तस्माद्वाचं ब्रह्मेत्युपास्व । समानमन्यत् ॥ २ ॥

मनो मनस्यनविशिष्टमन्तःकरणं वाचो भूयः । तद्धि मनस्यनव्यापारवद्वाचं वक्तव्ये प्रेरयति । तेन वाङ्मनस्यन्तर्भवति । यच्च यस्मिन्नन्तर्भवति तत्तस्य व्यापकत्वात्ततो भूयो भवति । यथा वै लोके द्वे वामलके फले द्वे वा कोले बदरफले द्वौ वाक्षौ विभीतकफले मुष्टिरनुभवति मुष्टिस्ते फले व्याप्नोति मुष्टौ हि तेऽन्तर्भवतः । एवं वाचञ्च नाम चामलकादिवन्मनोऽनुभवति स यदा पुरुषो यस्मिन् काले मनसान्तःकरणेन मनस्यति मनस्यनं विवक्षाबुद्धिः कथं मन्त्रानधीयीयोच्चारयेयमित्येवं विवक्षां कृत्वाथाधीते तथा

व्या० तस्या भूयस्त्वे सिद्धे फलितमाह । तस्मादिति ॥ स यो वाचमित्याद्यन्यदित्युच्यते ॥ २ ॥

मनःशब्दस्य वृत्तिमात्रविषयत्वं व्यावर्त्तयति । मन इति ॥ कथं तस्य वाचो भूयस्त्वं तदाह । तद्धीति ॥ वाचो मनस्यन्तर्भावेऽपि कुतो मनसस्तस्या भूयस्त्वं तत्राह । यच्चेति ॥ मनसो वागादेर्व्याप्तिं दृष्टान्तेन स्पष्टयति । यथेत्यादिना ॥ [illegible]

उ॰ पुत्राꣳश्च पशूꣳश्चेच्छेयेत्यथेच्छत इमञ्च लोकममुञ्चेच्छेयेत्यथेच्छते मनो ह्यात्मा मनो हि लोको मनो हि ब्रह्म मन उपास्वेति ॥ १ ॥ स यो मनो ब्रह्मेत्युपास्ते यावन्मनसो गतं तत्रास्य यथा कामचारो भवति यो मनो ब्रह्मेत्युपास्तेऽस्ति भगवो मनसो भूय इति मनसो वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ २ ॥ ३ ॥

---

भा॰ कर्म्माणि कुर्व्वीयेति चिकीर्षाबुद्धिं कृत्वाथ कुरुते पुत्रांश्च पशूंश्चेच्छेयेति प्राप्तीच्छां कृत्वा तत्प्राप्त्युपायानुष्ठानेनाथेच्छते पुत्रादीन् प्राप्नोतीत्यर्थः । तथेमञ्च लोकममुञ्चोपायेनेच्छेयमिति तत्प्राप्त्युपायानुष्ठानेनाथेच्छते प्राप्नोति । आत्मनः कर्त्तृत्वं भोक्तृत्वञ्च सति मनसि नान्यथेति । मनो ह्यात्मेत्युच्यते मनो हि लोकः । सत्येव हि मनसि लोको भवति तत्प्राप्त्युपायानुष्ठानञ्चेति । मनो हि लोको यस्मात्तस्मान्मनो हि ब्रह्म । यत एवं तस्मान्मन उपास्वेति । स यो मन इत्यादि समानं ॥ २ ॥

---

व्या॰ ऽस्ति भूयस्त्वमित्याह । यदेति ॥ विवक्षाबुद्धिस्तां करोतीति शेषः । इच्छेयेतीच्छां कृत्वेति शेषः ॥ तस्यात्मत्वमुपपादयति । आत्मन इति ॥ तस्य लोकत्वं साधयति । सत्येवेति ॥ २ ॥

उ० सङ्कल्पो वाव मनसो भूयान्यदा वै सङ्कल्पयते ऽथ मनस्यत्यथ वाचमीरयति तामु नाम्नीरयति नाम्नि मन्त्रा एकं भवन्ति मन्त्रेषु कर्म्माणि ॥ १ ॥ तानि ह वैतानि सङ्कल्पैकायनानि सङ्कल्पात्म-

---

भा० सङ्कल्पो वाव मनसो भूयान्। सङ्कल्पोऽपि मनस्यनवदन्तःकरणवृत्तिः कर्त्तव्याकर्त्तव्यविषयविभागेन समर्थनं। विभागेन हि समर्थिते विषये चिकीर्षाबुद्धिर्मनस्यनानन्तरं भवति। कथं। यदा वै सङ्कल्पयते कर्त्तव्यादिविषयान् विभजते इदं कर्त्तुं युक्तमिति। अथ मनस्यति मन्त्रानधीयीयेत्यादि। अथानन्तरं वाचमीरयति मन्त्राद्युच्चारणे। ताञ्च वाचं उ नाम्नि नामोच्चारणनिमित्तं विवर्चा कृत्वेरयति नाम्नि नामसामान्ये मन्त्राः शब्दविशेषाः सन्त एकं भवन्त्यन्तर्भवन्तीत्यर्थः। सामान्ये हि विशेषोऽन्तर्भवति। मन्त्रेषु कर्म्माण्येकं भवन्ति। मन्त्रप्रकाशितानि कर्म्माणि क्रियन्ते नामन्त्रकमस्ति कर्म्म। यद्धि मन्त्रप्रकाशनेन लब्धसत्ताकं

---

व्या० सङ्कल्पशब्दार्थमाह। सङ्कल्पोऽपीति॥ का सान्तःकरणवृत्तिर्या सङ्कल्पशब्दितेत्याशङ्क्याह। कर्त्तव्येति॥ द्विविधे विषये विभागेन समर्थितेऽपि कथं यथोक्तस्य सङ्कल्पस्य मनसो भूयस्त्वमित्याशङ्क्याह। विभागेन हीति॥ सङ्कल्पस्य कारणत्वान्मनसश्च कार्य्यत्वादतो भूयस्त्वमित्यर्थः॥ कार्य्यकारणभावं तयोराकाङ्क्षापूर्व्वकं व्यक्तीकरोति। कथमित्यादिना॥ मनसः सकाशाद्वाचोऽनन्तरभावित्वे विशेषं दर्शयति। ताञ्चेति॥ नाम्नि मन्त्राणामन्तर्भावं समर्थयति। सामान्ये हीति॥ कथं मन्त्रेष्वनुपलब्ध-

उ० कानि सङ्कल्पे प्रतिष्ठितानि समकॢपतां द्यावापृथिवी समकल्पेतां वायुश्चाकाशञ्च समकल्पतामापश्च तेजश्च तेषाᳫं संकॢप्त्यै वर्षᳫं सङ्कल्पते वर्षस्य संकॢप्त्या अन्नᳫं सङ्कल्पतेऽन्नस्य संकॢप्त्यै प्राणाः

---

भा० सत्कर्म ब्राह्मणेनेदं कर्त्तव्यमस्मै फलायेति विधीयते। याप्युत्पत्तिर्ब्राह्मणेषु कर्म्मणो दृश्यते सापि मन्त्रेषु लब्धसत्ताकानामेव कर्म्मणां स्पष्टीकरणं। न हि मन्त्राप्रकाशितं कर्म्म किञ्चिद्ब्राह्मणे उत्पन्नं दृश्यते। त्रयीविहितं कर्म्मेति प्रसिद्धं लोके। त्रयीशब्दश्चर्ग्यजुःसामसमाख्या। मन्त्रेषु कर्म्माणि कवयो यान्यपश्यन्निति चाथर्वणे। तस्माद्युक्तं मन्त्रेषु कर्म्माण्येकं भवन्तीति। तानि ह वा एतानि मनआदीनि सङ्कल्पैकायनानि सङ्कल्प एकोऽयनं गमनं प्रलयो येषां तानि सङ्कल्पैकायनानि सङ्कल्पात्मकान्युत्पत्तौ सङ्कल्पे प्रतिष्ठितानि स्थितौ समकॢपतां सङ्कल्पं कृतवत्याविव हि

---

व्या० त्युच्यते ब्राह्मणविहितस्यापि कर्म्मणो दर्शनादित्याशङ्क्याह। त्रयीति॥ ब्राह्मणस्य मन्त्रव्याख्यानरूपत्वादतिस्पष्टमन्त्रानुपलम्भेऽपि कल्प्यते मन्त्रोक्तत्वमित्यर्थः॥ एतदेव प्रपञ्चयति। यानीत्यादिना॥ एकस्यां शाखायां यत्कर्म्म मन्त्रेष्वनुपलब्धं तच्छाखान्तरीयं मन्त्रप्रकाशितं भविष्यति इत्यत्र हेत्वन्तरमाह। त्रयीति॥ तथापि कथं मन्त्रप्रकाशितत्वं तत्राह। त्रयीशब्दश्चेति॥ मन्त्रेषु कर्म्माण्यन्तभवन्तीत्यत्र श्रुतेरनुमतिं कथयति। मन्त्रेष्विति॥ तथापि कथं सङ्कल्पस्य भूयस्त्वमित्याशङ्क्याह। तानीति॥ अयनपर्य्यायत्वेनोक्तगमनस्य क्रियात्वं व्यावर्त्तयति। प्रलय इति॥

उ० सङ्कॢपन्ते प्राणानाꣳ संकॢप्त्यै मन्त्राः सङ्कॢपन्ते मन्त्राणाꣳ सङ्कॢप्त्यै कर्माणि सङ्कॢपन्ते कर्मणाꣳ सङ्कॢप्त्यै लोकः सङ्कल्पते लोकस्य सङ्कॢप्त्यै सर्वꣳ सङ्कल्पते स एष सङ्कल्पः सङ्कल्पमुपास्स्वेति ॥ २ ॥

---

भा० द्यौश्च पृथिवी च द्यावापृथिवी द्यावापृथिव्यौ निश्चले लक्ष्येते। तथा समकल्पेतां वायुश्चाकाशश्च एतावपि सङ्कल्पं कृतवन्ताविव । तथा समकल्पन्तामापश्च तेजश्च स्वेन रूपेण निश्चलानि लक्ष्यन्ते। यतस्तेषां द्यावापृथिव्यादीनां सङ्क्लृप्त्यै सङ्कल्पनिमित्तं वर्षं सङ्कल्पते समर्थं भवति। तथा वर्षस्य सङ्क्लृप्त्यै सङ्कल्पनिमित्तमन्नं सङ्कल्पते। वृष्टेर्ह्यन्नं भवत्यन्नस्य सङ्क्लृप्त्यै प्राणाः सङ्कल्पन्ते। अन्नमया हि प्राणा अन्नोपष्टम्भका अन्नं दामेति हि श्रुतिस्तेषां सङ्क्लृप्त्यै मन्त्राः सङ्कल्पन्ते ॥ प्राणवान् हि मन्त्रानधीते नाबलो मन्त्राणां हि सङ्क्लृप्त्यै कर्माण्यग्निहोत्रादीनि सङ्कल्पन्तेऽनुष्ठीयमानानि मन्त्र-

---

व्या० इतश्च सङ्कल्पस्याप्यस्ति महत्त्वमित्याह । समक्लृपतामिति ॥ यतो द्यावापृथिव्यादिषु महत्स्वपि सङ्कल्पानुवृत्तिर्दृश्यतेऽतोऽपि तस्य महत्त्वं गम्यते न केवलं कारणत्वादेवेत्यर्थः ॥ इतश्च तस्य महत्त्वमेवमेष्टव्यमित्याह । तेषामिति ॥ वृष्टेर्द्युलोकादिकार्य्यत्वात्त-दीयसङ्कल्पस्य तन्निमित्तत्वोपचारात्तस्य भूयस्त्वसिद्धिरित्यर्थः । वृष्टिवशादन्नं समर्थं भवतीत्यत्र प्रसिद्धिं प्रमाणयति । वृष्टे-र्हीति ॥ अन्नाधीनं प्राणसामर्थ्यमित्यत्र हेतुमाह । अन्नमया हीति ॥ आपोमयः प्राण इत्युक्तत्वात्कथमन्नमयत्वमित्याशङ्क्याह । अन्नो-पष्टम्भका इति ॥ तत्र वाजसनेयकश्रुतिं प्रमाणयति । अन्नमिति ॥

उ० स यः सङ्कल्पं ब्रह्मेत्युपास्ते सङ्कॢप्तान् वै स लोका-न्ध्रुवान्ध्रुवः प्रतिष्ठितान् प्रतिष्ठितोऽव्यथमानान-व्यथमानोऽभिसिध्यति यावत्सङ्कल्पस्य गतं तत्रास्य यथा कामचारो भवति यः सङ्कल्पं ब्रह्मेत्युपास्ते

भा० प्रकाशितानि समर्थीभवन्ति फलाय । ततो लोकः फलं सङ्कल्पते । कर्मकर्तृसमवायितया समर्थो भवतीत्यर्थः । लोकस्य सङ्कॢप्त्यै सर्व्वं जगत्सङ्कल्पते स्वरूपावैकल्याय । एतद्धीदं सर्व्वं जगद्यत्फलावसानं तत्सर्व्वं सङ्कल्पमूलं। अतो विशिष्टः स एव सङ्कल्पः । अतः सङ्कल्पमुपास्खेत्युक्त्वा फल-माह तदुपासकस्य। स यः सङ्कल्पं ब्रह्मेति ब्रह्मबुद्ध्योपास्ते क्लृप्तान् वै धात्रास्मैगे लोकाः फलमिति क्लृप्तान् समर्थितान् सङ्कल्पितान्स विद्वान्ध्रुवान् नित्यान् । अत्यन्ताध्रुवापेक्षया ध्रुवस्य स्वयं। लोकिनो ह्यध्रुवत्वे लोके ध्रुवक्लृप्तिर्व्यर्थेति ध्रुवः सन् प्रतिष्ठितानुपकरणसम्पन्नानित्यर्थः । पशुपुत्रादिभिः

व्या० प्राणानां मन्त्राध्ययनकारणत्वं व्युत्पादयति । प्राणवानिति ॥ ततो मन्त्रप्रकाशितकर्म्मवशादिति यावत् । कर्म्मफलवशाज्जगतः सर्व्व-स्यावैकल्येऽपि कथं सङ्कल्पस्य महत्त्वमित्याशङ्क्याह । एतद्धीति ॥ तन्महत्त्वे फलितमाह । अत इति ॥ आत्मातिरिक्तानां लोकानां कथं नित्यत्वमत आह । अत्यन्तेति ॥ लोकानामेवं ध्रुवत्वमुच्यतां कि-मिति लोकिनस्तदुच्यते तत्राह । लोकिनो हीति ॥ कथमुपकरणेषु प्रतिष्ठितशब्दो भवतीत्याशङ्क्याह । पशुपुत्रादिभिरिति । याव-त्सङ्कल्पस्येत्यादिश्रुतेः ॥ विषयसङ्कोचं दर्शयति । आत्मन इति ॥ सङ्कल्पस्य यावद्गोचरस्तत्रास्य कामचारो भवतीति सम्बन्धः । निरङ्कुशे सङ्कल्पशब्दे का हानिरित्याशङ्क्याह । उत्तरेति ॥ यदि

उ० ऽस्ति भगवः सङ्कल्पाद्भूय इति सङ्कल्पाद्वाव भूयो-ऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ ३ ॥ ४ ॥

चित्तं वाव सङ्कल्पाद्भूयो यदा वै चेतयतेऽथ सङ्कल्पयतेऽथ मनस्यत्यथ वाचमीरयति तामु

---

भा० प्रतितिष्ठतीति दर्शनात्स्वयं च प्रतिष्ठित आत्मीयोपकरणसम्पन्नोऽव्यथमानानमित्राद्यित्रासरहितानव्यथमानश्च स्वयमभिसिद्ध्यत्यभिप्राप्नोतीत्यर्थः । यावत्सङ्कल्पस्य गतं सङ्कल्पगोचरः तत्रास्य यथा कामचारो भवति । आत्मनः सङ्कल्पस्य न तु सर्व्वेषां सङ्कल्पस्येति । उत्तरफलविरोधात्। यः सङ्कल्पं ब्रह्मेत्युपास्तेति पूर्ववत् ॥ ४ ॥

चित्तं वाव सङ्कल्पाद्भूयोऽस्ति। चित्तं चेतयितृत्वं प्राप्तकालानुरूपबोधवत्त्वं अतीतानागतविषयप्रयोजननिरूपणसामर्थ्यञ्च तत्सङ्कल्पादपि भूयः । कथं । यदा वै प्राप्तं वस्त्विदमेवं प्राप्तमिति चेतयते तदा दानाय वापोहाय वाऽथ सङ्कल्पयतेऽथ मनस्यतीत्यादि पूर्ववत् ॥

---

आ० सङ्कल्पमात्रस्य गोचरे सङ्कल्पोपासकस्य कामचारो भवति तर्हि सर्व्वसङ्कल्पस्य विचित्रतया सर्व्वगोचरत्वसम्भवाद्यावच्चित्तस्य गतिमित्यादिना वक्ष्यमाणफलं विरुद्ध्येत नहि सङ्कल्पोपासनादेव सर्व्वस्मिन् फले सिद्धे चित्ताद्युपासनं तत्फलं वा पृथक्कथयितुमुचितं। यतो यावत्सङ्कल्पस्येत्यादि श्रुतेरुक्तसङ्कोचो युक्त इत्यर्थः ॥४॥

चित्तशब्दस्य मनःशब्देन पुनरुक्तिं परिहरति। चित्तं चेतयितृत्वमिति ॥ तस्यात्मत्वं व्यावर्त्तयति। प्राप्तेति ॥ इदं वस्त्वेवं प्राप्तमिति प्राप्तकालवस्तुनो वस्त्वनुरोधी चेतनाख्यो वृत्तिविशेषस्तद्वत्त्वं चित्तमित्यर्थः। अतीतं भोजनतृप्तिसाधनं दृष्टं भोजनत्वात् ॥

उ॰ नामीरयति नाम्नि मन्त्रा एकं भवन्ति मन्त्रेषु कर्म्माणि ॥ १ ॥ तानि ह वा एतानि चित्तैकायनानि चित्तात्मानि चित्ते प्रतिष्ठितानि तस्माद्यद्यपि बहुविदचित्तो भवति नायमस्तीत्येवैनमाहुर्यदयं वेद यद्वाऽयं विद्वान्नेत्थमचित्तः स्यादित्यथ यद्यल्पविच्चित्तवान् भवति तस्मा एवोत शुश्रूषन्ते चित्तꣳ ह्येवैषामेकायनं चित्तमात्मा चित्तं प्रतिष्ठा चित्तमुपास्स्वेति ॥ २ ॥ स यश्चित्तं ब्रह्मेत्यु-

भा॰ तानि सङ्कल्पादीनि कर्म्मफलान्तानि चित्तैकायनानि चित्तात्मानि चित्तोत्पन्नानि चित्ते प्रतिष्ठितानि चित्तस्थितान्यपि पूर्ववत्। किञ्च चित्तस्य माहात्म्यं। यस्माच्चित्तं सङ्कल्पादिमूलं तस्माद्यद्यपि बहुविद्बहुशास्त्रादिपरिज्ञानवान् सन्नचित्तो भवति प्राप्तादिचेतयितृत्वसामर्थ्यविरहितो भवति तं निपुणा लौकिका नायमस्ति विद्यमानोऽप्यसत्सम एवेत्येनमाहुः। यच्चायं किञ्चिच्छास्त्रादि वेद श्रुतवांस्तदप्यस्य वृथैवेति कथयन्ति। कस्मात्। यद्ययं विद्वान् स्यादित्थमेवमचित्तो न स्यात्तस्मादस्य श्रुतमप्य-

ष्या॰ च्छागामिनोऽपि तस्य तदेव प्रयोजनमिति निरूपणासामर्थ्यं चित्तमिति प्रसिद्धमित्याह। चर्ततीति॥ यथोक्तस्य चित्तस्य सङ्कल्पाङ्गत्वं॥ प्राप्तमपूर्व्वत्वं व्युत्पादयति। कथमित्यादिना॥ सङ्कल्पप्रकरणं परामृशति। पूर्व्ववदिति॥ यथा सङ्कल्पस्य निमित्तत्वे सति स्तुत्यर्थमधिकरणत्वं युक्तं। तथा चित्तस्य विभक्तस्य सङ्कल्पादिषु निमित्तत्वेऽपि स्तुत्यर्थत्वमेव तदधिकरणत्वमाह। तानीति॥ इतश्च

उ० पास्ते चित्तान् वै स लोकान्ध्रुवान्ध्रुवः प्रतिष्ठितान्
प्रतिष्ठितोऽव्यथमानानव्यथमानोऽभिसिध्यति या
वच्चित्तस्य गतं तत्रास्य यथा कामचारो भवति
यश्चित्तं ब्रह्मेत्युपास्तेऽस्ति भगवश्चित्ताद्भूय इति
चित्ताद्वाव भूयोऽस्तीति तन्मे भगवान् ब्रवी-
त्विति ॥ ३ ॥ ५ ॥

ध्यानं वाव चित्ताद्भूयो ध्यायतीव पृथिवी ध्यायतीवान्तरिक्षं ध्यायतीव द्यौर्ध्यायतीवापो

---

भा० श्रुतमेवेत्याहुरित्यर्थः । अथवाऽल्पविदपि यदि चित्तवान् भवति तस्मा एतस्मै तदुक्तार्थग्रहणायैवोतापि शुश्रूषन्ते श्रोतुमिच्छन्ति । तस्माच्च चित्तं ह्येवैषां सङ्कल्पादीनामेकायनमित्यादि पूर्ववत् । चित्तानुपचित्तान् बुद्धिमद्गुणैः स चित्तोपासको ध्रुवानित्यादि चोक्तार्थः ॥ ५ ॥

ध्यानं वाव चित्ताद्भूयः । ध्यानं नाम शास्त्रोक्तदेवताद्यालम्बनेष्वचलो भिन्नजातीयैरनन्तरितः प्रत्ययसन्तानः ।

---

व्या० चित्तस्यास्ति वैशिष्ट्यमित्याह । किञ्चेति । यद्यपि बहुशास्त्रार्थपरिज्ञानवान् तथापि यद्यचित्तो भवतीति योजना ॥ अचित्तस्यासत्समत्वं श्रुतवैयर्थ्यञ्चेत्युक्तं प्रश्नद्वारा विवृणोति । कस्मादित्यादिना । श्रुतमपीत्यपिशब्देन सत्त्वं गृह्यते ॥ चित्ताभावे श्रुतादेर्वैयर्थ्योक्त्या तद्वैशिष्ट्यमादिष्टमिदानीं तद्वैशिष्ट्ये हेत्वन्तरमाह । अथवेति ॥ चित्तवतोक्तार्थग्रहणार्थं श्रोतुमिच्छा लोकस्य भवतीत्यत्र हेतुमाह । तस्मादिति ॥ ५ ॥

किं तद्ध्यानमित्यपेक्षायामाह । ध्यानं नामेति ॥ अचलत्वं साधयति । भिन्नजातीयैरिति ॥ कथं तस्य चित्ताद्भूयस्त्वमित्या-

उ॰ ध्यायन्तीव पर्व्वता ध्यायन्तीव देवमनुष्यास्तस्माद्य
इह मनुष्याणां महतां प्राप्नुवन्ति ध्यानापादांश-
शा इवैव ते भवन्त्यथ येऽल्पाः कलहिनः पिशुना
उपवादिनस्तेऽथ ये प्रभवो ध्यानापादांशशा
इवैव ते भवन्ति ध्यानमुपास्स्वेति ॥ १ ॥ स यो

---

भा॰ एकाग्रतेति यमाङ्गः । दृश्यते च ध्यानस्य माहात्म्यं
फलतः । कथं । यथा योगी ध्यायन्निश्चलो भवति ध्यान-
फललाभे । एवं ध्यायतीव निश्चला दृश्यते पृथिवी
ध्यायतीवान्तरिक्षमित्यादि समानमन्यत् । देवाश्च मनु-
ष्याश्च देवमनुष्या मनुष्या एव वा देवमनुष्याः शमादि-
गुणसम्पन्ना मनुष्या देवस्वरूपं न जहातीत्यर्थः । यस्मा-
देवंविशिष्टं ध्यानं तस्माद्य इह लोके मनुष्याणामेव
धनैर्विद्यया गुणैर्वा महतां महत्त्वं प्राप्नुवन्ति धनादि-
महत्त्वहेतुं लभन्त इत्यर्थः । ध्यानापादांशा इव ध्यानस्या-
पादानमापादो ध्यानफललाभ इत्येतत्तस्यांशोऽवयवः

---

आ॰ शङ्क्यानेकाग्रतादोषोपहतस्यातीतादिफलनिरूपणेन सामर्थ्या-
दर्शनादेकाग्रतारूपो ध्यानपदार्थश्चेतयितृत्वात्तस्य कारणात्ततो
भूयानेवेत्यभिप्रेत्याह । एकाग्रतेति ॥ इतश्चास्ति तस्य भूयस्त्व-
मित्याह । दृश्यते चेति ॥ फलद्वारा तन्माहात्म्यं प्रश्नपूर्व्वकं दृष्टा-
न्तेन स्पष्टयति । कथमित्यादिना ॥ गौरवपरिहारार्थं पक्षान्तर-
माह । मनुष्या एवेति ॥ मनुष्याणामेव सतां कुतो देवत्वमित्या-
शङ्क्याह । शमादीति ॥ ध्यानफलं नैश्चल्यं तन्महत्सु पृथिव्यादिषु
दृष्टं तथा च तद्वैशिष्ट्यमित्यर्थः ॥ तत्रैव हेत्वन्तरमाह । यस्मा-

उ॰ ध्यानं ब्रह्मेत्युपास्ते यावद्ध्यानस्य गतं तत्रास्य यथा कामचारो भवति यो ध्यानं ब्रह्मेत्युपास्तेऽस्ति भगवो ध्यानाद्भूय इति ध्यानाद्वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ २ ॥ ६ ॥

---

भा॰ कला काचिद्ध्यानफललाभकलावन्त इवेत्यर्थः। ते भवन्ति निश्चला इव लक्ष्यन्ते न क्षुद्रा इव। अथ ये पुनरल्पाः क्षुद्राः किञ्चिदपि धनादिमहत्त्वैकदेशमप्राप्तास्ते पूर्वोक्तविपरीताः कलहिनः कलहशीलाः पिशुनाः परदोषोद्भासका उपवादिनः परदोषं सामीप्ये युक्तमेव वदितुं शीलं येषां ते उपवादिनश्च भवन्ति। अथ ये महत्त्वं प्राप्ता धनादिनिमित्तं तेऽन्यान् प्रति भवन्तीति प्रभवो विद्याचार्य्यराज्येश्वरादयो ध्यानापादांशा इवेत्याद्युक्तार्थं। अतो दृश्यते ध्यानस्य महत्त्वं फलतो भूयस्त्वित्तादतस्तदुपास्वेत्याद्युक्तार्थं॥ ६ ॥

---

व्या॰ दिति॥ धनादिभिर्महत्त्वे हेतुमुत्कृष्टं कर्म्मेति यावद्ध्यानस्यापादनमनुष्ठानं तेन तत्फललाभो लक्ष्यते तस्यांशो येषामस्ति ते तथा ध्यानफललाभकलावत्त्वमेव स्फुटयन्ति। निश्चला इति॥ एवकारार्थमाह। नेति॥ महत्सु पुरुषेषु ध्यानफलानुवृत्तिदृष्टेत्यन्वयमुक्त्वा व्यतिरेकमाह। यथेति॥ व्यतिरेकं दर्शयित्वाऽन्वयमुपसंहरति। अथ ये महत्त्वमिति॥ महत्सु नैश्चल्यदर्शनमतःशब्दार्थः॥ महत्त्वफलमाह। अत इति॥ ६ ॥

उ० विज्ञानं वाव ध्यानाद्भूयो विज्ञानेन वा ऋग्वेदं विजानाति यजुर्वेदꣳ सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यꣳ राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्याꣳ सर्पदेवजनविद्यां दिवञ्च पृथिवीञ्च वायुञ्चाकाशञ्चापश्च तेजश्च देवाꣳश्च मनुष्याꣳश्च वयाꣳसि च तृणवनस्पतीञ्छ्वापदान्याकीटपतङ्गपिपीलकं धर्म्मञ्चाधर्म्मञ्च सत्यञ्चानृतञ्च साधु चासाधु च हृदयज्ञञ्चाहृदयज्ञञ्चान्नञ्च रसञ्चेमञ्च लोकममुञ्च विज्ञानेनैव विजानाति विज्ञानमुपास्वेति ॥ १ ॥

---

भा० विज्ञानं वाव ध्यानाद्भूयः । विज्ञानं शास्त्रार्थविषयं ज्ञानं ध्यानं तस्य च कारणत्वाद्ध्यानाद्भूयस्त्वं । कथं च तस्य भूयस्त्वमित्याह । विज्ञानेन वै ऋग्वेदं विजानाति अयमृग्वेद इति प्रमाणतया यस्यार्थज्ञानं ध्यानकारणं । तथा यजुर्वेदमित्यादि । किञ्च पश्वादिंश्च धर्माधर्मौ शास्त्रसिद्धौ साध्वसाधुनी लोकतः स्मार्त्ते वा दृष्टविषयञ्च सर्व्वं विज्ञानेनैव विजानातीत्यर्थः । तस्माद्युक्तं ध्यानाद्-

---

व्या० विज्ञानस्यात्मभूयस्त्वं प्रश्नपूर्व्वकं दर्शयति । कथमित्यादिना ॥ यद्यपि प्रमाणतया तज्ज्ञानं शास्त्रार्थज्ञानपूर्व्वकं तथापि कथं तस्य भूयस्त्वं तत्राह । यस्येति ॥ इतश्च तस्य ध्यानाद्भूयस्त्वमित्याह । किञ्चेति ॥ भूयस्त्वफलमाह ॥ स्य इति ॥ विज्ञानशब्दयोरर्थभेदं

उ॰ स यो विज्ञानं ब्रह्मेत्युपास्ते विज्ञानवतो वै स लोकान् ज्ञानवतोऽभिसिध्यति यावद्विज्ञानस्य गतं तत्रास्य यथा कामचारो भवति यो विज्ञानं ब्रह्मेत्युपास्तेऽस्ति भगवो विज्ञानाद्भूय इति विज्ञानाद्वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ २ ॥ ७ ॥

बलं वाव विज्ञानाद्भूयोऽपि ह शतं विज्ञानवतामेको बलवानाकम्पयते स यदा बली भवत्यथोत्थाता भवत्युत्तिष्ठन् परिचरिता भवति

---

भा॰ ज्ञानस्य भूयस्त्वं। अतो विज्ञानमुपास्स्वेति। शृणूपासनफलं विज्ञानवतः। विज्ञानं येषु लोकेषु तान्विज्ञानवतो लोकान् ज्ञानवतश्चाभिसिध्यति प्राप्नोति विज्ञानं शास्त्रार्थविषयं ज्ञानमन्यविषयनैपुण्यं तद्वद्भिर्युक्तान् लोकान् प्राप्नोतीत्यर्थः। यावद्विज्ञानस्येत्यादि पूर्ववत् ॥ ७ ॥

बलं वाव विज्ञानाद्भूयः। बलमित्यन्नोपयोगजनितं मनसो विज्ञेये प्रतिभानसामर्थ्यं। अनशनाद्दृगादीनि न वै मा प्रतिभान्ति भो इतिश्रुतेः। शरीरेऽपि तदेवोत्थानादिसामर्थ्यं विज्ञानवतां शतमप्येकः प्राणी बलवाना-

---

घ्या॰ कथयति। विज्ञानमिति॥ तथापि लोकानामचेतनानां कुतस्तदुभयाश्रयत्वमित्याशङ्क्याह। तद्वद्भिरिति ॥ ७ ॥

यथोक्ते बलशब्दार्थे श्वेतकेतुवाक्यं प्रमाणयति। अनशनादिति॥ कथं तर्हि शरीरसामर्थ्ये बलशब्दप्रयोगस्तत्राह। शरीरेऽपीति॥

उ॰ परिचरन्नुपसत्ता भवत्युपसीदन्द्रष्टा भवति श्रोता भवति मन्ता भवति बोद्धा भवति कर्त्ता भवति विज्ञाता भवति बलेन वै पृथिवी तिष्ठति बलेनान्तरिक्षं बलेन द्यौर्बलेन पर्वता बलेन देवमनुष्या बलेन पशवश्च वयाꣳसि च तृणवनस्पतयः श्वापदान्याकीटपतङ्गपिपीलकं बलेन लोकस्तिष्ठति बलमुपास्स्वेति ॥ १ ॥ स यो बलं ब्रह्मेत्युपास्ते यावद्बलस्य गतं तत्रास्य यथा कामचारो भवति

भा॰ कम्पयते यथा हस्ती। यतो मनुष्याणां शतं समुदितमपि। यस्मादेवमन्नाद्युपयोगनिमित्तं बलं तस्मात्स पुरुषो यदा बली बलेन तदान् भवत्यथोत्थातोत्थानस्य कर्त्तोत्तिष्ठंश्च गुरूणामाचार्य्यस्य च परिचरिता परिचरणस्य शुश्रूषायाः कर्त्ता भवति परिचरन्नुपसत्ता तेषां समीपगोऽन्तरङ्गः प्रियो भवतीत्यर्थः। उपसीदंश्च सामीप्यं गच्छन्नेकाग्रतयाऽऽचार्य्यस्यान्यस्य चोपदेष्टुर्गुरोर्द्रष्टा भवतीत्यर्थः। ततस्तदुक्तस्य श्रोता भवति। तत इदमेभिरुक्तमेवमुपपद्यत इत्युपपत्तितो मन्ता भवति मन्वानश्च बोद्धा भवति।

आ॰ तदेवेत्यन्नोपयोगजनितमेवेत्यर्थः। न केवलं कारणत्वादेव बलं विज्ञानाद्भूयस्त्वं। किन्तु प्रत्यक्षाच्च तस्य ततो भूयस्त्वमित्याह। विज्ञानवतामिति॥ तस्माद्बलस्य विज्ञानाद्भूयस्त्वमिति शेषः। समुदितमपि कम्पयते तथान्यत्रापि द्रष्टव्यमिति सम्बन्धः॥ यस्मादेवं बलस्य कारणत्वं विज्ञानस्य च कार्य्यत्वं तस्मात्ततस्तद्भूयस्त्वमित्येत-

उ० यो बलं ब्रह्मेत्युपास्तेऽस्ति भगवो बलाद्भूय इति बलाद्वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ ८ ॥

अन्नं वाव बलाद्भूयस्तस्माद्यद्यपि दशरात्रीर्नाश्नीयाद्यद्यु ह जीवेदथवाऽद्रष्टाऽश्रोताऽमन्ताऽबोद्धाऽकर्ताऽविज्ञाता भवत्यथाऽन्नस्यायै द्रष्टा भवति

---

भा० एवमेवेदमिति । तत एवं निश्चित्य तदुक्तार्थस्य कर्त्ताऽनुष्ठाता भवति विज्ञाताऽनुष्ठानफलस्यानुभविता भवतीत्यर्थः । किञ्च बलस्य माहात्म्यं बलेन वै पृथिवी तिष्ठतीत्याद्युक्तवर्थं ॥ ८ ॥

अन्नं वाव बलाद्भूयः । बलहेतुत्वात् । कथमन्नस्य बलहेतुत्वमित्युच्यते । यस्माद्बलकारणमन्नं तस्माद्यद्यपि कश्चिद्दशरात्रीर्नाश्नीयात्सोऽन्नोपयोगनिमित्तस्य बलस्य हान्या म्रियते नचेन्म्रियते यद्यु ह जीवेत् । दृश्यन्ते हि मासमप्यनश्नन्तो जीवन्तोऽथवा सजीवन्नप्यद्रष्टा भवति गुरोरपि तत एवाश्नीतेत्यादि पूर्व्वविपरीतं सर्व्वं भवति । अथ यदा बह्वन्यहान्यनशितो दर्शनादिक्रियास्वसमर्थः सन्नन्नस्यायी

---

व्या० स्मिन्नर्थे कार्य्यकारणभावमेतयोरुपपादयति । यस्मादित्यादिना ॥ इतस्य बलस्य भूयस्त्वमेवत्यमित्याह । किञ्चेति ॥ ८ ॥

अथवा यदि सोऽभुञ्जानोऽपि कथञ्चिज्जीवेत्तदा जीवन्नपि सोऽद्रष्टेति सम्बन्धः ॥ कथमशनस्यून्यस्य जीवनमित्याशङ्क्याह । दृश्यन्त इति ॥ अन्नोपयोगाभावे बलहानिरिति व्यतिरेकमुक्त्वा तदुपयोगे बलं भवतीत्यन्वयं व्याचष्टे । अथवेति ॥ अथान्नस्यायै इत्यपि

उ० श्रोता भवति मन्ता भवति बोद्धा भवति कर्ता भवति विज्ञाता भवत्यन्नमुपास्वेति ॥ १ ॥ स योऽन्नं ब्रह्मेत्युपास्तेऽन्नवतो वै स लोकान् पानवतोऽभिसिध्यति यावदन्नस्य गतं तत्रास्य यथा कामचारो भवति योऽन्नं ब्रह्मेत्युपास्तेऽस्ति भगवोऽन्नाद्भूय इत्यन्नाद्वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ २ ॥ ९ ॥

---

भा० आगमनमायोऽन्नस्य प्राप्तिरित्यर्थः सा यस्य विद्यते सोऽन्नस्य आयी । आय इत्येतद्वर्णव्यत्ययेनैकारस्य व्यत्ययेन ईकारान्तत्वेन । अथान्नस्यायै इत्यपिपाठे एवमेवाप्नोत्येवमेवार्थस्तत्र हेतुमाह । आयै इत्येदिति । ऐकारस्य वर्णस्य व्यत्ययेन ईकारान्तत्वेनैवेत्यर्थः । इत्येतद्वर्णव्यत्ययेन अथान्नस्यायै इत्यपि पाठे एवमेवार्थः । द्रष्टेत्यादिकार्यश्रवणात् ॥ दृश्यते ह्यन्नोपयोगे दर्शनादिसामर्थ्यं न तदप्राप्तावतोऽन्नमुपास्वेति ॥ फलं चान्नवतः प्रभूतान्नान्वै स लोकान् पानवतः प्रभूतोदकांश्चान्नपानयोर्नित्यसम्बन्धाल्लोकानभिसिध्यति । समानमन्यत् ॥ ९

---

व्या० पाठोऽस्ति तत्रान्नस्याय इत्येतदेव पदमन्नस्य प्राप्तिपरतया व्याख्येयमेकारमीकारत्वेन विपरिणम्य इण्प्रत्ययाङ्गीकारादित्याह आय इत्येतदिति ॥ द्रष्टा श्रोतेत्याद्यन्नकार्य्यस्य श्रवणादपि पाठान्तरमन्नप्राप्तिपरतया व्याख्येयमित्याह । द्रष्टेत्यादीति ॥ कथं तदन्नकार्य्यमित्याशङ्क्यान्वयव्यतिरेकौ दर्शयति । दृश्यते हीति ॥ ९ ॥

उ॰ आपो वा अन्नाद्भूयस्तस्माद्यदा सुवृष्टिर्न भवति व्याधीयन्ते प्राणा अन्नं कनीयो भविष्यतीत्यथ यदा सुवृष्टिर्भवत्यानन्दिनः प्राणा भवन्त्यन्नं बहु भविष्यतीत्याप एवेमा मूर्त्ता येयं पृथिवी यदन्तरिक्षं यद्द्यौर्यत्पर्वता यद्देवमनुष्या यत्पशवश्च वयाꣳसि च तृणवनस्पतयः श्वापदान्याकीटपतङ्गपिपीलकमाप एवेमा मूर्त्ता अप उपास्वेति ॥ १ ॥ स योऽपो ब्रह्मेत्युपास्त आप्नोति सर्वान् कामाꣳस्तृप्तिमान् भवति यावदपां गतं तत्रास्य यथा कामचारो भवति योऽपो ब्रह्मेत्यु-

---

भा॰ आपो वाऽन्नाद्भूयस्योऽन्नकारणत्वात्। यस्मादेवं तस्माद्यदा यस्मिन् काले सुवृष्टिः शस्यहिता शोभना वृष्टिर्न भवति तदा व्याधीयन्ते प्राणा दुःखिनो भवन्ति। किन्निमित्तमित्याहान्नमस्मिन् संवत्सरे नः कनीयोऽल्पतरं भविष्यतीति। अथ पुनर्यदा सुवृष्टिर्भवति तदाऽऽनन्दिनः सुखिनो हृष्टप्राणाः प्राणिनो भवन्त्यन्नं बहु प्रभूतं भविष्यतीति ॥ अप्सम्भवत्वान्मूर्त्तस्यान्नस्याप एवेमा मूर्त्तामूर्त्तभेदाकारपरिणता इति मूर्त्ता येयं पृथिवी यदन्तरिक्षं। इत्याद्याप एवेमा मूर्त्ता अतोऽप उपास्वेति फलं। स यो

---

व्या॰ अपां कारणत्वेनान्नाद्भूयस्त्वमन्वयव्यतिरेकाभ्यां साधयति। यस्मादित्यादिना ॥ अपां सर्व्वजगदात्मकत्वाच्चान्नाद्भूयस्त्वमुचितमित्याह। अप्सम्भवत्वादिति ॥ दधिपयःप्रभृत्याकृतिपरिणाम-

उ॰ पास्तेऽस्ति भगवोऽद्भ्यो भूय इत्यद्भ्यो वाव भूयो ऽस्तीति तन्मे भगवान् ब्रवीत्विति॥ २॥ १०॥

तेजो वा अद्भ्यो भूयस्तद्वा एतद्वायुमुपगृह्याकाशमभितपति तदाहुर्निशोचति नितपति वर्षिष्यति वा इति तेज एव तत्पूर्वं दर्शयित्वाऽथापः सृजते तदेतदूर्ध्वाभिश्च तिरश्चीभिश्च विद्युद्भिराह्रादाश्चरन्ति तस्मादाहुर्विद्योतते स्तनयति वर्षिष्यति वा इति तेज एव तत्पूर्वं दर्शयि-

भा॰ ऽपो ब्रह्मेत्युपास्ते आप्नोति स सर्व्वान् काम्यान्मूर्त्तिमतो विषयानित्यर्थः। अप्प्रभवत्वाच्च तृप्तेरम्बूपासनात्तृप्तिमांश्च भवति। समानमन्यत् ॥ १० ॥

तेजो वाऽद्भ्यो भूयः। तेजसोऽप्कारणत्वात्। कथमप्कारणत्वमित्याह। यस्मादब्योनिस्तेजस्तस्मात्तद्वा एतत्तेजो वायुमागृह्यावष्टभ्य स्वात्मना निश्चलीकृत्य वायुमाकाशमभिव्याप्नुवत्तपति यदा तदाहुर्लौकिका निशोचति सन्तपति सामान्येन जगन्ति तपति देहानतो वर्षिष्यति वै इति। प्रसिद्धं हि लोके कारणमभ्युद्यतं दृष्टवतः कार्य्यं भविष्यतीति विज्ञानं॥ तेज एव तत्पूर्व्वमात्मान-

---

व्या॰ त्वादन्तरिक्षादेरम्मयत्वमवसेयं। अपां सर्व्वमूर्त्तात्मकत्वमुपसंहरति। इत्यादीति ॥ १० ॥

इतिशब्दस्तदाऽऽहरनेन सम्बध्यते॥ वैशब्दार्थं दर्शयति। प्रसिद्धमिति॥ अप्तेजसोरुक्तं कार्य्यकारणत्वं उपजीव्य फलितमाह। तेज एवेति ॥ अप्तेजसोर्विधान्तरेण कार्य्यकारणभावं दर्शयति।

उ॰ त्वाऽथापः सृजते तेज उपास्वेति॥ १॥ स यस्तेजो ब्रह्मेत्युपास्ते तेजस्वी वै स तेजस्वतो लोकान्भास्वतोऽपहततमस्कानभिसिध्यति यावत्तेजसो गतं तत्रास्य यथा कामचारो भवति यस्तेजो ब्रह्मेत्युपास्तेऽस्ति भगवस्तेजसो भूय इति तेजसो वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ २ ॥ ११ ॥

---

भा॰ मुद्भूतं दर्शयित्वाऽथानन्तरमपः सृजतेऽतोऽप्स्रष्टृत्वाद्भूयोऽद्भ्यस्तेजः। किञ्चान्यत्तदेतत्तेज एव स्तनयित्नुरूपेण वर्षहेतुर्भवति । कथं ऊर्द्धाभिश्चोर्द्धगाभिर्विद्युद्भिस्तिरश्चीभिश्च तिर्य्यग्गताभिश्च सहाह्रादाः स्तनयनशब्दाश्चरन्ति । तस्मात्तद्दर्शनादाऊर्लौकिका विद्योतते स्तनयति वर्षिष्यति वा इत्याद्युक्तार्थमतस्तेज उपास्वेति । तस्य तेजस उपासनफलं तेजस्वी वै भवति। तेजोवत एव च लोकान् भास्वतः प्रकाशवतोऽपहततमस्कान् वाह्यानाध्यात्मिकानज्ञानाद्यपहततमस्कान् अपनीतवाह्याध्यात्मिकादितमस्कानभिसिध्यति। ऋज्वर्थमन्यत्॥ ११ ॥

---

व्या॰ किञ्चान्यदिति ॥ तदेवोपपादयति । ऊर्द्धाभिरिति ॥ तेजसो भूयस्त्वफलमाह । तेज इति ॥ तमःशब्दार्थमाह । वाह्येति ॥ वाह्यन्तमः शार्वरं प्रसिद्धमाध्यात्मिकमज्ञानरागादि तदुभयमपहततमस्कानित्यत्र तमःशब्दितमित्यर्थः ॥ अपहतशब्दार्थमाह । अपनीतेति ॥ ११ ॥

उ० आकाशो वाव तेजसो भूयानाकाशे वै सूर्य्या-
चन्द्रमसावुभौ विद्युन्नक्षत्राण्यग्निराकाशेनाह्वय-
त्याकाशेन शृणोत्याकाशेन प्रतिशृणोत्याकाशे
रमत आकाशे न रमत आकाशे जायत आका-
शमभिजायत आकाशमुपास्स्वेति ॥ १ ॥ स य
आकाशं ब्रह्मेत्युपास्त आकाशवतो वै स लोकान्
प्रकाशवतोऽसम्बाधानुरुगायवतोऽभिसिद्ध्यति या-

---

भा० आकाशो वाव तेजसो भूयान्। वायुसहितस्य तेजसः कारणत्वाद्व्योम्नो वायुमारभ्येति तेजसा सहोक्तो वायुरिति पृथगिह नोक्तस्तेजसः कारणं हि लोके कार्य्याद्भूयो दृष्टं। यथा घटादिभ्यो मृत्तथाकाशो वायुसहितस्य तेजसः कारणमिति ततोऽपि भूयान्। कथमाकाशे वै सूर्य्याचन्द्रमसावुभौ तेजोरूपौ विद्युन्नक्षत्राण्यग्निश्च तेजोरूपाण्याकाशेऽन्तः। यच्च यस्यान्तर्वर्त्ति तदल्पं भूय इतरत्। किञ्चाकाशेनाह्वयति चान्यमन्य आहूतश्चेतर आकाशेन शृणोत्यन्योक्तञ्च शब्दमन्यः प्रतिशृणोति आकाशे रमते क्रीडत्यन्योन्यं सर्व्वस्तथा न रमते चाकाशे बध्वादिवियोगे आकाशे जायते न मूर्त्तेनावष्टब्धे। तथाकाशमभिल-

---

व्या० वायोः सकाशादाकाशो भूयानिति वक्तव्ये कथं तेजसो भूयानित्युक्तमत आह। वायुरिति॥ कारणत्वेऽपि कथमाकाशस्य वायुसहितात्तेजसो भूयस्त्वमित्याशङ्क्याह। कारणं हीति॥ तेजसो वायुसहितादाकाशस्य भूयस्त्वं प्रश्नपूर्व्वकं प्रकारान्तरेण दर्शयति। कथमित्यादिना॥ इतश्चाकाशस्यास्ति भूयस्त्वमित्याह।

उ० वदाकाशस्य गतं तत्रास्य यथा कामचारो भवति य आकाशं ब्रह्मेत्युपास्तेऽस्ति भगव आकाशाद्भूय इत्याकाशाद्वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ २ ॥ १२ ॥

स्मरो वा आकाशाद्भूयस्तस्माद्यद्यपि बहव आसीरन्न स्मरन्तो नैव ते कञ्चन शृणुयुर्न मन्वीरन्न विजानीरन् यदा वाव ते स्मरेयुरथ शृणुयुरथ

---

भा० च्चाङ्कुरादि जायते न प्रतिलोमं। अत आकाशमुपास्स्व। फलं शृणु आकाशवतो वै विस्तारयुक्तान् स विद्वान् लोकान् प्रकाशवतः। प्रकाशाकाशयोर्नित्यसम्बन्धात्प्रकाशवतश्च लोकानसम्बाधान् सम्बाधनं सम्बाधः सम्बाधोऽन्योन्यपीडा तद्रहितानसम्बाधानुरुगायवतो विकीर्णगतोन्विस्तीर्णप्रचारान् लोकानभिसिद्ध्यति। यावदाकाशस्येत्याद्युक्तार्थं ॥ १२ ॥

स्मरो वा आकाशाद्भूयः। स्मरणं स्मरोऽन्तःकरणधर्म्मः। स आकाशाद्भूयानिति द्रष्टव्यं। लिङ्गव्यत्ययेन स्मर्त्तुः। स्मरणे हि सत्याकाशादि सर्व्वमर्थवत्स्मरणवतो भोग्यत्वात्। असति तु स्मरणे सदप्यसदेव। सत्त्वकार्य्याभावात्। नापि

---

व्या० किञ्चेति ॥ तद्भूयस्त्वफलमाह। अत इति ॥ कथमाकाशोपासकस्य प्रकाशव्याप्तलोकप्राप्तिरित्याशङ्क्याह। प्रकाशाकाशयोरिति॥ १२॥

नपुंसकलिङ्गं श्रुतं पुंलिङ्गत्वेन कथं व्याख्यातमित्याशङ्क्य पुंलिङ्गोपक्रममाश्रित्याह। लिङ्गव्यत्ययेनेति ॥ कथं पुनः स्मरणस्याकाशाद्भूयस्त्वमित्याशङ्क्याह। स्मरणे हीति॥ अन्वयमुक्त्वा व्यतिरेकं

उ॰ मन्वीरन्नथ विजानीरन् स्मरेण वै पुत्रान्विजानाति स्मरेण पशून् स्मरमुपास्स्वेति ॥ १ ॥ स यः स्मरं ब्रह्मेत्युपास्ते यावत्स्मरस्य गतं तत्रास्य यथा कामचारो भवति यः स्मरं ब्रह्मेत्युपास्तेऽस्ति भगवः स्मराद्भूय इति स्मराद्वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ २ ॥ १३ ॥

---

भा॰ सत्त्वं स्मृत्यभावे शक्यमाकाशादीनामवगन्तुमित्यतः स्मरणस्याकाशाद्भूयस्त्वं ॥ दृश्यते हि लोके स्मरणस्य भूयस्त्वं यस्मात्तस्माद्यद्यपि समुदिता बहव एकस्मिन्नासीरन्नुपविशेयुस्ते तत्रासीना अन्योन्यभाषितमपि न स्मरन्तश्चेत्स्युर्नैव ते कञ्चन शब्दं शृणुयुस्तथा न मन्वीरन्मन्तव्यञ्चेत्स्मरेयुस्तदा मन्वीरन् स्मृत्यभावत्वान्न मन्वीरन् तथा न विजानीरन्। यदा वाव ते स्मरेयुर्मन्तव्यं विज्ञातव्यं श्रोतव्यञ्चाथ शृणुयुरथ मन्वीरन्नथ विजानीरन्। तथा स्मरेण वै मम पुत्रा एत इति पुत्रान्विजानाति स्मरेण पशून्। अतो भूयस्त्वात्स्मरणमुपास्स्वेति। उक्तार्थमन्यत् ॥ १३ ॥

---

व्या॰ दर्शयति। असतीति॥ आकाशादेः स्मरणाभावेऽपि सत्त्वमङ्गीकृत्य भोग्यत्वाभावादानर्थक्यमुक्तं सम्प्रत्यस्मरणे सत्त्वमेव नास्तीत्याह। नापीति॥ स्मरणस्य भूयस्त्वमनुभवानुसारेण साधयति। दृश्यते हीति॥ हिशब्दार्थो यस्मादित्युक्तः॥ स्मरणाभावे श्रवणाद्यभावं व्यतिरेकमुक्त्वा तदभावे तदभावमन्वयमाह। यदेति॥ इतश्चास्ति स्मरणस्य भूयस्त्वमित्याह। तथेति॥ तद्भूयस्त्वे फलितमाह। अत इति॥ १३॥

उ० आशा वाव स्मराद्भूयस्याशेद्धो वै स्मरो मन्त्रा-
नधीते कर्म्माणि कुरुते पुत्राꣳश्च पशूꣳश्चेच्छत
इमञ्च लोकममुञ्चेच्छत आशामुपास्वेति ॥ १ ॥ स
य आशां ब्रह्मेत्युपास्ते आशयाऽस्य सर्वे कामाः
समृध्यन्त्यमोघा हास्याशिषो भवन्ति यावदा-
शाया गतं तत्रास्य यथा कामचारो भवति य
आशां ब्रह्मेत्युपास्तेऽस्ति भगव आशाया भूय
इत्याशाया वाव भूयोऽस्तीति तन्मे भगवान्
ब्रवीत्विति ॥ २ ॥ १४ ॥

---

भा० आशा वाव स्मराद्भूयसी। अप्राप्तवस्त्वाकाङ्क्षा आशा तृष्णा काम इति यामाहुः पर्य्यायैः सा च स्मरात् भूयसी। कथमाशया ह्यन्तःकरणस्थतया स्मरति स्मर्त्तव्यं आशा-विषयरूपं स्मरन्नसौ स्मरो भवत्यत आशेद्ध आशयाऽभि-वर्द्धितः स्मरभूतः स्मरन्नृगादीन्मन्त्रानधीतेऽधीत्य च तदर्थं ब्राह्मणेभ्यो विधींश्च श्रुत्वा कर्म्माणि कुरुते तत्फला-शयैव पुत्रांश्च पशूंश्च कर्म्मफलभूतानिच्छतेऽभिवाञ्छति आशयैव तत्साधनान्यनुतिष्ठन् इमञ्च लोकमाशेद्ध एव स्मरन् लोकसङ्ग्रहहेतुभिरिच्छन्नमुञ्च लोकमाशेद्धं स्मरन् तत्साधनानुष्ठानेनेच्छते आशारसनावद्धं स्मराकाशा-दिनामपर्य्यन्तं जगच्चक्रीभूतं प्रतिप्राणि अत आशायाः स्मरादपि भूयस्त्वमित्यत आशामुपास्व॥ यस्त्वाशां ब्रह्मे-त्युपास्ते शृणु तस्य फलमाशया सदोपासितयास्योपास-

उ० प्राणो वा आशाया भूयान्यथा वा अरा नाभौ समर्पिता एवमस्मिन् प्राणे सर्वꣳ समर्पितं

---

भा० कस्य सर्व्वे कामाः समृद्ध्यन्ति समृद्धिं गच्छन्त्यमोघा ह्यस्याशिषः प्रार्थनाः सर्व्वा भवन्ति यत्प्रार्थितं सर्व्वं तदवश्यं भवतीत्यर्थः । यावदाशाया गतमित्यादि पूर्व्ववत् ॥ १४ ॥

नामोपक्रममाशान्तं कार्य्यकारणत्वेन निमित्तनैमित्तिकत्वेन चोत्तरोत्तरभूयस्तयाऽवस्थितं स्मृतिनिमित्तसद्भावमाशारशनापाशैर्विपाशितं सर्व्वं सर्व्वतो विसमिव तन्तुभिर्यस्मिन् प्राणे समर्पितं। येन च सर्व्वतो व्यापिना अन्तर्वहिर्गतेन सूत्रे मणिगणा इव सूत्रेण ग्रथितं विधृतञ्च । स एष प्राणो वै आशाया भूयान्। कथमस्य भूयस्त्वमित्याह दृष्टान्तेन समर्थयंस्तद्भूयस्त्वं यथा वै लोके रथचक्रस्यारा रथनाभौ समर्पिताः सम्प्रोताः सम्प्रवेशिता इत्येतत्। एवमस्मिन् लिङ्गसङ्घातरूपे प्राणे प्रज्ञा-

---

व्या० व्याशाया भूयस्त्वमाकाङ्क्षाद्वारा व्युत्पादयति। कथमित्यादिना ॥ १४ ॥

प्राणस्य सर्व्वास्पदत्वेन भूयस्त्वं कथयति। नामोपक्रममिति ॥ प्रकृतश्रुतिवशात्तदुपक्रमे यस्य जगतोऽस्ति तत्तथा पाठक्रममेवाश्रित्याशा चान्ते यस्यास्ति तज्जगत्तथेति विग्रहः। कार्य्यकारणत्वं क्वाचित्कमुपादानोपादेयत्वं निमित्तनैमित्तिकत्वमपि क्वाचित्कमेव उत्तरोत्तरभूयस्तया पूर्व्वस्मात्पूर्व्वस्मान्नामादेरुत्तरोत्तरवागादिभूयस्त्वेनेति यावत् ॥ स्मृतिनिमित्तः सद्भावो यस्य तत्तथा। व्याशाख्यैरशनापाशैः सर्व्वतो विपाशितमित्यत्र दृष्टान्तमाह।

उ० प्राणः प्राणेन याति प्राणः प्राणं ददाति प्राणाय ददाति प्राणो ह पिता प्राणो माता प्राणो भ्राता प्राणः स्वसा प्राण आचार्य्यः प्राणो ब्राह्मणः॥ १॥ स यदि पितरं वा मातरं वा भ्रातरं वा स्वसारं

---

भा० त्मनि दैहके मुख्ये यस्मिन् परा देवता नामरूपव्याकरणायाऽऽदर्शादौ प्रतिबिम्बवज्जीवेनात्मनानुप्रविष्टा। यस्य महाराजस्येव सर्व्वाधिकारीश्वरस्य। कस्मिन्न्वहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन् वा प्रतिष्ठिते प्रतिष्ठास्यामीति स प्राणमसृजतेति श्रुतेः। यस्तु छायेवानुगत ईश्वरं। तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिताः। स एव प्राण एव प्रज्ञात्मेति कौषीतकीनां। अत एवमस्मिन् प्राणे सर्व्वं यथोक्तं समर्पितं। अतः स एष

---

व्या० विसमिवेति॥ विसशब्दो मृणालविषय। यथोक्तं जगद्यस्मिन्नर्पितं स एष भूयानिति सम्बन्धः। सर्व्वस्य जगतः॥ तस्मिन्नर्पितत्वमेव दृष्टान्तद्वारा स्पष्टयति। येन चेति॥ सर्व्वतो व्यापिनेत्यस्यैव स्फुटीकरणमन्तर्वहिर्गतेनेति प्राणस्याप्राणायाः सकाशाद्भूयस्त्वमाकाङ्क्षापूर्व्वकं समर्थयते। कथमित्यादिना॥ लिङ्गानां व्यष्टीनां सङ्घातः समुदायस्तद्रूपे समष्ट्यात्मनीति यावत्॥ उपाधितद्वतोरैक्यमभिप्रेत्य विशिनष्टि। प्रज्ञात्मनीति॥ तस्यैवाध्यात्ममधिदैवत्वावस्थानं सूचयति। दैहिकमिति॥ प्राणान्तरं व्यावर्त्तयति। मुख्य इति॥ यथोक्तेऽस्मिन् प्राणे सर्व्वं समर्पितमित्युत्तरत्र सम्बन्धः॥ प्रज्ञात्मनीति परमात्मोपाधित्वं प्राणस्योक्तं तदुपपादयति। यस्मिन्निति॥ तस्मिन् सर्व्वं समर्पितमिति पूर्व्ववत्सम्बन्धः। किमिति

उ॰ वाचार्यं वा ब्राह्मणं वा किञ्चिद्भृशमिव प्रत्याह धिक्त्वाऽस्त्वित्येवैनमाहुः पितृहा वै त्वमसि मातृहा वै त्वमसि भ्रातृहा वै त्वमसि स्वसृहा वै त्वम-

---

भा॰ प्राणोऽपरतन्त्रः प्राणेन स्वशक्त्यैव याति नान्यकृतगमनादिक्रियास्वस्य सामर्थ्यमित्यर्थः । सर्व्वं क्रियाकारकफलभेदजातं प्राण एव न प्राणाद्बहिर्भूतमस्तीति प्रकरणार्थः । प्राणः प्राणं ददाति । यद्ददाति तत्स्वात्मभूतमेव । यस्मै ददाति तदपि प्राणायैव । अतः पित्राद्याख्योऽपि प्राण एव । कथं पित्रादिशब्दानां प्रसिद्धार्थोत्सर्गेण प्राणविषयत्वमिति । उच्यते । सति प्राणे पित्रादिशब्दप्रयोगात्तदुत्क्रान्तौ च प्रयोगाभावात् कथं तदित्याह । स यः कश्चित्पित्रादीनामन्यतमं यदि तं भृशमिव तद-

---

आ॰ चक्षुरादिषु विद्यमानेषु मुख्यस्यैव प्राणस्य परमात्मोपाधिकत्वमुपगतमित्याशङ्क्याह । यस्येति ॥ प्राणस्येश्वरं प्रति सर्व्वाधिकारत्वे श्रुत्यन्तरं प्रमाणयति । कस्मिन्निति ॥ ईश्वरं प्रति प्राणस्यैवौपाधिकत्वे हेत्वन्तरमाह । यस्त्विति ॥ अत्रापि पूर्व्ववदन्वयः ॥ प्राणश्छायावदीश्वरमनुगच्छतीत्यत्र श्रुत्यन्तरं प्रमाणयति । तद्यथेति ॥ भूतमात्राः शब्दादयः पृथिव्यादयश्च विषया प्रज्ञामात्रासु शब्दादिबुद्धिषु तज्जनकेन्द्रियेषु चेत्यर्थः । भवतु तासां प्राणेऽर्पितत्वं तथापि कथं प्राणस्य छायावदीश्वरं प्रत्यनुगतिस्तत्राह । स एष इति ॥ कौषीतकीनां श्रुतिरिति शेषः । प्राणस्य यथोक्तविशेषणवैशिष्ट्यमतःशब्दार्थः ॥ व्याख्यातं भागमनूद्यावशिष्टमंशं व्याकरोति । एवमिति ॥ प्राणः प्राणेन यातीत्यस्यार्थमाह । अत इति ॥ सर्व्वास्पदत्वादिति यावत् ॥ प्राणः प्राणेन यातीत्यादेः प्राणो ह्येवैतानि सर्व्वाणि भूतानीत्यन्तस्य

उ॰ स्याचार्य्यहा वै त्वमसि ब्राह्मणहा वै त्वमसि॥२॥
अथ यद्यप्येनानुत्क्रान्तप्राणाञ्छूलेन समासं व्यति-
सन्दहेन्नैवैनं ब्रूयुः पितृहासीति न मातृहासीति न

---

भा॰ ननुरूपमिव किञ्चिद्वचनं त्वंकारादियुक्तं प्रत्याह तदेनं पार्श्वस्था आहुर्विवेकिनो धिक्त्वास्तु धिगस्तु त्वामित्येवं॥ पितृहा वै त्वं पितुर्हन्तेत्यादि। अथैनानेवोत्क्रान्तप्राणां-स्त्यक्तदेहान् अथान्यदपि शूलेन समासं समस्य व्यतिसन्द-हेद्व्यत्यस्य सन्दहेदेवमतिक्रूरमपि कर्म्म समासव्यत्यासा-दिप्रकारेण दहनलक्षणं तद्देहसम्बद्धमेव कुर्व्वाणं नैवैनं ब्रूयुः पितृहेत्यादि। तस्मादन्वयव्यतिरेकाभ्यामवगम्यते एतत्पित्राख्योऽपि प्राण एवेति। तस्मात्प्राणो ह्येवैतानि पित्रादीनि सर्व्वाणि भवन्ति चलानि स्थिराणि च। स वा

---

व्या॰ तात्पर्य्यार्थं सङ्क्षिप्य कथयति। सर्व्वमिति॥ दातुर्देयस्य सम्प्रदानस्य च प्राणाभिन्नत्वं प्रकटयति। प्राण इति॥ ददातीति दीयमानमुच्यते। तस्य सम्प्रदानस्य च प्राणाभिन्नत्वात्प्राणायैवेत्युक्तं प्राणस्य सर्व्वात्मत्वमतःशब्दार्थः॥ प्रसिद्धिरनतिक्रमणीयेति शङ्कते। कथमिति॥ अन्वयव्यतिरेकाभ्यां पित्रादिशब्दानां प्राणविषयत्वान्न प्रसिद्धेरुल्लङ्घनमित्याह। उच्यत इति॥ अन्वयव्यतिरेकावेव प्रश्नपूर्व्वकं प्रकटयति। कथमित्यादिना॥ पित्रादिषु प्राणे सति पित्रादिशब्दानां प्रयुज्यमानत्वमन्यथा चाप्रयुज्यमानत्वं तदित्युच्यते। त्वंकारादियुक्तमित्यादिपदेन तिरस्कारप्रभेदो गृह्यते॥ पित्रादिष्वप्रियवादिनं प्रति विवेकिनां धिक्कारवचने हेतुमाह। पितृहेति॥ सति प्राणे पित्रादिषु पित्रादिशब्दानां प्रयुज्यमानत्वमित्यन्वयमुक्त्वा व्यतिरेकमाह। अथैनानेवेति॥ समस्य पुञ्जीकृत्य व्यत्यस्यावयवान्विभजत इत्यर्थः।

उ० भ्रातृहासीति न स्वसृहासीति नाचार्य्यहासीति न ब्राह्मणहासीति ॥ ३ ॥ प्राणो ह्येवैतानि सर्व्वाणि भवति स वा एष एवं पश्यन्नेवं मन्वान एवं

---

भा० एष प्राणवित् । एवं यथोक्तप्रकारेण पश्यन् फलतोऽनुभवन्नेवं मन्वान उपपत्तिभिश्चिन्तयन्नेवं विजानन्नुपपत्तिभिः संयोज्यैवमेवेति निश्चयं कुर्व्वन्नित्यर्थः । मननविज्ञानाभ्यां हि सम्भूतः शास्त्रार्थो निश्चितो दृष्टो भवेत् अत एवं पश्यन्नतिवादी भवति । नामाद्याशान्तमतीत्य वदनशीलो भवतीत्यर्थः । ते चेद्ब्रूयुस्तं यदि एवमतिवादिनं सर्व्वदा सर्व्वैः शब्दैर्नामाद्याशान्तमतीत्य वर्त्तमानं प्राणमेव वदन्ति एवं पश्यन्तमतिवदनशीलमतिवादिनं ब्रह्मादिस्तम्बपर्य्यन्तं । तस्य हि जगतः प्राण आत्माऽह-

---

घा० यद्यपीत्युपक्रमादेवमपीत्येतत्तथापीत्यस्मिन्नर्थे द्रष्टव्यं ॥ तदेवातिक्रूरं कर्म्म विशिनष्टि । समासेति ॥ अवयवविभञ्जनमादिशब्दार्थः । तद्देहसम्बद्धमित्यत्र तच्छब्दः क्रूरपित्रादिविषयः। यद्यपि त्यक्तप्राणेष्वपि देहेषु पित्रादिशब्दो दृष्टस्तथापि नासौ मुख्यः । तद्विषये क्रूरकर्म्मानुष्ठानेऽपि शिष्टगर्हादृष्टेरिति भावः ॥ उक्तान्वयव्यतिरेकफलमुपसंहरति । तस्मादिति ॥ प्राणस्यैव पित्रादिसञ्ज्ञत्वे किं स्यादित्याशङ्क्याह । तस्मात्प्राणो हीति ॥ प्राणस्य भूयस्त्वमित्थं व्युत्पाद्य तद्विज्ञानफलमाह । स वा इति ॥ प्राणविदतिवादी भवतीति सम्बन्धः ॥ कथं प्राणवित्त्वमित्यपेक्षायामाह । एवमिति ॥ सर्व्वात्मत्वं यथोक्तप्रकारः फलतोऽनुभवः स्वरूपत्वेन साक्षात्कारः॥ तदनुदर्शनेनैव प्राणवित्त्वे सिद्ध्यति सति किमिति मननविज्ञाने पृथगुपन्यस्येते तत्राह । मननविज्ञानाभ्यां हीति ॥ उक्तान्वयव्यतिरेकाख्योपपत्तिसहकृतादाक्याद्यत्प्राणविषयं ज्ञानं

उ॰ विज्ञानन्नतिवादी भवति तञ्चेद्ब्रूयुरतिवाद्यसी-
त्यतिवाद्यस्मीति ब्रूयान्नापह्नुवीत ॥ ४ ॥ १५ ॥
एष तु अतिवदति यः सत्येनातिवदति
सोऽहं भगवः सत्येनातिवदानीति सत्यन्त्वेव

---

भा॰ मिति ब्रुवाणं यदि ब्रूयुरतिवाद्यसीति। बाढमतिवाद्यस्मीति
ब्रूयात् नापह्नुवीत। कस्माद्ध्यसावपह्नुवीत। यत्प्राणं सर्व्वे-
श्वरमयमस्मीत्यात्मत्वेनोपगतः ॥ १५ ॥

स एष नारदः सर्व्वातिशयं प्राणं स्वमात्मानं
श्रुत्वा नातःपरमस्तीत्युपरराम। न पूर्व्ववत्किमस्ति भगवः
प्राणाद्भूय इति पप्रच्छ। यतस्तमेवं विकारानृतब्रह्म-
विज्ञानेन परितुष्टमकृतार्थं परमार्थसत्यातिवादिनमा-
त्मानं मन्यमानं योग्यं शिष्यमित्याद्यद्वविशेषाद्विप्रच्या-
वयन्नाह भगवान्सनत्कुमारः। एष तु वा अतिवदति
यमहं वक्ष्यामि न प्राणविदतिवादी परमार्थतः। नामा-

---

आ॰ जायते तदत्र विज्ञानं विवक्ष्यते। तत्फलसाक्षात्कारस्तु दर्शनमिति
भेदः। मननविज्ञाने विना दर्शनासम्भवोऽतःशब्दार्थः। एवं
मननादिद्वारेणेति यावत्॥ अतिवादित्वं व्युत्पादयति। नामा-
दीति॥ नापह्नुवीतेत्युक्तं व्यक्तीकरोति। कस्मादिति॥ १५॥
यद्यस्मादयं विद्वानात्मत्वेन सर्व्वेश्वरं प्राणोऽस्मीत्युपगतवांस्त-
स्मादपह्नवे हेत्वभावादात्मनोऽतिवादित्वं॥ नापह्नुवीतेत्यत्र प्राणा-
न्तमुपदेशं श्रुत्वा नारदस्य तुष्णींभावे किं कारणमित्याशङ्कया-
माह। स एष इति॥ कथं तस्योपरतिरवगतेत्याशङ्क्याह।
न पूर्व्ववदिति॥ किमिति तर्हि प्रार्थनायामुपेक्षायां स्वयमेवाचार्य्यो
व्युत्पादयतीत्याशङ्क्याह। तमेवमिति॥ एतस्माज्जायते प्राण

उ० विजिज्ञासितव्यमिति सत्यं भगवो विजिज्ञास इति ॥ १ ॥ १६ ॥

यदा वै विजानात्यथ सत्यं वदति नाविजा-

---

भा० द्यपेचन्तु तस्यातिवादित्वं। यस्तु भूमाख्यं सर्वातिक्रान्तं तत्त्वं परमार्थसत्यं वेद सो ऽतिवादीत्यत आह। एष तु वा ऽतिवदति यः सत्येन परमार्थसत्यं विज्ञानवत्तयाऽतिवदति सोऽहं त्वां प्रपन्नो भगवन्सत्येनातिवदानि। तथा मां नियुनक्तु भगवान् यथाहं सत्येनातिवदानीत्यभिप्रायः। यद्येवं सत्येनातिवदितुमिच्छसि सत्यमेव तु तावद्विजिज्ञासितव्यमित्यत आह नारदः। तथास्तु तर्हि सत्यं भगवो विजिज्ञासे विशेषेण ज्ञातुमिच्छन्त्वतोऽहमिति॥ १६ ॥

यदा वै सत्यं परमार्थतो विजानाति। इदं परमार्थतः सत्यमिति ततोऽनृतं विकारजातं वाचारम्भणं

---

आ० इति श्रुत्यन्तरात्प्राणस्य विकारत्वेनानृतत्वं। वाचारम्भणं विकारो नामधेयमित्युक्तं। तस्मिन्ननृते प्राणे ब्रह्मणि विज्ञानं तेनेति यावत्॥ परितुष्टत्वे कथमनृतार्थत्वमित्याशङ्क्य मिथ्याज्ञानशालित्वादित्याह। परमार्थेति॥ न च तस्योपेक्षार्हत्वमित्याह। योग्यमिति॥ मिथ्याग्रहविशेषो नास्ति प्राणात्परमित्यभिमानः॥ कथं तर्हि प्राणविदो ऽतिवादित्वमुक्तं तत्राह। नामादीति॥ कस्तर्हि परमार्थतो ऽतिवादीत्याशङ्क्याह। यस्त्विति॥ सो ऽतिवादीति॥ यतः सनत्कुमारस्याभिप्रायोऽत एवाहेति योजना॥ ननु नारदस्य नाद्यापि सत्यविज्ञानमुत्पन्नं कथं सत्येनातिवदानीति पृच्छति तत्राह। तथेति॥ १६॥

यदा वै विजानातीत्यादिवाक्यं व्याकुर्वन्नुत्तरमाह। यदेति॥ यदि विश्वं सद्रूपादनुगताद्भिन्नमसदेव स्याद्यदि त्वभिन्नं सन्मा-

उ॰ ननु सत्यं वदति विजानन्नेव सत्यं वदति विज्ञा-

---

भा॰ हित्वा सर्व्वविकारावस्थं सदेवैकं सत्यमिति तदेवाथ वदति यद्वदति। ननु विकारोऽपि सत्यमेव। नामरूपे सत्यान्ताभ्यामयं प्राणश्छन्नः प्राणा वै सत्यं तेषामेष सत्यमिति श्रुत्यन्तरात्। सत्यमुक्तं सत्यत्वं श्रुत्यन्तरे विकारस्य न तु परमार्थापेक्षमुक्तं किन्तर्हीन्द्रियविषयाविषयत्वापेक्षं सच्च त्यच्चेति सत्यमित्युक्तं तद्द्वारेण च परमार्थसत्यस्योपलब्धिर्विवक्षितेति। प्राणा वै सत्यं तेषामेष सत्यमिति चोक्तं। इहापि तदिष्टमेव। इह तु प्राणविषयात्परमार्थसत्यविज्ञानाभिमानाद्युत्थाप्य नारदं यत्सदेव सत्यं परमार्थतो भूमाख्यं तद्विज्ञापयिष्यामीत्येष विशेषतो विवक्षितोऽर्थः। नाविजानन्सत्यं वदति॥ यस्त्वविजानन्वदति सोऽग्न्यादिशब्देनाग्न्यादीन् परमार्थसद्रूपान्मन्यमानो

---

व्या॰ ऽयमेव परमार्थसत्यं सिद्ध्येदिति परमार्थतः सत्यं यदैव विजानातीत्यर्थः॥ विज्ञानप्रकारमभिनयति। इदमिति॥ ततस्तदाऽनृतं विकारजातं हित्वा सदेव सत्यमिति कृत्वा यद्वदति तत्तदेव वदतीति योजना॥ सत्यविज्ञानस्य तद्वदनं प्रति हेतुत्वद्योतनार्थोऽथशब्दः॥ श्रुत्यन्तरावष्टम्भेन भेदाभेदवादी शङ्कते। नन्विति॥ किं बृहदारण्यकश्रुत्या विकारस्य सत्यत्वमुक्तमित्येतावन्मात्रमुच्येत किं वा परमार्थसत्यत्वमिति विकल्प्याद्यमङ्गीकरोति। सत्यमिति॥ द्वितीयं दूषयति। न त्विति॥ भेदाभेदयोर्व्विरोधादेकोपाधावयोगाद्विकारस्य च रज्जुसर्पवन्मिथ्यात्वानुमानादत्यन्ताबाध्यत्वाभिप्रायेण सत्यत्वं श्रुत्यन्तरेणैवोक्तमित्यर्थः॥ कथं तर्हि प्राणादिषु सत्यत्वमुक्तमित्याशङ्क्याङ्गीकारं स्फोरयति। किन्तर्हीति॥ इन्द्रियजनितसद्बुद्धिविषयत्वापेक्षं भूतत्रयं सदि-

उ॰ नन्त्वेव विजिज्ञासितव्यमिति विज्ञानं भगवो विजिज्ञास इति ॥ १ ॥ १७ ॥

---

भा॰ वदति न तु ते रूपत्रयव्यतिरेकेण परमार्थतः सन्ति। तथा तान्यपि रूपाणि सदपेक्षया नैव सन्तीत्यतो नाविजानन्सत्यं वदति। विजानन्नेव सत्यं वदति। नच तत्सत्यविज्ञानमविजिज्ञासितमप्रार्थितं ज्ञायत इत्याह। विज्ञानन्त्वेव विजिज्ञासितव्यमिति। यद्येवं विज्ञानं भगवो

---

व्या॰ त्युच्यते। तदविषयत्वापेक्षं भूतद्वयं त्यदिति व्यवह्रियते। तथा च भूतपञ्चकं सच्च त्यच्चेति व्युत्पाद्य सत्यमिति यथोक्तं। तथा तद्बीजभूतयोर्नामरूपयोस्तदात्मकत्वाच्च प्राणानां सत्यत्वं व्यावहारिकमिष्टमित्यर्थः॥ इतश्च प्राणादिषु मिथ्याभूतेष्वपि सत्यश्रुतिरविरुद्धेत्याह। तद्द्वारेणेति॥ प्राणादीनां व्यावहारिकसत्यत्वानुवादद्वारेणाध्यारोपापवादन्यायेन परमार्थसत्यस्य ब्रह्मणोऽवगतिर्विवक्षितेति कृत्वा तेष्वपि सत्यत्वश्रुतिरविरुद्धेत्यर्थः॥ यथोक्तोऽर्थो विवक्षितो बृहदारण्यकश्रुतावित्यत्र गमकमाह। प्राणा वा इति॥ ननु श्रुत्यन्तरे विकारस्यापि व्यावहारिकं सत्यत्वमिष्टं प्रकृते तु न तदिष्यते भूम्न एव सत्यत्वाङ्गीकारात्। तथा च विरोधतादवस्थ्यमत आह। इहापीति॥ यदि प्राणस्यापि व्यवहारतः सत्यत्वमुपगतं किन्तर्हि सनत्कुमारस्य विवक्षितमित्याशङ्क्याह। इह त्विति॥ यदा वै जानातीत्यथ सत्यं वदतीति यद्व्याख्यातं तदन्वयव्यतिरेकाभ्यां स्फुटयन्नादौ व्यतिरेकमाह। नाविजानन्निति॥ परमार्थसत्यमविजानन्नपि वदत्यग्न्यादीनीत्याशङ्क्याह। यस्त्विति॥ तर्हि कथं सदेव परमार्थसत्यमिति वदतोऽभीष्टसिद्धिरित्याशङ्क्याह। न त्विति॥ तान्येव तर्हि रूपाणि पृथग्विद्यन्ते तेनेत्याह। तथेति॥ अतोऽस्य नास्ति सत्यवादित्वमेवेत्युपसंहरति। इत्यत इति॥ व्यतिरेकं दर्शयित्वाऽन्वयमाचष्टे। विजानन्नेवेति॥ अस्तु तर्हि सत्यविज्ञानपूर्व्वकमतिवा-

उ॰ यदा वै मनुतेऽथ विजानाति नामत्वा विजानाति मत्वैव विजानाति मतिस्त्वेव विजिज्ञासितव्येति मतिं भगवो विजिज्ञास इति॥ १॥ १८॥
यदा वै श्रद्दधात्यथ मनुते नाश्रद्दधन्मनुते श्रद्दधदेव मनुते श्रद्धा त्वेव विजिज्ञासितव्येति श्रद्धां भगवो विजिज्ञास इति ॥ १ ॥ १९ ॥

यदा वै निस्तिष्ठत्यथ श्रद्दधाति नानिस्तिष्ठंच्छ्रद्दधाति निस्तिष्ठन्नेव श्रद्दधाति निष्ठा त्वेव विजिज्ञासितव्येति निष्ठां भगवो विजिज्ञास इति ॥ १ ॥ २० ॥

---

भा॰ विजिज्ञास इति। एवं सत्यादीनां चोत्तरोत्तराणां करोत्यन्तानां पूर्व्वपूर्व्वहेतुत्वं व्याख्येयं ॥ १७ ॥

यदा वै मनुत इति। मतिर्मननं तर्को मन्तव्यविषय आदरः ॥ १८ ॥ आस्तिक्यबुद्धिः श्रद्धा ॥ १९ ॥

निष्ठा गुरुशुश्रूषादिस्तत्परत्वं ब्रह्मविज्ञानाय ॥ २० ॥

---

व्या॰ दित्वमित्याशङ्क्याह। न चेति ॥ यद्येवं जिज्ञासाद्वारा सत्यविज्ञानं ज्ञेयमित्येवमिष्टश्चेदित्यर्थः। सत्यवदनं प्रति सत्यविज्ञानस्य यथा कारणत्वमुक्तं तथा पूर्व्वस्य पूर्व्वस्योत्तरमुत्तरं कारणत्वेन द्रष्टव्यमित्यतिदिशति। एवमिति ॥ १७ ॥

विज्ञानकारणीभूतां मतिं व्याचष्टे। मतिरिति ॥ मननहेतुभूतां श्रद्धां व्याकरोति। आस्तीति ॥ १८ ॥ १९ ॥

श्रद्धाहेतुं निष्ठां व्याचष्टे। निष्ठेति ॥ २० ॥

उ॰ यदा वै करोत्यथ निस्तिष्ठति नाकृत्वा निस्तिष्ठति कृत्वैव निस्तिष्ठति कृतिस्त्वेव विजिज्ञासितव्येति कृतिं भगवो विजिज्ञास इति ॥ १ ॥ २१ ॥

यदा वै सुखं लभतेऽथ करोति नासुखं लब्ध्वा करोति सुखमेव लब्ध्वा करोति सुखं त्वेव विजिज्ञासितव्यमिति सुखं भगवो विजिज्ञास इति ॥ १ ॥ २२ ॥

---

भा॰ यदा वै करोति कृतिरिन्द्रियसंयमश्चित्तैकाग्रता कारणस्य । सत्यां हि तस्यां निष्ठादीनि यथोक्तानि सम्भवन्ति विज्ञानावसानानि ॥ २१ ॥

सापि कृतिर्यदा सुखं लभते सुखं निरतिशयं वक्ष्यमाणं लब्धव्यं मयेति मन्यते तदा भवतीत्यर्थः । यथा दृष्टफलसुखात्कृतिस्तथेहापि नासुखं लब्ध्वा करोति। भविष्यदपि फलं लब्ध्वेत्युच्यते । तत्तदुद्दिश्य प्रवृत्त्युपपत्तेः । अथेदानीं कृत्यादिषूत्तरोत्तरेषु सत्सु सत्यं स्वयमेव प्रति-

---

आ॰ निष्ठा निदानं ॥ कृतिं विभजते। कृतिरिति ॥ कथं पुनरेतेषामुत्तरमुत्तरं पूर्व्वस्य पूर्व्वस्य कारणं भवति तत्राह । सत्यं हीति ॥ २१ ॥

कृतिस्तर्हि कुतो भवतीति तत्राह । सापीति॥ यदा सुखं लभते तदा भवतीति सम्बन्धः । ननु सुखलाभस्येन्द्रियसंयमादिव्यतिरेकेणाभावात्कथं सुखलाभाधीना कृतिरित्याशङ्क्याह । सुखमिति ॥ वक्ष्यमाणसुखलब्धव्यत्वाभिमानादेव यथोक्ताकृतिः सिद्ध्यतीत्यर्थः ॥ सुखं लब्ध्वा करोतीत्येतद्दृष्टान्तेन साधयति । यथेति ॥ दृष्टं फलं पुत्रपश्वादि तज्जन्यसुखोद्देशपूर्व्विका लोके

उ॰ यो वै भूमा तत् सुखं नाल्पे सुखमस्ति भूमैव सुखं भूमा त्वेव विजिज्ञासितव्य इति भूमानं भगवो विजिज्ञास इति ॥ १ ॥ २३ ॥

---

भा॰ भासते न तद्विज्ञानाय पृथग्यत्नः कार्य्य इति प्राप्तं तत इदमुच्यते । सुखन्त्वेव विजिज्ञासितव्यमित्यादि । सुखं भगवो विजिज्ञास इत्यभिमुखीभूतायाह ॥ २२ ॥

यो वै भूमा महत् निरतिशयं बह्विति पर्य्यायास्तत्सुखं। ततोऽर्वाक्सातिशयत्वादल्पं । अतस्तस्मिन्नल्पे सुखं नास्ति । अल्पस्याधिकतृष्णाहेतुत्वात् । तृष्णा च दुःखबीजं । न हि दुःखबीजं सुखं दृष्टं ज्वरादि लोके । तस्माद्युक्तं नाल्पे सुखमस्तीति । अतो भूमैव सुखं । तृष्णादिदुःखबीजत्वासम्भवाद्भूम्नः ॥ २३ ॥

---

व्या॰ कृतिर्दृष्टा । तथात्मन्यपि सुखं लब्ध्वैव करोति न तु विना तदुद्देशमित्यर्थः । नन्विन्द्रियाणां मनसश्च संयमपूर्व्वकं सुखं भवति तथा च कथं तल्लब्ध्वा करोतीत्युच्यते तत्राह । भविष्यदपीति ॥ उत्तरग्रन्थमाकाङ्क्षापूर्व्वकमुत्थापयति । अथेत्यादिना ॥ २२ ॥

भूम्नोऽर्व्वागपि वैषयिकं सुखमस्तीत्याशङ्क्याह । ततोऽर्व्वागिति ॥ कथमल्पत्वेऽपि सुखत्वं वार्य्यते तत्राह । अल्पस्येति ॥ दुःखरूपां तृष्णां प्रत्यल्पस्य सुखस्य हेतुत्वेऽपि कथं स्वयं सुखं न भवतीत्याशङ्क्याह । न हीति ॥ अल्पस्य सुखस्य दुःखान्तर्भावे सिद्धे फलितमाह । अत इति ॥ २३ ॥

उ॰ यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा अथ यत्रान्यत्पश्यत्यन्यच्छृणो-

---

भा॰ किंलक्षणोऽसौ भूमेत्याह । यत्र यस्मिन् भूम्नि तत्त्वे नान्यद्द्रष्टव्यमन्येन करणेन द्रष्टाऽन्यो विभक्तो दृश्याद-न्यत्पश्यति तथा नान्यच्छृणोति । नामरूपयोरेवान्तर्भावा-द्विषयभेदस्य । तद्ग्राहकयोरेवेह दर्शनश्रवणयोर्ग्रहणं । अन्येषाञ्चोपलक्षणार्थत्वेन मननन्त्वत्रोक्तं द्रष्टव्यं । नान्यन्म-नुत इति । प्रायशो मननपूर्व्वकत्वाद्विज्ञानस्य । तथा नान्य-द्विजानाति । एवंलक्षणो यः स भूमा । किमत्र प्रसि-द्धान्यदर्शनाभावो भूमोच्यते नान्यत्पश्यतीत्यादिना । अथान्यं न पश्यत्यात्मानं पश्यतीत्येतत् । किञ्चातो यद्यन्य-दर्शनाद्यभावमात्रमित्युच्यते तदा द्वैतसंव्यवहारविल-

---

व्या॰ भूम्नः सविशेषत्वं निर्विशेषत्वं वेति प्रश्नपूर्व्वकं निर्व्विशेषत्वं नि-र्द्धारयति । किमित्यादिना ॥ नान्यच्छृणोति स भूमेति सम्बन्धः । कि-मिति स्पर्शनादिष्वपि सत्सु दर्शनश्रवणयोरेव निषेध्यत्वेनात्र ग्रहण-मित्याशङ्क्याह । नामेति ॥ अनुक्तानां स्पर्शादीनामुपलक्षणार्थत्वेनात्र द्वयोर्ग्रहणं स्पर्शनाद्यविषयत्वस्यापि भूम्नि भावादित्याह । अन्ये-षामिति ॥ अत्रेति लक्षणवाक्योक्तिः ॥ तत्र हेतुमाह । प्रायश इति ॥ यस्मिन्नधिकरणे तत्त्वविचारणायामन्योऽन्यं न पश्यति न शृणोति न मनुते न विजानाति स भूमेति द्रष्टृदृश्यादिविकल्पनिषेधेना-ध्यासाधिकरणत्वोपलक्षितस्य विकल्पाविषयत्वमेव भूमलक्षणमि-त्युपसंहरति । एवमिति ॥ उक्तमेव लक्षणं स्फुटयितुं विमृशति । किमत्रेति ॥ लोकप्रसिद्धदर्शनादिविषयत्वाभावमात्रं भूम्नो लक्षणं तन्निषेधेन स्वज्ञेयत्वं वेति विमर्शार्थः ॥ कस्मिन्पक्षे को लाभः को वा दोष इति शिष्यः पृच्छति । किञ्चात इति ॥ आद्यमनूद्य

उ॰ त्यन्यद्विजानाति तदल्पं यो वै भूमा तदमृतमथ यदल्पं तन्मर्त्यꣳ स भगवः कस्मिन् प्रतिष्ठित

भा॰ लक्षणो भूमेत्युक्तं भवति। अथान्यदर्शनविशेषप्रतिषेधेनात्मानं पश्यतीत्युच्यते। तदेकस्मिन्नेव क्रियाकारकफलभेदोऽभ्युपगतो भवेत्। यद्येवं को दोषः स्यात्। नन्वयमेव दोषः संसारानिवृत्तिः। क्रियाकारकफलभेदो हि संसार इति। आत्मैकत्व एव क्रियाकारकफलभेदः संसारविलक्षण इति चेत्। न। आत्मनो निर्विशेषैकत्वाभ्युपगमे दर्शनादिक्रियाकारकफलभेदाभ्युपगमस्य शब्दमात्रत्वात्। अन्यदर्शनाद्यभावोक्तिपक्षेऽपि यत्रेत्यन्यन्नपश्यतीति च विशेषणेऽनर्थके स्यातामिति चेत्। दृश्यते हि लोके। यत्र शून्ये गृहेऽन्यन्न पश्यतीत्युक्ते स्तम्भादनात्मानं च न न पश्यतीति गम्यते। एव-

आ॰ तत्र लाभं दर्शयति। यदीति॥ अन्यस्य प्रसिद्धस्य दर्शनादेर्विषयत्वं भूम्नि नास्तीत्येतावन्मात्रं तस्य लक्षणमित्युच्यते चेत्सर्वविकल्पातीतः प्रत्यगात्मा भूमेत्यस्मत्पक्षसिद्धिरित्यर्थः॥ द्वितीयं पक्षमनूद्य तस्मिन्दोषं सूचयति। अथेत्यादिना॥ तमेव दोषं प्रश्नपूर्वकं स्फुटयति। यद्येवमित्यादिना॥ सति क्रियाकारकफलभेदे कथं संसारानिवृत्तिस्तत्राह। क्रियेति॥ सति भेदे क्रियादेः संसारत्वं लोके दृष्टं तद्वैलक्षण्यादेकस्मिन्नेव क्रियाकारकभावस्य न संसार इति चोदयति। आत्मैकत्व इति॥ एकस्मिन्क्रियादिभेदस्यासम्भवं दर्शयन्नुत्तरमाह। नात्मन इति॥ द्वितीयपक्षस्य दुष्टत्वे स्पष्टीकृते प्रथमपक्षस्यापि समानदुष्टत्वमिति शिष्यः शङ्कते। अन्येति॥ आद्यपक्षेऽपि न पश्यतीत्येतावतैव दर्शनाद्यभावाद्यत्रेत्यन्यदिति च विशेषणे व्यर्थे स्यातामित्यर्थः॥ व्यर्थमेवेदृशं वचनमित्याशङ्क्य शिष्यः स्वयमेव ब्रूते। दृश्यते हीति॥ लोके

उ॰ इति स्वे महिम्नि यदि वा न महिम्नीति ॥ १ ॥

भा॰ मिह्वापीति चेत् । न । तत्त्वमसीत्येकत्वोपदेशादधिकरणाधिकर्त्तव्यभेदानुपपत्तेः । तथा सदेकमेवाद्वितीयं सत्यमिति षष्ठे निर्द्धारितत्वात् । अदृश्येऽनात्म्ये न सन्दृशे तिष्ठति रूपमस्य विज्ञातारमरे केन विजानीयादित्यादिश्रुतिभ्यः स्वात्मनि दर्शनाद्यनुपपत्तिः । यत्रेति विशेषणमनर्थकं प्राप्तमिति चेत् । न । अविद्याकृतभेदापेक्षत्वात् । यथा सत्यैकत्वाद्वितीयत्वबुद्धिं प्रकृतावपेक्ष्य सदेकमेवाद्वितीयमिति सङ्ख्याद्यनर्थमप्युच्यते । एवं भूम्न्येकस्मिन्नेव यत्रेति विशेषणं । अविद्यावस्थायामन्यदर्शनानुवादेन च भूम्नि । अतस्तद्भावत्वलक्षणस्य विवक्षितत्वान्नान्यत्पश्यतीति विशेषणं । तस्मात्संसारव्यवहारो भूम्नि नास्तीति समुदायार्थः । अथ यत्रा-

आ॰ हि यत्र शून्ये गृहे नान्यत्पश्यति तद्देवदत्तीयमिति प्रयोगो दृश्यते नच तस्य नैरर्थक्यमिष्टं । व्यवहाराङ्गत्वाद्यथोक्तं धनधान्याद्यदर्शनेऽपि स्तम्भादीन् गृहस्थ न न पश्यतीतिश्रुतस्य नैरर्थक्यं न गम्यते । किन्तु स्तम्भादीनां तस्य च दर्शनमिष्टं । तथा यत्र नान्यत्पश्यतीत्यत्रापि विशेषणवैयर्थ्ये समाधानं वक्तव्यमित्यर्थः ॥ किं विशेषणार्थवत्त्वानुपपत्त्या भूम्न्यधिकरणाधिकर्त्तव्यभावः स्वात्मदर्शनं च वाच्यमित्युच्यते किं वा श्रुतस्य गतिर्वक्तव्येति पृच्छते चेत्तत्राद्यं दूषयति । नेत्यादिना ॥ तथा तत्त्वमसीति वदित्यर्थः । निर्द्धारितत्वादधिकरणाधिकर्त्तव्यभेदानुपपत्तिरिति शेषः ॥ यत्रान्यन्न पश्यतीति विशेषणादात्मनः स्वदर्शनं वाच्यमिति तत्राह । अदृश्य इति ॥ द्वितीयमनूद्य गतिमाह । यत्रेत्यादिना ॥ परिहारभागं दृष्टान्तेन स्पष्टयति । यथेति ॥ एकस्मिन्नेव भूम्नि यत्रेति विशेषणमनर्थमपि प्रयुज्यते । प्रसिद्धानुवादेनाधिकरणादिविकल्पाविषयत्व-

उ० गोअश्वमिह महिमेत्याचक्षते हस्तिहिरण्यं दास-

भा० विद्याविषयेऽन्योन्येनान्यत्पश्यतीति तदल्पमविद्याकालभावि इत्यर्थः। यथा स्वप्नदृश्यं वस्तु प्राक् प्रतिबोधात्तत्कालभावीति तद्वत्। तत एव तन्मर्त्यं विनाशि स्वप्नवस्तुवदेव तद्विपरीतो भूमा यस्तदमृतं। तच्छब्दोऽमृतत्वपरः। स तर्ह्येवंलक्षणो भूमा हे भगवन् कस्मिन् प्रतिष्ठित इत्युक्तवन्तं नारदं प्रत्याह सनत्कुमारः। स्वे महिम्नीति स्वे आत्मीये महिम्नि माहात्म्ये विभूतौ प्रतिष्ठितो भूमा। यदि प्रतिष्ठामिच्छसि क्वचित् यदि वा परमार्थमेव पृच्छसीति न महिम्न्यपि प्रतिष्ठित इत्यवोचाम। अप्रतिष्ठितोऽनाश्रितो भूमा क्वचिदपीत्यर्थः। यदि स्वमहिम्नि प्रतिष्ठो भूमा कथं तर्ह्यप्रतिष्ठ उच्यते। शृणु। गोऽश्वादि

व्या० लक्षणस्य भूम्नो लक्षणस्य विवक्षितत्वादित्याह। एवमिति॥ यदविद्यावस्थमन्यदर्शनादि तदनुवादेन नान्यत्पश्यतीति विशेषणाच्च भूम्नि न विरुध्यते। दर्शनाद्यविषयत्वलक्षणस्य भूम्नो लक्षणस्य विवक्षितत्वादित्याह। अविद्येति॥ लक्षणवाक्यार्थमुपसंहरति। तस्मादिति॥ दर्शनादिसकलसांसारिकव्यवहाराभावोपलक्षितं तत्त्वं भूमेत्यर्थः॥ अथ यत्रेत्यादिवाक्यं व्याकरोति। अथेति॥ परिच्छिन्नस्याविद्याकालभावित्वं दृष्टान्तेन विवृणोति। यथेति॥ तत एव परिच्छिन्नत्वादिति यावत्। कथं तदमृतमिति भूम्नि तच्छब्दप्रयोगस्तत्राह। तच्छब्द इति॥ भूम्नः सुखत्ववचनात्तस्य चाश्रयं पृच्छति। स तर्हीति॥ व्यवहारदृष्ट्या प्रश्नो वस्तुदृष्ट्या वेति विकल्प्याद्यं प्रत्याह। इत्युक्तवन्तमिति॥ द्वितीयमनूद्य निराकरोति। यदीति॥ पूर्वापरविरोधमाशङ्क्य परिहरति। यदीत्यादिना॥ भूम्नः स्वतोऽन्यस्मिन् प्रतिष्ठितत्वाभावोऽत्रेत्युच्यते

उ॰ भार्य्यं क्षेत्राण्यायतनानीति नाहमेवं ब्रवीमि ब्रवीमीति ह होवाचान्यो ह्यन्यस्मिन् प्रतिष्ठित इति ॥ २ ॥ २४ ॥

स एवाधस्तात् स उपरिष्टात् स पश्चात् स पुरस्तात् स दक्षिणतः स उत्तरतः स एवेदꣳ सर्व-

---

भा॰ इह महिमेत्याचक्षते । गावश्वाश्वाश्च गोऽश्वं द्वन्द्वैकवद्भावः । सर्व्वत्र गवाश्वादिमहिमेति प्रसिद्धं । तदाश्रितस्तत्प्रतिष्ठश्चैत्रो भवति । यथा नाहमेवं स्वतोऽन्यं महिमानमाश्रितो भूमा चैत्रवदिति । ब्रवीम्यत्र हेतुत्वेनान्यो ह्यन्यस्मिन् प्रतिष्ठित इति व्यवहितेन सम्बन्धः ॥ किन्त्वेवं ब्रवीमीति होवाच स एवेत्यादि ॥ २४ ॥

कस्मात्पुनः क्वचिन्न प्रतिष्ठित इत्युच्यते । यस्मात्स एव भूमा । अधस्तान्न तद्व्यतिरेकेणान्यद्विद्यते यस्मिन् प्रतिष्ठितः स्यात् । तथोपरिष्टादित्यादि समानं । सति भूम्नोऽन्यस्मिन् भूमा हि प्रतिष्ठितः स्यान्न तु तदस्ति । स एव तु सर्व्वं । अतस्तस्मादसौ न क्वचित्प्रतिष्ठितः । यत्र नान्यत्पश्यतीत्यधिकरणाधिकर्त्तव्यतानिर्द्देशात्स एवाधस्तादिति च परोक्ष-

---

व्या॰ तत्रान्यो हीत्यादिवाक्यस्य हेतुना तेन व्यवहितेनाहमेवं ब्रवीमीत्यस्य सम्बन्धमिति योजना ॥ कथं तर्हि ब्रवीति भवानित्याशङ्क्याह । किन्त्विति ॥ २४ ॥

अवतारितमेव वाक्यं प्रश्नपूर्व्वकमवतार्य्य व्याचष्टे । कस्मादित्यादिना ॥ उक्तमेवार्थं व्यतिरेकद्वारा विवृणोति । सतीति ॥ अहङ्कारात्मत्वोपदेशस्याभिप्रायमाह । यत्रेति ॥ कोऽसावह-

उ॰ मित्यथातोऽहङ्कारादेश एवाहमेवाधस्तादहमुपरिष्टादहं पश्चादहं पुरस्तादहं दक्षिणतोऽहमुत्तरतोऽहमेवेदꣳ सर्व्वमिति ॥ १ ॥ अथात आत्मादेश एव आत्मैवाधस्तादात्मोपरिष्टादात्मा

---

भा॰ निर्द्देशात्। द्रष्टुर्जीवादन्यो भूमा स्यादित्याशङ्का कस्यचिन्माभूदिति। अथातोऽनन्तरमहङ्कारेणादिश्यत इत्यहङ्कारादेशः। द्रष्टुरन्यत्वदर्शनार्थं भूमैव निर्द्दिश्यतेऽहङ्कारेणाहमेवाधस्तादित्यादिना। अहङ्कारेण देहादिसङ्घातोऽप्यादिश्यतेऽविवेकिभिरित्यतस्तदाशङ्का मा भूदिति। अथानन्तरमात्मादेश आत्मनैव केवलेन सत्स्वरूपेण शुद्धेनादिश्यते। आत्मैव सर्व्वतः सर्व्वमित्येवमेकमजं सर्व्वतो व्योमवत्पूर्णमन्यशून्यं पश्यन् स वा एष विद्वान्मननविज्ञानाभ्यामात्मरतिरात्मन्येव रतीरमणं यस्य सोऽयमात्मरतिस्तथात्मक्रीडः। देहमात्रसाधना रतिर्वाह्यसाधना क्रीडा। लोके स्त्रीभिः सखिभिश्च क्रीडतीति दर्शनात्। न

---

आ॰ ङ्कारेणादिश्यत इत्याशङ्क्य प्रयोजनानुवादपूर्व्वकमाह। द्रष्टुरिति॥ अहङ्कारादेशात् एथगात्मादेशस्य तात्पर्य्यमाह। अहङ्कारेणेति॥ उक्तात्मविज्ञानवतः कृतकृत्यतामाह। आत्मैवेति॥ एकमिति सजातीयभेदराहित्यस्योक्तिः॥ अन्यशून्यमिति विजातीयभेदशून्यत्वमुच्यते॥ रत्यात्मक्रीडयोरवान्तरभेदं दर्शयति। देहमात्रेणेति॥ क्रीड़ा वाह्यसाधनेत्यत्र लोकसम्मतिमाह। लोक इति॥ देहस्य जीविते च भोगत्यागयोश्च निमित्तं वाह्यवस्तु तत्र सर्व्वत्र निरपेक्षो यदृच्छालाभेश्वासङ्गवर्जितो विद्वानि-

उ० पश्चादात्मा पुरस्तादात्मा दक्षिणत आत्मोत्तरत आत्मैवेदꣳ सर्वमिति स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराड्भवति तस्य सर्वेषु

---

भा० तथा विदुषः किन्त्वात्मविज्ञाननिमित्तमेवोभयं भवतीत्यर्थः। मिथुनं द्वन्द्वजनितं सुखं तदपि द्वन्द्वनिरपेक्षं यस्य विदुषस्तथानन्दः शब्दादिनिमित्तः। आनन्दोऽविदुषां न तथाऽस्य विदुषः किन्त्वात्मनिमित्तमेव सर्वं सर्व्वदा सर्व्वप्रकारेण च। देहजीवितभोगादिनिमित्तबाह्यवस्तुनिरपेक्ष इत्यर्थः। स एवंलक्षणो विद्वान् जीवन्नेव स्वाराज्येऽभिषिक्तः। पतितेऽपि देहे स्वराडेव भवति। यत एवम्भवति तत एव तस्य सर्व्वेषु लोकेषु कामचारो भवति। प्राणादिषु पूर्व्वभूमिषु तत्रास्येति तावन्मात्रपरिच्छिन्नकामचारित्वमुक्तमन्यराजत्वं चार्थप्राप्तं सातिशयत्वाद्यथा प्राप्तस्वाराज्यकामचारत्वानुवादेन ततस्तन्निवृत्तिरिहोच्यते स स्वराडित्यादिना। अथ पुनर्येऽन्यथाऽत उक्तदर्शनादन्यथा वैपरीत्येन यथोक्तमेव वा सम्यङ्

---

आ० त्याह। देहेति॥ जीवन्मुक्तिमुक्त्वा विदेहमुक्तिं दर्शयति। स इति॥ स्वाराज्यं निमित्तीकृत्य फलान्तरमाह। यत एवमिति॥ स्वाराज्यसर्व्वलोककामचारयोस्तात्पर्य्यमाह। प्राणादिष्विति॥ यावन्नामो गतं तत्रास्य यथाकामचारो भवतीत्यादिना परिच्छिन्नं परतन्त्रञ्च पूर्व्वभूमिषु फलमुक्तमत्र तु परमानन्दप्राप्तौ तद्व्यावृत्तिरुच्यते न तु सोपाधिकं रूपमित्यर्थः।

उ० लोकेषु कामचारो भवति । अथ येऽन्यथातो विदुरन्यराजानस्ते क्षय्यलोका भवन्ति तेषाᳪं सर्वेषु लोकेष्वकामचारो भवति ॥ २॥ २५ ॥

तस्य ह वा एतस्यैवं पश्यत एवं मन्वानस्यैवं विजानत आत्मतः प्राण आत्मत आशा-

---

भा० विदुस्तेऽन्यराजानो भवन्ति । अन्यः परो राजा स्वामी एषां तेऽन्यराजानस्ते । किञ्च क्षय्यलोकाः क्षयो लोक एषां ते क्षय्यलोकाः । भेददर्शनस्याल्पविषयत्वादल्पञ्च तन्मर्त्यमित्यवोचाम । तस्माद्ये द्वैतदर्शिनस्ते क्षय्यलोकाः स्वदर्शनानुरूप्येणैव भवन्त्यत एव तेषां सर्व्वेषु लोकेष्वकामचारो भवति ॥ २५ ॥

तस्य ह वा एतस्येत्यादि स्वाराज्यं प्राप्तस्य प्रकृतस्य विदुष इत्यर्थः । प्राक्सदात्मविज्ञानात्स्वात्मनोऽन्यस्मात्सतः प्राणादेर्नामान्त्यन्तोत्पत्तिप्रलयावभूतां सदात्मविज्ञाने तु सतीदानीं स्वात्मत एव संवृत्तौ तथा सर्व्वोऽप्यन्यो-व्यवहार आत्मत एव विदुषः । किञ्च तदेतस्मिन्नर्थे

---

व्या० फलप्रदर्शनद्वारेण स्तुत्वा विद्यामविद्वन्निन्दाद्वारायितां स्तौति । अथेत्यादिना । ते क्षय्यलोका भवन्तीति सम्बन्धः ॥ भेददर्शिनां विनाशिफलवत्त्वे हेतुमाह । भेददर्शनस्येति ॥ परिच्छिन्नस्य विनाशित्वं वचनं तस्मादिति परामृशति ॥ २५ ॥

उक्तविद्यास्तुत्यर्थमेव विदुषः सर्वात्मत्वमाह । तस्येति ॥ तथा विदुषः सर्वात्मत्ववद्व्यवहारवदित्यर्थः । क्रीडादिरन्यो व्यवहारो न केवलं ब्राह्मणोक्तमिह विद्याफलं किन्तु मन्त्रोक्तमपीत्याह ।

उ॰ ऽऽत्मतः स्मर आत्मत आकाश आत्मतस्तेज आत्मत आप आत्मत आविर्भावतिरोभावावात्मतोऽन्नमात्मतो बलमात्मतो विज्ञानमात्मतो ध्यानमात्मतश्चित्तमात्मतः सङ्कल्प आत्मतो मन आत्मतो वागात्मतो नामात्मतो मन्त्रा आत्मतः कर्म्माण्यात्मत एवेदꣳ सर्व्वमिति॥ १॥ तदेष श्लोको

---

भा॰ एष श्लोको मन्त्रोऽपि भवति। न पश्यः पश्यतीति। पश्यो यथोक्तदर्शी विद्वानित्यर्थः। मृत्युं मरणं। रोगं ज्वरादि। दुःखतां दुःखभावञ्चापि न पश्यति। सर्व्वं ह सर्व्वमेव स पश्यः पश्यत्यात्मानमेव सर्व्वं ततः सर्व्वमाप्नोति सर्व्वशः सर्व्वप्रकारैरिति। किञ्च स विद्वान् प्राक्सृष्टिप्रभेदादेकधैव भवत्येकधैव च सन् त्रिधादिभेदैरनन्तभेदप्रकारो भवति सृष्टिकाले। पुनः संहारकाले मूलमेव स्वं पारमार्थिकमेकधाभावं प्रतिपद्यते। स्वतन्त्र एवेति विद्यां फलेन प्ररोचयन् स्तौति। अथेदानीं यथोक्ताया विद्यायाः सम्यगवभासकारणं मुखावभासकारणस्येवादर्शस्य विशु-

---

व्या॰ किञ्चेति। तच्छब्दार्थः सप्तम्या निर्द्दिश्यते। स च विद्याफलरूपः॥ न पश्य इति मन्त्रमादाय व्याचष्टे। पश्यतीत्यादिना॥ सर्व्वमाप्नोतीति पूर्णतापरिच्छेदभ्रमव्यावर्त्तनेन विवक्षिता न तु कृमिकीटकादिभावोऽपुरुषार्थत्वप्रसङ्गादिति द्रष्टव्यं॥ विद्यास्तुतिपौष्कल्यार्थं सगुणविद्याफलमपि निर्गुणब्रह्मविदाप्नोतीत्याह। किञ्चेति॥ त्रिधा तेजोबन्नरूपेण। शब्दस्पर्शादिरादिशब्दार्थः। विद्यां तत्फलं तदपेक्षितां स्तुतिञ्चाभिधायाहारशुद्धाविव्यादे-

उ० न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताᳪं सर्वᳪं ह पश्यः पश्यति सर्वमाप्नोति सर्वश इति स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा नवधा चैव पुनश्चैकादशः स्मृतः शतञ्च दश चैकञ्च सहस्राणि च विᳪंशतिराहारशुद्धौ सत्वशुद्धिः

---

भा० द्धिकारणं साधनमुपदिश्यते आहारशुद्धौ। आह्रियत इत्याहारः शब्दादिविषयज्ञानं। भोक्तुर्भोगायाह्रियते तस्य विषयोपलब्धिलक्षणस्य विज्ञानस्य शुद्धिराहारशुद्धीरागद्वेषमोहदोषैरसंसृष्टविषयविज्ञानमित्यर्थः। तस्यामाहारशुद्धौ सत्यां तद्वतोरन्तःकरणस्य सत्त्वस्य शुद्धिर्नैर्मल्यं भवति। सत्त्वशुद्धौ च सत्यां यथावगते भूमात्मनि ध्रुवाऽविच्छिन्ना स्मृतिरवस्मरणं भवति। तस्याञ्च लब्धायां स्मृतिलम्भे सति सर्व्वेषामविद्याकृतानर्थपाशरूपाणामनेकजन्मान्तरानुभवभावनाकठिनीकृतानां हृदयाश्रयाणां ग्रन्थीनां विप्रमोक्षविशेषेण मोक्षणं विनाशो भवतीति। यत एतदुत्तरोत्तरं यथोक्तमाहारशुद्धिमूलं तस्मात्सा कार्य्येत्यर्थः। सर्व्वं शास्त्रार्थमशेषत उक्त्वाऽऽख्या-

---

ध्या० स्तात्पर्य्यमाह। आयेति॥ रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन्नित्यादिस्मृतिमाश्रित्याहारशब्दं व्याकरोति। आह्रियत इतीति॥ कथं तस्याह्रियमाणत्वं तत्राह। भोक्तुरिति॥ कीदृशी तस्य शुद्धिरित्याशङ्क्याह। रागेति॥ आहारशुद्धिफलमाह। तस्यामिति॥ अन्तःकरणशुद्धिफलं कथयति। सत्त्वेति॥ स्मृतिलाभफलं दर्शयति। तस्याञ्चेति॥ भवतीत्याहारशुद्धिरपेक्षि-

उ० सत्त्वशुद्धौ ध्रुवा स्मृतिः स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षस्तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान्सनत्कुमारस्तꣳ स्कन्द इत्याचक्षते तꣳ स्कन्द इत्याचक्षते ॥ २ ॥ २६ ॥ इति सप्तमः प्रपाठकः समाप्तः ॥ ७ ॥

---

भा० थिकामुपसंहरति श्रुतिः। तस्मै मृदितकषायाय वार्क्षारादिरिव कषायो रागद्वेषादिदोषः सत्त्वस्य रञ्जनारूपत्वात्स ज्ञानवैराग्याभ्यासरूपक्षालेन क्षालितो मृदितो विनाशितो यस्य नारदस्य तस्मै योग्याय मृदितकषायाय तमसोऽविद्यालक्षणात्पारं परमार्थतत्त्वं दर्शयति दर्शितवानित्यर्थः। कोऽसौ भगवानुत्पत्तिं प्रलयञ्चैव भूतानामागतिं गतिं वेत्ति विद्यामविद्याञ्च स वाच्यो भगवानित्येवंधर्मा सनत्कुमारः। तमेव सनत्कुमारं देवं स्कन्द इत्याचक्षते कथयन्ति तद्विदः। द्विवचनमध्यायपरिसमाप्त्यर्थं ॥ २६ ॥ इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्य्यस्य श्रीशङ्करभगवतः कृतौ छान्दोग्योपनिषद्विवरणे सप्तमः प्रपाठकः समाप्तः ॥ ७ ॥

---

व्या० वेत्ति प्रेषः ॥ प्रकृतवाक्यतात्पर्य्यमुपसंहरति । यत इति ॥ तस्मै मृदितकषायायेत्यादिवाक्यमवतार्य्य व्याचष्टे । सर्व्वमिति ॥ आगतिं गतिमायव्ययौ। तस्य च वैशिष्ट्यान्तरमाह । तमेवेति ॥ ॥ २६॥ इति श्रीमत्परमहंसपरिव्राजकाचार्य्यश्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानकृतायां छान्दोग्यभाष्यटीकायां सप्तमोऽध्यायः समाप्तः ॥ ७ ॥

उ॰ ॥ हरिः ॐ ॥ अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाश-

भा॰ ॐ परमात्मने नमः ॥ यद्यपि दिग्देशकालादिभेद-शून्यं ब्रह्म सदेकमेवाद्वितीयमात्मैवेदं सर्व्वमिति षष्ठसप्त-मयोरधिगतं तथापीह मन्दबुद्धीनां दिग्देशादिभेद-वद्वस्त्विव्येवं भाविता बुद्धिर्न शक्यते सहसा परमार्थवि-षयीकर्त्तुमित्यनधिगम्य च ब्रह्म न पुरुषार्थसिद्धिरिति तदधिगमाय हृदयपुण्डरीकदेश उपदेष्टव्यः। यद्यपि सत्सम्यक्प्रत्ययैकविषयं निर्गुणञ्चात्मतत्त्वं तथापि मन्द-बुद्धीनां गुणवत्त्वस्येष्टत्वात्सत्यकामादिगुणवत्त्वञ्च वक्तव्यं। तथा यद्यपि ब्रह्मविदां स्त्र्यादिविषयेभ्यः स्वयमुपरमो भवति तथाप्यनेकजन्मविषयसेवाभ्यासजनिता विषयवि-षया तृष्णा न सहसा निवर्त्तयितुं शक्यत इति ब्रह्मचर्य्या-दिसाधनविशेषो विधातव्यः। तथा यद्यप्यात्मैकत्वविदां

व्या॰ पूर्व्वस्मिन्नध्यायद्वये निर्व्विशेषमात्मतत्त्वमनवच्छिन्नं सदा-दन्द्वैकतानमावेदितं तथा चोपनिषदारम्भेचरितार्थं किमव-शिष्यते यदर्थमध्यायान्तरमित्याशङ्क्याह। यद्यपीति॥ कर्त्तुमिति तदधिगमाय विशिष्टोपदेश उपदेष्टव्य इति सम्बन्धः। मन्द-बुद्धीनां तर्हि परमार्थवस्तुनो ब्रह्मणोऽधिगतिरपेक्षितेत्यर्थः॥ न केवलं मन्दाधिकारिणां ब्रह्माधिगमशेषत्वेन हृदयदेश उपदेश एवात्र कर्त्तव्यः किन्तु पूर्व्वत्रानुक्तगुणाद्यर्थान्तरोपदेशस्य कार्य्य इ-त्याह। यद्यपीति॥ एवमिष्टमर्थान्तरमुपदेष्टव्यमन्वाचष्टे। तथेति॥ मन्दधियां ब्रह्मधीशेषत्वेन देशविशेषवद्गुणविशेषवच्च ब्रह्मचर्य्या-दिसाधनविशेषो विधातव्य इति सम्बन्धः। शब्दोत्थब्रह्मज्ञानवतां

उ० स्तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यमिति ॥ १ ॥ तञ्चेद्ब्रूयुर्यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः

---

भा० गन्तृगमनगन्तव्याभावादविद्यादिशेषस्थितिनिमित्तक्षये गगन इव विद्युदुद्भूत इव वायुर्दग्धेन्धन इवाग्निः स्वात्मन्येव निवृत्तिस्तथापि गन्तृगमनादिवासितबुद्धीनां हृदयदेशगुणविशिष्टब्रह्मोपासकानां मूर्द्धन्यया नाड्या गतिर्वक्तव्येत्यष्टमः प्रपाठक आरभ्यते। दिग्देशगुणगतिफलभेदशून्यं हि परमार्थसत् अद्वयं ब्रह्म मन्दबुद्धीनामसदिव प्रतिभाति। सन्मार्गस्थास्तावद्भवन्तु ततः शनैः परमार्थसदपि ग्राहयिष्यामीति मन्यते श्रुतिः। अथानन्तरं यदिदं वक्ष्यमाणं दहरमल्पं पुण्डरीकं पुण्डरीकसदृशं वेश्म इव वेश्म द्वारपालादिमत्त्वात्। अस्मिन् ब्रह्मपुरे

---

व्या० विधिं विनापि विषये वैमुख्यसम्भवात्किं विधिनेत्याशङ्क्याह। यद्यपि ब्रह्मविदामिति॥ तथा साधनविशेषो वक्तव्योऽवशिष्यते तथोपासकानां गतिश्च वक्तव्येत्यवशिष्टमर्थान्तरमाह। तथेति॥ एकत्वदर्शिनां गन्त्रादिसर्व्वभेदप्रत्ययास्तमयादविद्यादिशेषस्य देहस्थितिनिमित्तस्य क्षये सति स्वात्मन्येव निवृत्तिसम्भवात्कुतो गतिर्वक्तव्येत्याशङ्क्याह। यद्यप्यात्मैकत्वविदामिति॥ अविद्यादिशेषस्थितिनिमित्तक्षये स्वात्मन्येव निवृत्तिरित्युत्तरेण सम्बन्धः। स्वात्मनिर्व्वाणेऽपि ह्रतकरूपत्यागेन स्वाभाविकस्वरूपावस्थानमित्यत्र दृष्टान्तमाह। गगन इवेति॥ अनेकोदाहरणोपादानं बुद्धिसौकर्य्यार्थं॥ उक्तमेवाध्यायतात्पर्य्यं सङ्क्षिप्य दर्शयति। दिग्देशेति॥ दिशा देशेन गुणैर्गत्या फलभेदेन च शून्यं तदवच्छिन्नमिति यावत्॥ तस्य दिगाद्यनवच्छिन्नत्वे हेतुमाह। अद्वय-

उ॰ किन्तदत्र विद्यते यदन्वेष्टव्यं यद्वाव विजिज्ञासि-

---

भा॰ ब्रह्मणः परस्य पुरं । राज्ञोऽनेकप्रकृतिमद्यथा पुरं तथे-
दमनेकेन्द्रियमनोबुद्धिभिः स्वाम्यर्थकारिभिर्युक्तमिति ब्रह्म-
पुरं । पुरे च वेश्म राज्ञो यथा तथा तस्मिन् ब्रह्मपुरे
शरीरे दहरं वेश्म ब्रह्मण उपलब्ध्यधिष्ठानमित्यर्थः ।
यथा हि विष्णोः शालग्रामः । अस्मिन् हि स्वविकार-
शुङ्गे देहे नामरूपव्याकरणाय प्रविष्टं सदाख्यं ब्रह्म
जीवेनात्मनेत्युक्तं । तस्मादस्मिन् हृदयपुण्डरीके वेश्मनि
उपसंहृतकरणैर्बाह्यविषयविरक्तैर्विशेषतो ब्रह्मचर्य्यसत्यसा-
धनाभ्यां युक्तैर्वक्ष्यमाणगुणवद्ध्यायमानैर्ब्रह्मोपलभ्यत इति
प्रकरणार्थः । दहरोऽल्पतरोऽस्मिन्दहरे वेश्मनि वेश्मनो
ऽल्पत्वात्तदन्तर्वर्त्तिनोऽल्पतरत्वं वेश्मनः । अन्तराकाश आ-
काशाख्यं ब्रह्म । आकाशो वै नामेति हि वक्ष्यति ।

---

आ॰ मिति ॥ तर्हि तेषां भ्रमापोहार्थं परमार्थसदद्वयं ब्रह्म ग्राह्य-
यितव्यं किमित्यन्यथोपदिश्यते तत्राह । सन्मार्गस्था इति ॥
अध्यायतात्पर्य्यं सङ्क्षेपविस्ताराभ्यां दर्शयित्वा श्रुत्यक्षराणि व्याक-
रोति । अथेत्यादिना ॥ उत्तमबुद्धीन्प्रति निर्व्विशेषब्रह्मोपदेशा-
नन्तरं मन्दबुद्धीन्प्रति सविशेषमुपदिश्यते ब्रह्मेत्यर्थः ॥ तत्र
तावदुपास्त्यायतनं निर्द्दिशति । यदिदमिति ॥ हृदयपुण्डरीकस्य
वेश्मसादृश्ये हेतुमाह । द्वारपालादीति ॥ तस्य ह वा एतस्य
पञ्च देवसुषय इत्यादिश्रुतेरुक्तहेतुसिद्धिः ॥ तस्यार्थं दर्शयति ।
अस्मिन्निति ॥ शरीरस्य ब्रह्मपुरत्वं दृष्टान्तेन साधयति । राज्ञ
इति ॥ तत्रोक्तवेश्मदृष्टान्तेन स्पष्टयति । पुरे चेति ॥ कथं पुनः
सर्व्वगतस्य निरवयवस्य ब्रह्मणो यथोक्तवेश्मनिष्ठमित्याशङ्क्याह ।
ब्रह्मण इति ॥ ननु संसारिणो ब्रह्मातिरिक्तस्य स्वकर्म्मोपार्जितेन

उ॰ तव्यमिति ॥ २ ॥ स ब्रूयाद्यावान्वा अयमाकाश-स्तावानेषोऽन्तर्हृदय आकाश उभे अस्मिन्द्यावा-

भा॰ आकाश इवाशरीरत्वात्सूक्ष्मत्वसर्वगतत्वसामान्याच्च तस्मि-न्नाकाशाख्ये यदन्तर्मध्ये तदन्वेष्टव्यं। तद्वाव तदेव च विशेषेण जिज्ञासितव्यं। गुर्वाश्रयश्रवणाद्युपायैरन्विष्य च साक्षात्कर-णीयमित्यर्थः । तञ्चेदेवमुक्तवन्तमाचार्यं यदि ब्रूयुरन्ते-वासिनश्चोदयेयुः कथं यदिदमस्मिन् ब्रह्मपुरे परिच्छिन्ने ऽन्तर्दहरं पुण्डरीकं वेश्म ततोऽप्यन्तराऽल्पतर एवाकाशः। पुण्डरीक एव वेश्मनि तावत्किं स्यात् किन्ततोऽल्पतरे खे यद्भवेदित्याहुः ।दहरोऽस्मिन्नन्तराकाशः किन्तदत्र विद्यते। न किञ्चन विद्यत इत्यभिप्रायः।यदि नाम बदरमात्रं किमपि विद्यते किं तस्यान्वेषणेन विजिज्ञासनेन वा फलं विजिज्ञा-सितुः स्यात्। अतो यत्तत्रान्वेष्टव्यं विजिज्ञासितव्यं वा न तेन

आ॰ शरीरेण स्वामित्वसम्बन्धो न ब्रह्मणस्तदसम्बन्धित्वात्कथं तत्रो-पलब्धिरत आह। अस्मिन् हीति ॥ ब्रह्मणो जीवात्मना स्वष्टे कार्ये जलार्कवत्प्रवेशे हृदयपुण्डरीकस्य ब्रह्मोपलब्ध्यधिष्ठानत्वं पूर्वोक्तमविरुद्धमित्याह। तस्मादिति ॥ अन्तराकाशस्यात्यल्पत-रत्वे हेतुमाह । वेश्मन इति ॥ आकाशशब्दस्य भूताकाश-विषयत्वं व्यावर्त्तयति । आकाशाख्यमिति ॥ कथं वाक्यशेषेऽ-प्याकाशशब्दो ब्रह्मणि वर्त्तते तत्राह। आकाश इवेति ॥ तस्मि-न्यदन्तस्तदाश्रयेण सहान्वेष्टव्यं तस्मिन्वा खे महिम्नि यदन्त-स्तदाकाशाख्यं ब्रह्म तदन्वेष्टव्यं तस्मिन्वा हृदयपुण्डरीकावच्छिन्ने नभसि यदन्तराकाशाख्यं ब्रह्म तदन्वेष्टव्यमिति योजना ॥ दहरोऽस्मिन्नित्यादिवाक्यस्य यथाश्रुतमर्थं गृहीत्वा चोद्यमुत्था-पयति । तच्चेदिति ॥ तदेव चोद्यमाकाङ्क्षाद्वारा विवृणोति ।

उ॰ पृथिवी अन्तरेव समाहिते उभावग्निश्च वायुश्च सूर्य्याचन्द्रमसावुभौ विद्युन्नक्षत्राणि यच्चास्येहास्ति

---

भा॰ प्रयोजनमित्युक्तवतः स आचार्य्यो ब्रूयादिति श्रुतेर्व्वचनं शृणुत। तत्र यद्ब्रूथ पुण्डरीकान्तःस्थस्याल्पत्वात्तत्स्थमल्पतरं स्यादिति। तदसत्। न हि खं पुण्डरीकवेश्मगतं पुण्डरीकादल्पतरं मत्वाऽवोचं दहरोऽस्मिन्नन्तराकाश इति। किं तर्हि पुण्डरीकमल्पं तदनुविधायि तत्स्थमन्तःकरणं पुण्डरीकाकाशं परिच्छिन्नं तस्मिन्विशुद्धे संहृतकरणानां योगिनां स्वच्छ इवोदके प्रतिबिम्बरूपमादर्श इव च शुद्धे स्वच्छं विज्ञानज्योतिःस्वरूपावभासं तावन्मात्रं ब्रह्मोपलभ्यत इति। दहरोऽस्मिन्नन्तराकाश इत्यवोचाम अन्तःकरणोपाधिनिमित्तं। स्वतस्तु यावान्वै प्रसिद्धः परिमाणतोऽयमाकाशो भौतिकस्तावानेषोऽन्तर्हृदय आकाशो यस्मि-

---

आ॰ कथमित्यादिना॥ भवतु परिच्छिन्ने शरीरे पुण्डरीकाकारस्य हृदयस्याल्पत्वं तदन्तर्व्वर्त्तिनस्त्वाकाशस्य ततोऽल्पतरत्वं तथापि प्रकृते किं स्यादित्याशङ्क्याह। पुण्डरीक एवेति॥ किंशब्दस्य प्रश्नविषयत्वं व्यावर्त्तयति। न किञ्चेति॥ हृदयपुण्डरीकान्तर्वर्त्तिनमाकाशमुपेत्याद्यं दूषयति। यदि नामेति॥ फलानुपलम्भोऽतःशब्दार्थः। तत्रेत्यन्तर्वर्त्याकाशोक्तिः। शिष्याचार्य्यव्यतिरिक्तस्यात्राप्रस्तुतत्वात्कस्येदं नियोगवचनमित्याशङ्क्याह। इति श्रुतेरिति॥ किमाचार्य्यो ब्रूयादित्यपेक्षायां वक्ष्यमाणेऽर्थे शिष्याणां मनःसमाधानमादौ प्रार्थयत इत्याह। शृणुतेति॥ श्रोतव्यमेव दर्शयितुं शिष्यैरुक्तमनुवदति। तत्रेति॥ किमाकाशस्य स्वाभाविकं दहरत्वमुपेत्य चोद्यते किंवा परोपाधिनिमित्तमिति विकल्प्याद्यं दूषयति। तदसदिति॥ ततस्च

उ० यच्च नास्ति सर्वं तदस्मिन् समाहितमिति ॥ ३ ॥
तञ्चेद्ब्रूयुरस्मिꣳश्चेदिदं ब्रह्मपुरे सर्वꣳ समाहितꣳ

भा० नन्वेष्टव्यं विजिज्ञासितव्यञ्चावोचाम। नाप्याकाशतुल्यपरिमाणत्वमभिप्रेत्य तावानित्युच्यते। किं तर्हि ब्रह्मणोऽनुरूपस्य दृष्टान्तान्तरस्याभावात्कथं पुनर्नाकाशसममेव ब्रह्मेत्यवगम्यते। येनावृतं खञ्च दिवं महीञ्च। तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः। तस्मिन्नु खल्वक्षरे गार्ग्याकाश इत्यादिश्रुतिभ्यः। किञ्चोभेऽस्मिन्द्यावापृथिवी ब्रह्माकाशे बुद्ध्युपाधिविशिष्टेऽन्तरेव समाहिते सम्यगाहिते स्थिते। यथा वा अरा नाभावित्युक्तं हि। तथोभावग्निश्च वायुश्चेत्यादि समानं। यच्चास्यात्मन आत्मीयत्वेन देहवतोऽस्ति विद्यत इह लोके। तथा यच्चात्मीयत्वेन न विद्यते। नष्टं भविष्यच्च नास्तीत्युच्यते। न त्वत्यन्तमेवासत्।

व्या० तस्य स्वाभाविकं दहरत्वमाश्रित्य चोद्यं निरवकाशमिति शेषः॥ कथं तर्हि दहरत्वोक्तिराकाशस्येत्याशङ्क्याह। किन्तर्हीति॥ तस्मिन्विशुद्धे तावन्मात्रं ब्रह्म यथोक्तविशेषणं योगिनां विषयेभ्यो विमुखीकृताऽन्तःकरणानामुपलभ्यत इति सम्बन्धः॥ अन्तःकरणस्य शुद्धत्वे दृष्टान्तमाह। स्वच्छ इवेति॥ ब्रह्मणस्तस्मिन्नुपलभ्यमानत्वे प्रतिबिम्बरूपमिवेत्युदाहरणं प्रतिपत्तिसौकर्य्यार्थं॥ उदाहरणान्तरं ब्रह्मणो नैसर्गिकमागन्तुकञ्च व्यवधानं नास्तीत्युपलब्धिसिद्ध्यर्थं विशिनष्टि। स्वच्छमिति॥ तादृगेव दहरत्वमादाय चोद्यते चेदनौपाधिकं महत्त्वमुपेत्य समाधिः सम्भवतीति विकल्पान्तरं निरस्यति। स्वतस्त्विति॥ यस्मिन्नन्वेष्टव्यमाश्रयेण सहेति शेषः। यावांस्तावानिति वचनादाकाशेन तुल्यपरिमाणत्वं ब्रह्मणोऽभिप्रेतं। तथाच ज्यायो नाकाशादित्यादि विरुद्धमि-

उ॰ सर्वाणि च भूतानि सर्वे च कामा यदैनञ्जरा वाप्नोति प्रध्वꣳसते वा किं ततोऽतिशिष्यत इति ॥ ४ ॥

---

भा॰ तस्य हृद्याकाशे समाधानानुपपत्तेः। तञ्चेदेवमुक्तवन्तं ब्रूयुः पुनरन्तेवासिनोऽस्मिंश्चेद्यथोक्ते चेद्यदि ब्रह्मपुरोपलक्षितान्तराकाश इत्यर्थः। इदं सर्वं समाहितं सर्वाणि च भूतानि सर्वे च कामाः। कथमाचार्य्येणानुक्ताः कामा अन्तेवासिभिरुच्यन्ते। नैष दोषो यच्चास्येहास्ति यच्च नास्तीति। उक्ता एव ह्याचार्य्येण कामाः। अपि च सर्वशब्देन चोक्ता एव कामाः। यदा यस्मिन् काले एतच्छरीरं ब्रह्मपुराख्यं जरावलिपलितादिलक्षणा वयोहानिर्वा प्राप्नोति शस्त्रादिना वृक्णं प्रध्वंसते विस्रंसते विनश्यति किन्ततोऽन्यदतिशिष्यते। घटाश्रितक्षीरदधिस्नेहादिवद्घटनाशे देहनाशेऽपि देहाश्रयमुत्तरोत्तरं पूर्व्वपूर्व्वनाशान्नश्यतो-

---

आ॰ त्याशङ्क्याह। नापीति ॥ केनाभिप्रायेण तर्हि तावानित्युक्तमत आह। किं तर्हीति ॥ न तस्य प्रतिमास्तीत्याकाशादि येन व्याप्तं लोकोऽनुभवति तस्मिन्नक्षरे सर्व्वमृगादि समाहितमित्यर्थः। कार्य्यकारणयोरतुल्यपरिमाणत्वप्रसिद्धेश्च नाकाशसमता ब्रह्मणोऽस्तीत्याह। तस्मादिति ॥ आधाराधेययोरतुल्यपरिमाणत्वाच्चैवमित्याह। एतस्मिन्निति ॥ एतस्याकाशस्य न स्वाभाविकं दहरत्वमित्याह। किञ्चेति ॥ कार्य्यं हि द्यावापृथिव्यादिकारणे समाहितं तच्च हृदयं ध्येयमित्यभिप्रेत्य बुद्ध्युपाधिविशिष्टमित्युक्तं ॥ आकाशे द्यावापृथिव्यादेः समाहितत्वे भूमविद्यासंवादं दर्शयति। यथा वेति ॥ न विद्यते सर्व्वं तदस्मिन् समाहितमिति सम्बन्धः। नास्तिशब्दस्यात्यन्तासद्विषयत्वं व्यावर्त्तयति। नष्टमिति ॥ आश्रयनाशादाश्रितनाशः स्यादिति न्यायमा-

उ॰ स ब्रूयान्नास्य जरयैतज्जीर्य्यति न वधेनास्य हन्यत एतत्सत्य ब्रह्मपुरमस्मिन् कामाः समा-

भा॰ त्यभिप्रायः। एवं प्राप्ते नाशे किन्ततोऽन्यद्यथोक्ताद तिशिष्यतेऽवतिष्ठते न किञ्चनावतिष्ठत इत्यभिप्रायः। एवमन्तेवासिभिश्चोदितः स आचार्य्यो ब्रूयात् तन्मतिमपनयन्। कथमस्य देहस्य जरयैतद्यथोक्तमन्तराकाशाख्यं ब्रह्म यस्मिन् सर्व्वं समाहितं न जीर्य्यति देहवन्न क्रियत इत्यर्थः। न चास्य वधेन शस्त्रादिघातेनैतद्धन्यते यथाकाशं किमु ततोऽपि सूक्ष्मतरमशब्दमस्पर्शं ब्रह्म देहेन्द्रियादिदोषैर्न स्पृश्यत इत्यर्थः। कथं देहेन्द्रियादिदोषैर्न स्पृश्यत इत्येतस्मिन्नवसरे वक्तव्यं प्राप्तं तत्प्रकृतव्यासङ्गो माभूदिति नोच्यते। इन्द्रविरोचनाख्यायिकायामुपरिष्टाद्वक्ष्यामो युक्तितः। एतत्सत्यमवितथं ब्रह्मपुरं

आ॰ श्रित्य शङ्कते। तच्चेदिति॥ यद्यस्मिन्सर्व्वं समाहितं ततो देहनाशे किमवशिष्यत इति सम्बन्धः॥ शिष्याणामधिकावापं दोषमाशङ्कते। कथमिति॥ शङ्कितं दोषं परिहरति। नैष दोष इति॥ सर्व्वं तदस्मिन्समाहितमित्यत्रोक्तेन सर्व्वशब्देनेति शेषः॥ शिष्याणामधिकावापं दोषं परिहृत्य प्रकृतस्योत्तरं विवृणोति। यदेत्यादिना॥ आकाशस्य शिष्यमाणत्वमाशङ्क्याह। घटेति॥ ततो यथोक्तान्नाशादितिसम्बन्धः। कया पुना रीत्या शून्यविषया शिष्यमतिरपनेयेति प्रश्नपूर्व्वकं विवृणोति। कथमित्यादिना॥ देहादिविक्रियया ब्रह्मणो न विक्रियास्तीत्येतत्कैमुतिकन्यायेन साधयति। न चेदिति॥ देहादिषु तादात्म्येन स्थितञ्चेद्ब्रह्म दोषैरसंस्पृष्टमित्युक्तमित्याशङ्क्याह। कथमिति॥ प्रकृतदहरोपासना तत्र व्यासङ्गो विश्लेषः। यदि देहादिदोषैरसंस्पृष्टत्वं ब्रह्मणो नोच्यते चेदेते च क्वचिदुप

उ॰ हिता एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः

---

भा॰ ब्रह्मैव पुरं ब्रह्मपुरं शरीराख्यन्तु ब्रह्मपुरं। ब्रह्मोपलक्षणार्थत्वात्। तत्त्वनृतमेव वाचारम्भणं विकारो नामधेयमिति श्रुतेः। तद्विकारेऽनृतेऽपि देहशुङ्गे ब्रह्मोपलभ्यत इति ब्रह्मपुरमित्युक्तं व्यावहारिकं। सत्यन्तु ब्रह्मपुरमेतदेव ब्रह्म। सर्व्वव्यवहारास्पदत्वात्। अतोऽस्मिन् पुण्डरीकोपलक्षिते ब्रह्मपुरे सर्व्वे कामा ये बहिर्भवद्भिः प्रार्थ्यन्ते तेऽस्मिन्नेव स्वात्मनि समाहिताः। अतस्तत्प्राप्त्युपायमेवानुष्ठात बाह्यकामविषयतृष्णां त्यजतेत्यभिप्रायः। एष आत्मा भवतां स्वरूपं। शृणुत तस्य लक्षणं। अपहतपाप्मा। अपहतः पाप्मा धर्माधर्माख्यो यस्य सोऽयमपहतपाप्मा। तथा विजरो विगतजरो विमृत्युश्च। तदुक्तं

---

व्या॰ पद्यन्ते॥ तर्हि तदविवक्षितमेव स्यादित्याशङ्क्याह। एतदिति॥ कथं यथोक्तं ब्रह्मणः पुरमवितथं स्यादित्याशङ्क्याह। ब्रह्मैवेति॥ सत्यशब्दसामानाधिकरण्यादुक्तसमाससिद्धिरित्यर्थः॥ कथं तर्हि शरीरं ब्रह्मपुरमित्युक्तमत आह। शरीराख्यन्त्विति॥ नास्येत्यादिनोक्तेऽर्थे हेतुमाह। ब्रह्मेति॥ तदेव स्फुटयितुं शरीरस्य मिथ्यात्वं सप्रमाणं दर्शयति। तत्त्विति॥ अथ मिथ्याभूतस्य तस्य कथं ब्रह्मपुरत्वमत आह। तद्विकार इति॥ किञ्च व्यावहारिकं सत्यमिदं शरीरं तद्युक्तं तस्यान्तस्यापि ब्रह्मोपलब्ध्यधिष्ठानस्य ब्रह्मपुरत्वमित्याह। व्यावहारिकमिति॥ ब्रह्म तु परमार्थसत्यमतस्तदेव सत्यमुक्तं ब्रह्मपुरमित्याह। सत्यन्त्विति॥ ब्रह्मणः सत्यत्वेऽपि पुरत्वायोगात्कुतो ब्रह्मपुरत्वमित्याशङ्क्याह। सर्व्वव्यवहारेति॥ दहराकाशस्याल्पत्वं विनाशित्वमि-

उ॰ सत्यसङ्कल्पो यथा ह्येवेह प्रजा अन्वाविशन्ति यथाऽनुशासनं यं यमन्तमभिकामा भवन्ति यं

---

भा॰ पूर्व्वमेव न वधेनास्य हन्यते किमर्थं पुनरुच्यते। यद्यपि देहसम्बन्धिभ्यां जरामृत्युभ्यां न सम्बध्यते। अन्यथापि सम्बन्धस्ताभ्यां स्यादित्याशङ्कानिवृत्त्यर्थं विशोको विगतशोकः। शोको नामेष्टादिवियोगनिमित्तो मनसः सन्तापः। विजिघत्सो विगताशनेच्छः। अपिपासोऽपानेच्छः॥ ननु अपहतपाप्मत्वेन जरादयः शोकान्ताः प्रतिषिद्धा एव भवन्ति। कारणप्रतिषेधात्। धर्म्माधर्म्मकार्य्या हि ते इति। जरादिप्रतिषेधेन वा धर्म्माधर्म्मयोः कार्य्याभावे विद्यमानयोरप्यसत्समत्वमिति पृथक् प्रतिषेधोऽनर्थकः स्यात्। सत्यमेवं तथापि धर्म्मकार्य्यानन्दव्यतिरेकेण स्वाभाविकानन्दो यथेश्वरे विज्ञानमानन्दमिति श्रुतेः। तथा धर्म्मा-

---

आ॰ त्याशङ्कितं दोषं परिहृत्योपास्यत्वसिद्ध्यर्थं पातनिकां करोति। अत इति॥ यस्मिन् सर्व्वकामसमाधाने फलितमुपासनमुपदिशति। अतस्तदिति॥ यथोक्ते दहराकाशे कीदृगुपासनं कर्त्तव्यमित्यपेक्षायामहक्रहेणेत्याह। एष इति॥ पुनरुक्तिं शङ्कते। तदुक्तमिति॥ तां परिहरति। यद्यपीति॥ अन्यथा देहसम्बन्धं विना स्वभावतोऽपीत्यर्थः। निवृत्त्यर्थं पुनरुच्यत इति पूर्व्वेण सम्बन्धः॥ प्रकारान्तरेण पुनरुक्तिं चोदयति। नन्विति॥ शोकस्यान्ताः किञ्चिद्यवधाय पिपासा येष्वस्ति ते शोकान्तास्तेषां जरादीनामपहतपाप्मत्वेन प्रतिषिद्धत्वे हेतुत्वमाह। कारणेति॥ कथं धर्म्माधर्म्मप्रतिषेधे जरादिविकारप्रतिषेधस्तत्राह। धर्म्मेति॥ इति पृथक् प्रतिषेधोऽनर्थः स्यादिति सम्बन्धः। जरादिप्रतिषेधे धर्म्मस्यार्थवत्त्वमङ्गीकृत्य प्रतिषेधस्य नैरर्थक्यमि-

उ॰ जनपदं यं क्षेत्रभागं तं तमेवोपजीवन्ति ॥५॥
तद्यथेह कर्म्मजितो लोकः क्षीयत एवमेवामुत्र

भा॰ कार्य्यजरादिव्यतिरेकेणापि जरादिदुःखस्वरूपं स्वाभाविकं स्यादित्याशङ्क्येत अतो युक्तस्तन्निवृत्तये जरादीनां धर्म्माधर्म्माभ्यां पृथक् प्रतिषेधः। जरादिग्रहणं सर्व्वदुःखोपलक्षणार्थं। पापनिमित्तानान्तु दुःखानामानन्त्यात्प्रत्येकं च तत्प्रतिषेधस्याशक्यत्वात्सर्व्वदुःखप्रतिषेधार्थं युक्तमेवापहतपाप्मत्ववचनं। सत्या अवितथाः कामा यस्य सोऽयं सत्यकामः। वितथा हि संसारिणां कामाः। ईश्वरस्तु तद्विपरीतः। तथा कामहेतवः सङ्कल्पा अपि सत्या यस्य स सत्यसङ्कल्पः। सङ्कल्पः कामाश्च शुद्धसत्त्वोपाधिनिमित्ता ईश्वरस्य। चित्रगुवत्। न स्वतो नेति नेतीत्युक्तत्वात्। यथोक्तलक्षण एव वात्मा विज्ञेयः। गुरु-

व्या॰ तिपक्षान्तरमाह। जरादीति॥ धर्म्मादेर्जरादेर्व्वा निषेधादितरनिषेधः सिद्ध्यतीत्यङ्गीकरोति। सत्यमेवमिति॥ तर्हि किमित्यपहतपाप्मेत्युक्त्वा विजरो विमृत्युरित्याद्युच्यते तत्राह। तथापीति॥ तथापि दुःखे प्रतिषिद्धे किमिति जरादि प्रतिषिध्यते तत्राह। जरादीति॥ यत्तु कार्य्याभावे सतोऽपि धर्म्माधर्म्मयोसत्त्वात्तदन्तोरगवदकिञ्चित्करत्वादपहतपाप्मेति न पृथग्वक्तव्यमिति तत्राह। पापनिमित्तानामिति॥ ईश्वरस्य सत्यकामत्वं साधयति। वितथा हीति॥ यथेश्वरस्यावितथाः कामास्तथा सङ्कल्पाश्चेत्याह। तथेति॥ अभावरूपाणां धर्म्माणामद्वैताविद्यात्मकत्वेन सम्भावितत्वेऽपि कथं भावरूपा धर्म्माः सम्भवेयुरित्याशङ्क्याह। सङ्कल्पा इति॥ शुद्धसत्त्वं रजस्तमोभ्यामस्पृष्टं त्रिगुणाया मायाया अंशभूतं तदेवोपाधिस्तन्निमित्तं येषां ते तथा।

उ० पुण्यजिता लोकः क्षीयते तद्य इहात्मानमननु-
विद्य व्रजन्त्येताꣳश्च सत्यान् कामाꣳस्तेषाꣳ सर्वेषु

भा० भ्यः शास्त्रतस्वात्मसंवेद्यतया स्वाराज्यकामैर्न चेद्विज्ञायते को दोषः स्यादिति । शृणु ताच्च दोषं दृष्टान्तेन । यथा ह्येवेह लोके प्रजा अन्वाविशन्ति अनुवर्त्तन्ते यथानुशासनं । यथेह प्रजा अन्यस्वामिनं मन्यमानास्तस्य स्वामिनो यथा यथानुशासनं तथा तथान्वाविशन्ति ॥ किं यं यमन्तं प्रत्यन्तं जनपदं क्षेत्रभागञ्चाभिकामा अर्थिन्यो भवन्त्यात्मबुद्ध्यनुरूपं तं तमेव च प्रत्यन्तादिमुपजीवन्तीति । एष दृष्टान्तो स्वातन्त्र्यदोषम्प्रति पुण्यफलोपभोगे । तथाऽन्यो दृष्टान्तस्तत्क्षयम्प्रति तद्यथेहेत्यादिः । तत्तत्रेह लोके तासामेव स्वाम्यानुशासनानुवर्तिनीनां प्रजानां सेवादिजितो लोकः पराधीनोपभोगः क्षीयते अन्तवान् भवति । अथेदानीं दार्ष्टान्तिकमुपसंहरति । एवमेवामुत्राग्निहोत्रादिपुण्यजितो लोकः पराधीनोप-

व्या० ष्वस्वाभाविकानां सङ्कल्पादीनामीश्वरविशेषणत्वे दृष्टान्तमाह । चित्रगुवदिति ॥ यथा चित्रा गावोऽस्वाभाविकाश्चित्रगोर्देवदत्तस्य विशेषणं तथा ब्रह्मणोऽपि कामादय इत्यर्थः । किमिति कामादयो ब्रह्मणि स्वाभाविका न भवन्ति । धर्मधर्मिणोरेवोपचारादद्वैतश्रुतेरुपपत्तेरित्याशङ्क्याह । न स्वत इति ॥ वाक्यान्तरमवतारयितुं पातनिकां करोति । यथोक्तेति ॥ ज्ञानप्रकारं निमित्ताधिकारिप्रवर्त्तनं तद्दर्शनपूर्व्वकं दर्शयति । गुरुभ्य इति ॥ प्रश्नपूर्व्वकं यथा हीत्यादिवाक्यमाह । न चेदिति ॥ यथा ऽऽकाशात्मा परिज्ञानमात्रेति परामृष्टमचरोत्यमर्थं यथा ह्येवेत्यनेन

उ॰ लोकेष्वकामचारो भवत्यथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामांस्तेषां सर्वेषु लोकेषु कामचारो भवति ॥ ६ ॥ १ ॥

---

भा॰ भोगः क्षीयत एवेति । उक्तो दोष एषामिति विपर्य्ययं दर्शयति तद्य इत्यादिना । तत्तत्रैवास्मिन् लोके ज्ञानकर्म्मणोरधिकृता योग्याः सन्त आत्मानं यथोक्तलक्षणं शास्त्राचार्य्योपदिष्टमननुविद्य यथोपदेशमनु स्वात्मसंवेद्यतामकृत्वा व्रजन्ति देहादस्मात्प्रयन्ति । यत एतांश्च यथोक्तान् सत्यान् सत्यसङ्कल्पकार्य्यांश्च स्वात्मस्थान् कामाननुविद्य व्रजन्ति तेषां सर्व्वेषु लोकेष्वकामचारिताऽस्वतन्त्रता भवति । यथा राजाऽनुशासनानुवर्त्तिनीनां प्रजानामित्यर्थः । अथ येऽन्ये इहलोके आत्मानं शास्त्राचार्य्योपदेशमनुविद्य स्वात्मसंवेद्यतामापाद्य व्रजन्ति यथोक्तांश्च सत्यान् कामांस्तेषां सर्व्वेषु लोकेषु कामचारिता भवति राज्ञ इव सार्व्वभौमस्येह लोके ॥ १ ॥

---

आ॰ दृष्टान्तेन दर्शयित्वा वाक्यार्थं कथयति । यथा ह्येवेति ॥ अमुमर्थं प्रश्नपूर्व्वकमन्वाचष्टे । किमित्यादिना ॥ उक्तदृष्टान्तेन विवक्षितमंशमनूद्य दृष्टान्तान्तरस्य तात्पर्य्यमाह । एष इति ॥ केषामेष दोषो भवतीत्याकाङ्क्षायामाह । उक्त इति ॥ कर्म्मसाध्यस्य पारतन्त्र्यं क्षयिष्णुत्वञ्च ज्ञानहीनकर्म्मसाध्यविषयब्रह्मोपासकानामेष दोषो भवतीत्युत्तरवाक्यमित्यर्थः ॥ अविदुषामेवास्वातन्त्र्यदोषमुक्त्वा विदुषां स्वातन्त्र्यफलं कथयति । अथेत्यादिना ॥ १ ॥

उ॰ स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति तेन पितृलोकेन सम्पन्नो महीयते ॥ १ ॥ अथ यदि मातृलोककामो भवति सङ्कल्पादेवास्य मातरः समुत्तिष्ठन्ति तेन मातृलोकेन सम्पन्नो महीयते ॥ २ ॥ अथ यदि भ्रातृलोककामो भवति सङ्कल्पादेवास्य भ्रातरः समुत्तिष्ठन्ति तेन भ्रातृलोकेन सम्पन्नो महीयते ॥ ३ ॥ अथ यदि स्वसृलोककामो भवति सङ्कल्पादेवास्य स्वसारः समुत्तिष्ठन्ति तेन स्वसृलोकेन सम्पन्नो महीयते ॥ ४ ॥ अथ यदि सखिलोककामो भवति सङ्कल्पादेवास्य सखायः समुत्तिष्ठन्ति तेन सखिलोकेन सम्पन्नो महीयते ॥ ५ ॥

---

भा॰ कथं सर्व्वेषु लोकेषु कामचारो भवतीत्युच्यते। य आत्मानं यथोक्तलक्षणं हृदि साक्षात्कृतवान् वक्ष्यमाणब्रह्मचर्य्यादिसाधनसम्पन्नः सन् तत्स्थांश्च सत्यान् कामान् सन्त्यक्तदेहः। यदि पितृलोककामः पितरो जनयितारस्त एव सुखहेतुत्वेन भोग्यत्वाल्लोका उच्यन्ते तेषु कामो यस्य तैः पितृभिः सम्बन्धेच्छा यस्य सङ्कल्पमात्रादेव पितरः समुत्तिष्ठन्ति आत्मसम्बन्धितामापद्यन्ते। शुद्धसत्त्वतया सत्यसङ्कल्पत्वादीश्वरस्येव तेन पितृलोकेन भोगेन सम्पन्नः

---

ष्या॰ उक्तमेवार्थमाकाङ्क्षापूर्व्वकमुपपादयति। कथमित्यादिना ॥

उ॰ अथ यदि गन्धमाल्यलोककामो भवति सङ्कल्पादेवास्य गन्धमाल्ये समुत्तिष्ठतस्तेन गन्धमाल्यलोकेन सम्पन्नो महीयते ॥ ६ ॥ अथ यद्यन्नपानलोककामो भवति सङ्कल्पादेवास्यान्नपाने समुत्तिष्ठतस्तेनान्नपानलोकेन सम्पन्नो महीयते ॥ ७ ॥ अथ यदि गीतवादित्रलोककामो भवति सङ्कल्पादेवास्य गीतवादित्रे समुत्तिष्ठतस्तेन गीतवादित्रलोकेन सम्पन्नो महीयते ॥ ८ ॥ अथ यदि स्त्रीलोककामो भवति सङ्कल्पादेवास्य स्त्रियः समुत्तिष्ठन्ति तेन स्त्रीलोकेन सम्पन्नो महीयते ॥ ९ ॥ यं यमन्तमभिकामो भवति यं कामयते सोऽस्य सङ्कल्पादेव समुत्तिष्ठति तेन सम्पन्नो महीयते ॥ १० ॥ २ ॥

---

भा॰ सम्पत्तिरिष्टप्राप्तिस्तया सम्पन्नो महीयते पूज्यते वर्द्धते वा महिमानमनुभवति । समानमन्यत् । मातरो जनयित्र्योऽतीताः सुखहेतुभूताः सामर्थ्यात् ॥ न हि दुःखहेतुभूतासु श्वाजशूकरादिजन्मनिमित्तासु मातृषु विशुद्धसत्त्वस्य योगिन इच्छा तत्सम्बन्धो वा युक्तः । यं यमन्तं प्रदेशमभिकामो भवति । यं यं कामं कामयते यथोक्तव्यतिरेकेणापि सोऽस्यान्तः प्रादुर्भिष्टः । कामस्य सङ्कल्पा-

---

आ॰ सुखहेतुभूता इति कुतो विशेषणमित्याशङ्क्याह । सामर्थ्यादिति ॥

उ० त इमे सत्याः कामा अनृतापिधानास्तेषाꣳ सत्यानाꣳ सतामनृतमपिधानं यो यो ह्यस्येतः

भा० दैव समुत्तिष्ठति अस्य। तेनेच्छाऽविघाततयाऽभिप्रेतार्थप्राप्त्या तत्सम्पन्नो महीयत इत्याद्युक्तार्थं॥ २॥

यथोक्तात्मध्यानसाधनानुष्ठानं प्रति साधकानामुत्साहजननार्थमनुक्रोशन्त्याह। कष्टमिदं खलु वर्त्तते यत्स्वात्मस्थाः शक्यप्राप्ता अपि ते इमे सत्याः कामा अनृतापिधानास्तेषामात्मस्थानां स्वाश्रयाणामेव सतामनृतं बाह्यविषयेषु स्त्र्यन्नभोजनादिषु तृष्णा तन्निमित्तञ्च स्वेच्छाप्रचारत्वं मिथ्याज्ञाननिमित्तत्वादनृतमित्युच्यते। तन्निमित्तं सत्यानां कामानामप्राप्तिरित्यपिधानमिवापिधानं। कथमनृतापिधाननिमित्तं तेषामलाभ इत्युच्यते। यो यो ह्ि यस्मादस्य जन्तोः पुत्रो भ्राता वा इष्ट इतोऽस्मा-

व्या० तदेव स्फुटयति। नहीति॥ तेन ज्ञानमाहात्म्येनेतियावत्॥ २॥

त इमे सत्याः कामा इत्यादेस्तात्पर्य्यमाह। यथोक्तेति॥ आह समनन्तरा श्रुतिरिति शेषः॥ तमेवानुक्रोशं दर्शयति। कष्टमिति॥ अनृतमपिधानमिवापिधानं तेषामिति सम्बन्धः। किन्तदनृतं तदाह। बाह्येति॥ कथं तदपिधानमात्मस्थानां कामानामित्याशङ्क्याह। तन्निमित्तमिति॥ उक्तमर्थमाकाङ्क्षापूर्व्वकमुत्तरं वाक्यमवतार्य्योपपादयति। कथमित्यादिना॥ तं हृदयाकाशे स्वात्मनि सन्तमपि द्रष्टुमिच्छन्नपि यस्मान्न लभते तस्मात्तदनृतापिधानं निमित्तं कृत्वा तदलाभो भवतीति योजना। इतश्च तेषामलाभे निमित्तमनृतापिधानमेवेत्याह। अथ पुनरिति॥ यथोक्तेन विधिनेत्युपास्तिप्रकारोक्तिः॥ आत्मस्थानां कामानामनृतापिधानत्वमुक्तं निगमयति। अन्नेति॥ यस्मादविद्वद्भिरलभ्या

उ॰ प्रैति न तमिह दर्शनाय लभते ॥१॥ अथ ये चास्येह जीवा ये च प्रेता यच्चान्यदिच्छन्न लभते सर्वं

भा॰ लोकात्प्रैति प्रगच्छति म्रियते तमिष्टं पुत्रं भ्रातरं वा स्वहृदयाकाशे विद्यमानमपीह पुनर्दर्शनायेच्छन्नपि न लभते। अथ पुनर्ये चास्य विदुषो जन्तोर्जीवा जीवन्तीह पुत्रा भ्रात्रादयो ये च प्रेता मृता इष्टाः सम्बन्धिनो यच्चान्यदिह लोके वस्त्रान्नपानादि वा वस्त्विच्छन्न लभते तत्सर्वमत्र हृदयाकाशाख्ये ब्रह्मणि गत्वा यथोक्तेन विधिना विन्दते लभते। अत्रास्मिन्हार्दाकाशे हि यस्मादस्यैते यथोक्ताः सत्याः कामा वर्त्तन्तेऽनृतापिधानाः ॥ कथमिव। तदन्यायमित्युच्यते। तत्तत्र यथा हिरण्यमेव पुनर्ग्रहणाय निधाटभिर्निधीयत इति निधिस्तं हिरण्यनिधिं निहितं भूमेरधस्तान्निचिप्तमचेत्रज्ञा निधिं शास्त्रे-

आ॰ विद्वद्भिस्च लभ्याः कामाः सर्वाधारे जगन्मूलकारणे ब्रह्मणि स्वात्मभूते वर्त्तन्ते तस्मात्ते भवन्त्यनृतापिधानाः। सत्यामविद्यायामनुपलम्भात्। प्रशमने चोपलम्भादित्यर्थः। यदुक्तं ब्रह्मणि स्वात्मनि कामाः सन्तोऽपि नोपलभ्यन्त इत्यन्यायमिति तत्र दृष्टान्तं प्रश्नपूर्वकमुत्थाप्य व्याचष्टे। कथमिवेत्यादिना॥ तत्र स्वायत्तस्याप्यप्राप्तौ दृष्टान्तो निर्दिश्यत इति शेषः। दार्ष्टान्तिकं व्याकरोति। एवमेवेति ॥ अलाभप्रकारमभिनयति। एषोऽहमिति ॥ तत्र हेतुमाह। अनृतेनेति॥ यथोक्तेन मिथ्याज्ञानशब्दितानाद्यनिर्वाच्याज्ञानकृतेन द्वयाप्रभेदेन तन्निमित्तेनेच्छाप्रचारेणेत्यर्थः। तस्मात्प्रजानां स्वात्मभूतब्रह्मलोकालाभ इति शेषः॥ स्वरूपादनृतेनाच्छन्नत्वमेव स्फोरयति। अविद्यादीति॥ प्रकृतमाक्रोशमुपसंहरति। अत इति॥ अनुक्रोशद्वारा यथो-

उ॰ तदत्र गत्वा विन्दतेऽत्र ह्यस्यैते सत्याः कामा अनृतापिधानास्तद्यथापि हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्य्युपरि सञ्चरन्तो न विन्देयुरे-

---

भा॰ र्निधिंचेत्रमजानन्तस्ते निधेरुपर्य्युपरि सञ्चरन्तोऽपि निधिं न विन्देयुः शक्यवेदनमपि। एवमेव इमा अविद्यावत्यः सर्व्वा इमाः प्रजा यथोक्तं हृदयाकाशाख्यं ब्रह्मलोकं ब्रह्मैव लोकस्तमहरहः प्रत्यहं गच्छन्त्योऽपि सुषुप्तकाले न विन्दन्ति न लभन्ते एषोऽहं ब्रह्मलोकभावमापन्नोऽस्म्यद्येति। अनृतेन हि यथोक्तेन हि यस्मात्प्रत्यूढा हृताः स्वात्मस्वरूपात् अविद्यादिदोषैर्वहिरपकृष्टा इत्यर्थः। अतः कष्टमिदं वर्त्तते जन्तूनां यत्स्वायत्तमपि ब्रह्म न लभ्यत इत्यभिप्रायः। स वा एष आत्मापहतपाप्मेति प्रकृतो वैशब्देन तं स्मारयति। एष विवचित

---

आ॰ स्तब्रह्मध्यानानुष्ठाने प्रयत्नस्य कर्त्तव्यतोक्ता। सम्प्रति नामादाविव हृदये ब्रह्मदृष्ट्यारोपमात्रमिति शङ्कां वारयितुमनन्तरवाक्यमवतार्य्य व्याकरोति। स वा इत्यादिना॥ कथमात्मा यथोक्तो हृदयेऽस्तीति गम्यते तत्राह। तस्येति॥ यथोक्तावगतिफलमाह। अहरहरिति॥ एवंविदिति विशेषणमन्यथमाणाः शङ्कते। नन्विति॥ अनेवंविदोऽपि सुषुप्तिकाले ब्रह्मप्राप्तिमङ्गीकरोति। बाढ़मेवेति॥ तर्हि किमित्येवंविदिति विशेषणमित्याशङ्क्याह। तथापीति॥ विद्वदविदुषोर्व्विशेषमेवं दृष्टान्तेन स्पष्टयति। यथापीति॥ त्वं तदसीत्याचार्य्येण प्रतिबोधितो विद्वान् सदेव भवत्यन्यस्त्वविद्वानस्मीति देहादिकमेव जानन् सदेव भवतीति योजना। देहपातेऽपीत्यपिशब्देन जीवदवस्था दृष्टान्तिता। सम्प्रसादस्य विदुषो यन्मुक्त्यालम्बनं शुद्धं ब्रह्म तत्तादात्म्योपदेशे-

उ॰ यमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढाः ॥२॥ स वा एष आत्मा हृदि तस्यैतदेव निरुक्तꣳ हृदय-

भा॰ आत्मा हृदि हृदयपुण्डरीके आकाशशब्देनाभिहितः। तस्यैतस्य हृदयस्यैतदेव निरुक्तं निर्वचनं नान्यत्। हृद्ययमात्मा वर्त्तत इति यस्मात्तस्माद्धृदयनामनिर्वचनप्रसिद्ध्यापि स्वहृदये आत्मेत्यवगन्तव्यमित्यभिप्रायः। अहरहर्वै प्रत्यहमेवंवित् हृदयमात्मेति जानन् स्वर्गं लोकं हार्द्दं ब्रह्मेति प्रतिपद्यते। नन्वेवंविदपि सुषुप्तिकाले सतासोम्य तदा सम्पन्न इत्युक्तत्वात्। वाढमेवं तथाप्यस्ति विशेषः। यथा जानन्नजानंश्च सर्व्वा जन्तुः सद्ब्रह्मैव तथापि तत्त्वमसीति प्रतिबोधितो विद्वान् सदेव नान्योऽस्मीति जानन् सदेव भवति। एवमेव विद्वानविद्वांश्च सुषुप्तौ

व्या॰ नोपास्यं स्तोतुं सम्प्रसादशब्दार्थं कथयति। सुषुप्तेति॥ सम्यक्प्रसीदतीति सम्प्रसादो विद्वानिति शेषः। स्वाभाविकमेवात्मनः स्वास्थ्यं कथं सुषुप्ते प्रसीदतीति शिष्यते। तत्राह। जाग्रदिति॥ अद्वातीति सुषुप्तः पुरुषः सम्प्रसाद इति विशेषः। व्युत्पत्तिबलेन सम्प्रसादशब्दः सौषुप्तसर्व्वजीवसाधारणस्तत्कथमेष सम्प्रसाद इति सन्निहितविदत्परामर्शत्वाच्च। सम्प्रसादशब्द इति॥ तस्य सौषुप्तसर्व्वजीवसाधारणत्वेऽपि प्रक्रमवशाद्विद्वानेवैष प्रकृतः सम्प्रसाद इति व्यपदिश्यते। यथा सन्निहितार्थो यत्नविशेषादेष इतिशब्दवशादुच्यते तथेहापीत्यर्थः। य एष एवंवित्प्रकृतः सम्प्रसादः स विद्वानिति यावत्। विवेकानन्तर्य्यमथशब्दार्थः॥ समुत्थानशब्दस्य मुख्यार्थत्वं वारयति। नत्विति॥ देहादुत्थितस्यापि स्वेन रूपेणाभिनिष्पत्तिर्भविष्यती-

उ॰ मिति तस्माद्धृदयमहरहर्वा एवंवित्स्वर्गं लोक-
मेति ॥ ३ ॥ अथ य एष सम्प्रसादोऽस्माच्छरीरा-
त्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणा-

---

भा॰ यद्यपि सत्सम्पद्यते तथाप्येवंविदेव स्वर्गं लोकमेतीत्युच्यते।
देहपातेऽपि विद्याफलस्यावश्यम्भावित्वादित्येष विशेषः।
सुषुप्तकाले स्वेनात्मना सता सम्पन्नः सन् सम्यक् प्रसीदतीति
जाग्रत्स्वप्नयोर्विषयेन्द्रियसंयोगजातं कालुष्यं जहातीति।
सम्प्रसादशब्दो यद्यपि सर्व्वजन्तूनां साधारणस्तथाप्येवं-
वित्स्वर्गं लोकमेतीति प्रकृतत्वादेष सम्प्रसाद इति सन्नि-
हितवत्। यत्नविशेषात्। सोऽथेदं शरीरं हित्वा ऽस्माच्छरी-
रात्समुत्थाय शरीरात्मभावनां परित्यज्येत्यर्थः न त्वासना-
दिवत्समुत्थायेति इह युक्तं। स्वेन रूपेणेति विशेषणात्।
न ह्यन्यत उत्थाय स्वरूपं सम्पत्तव्यं। स्वरूपमेव हि तन्न
भवति। प्रतिपत्तव्यं चेत्स्यात्परं परमात्मलक्षणं विज्ञप्ति-

---

आ॰ त्याशङ्क्याह। न हीति॥ कुतोऽयं स्वरूपेऽभिनिष्पत्तिप्रयोग-
स्तत्राह। प्रागिति॥ एतच्छब्दः सम्यग्ज्ञानविषयः। अनात्मस्वरू-
पप्रतिपत्तिभ्रान्तिनिवृत्त्यपेक्षया स्वरूपसम्पत्तिरुपचरितेत्यर्थः॥
किन्तत्स्वरूपमिति तदाह। अशरीरता हीति॥ यथा मिथ्या
रूप्यतादात्म्यनिवृत्तौ स्वाभाविकेनारूप्यात्मना शुक्तिरवतिष्ठते।
तथा शरीरतादात्म्यभ्रान्तिनिवृत्तौ तदभावोपलक्षितं स्वच्छं
स्वरूपमेवावस्थितं भवतीत्यर्थः। एष आत्मेति होवाचेत्यत्रैष-
शब्दार्थमाह। यत्त्वमिति॥ कोऽसावुक्तिकर्त्तेत्याकाङ्क्षायामाह।
स ब्रूयादिति॥ न केवलमात्मत्वमेव प्रकृतस्य ज्योतिषः किन्तु
रूपान्तरत्वमस्तीत्याह। किञ्चेति॥ अविनाशित्वे हेतुमाह।

उ॰ भिनिष्पद्यत एष आत्मेति होवाचैतदमृतमभय-
मेतद्ब्रह्मेति तस्य ह वा एतस्य ब्रह्मणो नाम सत्य-
मिति ॥४॥ तानि ह वा एतानि त्रीण्यक्षराणि

भा॰ स्वभावं ज्योतीरूपं सम्पद्य स्वास्थ्यमुपगम्येति। एतत्स्वेनात्मी-
येन रूपेणाभिनिष्पद्यते प्रागेतस्याः स्वरूपसम्पत्तेः। अवि-
द्यया देहमेवापरं रूपमात्मत्वेनोपगत इति तदपेक्षयेदमु-
च्यते स्वेन रूपेणेति। अशरीरता ह्यात्मनः स्वरूपं
यत्स्वं परं ज्योतिःस्वरूपमापद्यते सम्प्रसाद एष आत्मेति
होवाच। स ब्रूयादिति यः श्रुत्वा नियुक्तोऽन्तेवासिभ्यः।
किञ्चैतदमृतमविनाशि। भूमा यो वै सोऽमृतमि-
त्युक्तमत एवाभयं भूम्नो द्वितीयाभावादत एव ब्रह्मेति।
तस्य ह वै एतस्य ब्रह्मणो नामाभिधानं। किन्तत्सत्य-
मिति। तत्सत्यं ह्यवितथं। तत्सत्यं स आत्मेति ह्युक्तं।
अथ किमर्थमिदं नाम पुनः पुनरुच्यते तदुपासनविधि-

आ॰ भूमेति। तथापि कथमविनाशित्वं तत्राह। यो वा इति॥
इतिशब्दो हेत्वर्थः। यस्माद्यथोक्तलक्षणं ब्रह्म तस्मादुपासना-
मर्हतीत्यर्थः॥ उपास्यस्यास्य ब्रह्मणो नाम निर्दिशति। तस्येति॥
उक्तस्य पुनरुक्तिरनर्थिकेत्याशङ्क्य परिहरति। किमर्थमित्या-
दिना॥ उपास्यस्तुत्यर्थं नामोक्त्वा तादर्थ्येनैव नामाक्षराणि
प्रस्तौति। तानीति॥ तानि कानीत्यपेक्षायामाह। एतानीति॥
कथं तकार इत्युच्यते। इकारस्यापि तत्र भावादित्याशङ्क्याह।
इकार इति॥ तत्र हेतुमाह। ह्रस्वेनेति॥ दीर्घमीकारमुद्दिश्य
ह्रस्वं पुनरनुवदन्न विवक्षितत्वमेव नामाक्षरेषु तस्य सूचयती-
त्यर्थः॥ त्रयाणामक्षराणामवान्तरभेदं दर्शयति। तेषामिति॥

उ॰ सतीयमिति तद्यत्सत्तदमृतमथ यत्ति तन्मर्त्यमथ यद्यन्तेनोभे यच्छति यदनेनोभे यच्छति तस्माद्य-महरहर्वा एवंवित्स्वर्गं लोकमेति ॥ ५ ॥ ३ ॥

---

भा॰ स्तुत्यर्थं । तानि ह वा एतानि ब्रह्मणो नामाक्षराणि त्रीण्येतानि सतीयमिति सकारस्तकारो यमिति च । इका-रस्तकारे उच्चारणार्थोऽनुबन्धः । ह्रस्वेनैवाक्षरेण पुनः प्रतिनिर्देशात्तेषां । तत्तत्र यत्सत्सकारस्तदमृतं सद्ब्रह्म । अमृतवाचकत्वादमृत एव सकारस्तकारान्तो निर्दिष्टः । अथ यत्तकारस्तन्मर्त्यं । अथ यद्यमक्षरं तेनाक्षरेणामृतं मर्त्याख्ये पूर्वे उभे अक्षरे यच्छति यमयति नियमयति वशीकरोति आत्मनेत्यर्थः । यद्यस्मादनेन यमित्येतेनोभे यच्छति । तस्माद्यमादौ संयत इव हि एतेन यमा लक्ष्यते । ब्रह्मनामाक्षरस्यापि इदममृतत्वादिधर्मवत्त्वं महाभाग्यं । किमुत नामवत इत्युपास्यत्वाय स्तूयते ब्रह्म-

---

आ॰ निर्द्धारणे षष्ठी ॥ वर्णविभागानन्तर्यमथशब्दार्थः । तकारस्याक्ष-रसामान्यान्मर्त्यत्वं । कथमक्षरेऽपूर्वेऽयमित्यक्षरेण प्रयोक्ता निय-मयतीत्याकाङ्क्षायां नियमनस्वाभाव्येनेत्याह । आत्मनेति ॥ यमि-त्यक्षरस्य नियमनस्वाभाव्यमेव साधयति । यद्यस्मादिति ॥ तस्य तत्स्वभावत्वे अनुभवमनुसन्धापयति । संयत इवेति ॥ यमो यमित्यक्षरेणेत्यर्थः । तस्य पूर्वाभ्यामुपरिष्टाद्भावित्वं तन्नियामकत्वं हेतुरिति मत्वाह । एतेनेति ॥ लक्ष्यतेऽपूर्वे अक्षरे इति शेषः ॥ ब्रह्मणः सत्यमिति नाम तस्य यन्निर्वचनं कृतं तस्य प्रयोजनमाह । ब्रह्मेति ॥ फलवाक्यस्थमेवंवित्पदं व्याकरोति । एवमिति ॥

उ॰ अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसम्भेदाय नैतꣳ सेतुमहोरात्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतꣳ

---

भा॰ नामनिर्वचनेनैवं नामवतो वेत्ता एवंवित्। अहरहर्वा एवंवित्स्वर्गं लोकमेतीत्युक्तार्थं॥ ३॥

अथ य आत्मेति। उक्तलक्षणो यः सम्प्रसादस्तस्य स्वरूपं वक्ष्यमाणैरुक्तैरनुक्तैश्च गुणैः पुनःस्तूयते। ब्रह्मचर्य्यसाधनसम्बन्धार्थं। य एष यथोक्तलक्षण आत्मा स सेतुरिव सेतुः। विधृतिर्विधरणः। अनेन हि सर्व्वं जगद्वर्णाश्रमादिक्रियाकारकफलादिभेदनियमैः कर्त्तुरनुरूपं विदधता विधृतं। अध्रियमाणं हीश्वरेणेदं विश्वं विनश्येत यतस्तस्मात्स सेतुर्विधृतिः। किमर्थं स सेतुरित्याह। एषां भूरादीनां लोकानां कर्त्तृकर्म्मफलाश्रयाणामसम्भेदायाऽविदारणायाऽविनाशायेत्येतत्। किंविशिष्टश्चासौ सेतुरित्याह। नैनं सेतुमात्मानमहोरात्रे सर्व्वस्य जनिमतः परिच्छेदके सति नैतं तरतः। यथाऽन्ये संसा-

---

व्या॰ वाक्यन्तु न व्याख्येयं प्रागेव व्याख्यातत्वादित्याह। अहरिति॥३॥ वाक्यान्तरमादत्ते। अथेति॥ तस्य तात्पर्य्यमाह। उक्तलक्षण इति॥ प्रकारान्तरेण स्तुतिप्रारम्भार्थो वाक्यस्थोऽथशब्दः॥ किमिति स्तुतिरित्यपेक्षायां स्तुत्ये ब्रह्मण्याधारे ब्रह्मचर्य्याख्यस्य साधनस्य सम्बन्धविधानार्थमित्याह। ब्रह्मचर्य्येति॥ यथा मृदादिमयः सेतुर्व्यवस्थाहेतुरस्येदं क्षेत्रमिति। तथायमपि व्यवस्थाहेतुरित्याह। सेतुरिवेति॥ सेतुत्वं साधयति। विधृतिरिति॥

उ॰ सर्वे पाप्मानोऽतो निवर्त्तन्तेऽपहतपाप्मा ह्येष ब्रह्मलोकस्तस्माद्वा एतꣳ सेतुं तीर्त्वाऽन्धः सन्न-

---

भा॰ रिणः कालेनाहोरात्रादिलक्षणेन परिच्छेद्यो न तथायं कालपरिच्छेद्य इत्यभिप्रायः। यस्मादर्वाक्संवत्सरोऽहोभिः परिवर्त्तत इति श्रुत्यन्तरात्। अत एवैनं न जरा तरति न प्राप्नोति। न तथा मृत्युर्न तु शोको न सुकृतं न दुष्कृतं। सुकृतदुष्कृते धर्म्माधर्म्मौ। प्राप्तिरत्र तरणशब्देनाभिप्रेता नातिक्रमणं। कारणं ह्यात्मा। न शक्यं हि कारणातिक्रमणं कर्त्तुं कार्य्येण। अहोरात्रादि च सर्व्वं सतः कार्य्यं। अन्येन ह्यन्यस्य प्राप्तिरतिक्रमणं वा क्रियेत। न तु तेनैव तस्य। न हि घटेन मृत्प्राप्यतेऽतिक्रम्यते वा। यद्यपि पूर्व्वं य आत्मापहतपाप्मेत्यादिना पाप्मादिप्रतिषेध उक्त एव तथापीहायं विशेषो न तरतीति प्राप्तिविषयत्वं

---

आ॰ विधारकत्वमुपपादयति। अनेनेति॥ वर्णाश्रमादीत्यादिशब्दो वयोऽवस्थाविषयः। फलादीत्यादिशब्दस्तु तदवान्तरजातीयविषयः कर्त्रनुरूपक्रियादिभेदविषयनियमैः सवर्णादि व्यवस्थापयता परमेश्वरेण सर्व्वं जगद्विधृतमिति सम्बन्धः॥ अन्वयमुखेनोक्तमेव व्यतिरेकमुखेनाह। अध्रियमाणो हीति॥ उक्तमेवार्थं प्रश्नपूर्व्वकं विशदयति। किमर्थमित्यादिना॥ नैतमिति प्रतीकमादाय यत्तद्याचष्टे। सेतुरित्यादिना॥ तदेव वैधर्म्यदृष्टान्तेन स्पष्टयति। यथेत्यादिना॥ परमात्मनो न कालपरिच्छेद्यतेत्यत्राथर्वणश्रुतिं प्रमाणयति। यस्मादिति॥ तरतीति तरतेरतिक्रमणार्थो नात्मनि सम्भवतीत्यत्र हेतुमाह। कारणं हीति। कार्य्यस्य कारणातिक्रमणं माभूदहोरात्रादेस्त्वात्मातिक्रमणं किं न स्यादित्याश-

नन्धो भवति विद्धः सन्नविद्धो भवत्युपतापी सन्ननुपतापी भवति तस्माद्वा एतꣳ सेतुं तीर्त्वा-

भा॰ प्रतिषिध्यते। तत्राविशेषणजराद्यभावमात्रमुक्तं। अहो-रात्राद्या उक्ता अनुक्ताश्चान्ये सर्व्वे पाप्मान उच्यन्तेऽतो ऽस्मदात्मनः सेतोर्निवर्त्तन्तेऽप्राप्यैवेत्यर्थः। अपहतपाप्मा ह्येष ब्रह्मैव लोको ब्रह्मलोक उक्तः। यस्माच्च पाप्मकार्म्या-न्धादिशरीरवतः स्यान्नत्वशरीरस्य तस्माद्वै एतमात्मानं सेतुं तीर्त्वा प्राप्यानन्धो भवति। देहवत्त्वे पूर्व्वमन्धोऽपि सन्। तथा विद्धः सन्देहवत्त्वे देहवियोगे सेतुं प्राप्याविद्धो भवति तथोपतापी रोगाद्युपतापवान् सन्ननुपतापी भवति। किञ्च यस्मादहोरात्रे न स्तः सेतौ तस्माद्वा एतं सेतुं तीर्त्वा प्राप्य नक्तमपि तमोरूपं रात्रिरपि सर्व्वमहरेवा-भिनिष्पद्यते। विज्ञप्त्यात्मज्योतिःस्वरूपमहरिवाहः सदै-

आ॰ ङ्क्याह। अहोरात्रादिति चेति॥ तरतेरतिक्रमणार्थत्वमङ्गीकृ-त्यापि निषेधे हेतुमाह। अन्येनेति॥ तरतिवाक्यस्यापहतपाप्म-वाक्येन पौनरुक्त्यमाशङ्क्य परिहरति। यद्यपीति॥ विशेषणाना-मानन्त्यात्प्रत्येकं प्रतिषेधवचनासम्भवमभिप्रेत्याह। अहोरा-त्राद्या इति॥ पाप्मकार्य्यमात्मानमप्राप्यैव तन्निवृत्तौ हेतुमाह। अपहतेति॥ यथोक्तसेतुप्राप्तौ फलितमाह। यस्मादिति॥ स्वाभा-विकस्यानर्थत्वमित्याशङ्क्याह। देहवत्त्व इति॥ विद्धो दुःखादि-सम्बन्धी॥ इतश्चात्मसेतोरस्ति महाभागधेयत्वमित्याह। किञ्चेति॥ कथं सर्व्वमपि तमोरूपमहरेव विदुषः स्यान्नहि विद्ययापि विरुद्धोऽर्थः सिद्ध्यतीत्याशङ्क्याह। विज्ञप्तीति॥ तत्र हेतुमाह। सकृदिति॥ ब्रह्मणश्चायोऽवेद्यो लोकः स्वप्रकाशचिदेकतानो यतो-

उ॰ पि नक्तमहरेवाभिनिष्पद्यते सकृद्विभातो ह्येवैष ब्रह्मलोकः ॥ २ ॥ तद्य एवैतं ब्रह्मलोकं ब्रह्मचर्य्येणानुविन्दन्ति तेषामेवैष ब्रह्मलोकस्तेषाꣳ सर्व्वेषु लोकेषु कामचारो भवति ॥ ३ ॥ ४ ॥

---

भा॰ करूपं विदुषः सम्पद्यत इत्यर्थः । सकृद्विभातः सदा विभातः सदैकरूपः स्वेन रूपेणैव ब्रह्मलोकः । तत्रैवं सत्येतं यथोक्तं ब्रह्मलोकं ब्रह्मचर्य्येण स्त्रीविषयतृष्णात्यागेन शास्त्राचार्य्योपदेशमनुविन्दन्ति स्वात्मसंवेद्यतामापादयन्ति एतेषामेव ब्रह्मचर्य्यसाधनवतां ब्रह्मविदामेष ब्रह्मलोकः । नान्येषां स्त्रीविषयसम्पर्कजाततृष्णानां ब्रह्मविदामपीत्यर्थः । तेषां सर्व्वेषु लोकेषु कामचारो भवतीत्युक्तार्थं । तस्मात्परममेतत्साधनं ब्रह्मचर्य्यं ब्रह्मविदामित्यभिप्रायः ॥ ४ ॥

---

व्या॰ ऽवतिष्ठतेऽतस्तद्रूपत्वाद्विदुषो यथोक्तरूपत्वमविरुद्धमित्यर्थः ॥ विद्याफले यथोक्तरीत्या व्यवस्थिते सत्येतत्फलं विद्यावत्त्वेन केषां सिद्ध्यतीत्याशङ्क्याह । तत्रेति ॥ ब्रह्मचर्य्यवतां विद्याद्वारा ब्रह्माख्यो लोकः फलतीत्यर्थः ॥ तेषामेवेत्येवकारद्योतितमर्थमाह । नान्येषामिति ॥ ब्रह्मविदामपीति वाङ्मात्रब्रह्मवित्त्वमुच्यते । तेषां ब्रह्मचर्य्यवतां ब्रह्मविदामिति यावत् ॥ ब्रह्मचर्य्यसाधनवतामेव ब्रह्मवित्त्वेन ब्रह्माख्यो लोको भवतीति स्थिते फलितमाह । तस्मादिति ॥ साधनं ब्रह्मविद्यायामिति शेषः । ब्रह्मविदामिति भाविनीं वृत्तिमाश्रित्योक्तं ॥ ४ ॥

उ० अथ यद्यज्ञ इत्याचक्षते ब्रह्मचर्य्यमेव तद्ब्रह्म-
चर्य्येण ह्येव यो ज्ञाता तं विन्दतेऽथ यदिष्ट-
मित्याचक्षते ब्रह्मचर्य्यमेव तद्ब्रह्मचर्य्येण ह्येवेष्ट्वा-

भा० य आत्मा स सेतुत्वादिगुणैस्तुतस्तत्प्राप्तये ज्ञानसह-
कारिसाधनान्तरं ब्रह्मचर्य्याख्यं विधातव्यमित्याह। यज्ञा-
दिभिः तत् स्तौति कर्त्तव्यार्थं। अथ यद्यज्ञ इत्याचक्षते
लोके परमपुरुषार्थसाधनं कथयन्ति शिष्टास्तद्ब्रह्मचर्य्य-
मेव। यज्ञस्यापि यत्फलं तद्ब्रह्मचर्य्यवाँल्लभतेऽतो यज्ञोऽपि
ब्रह्मचर्य्यमेवेति प्रतिपत्तव्यं। कथं ब्रह्मचर्य्यं यज्ञ इत्याह।
ब्रह्मचर्य्येणैव हि यस्माद्यो ज्ञाता स तं ब्रह्मलोकं यज्ञ-
स्यापि पारम्पर्य्येण फलभूतं विन्दते लभते ततो यज्ञोऽपि
ब्रह्मचर्य्यमेवेति। यो ज्ञातेत्यक्षरानुवृत्तेर्यज्ञो ब्रह्मचर्य्यमेव।
अथ यदिष्टमित्याचक्षते ब्रह्मचर्य्यमेव तत्। कथं ब्रह्मच-
र्य्येणैव साधनेन तमीश्वरमिष्ट्वा पूजयित्वा अथ वैषणा-
मात्मविषयां कृत्वा तमात्मानमनुविन्दते। एषणादीष्ट-

आ० अथ यथोक्तपरमात्मप्राप्तिसाधने ज्ञाने सहकारिब्रह्मचर्य्यं
प्रागेवोक्तं॥ तथाच कृतं ब्रह्मचर्य्यविषयेणोत्तरग्रन्थेनेत्याशङ्क्याह।
य आत्मेति॥ अमाद्यपेक्षया अन्तरशब्दः। उक्तमपि ब्रह्मचर्य्यं
विधातुमनन्तरग्रन्थप्रवृत्तिरित्यर्थः॥ किमिति तर्हि तस्य स्तुति-
रित्याशङ्क्य तस्या विधिशेषत्वं दर्शयति। यज्ञादिभिस्तौति॥
श्रुतिराद्यान्तरं वाक्यमित्युक्तं तदादाय व्याकरोति। अथेत्या-
दिना॥ ब्रह्मचर्य्यस्योक्तरीत्या विधित्सितत्वे तदीयस्तुतिप्रारम्भा-
र्थोऽथशब्दः॥ यज्ञस्य ब्रह्मचर्य्ये ऽन्तर्भावं साधयति। यज्ञस्या-
पीति॥ उक्तमेवार्थमाकाङ्क्षाद्वारा समर्थयते। कथमित्यादिना॥

उ० त्मानमनुविन्दते ॥ १ ॥ अथ यत्सत्त्रायणमित्याचक्षते ब्रह्मचर्य्यमेव तद्ब्रह्मचर्य्येण ह्येव सत आत्मनस्त्राणं विन्दतेऽथ यन्मौनमित्याचक्षते ब्रह्मचर्य्य-

भा० मपि ब्रह्मचर्य्यमेव। अथ यत्सत्त्रायणमित्याचक्षते ब्रह्मचर्य्यमेव तत्तथा। सतः परस्मादात्मज्ञ आत्मनस्त्राणं रक्षणं ब्रह्मचर्य्यसाधनेन विन्दते अतः सत्त्रायणशब्दमपि ब्रह्मचर्य्यमेव तत्। अथ यन्मौनमित्याचक्षते ब्रह्मचर्य्यमेव तद्ब्रह्मचर्य्येणैव साधनेन युक्तः सन्नात्मानं शास्त्राचार्य्याभ्यामनुविद्य पश्चान्मनुते ध्यायति। अतो मौनशब्दमपि ब्रह्मचर्य्यमेव। अथ यदनाशकायनमित्याचक्षते ब्रह्मचर्य्यमेव तत्। यमात्मानं ब्रह्मचर्य्येणानुविन्दते स एष हि आत्मा ब्रह्मचर्य्यसाधनवतो न नश्यति तस्मादनाशकायनमपि ब्रह्मचर्य्यमेव। अथ यदरण्यायनमित्याचक्षते ब्रह्मचर्य्यमेव तत्। अर ण्यशब्दयोरर्णवयोर्ब्रह्मचर्य्यवतोऽयमादरण्यायनं ब्रह्मचर्य्यं। यो ज्ञाना-द्यज्ञः। एषणादिष्टं। सतस्त्राणात्सत्त्रायणं। मननान्मौनं। अनाशनादनाशकायनं। अर ण्ययोर्गमनादरण्यायनं।

व्या० पारम्पर्य्येण चित्तशुद्धिद्वारेणेत्यर्थः। न केवलं फलद्वारा यज्ञो ब्रह्मचर्य्येऽन्तर्भवति। किन्तु यकारज्ञकारसंस्पर्शादपीत्याह। यो ज्ञातेति ॥ इष्टस्य ब्रह्मचर्य्यान्तर्भावमाकाङ्क्षाद्वारा स्फोरयति। कथमित्यादिना॥ पूजयित्वा तमात्मानमनुविन्दत इति सम्बन्धः॥ ब्रह्मचर्य्येणात्मविषयैषणा निष्पाद्यते। इष्टेनापि तदेव सम्पाद्यते। तस्मादेषणादुभयसादृश्यरूपादिष्टमपि यज्ञवद्ब्रह्मचर्य्यमेवेत्याह। एषणादीति ॥ बहुयजमानकं वैदिकं कर्म्म सत्त्रायणं। तथा यज्ञवदिष्टवच्चेत्यर्थः॥ कथं सत्त्रायणं ब्रह्मचर्य्येऽन्तर्भवतीत्याशङ्क्याह।

उ० मेव तद्ब्रह्मचर्य्येण ह्येवात्मानमनुविद्य मनुते ॥२॥ अथ यदनाशकायनमित्याचक्षते ब्रह्मचर्य्यमेव तद्देष ह्यात्मा न नश्यति यं ब्रह्मचर्य्येणानुविन्दतेऽथ

---

भा० इत्यादिभिर्महद्भिः पुरुषार्थसाधनैः स्तुतत्वाद्ब्रह्मचर्य्यं परमं ज्ञानसहकारिकारणं साधनमित्यतो ब्रह्मविदा यत्नतो रक्षणीयमित्यर्थः। तत्र हि ब्रह्मलोके अरश्च ह वै प्रसिद्धो ण्यश्चार्णवौ समुद्रौ। समुद्रावपामेव सरसी तृतीयस्यां। भुवमन्तरिक्षञ्चापेक्ष्य तृतीया द्यौस्तस्यां तृतीयस्यामितोऽस्माल्लोकादारभ्य गण्यमानायां दिवि। तत्रैव चैरं इराऽन्नं तन्मय ऐरो मण्डस्तेन पूर्णमैरं मदीयं तदुपयोगिनां मदकरं हर्षोत्पादकं सरः। तत्रैव चाश्वत्थो वृक्षः सोमोऽमृतं तन्निस्रवोऽमृतस्रवमिति वा। तत्रैव च ब्रह्मलोके ब्रह्मचर्य्यसाधनरहितैर्ब्रह्मचर्य्यसाधनवज्ञोऽन्यैर्न जीयत इत्यपराजिता नाम पूः पुरी ब्रह्मणो हिरण्यगर्भस्य। ब्रह्मणा च प्रभुणा विशेषेण मितं निर्मितं तच्च हिरण्मयं सौवर्णं प्रभुविनिर्मितं मण्डपमिति वाक्यशेषः। तत्र ब्रह्मलोके एतावर्णवा-

---

आ० सत इति॥ उपवासपरायणत्वमनाशकायनं तत्कथं ब्रह्मचर्य्येऽन्तर्भवतीत्याशङ्क्याह। यमात्मानमिति॥ अरण्यायनमरण्यवासस्तत्कथं ब्रह्मचर्य्यान्तर्भूतमित्याशङ्क्याह। अरण्यशब्दयोरिति॥ विस्तरेणोक्तमर्थं संक्षिप्याह। यो ह्यनादित्यादिना॥ यो ब्रह्मचर्य्येणात्मनो ह्यानादात्मानं विन्दते स ब्रह्मलोकं लभते। तस्मात्यज्ञो ब्रह्मचर्य्यमिति योजना। आदिशब्देन तस्य परमपुरुषार्थसाधनत्वं गृह्यते। ब्रह्मचर्य्यस्य स्तुतत्वात्तद्विषयं विधिमुक्त्वा तत्सहकृतविद्यासाध्यफलं कथयति। तत्रेति॥ ब्रह्मचर्य्य-

उ॰ यदरण्यायनमित्याचक्षते ब्रह्मचर्य्यमेव तदरश्च

भा॰ वरण्याख्यावुक्तौ ब्रह्मचर्य्येण साधनेनानुविन्दन्ति ये तेषामेष यो व्याख्यातो ब्रह्मलोकस्तेषाञ्च ब्रह्मचर्य्यसाधनवतां ब्रह्मविदां सर्व्वेषु लोकेषु कामचारो भवति नान्येषामब्रह्मचर्य्यपराणां वाह्यविषयासक्तबुद्धीनां कदापीत्यर्थः। नन्वत्र त्वमिन्द्रस्त्वं यमस्त्वं वरुण इत्यादिभिर्यथा कश्चित् स्तूयते महार्हः। एवमिष्टादिभिः शब्दैर्न स्त्रीविषयतृष्णानिवृत्तिमात्रं स्तुत्यर्थं किन्तर्हि ज्ञानस्य मोक्षसाधनत्वात्तदेवेष्टादिभिः स्तूयत इति केचित्। न स्त्र्यादिवाह्यविषयतृष्णापहृतचित्तानां प्रत्यगात्मविवेकविज्ञानानुपपत्तेः। पराञ्चि खानि व्यतृणत्स्वयम्भूस्तस्मात्पराङ्पश्यति नान्तरात्मन्नित्यादिश्रुतिस्मृतिशतेभ्यः। ज्ञान-

---

था॰. स्यात्यल्पसाधनत्वान्महती स्तुतिरयुक्ता। तद्ब्रह्मचर्य्येण ज्ञानमुपलक्ष्य तदेव स्तूयत इति मतमुत्थापयति। नन्वत्रेति॥ तस्य क्षुद्रसाधनत्वमसिद्धं। दुरनुष्ठेयत्वात्। तद्व्यतिरेकेण ज्ञानासम्भवाच्चेत्युत्तरमाह। नेत्यादिना॥ विषयापहृतचित्तानां नराणां विवेकासम्भवे प्रमाणमाह। पराञ्चीति॥ ध्यायतो विषयानित्याद्या स्मृतिरत्र विवक्षिता॥ ब्रह्मचर्य्यस्योत्तमसाधनत्वे सिद्धे फलितमाह। ज्ञानेति॥ ब्रह्मलोकप्राप्तिसाधनस्य ब्रह्मचर्य्यस्य यज्ञादिभिः स्तुतत्वात्तेषामपि तत्प्राप्तिसाधनत्वं श्रुत्याऽभिप्रेतमिति शङ्कते। नन्विति॥ किन्तेषां पुरुषार्थसाधनत्वं प्रस्तुतश्रुत्या प्रतीतं किंवा ब्रह्मलोकसाधनत्वमिति विकल्प्याद्यमङ्गीकरोति। सत्यमिति॥ न द्वितीयो वाक्यभेदप्रसङ्गादित्याह। न त्विति॥ कथं तर्हि यज्ञादिर्ब्रह्मचर्य्यस्तुतिस्तत्राह। किन्तर्हीति॥ उक्तमर्थं दृष्टान्तेन स्पष्टयति। यथेति॥ त्वमिन्द्रस्त्वं

उ० ह वै ण्यश्चार्णवौ ब्रह्मलोके तृतीयस्यामितो दिवि

भा० सहकारिकारणं स्त्र्यादिविषयतृष्णानिवृत्तिसाधनं विधातव्यमेवेति युक्तैव तत्स्तुतिः । ननु च यज्ञादिभिः स्तुतं ब्रह्मचर्य्यमिति यज्ञादीनां पुरुषार्थसाधनत्वं गम्यते । सत्यं गम्यते । न त्विह ब्रह्मलोकं प्रति यज्ञादीनां साधनत्वमभिप्रेत्य यज्ञादिभिर्ब्रह्मचर्य्यं स्तूयते किन्तर्हि तेषां प्रसिद्धपुरुषार्थसाधनत्वमपेक्ष्य यथेन्द्रियादिभी राजा न तु यत्रेन्द्रादीनां व्यापारस्तत्रैव राज्ञ इति तद्वत् । य इमे अर्णवादयो ब्राह्मलौकिकाः सङ्कल्पजाश्च पित्रादयो भोगास्ते किं पार्थिवा आप्याश्च । यथेह लोके दृश्यन्ते तद्वदर्णववृक्षपूःस्वर्णमण्डपानि आहोस्विन्मानसप्रत्ययमात्राणीति । किञ्चातो यदि पार्थिवा आप्याश्च स्थूलाः स्यु-

व्या० विष्णुरित्यादिना विप्रादिभी राजा स्तूयते तथापि न तस्येन्द्रादिव्यापारे निरङ्कुशं कर्तृत्वमस्तीति यथेष्यते तथा यज्ञादिभिर्ब्रह्मचर्य्यस्य स्तुतस्यापि नास्ति तुल्यफलत्वमित्यर्थः ॥ ब्रह्मलोकस्थान् पदार्थान्निर्णेतुं विचारमवतारयन्नादौ तद्विषयमाह । य इम इति ॥ तत्रैकं पक्षमुत्थाप्य दृष्टान्तेन तदुत्थितप्रकारमाह । ते किमिति ॥ पक्षान्तरं स्वप्नदृष्टान्तवशाद्दर्शयति ॥ आहोस्विदिति ॥ कस्मिन्पक्षे को लाभः को वा दोषः ॥ दोषदर्शनान्मानसत्वेन सौक्ष्म्ये च पुराणानुग्रहसम्भवात्तेन मानसा एवेत्याह । यदीति ॥ न केवलं तेषां स्थौल्ये सत्यभेऽस्मिन्नित्यादिश्रुत्या पुराणस्मृत्या च विरोधः किन्त्वशोकं सन्तापवर्जितमहिमं शीतस्पर्शशून्यं ब्रह्मलोकमुपयन्तीत्याद्याश्च श्रुतयो ब्रह्मलोकं निरूपयन्त्यस्तत्रत्यानामर्थानां स्थौल्ये विरुध्येरन् । स्थूलानां पदार्थानां तत्र सत्त्वे शीतस्पर्शादेरवर्जनीयत्वादित्याह । अशोकमिति ॥ ब्राह्मलौकि-

उ० तदैरम्मदीयꣳ सरस्तदश्वत्थः सोमसवनस्तदप-

भा० र्थ्याकाशे समाधानानुपपत्तिः। पुराणे च मनोमयानि ब्रह्मलोके शरीरादीनीति वाक्यं विरुद्ध्येत। अशोकमहिम-मित्याद्याश्च श्रुतयः। ननु समुद्राः सरितः सरांसि वाप्यः कूपा यज्ञा वेदा मन्त्रादयश्च मूर्त्तिमन्तो ब्रह्माण-मुपतिष्ठन्त इति मानसत्वे विरुद्ध्येत पुराणस्मृतिः। न मूर्त्तिमत्त्वे प्रसिद्धरूपाणामेव तत्र गमनानुपपत्तेः। तस्मा-त्प्रसिद्धमूर्त्तिव्यतिरेकेण सागरादीनां मूर्त्यन्तरं सागरा-दिभी रूपान्तरब्रह्मलोकगन्तृत्वं कल्पनीयं। तुल्यायाञ्च कल्पनायां यथा प्रसिद्धा एव मानस्य आकारवत्यो मूर्त्तयो युक्ताः कल्पयितुं मानसदेहानुरूप्यसम्बन्धोप-

आ० कपदार्थानां मानसत्वेन पुराणस्मृत्यन्तरविरोधः शंसते। नन्विति ॥ किं दृश्यमानरूपेण समुद्रादीनां ब्रह्मलोकगमनं स्मृत्यर्थः किं वा स्वरूपान्तरेणेति विकल्प्याद्यं दूषयति। न मूर्त्तिमत्त्व इति ॥ उभयत्रानुपलम्भप्रसङ्गादित्यर्थः ॥ प्रथमपक्षा-योगे द्वितीयं पक्षं परिशिष्टमाचष्टे। तस्मादिति ॥ अस्तु द्वितीयो विकल्पः का नो हानिरित्याशङ्क्य ब्रह्मलोके मानसेन देहेन मानसानामेव सागरादीनां मानसरूपेण सह सम्बन्धोपपत्ते-र्मानसा एव मूर्त्तयस्तेषां ब्रह्मलोकस्थाः कल्पयितुं युक्ता इत्याह। तुल्यायाञ्चेति ॥ तर्हि मनोरथकल्पितवदतिचञ्चलत्वाद्भोगयो-ग्याकारत्वं सागरादीनां न स्यादित्याशङ्क्याह। दृष्टादीति ॥ स्वप्नतुल्यत्वे मिथ्यात्वप्रसक्तिरिति शङ्कते। नन्विति ॥ प्रसङ्गस्ये-ष्टत्वमाशङ्क्य श्रुतिविरोधमाह। न इम इति ॥ ये स्वप्ने दृष्टास्ते न सन्ति न तु दृष्टा इति दर्शनं बाध्यते तथा च स्वाप्नसंवेदनस्य सत्यत्वमिष्टं तथैव ब्राह्मलौकिकानां पदार्थानां मानसस्येति दृष्टान्तं विशदयति। मानसा हीति ॥ जागरिते संविदतिरिक्ताः

उ॰ राजिता पूर्ब्रह्मणः प्रभुविमितꣳ हिरण्मयं॥३॥

भा॰ पत्तेः। दृष्टा हि मानस्य एवाकारवत्यः पुंस्त्याद्या मूर्त्तयः स्वप्ने। ननु ता अनृता एव। त इमे सत्याः कामा इति श्रुतिस्तथा सति विरुद्ध्येत। न। मानसप्रत्ययस्य सत्त्वोपपत्तेः। मानसा हि प्रत्ययाः स्त्रीपुरुषाद्याकाराः स्वप्ने दृश्यन्ते। ननु जाग्रद्वासनारूपाः स्वप्नदृश्या न तु तत्र स्त्र्यादयः स्वप्ने विद्यन्ते। अत्यल्पमिदमुच्यते। जाग्रद्विषया अपि मानसप्रत्ययाभिनिर्वृत्ता एव सदीक्षा-भिर्निर्वृततेजोबन्नमयत्वाज्जाग्रद्विषयाणां। सङ्कल्पमूला हि लोका इति चोक्तं। समक्लृपतां द्यावापृथिवी इत्यत्र सर्व्व-श्रुतिषु च प्रत्यगात्मन उत्पत्तिः प्रलयश्च तत्रैव स्थितिश्च

---

व्या॰ सन्ति पदार्थास्तद्वासनारूपास्ते स्वप्ने भान्ति न तु संविदात्मकं तेषामिति शङ्कते। नन्विति॥ जागरितस्यापि संविद्विवर्त्त-त्वान्न पृथगस्ति सत्त्वमित्युत्तरमाह। अत्यल्पमिति॥ भूमविद्या-लोचनायामपि जाग्रद्विषयाणां संविद्विवर्त्तत्वं सेत्स्यतीत्याह। सङ्कल्पमूला हीति॥ इतश्च जाग्रद्विषयाणां संविद्विवर्त्तत्वमि-त्याह। सर्व्वश्रुतिषु चेति॥ ननु कुलालो घटं चिकीर्षुर्मनसि सङ्कल्पितमाकारं बहिर्निर्म्मिमीते तत्र सङ्कल्पो बाह्याकारस्य निमित्तं सङ्कल्पस्य पूर्व्वानुभूतसजातीयगोचरः पूर्व्वानुभूतोऽपि पूर्व्वतरसङ्कल्पनिमित्तनैमित्तिकभावः सर्व्वस्य संविद्विवर्त्तत्वे कथमुपपद्यते तत्राह। तस्मादिति॥ यस्मात्सतः सर्व्वस्येक्षणं पूर्व्वकल्पीयसदृशगोचरं पूर्व्वकल्पीया ततः पूर्व्वतरेक्षणनिमित्ता इति। संविदेवेत्थं स्वाविद्यया निवर्त्तते निरवयवस्य सन्मा-त्रस्य स्वारस्येनेक्षणाद्यनुपपत्तेस्तस्मात्सर्व्वस्य संविद्विवर्त्तत्वेऽपि निमित्तनैमित्तिकभावोऽयमनिर्वाच्यो न विरुध्यत इत्यर्थः॥ अथ सच्छब्दवाच्यायाः संविदोऽनिर्व्वाच्यस्पन्दनकाले ये विषया बाह्य-

उ॰ तद्य एवैतावरं च ण्यश्चार्णवौ ब्रह्मलोके ब्रह्म-

---

भा॰ यथा वा अरा नाभावित्यादिनोच्यते । तस्मान्मानसानां वाह्यानां च विषयाणामितरेतरकार्य्यकारणत्वमिष्यत एव वीजाङ्कुरवत् । यद्यपि वाह्या एव मानसाः मानसा एव च वाह्या नानृतत्वं तेषां कदाचिदपि स्वात्मनि भवति । ननु स्वप्ने दृष्टाः प्रतिबुद्धस्यानृताभवन्ति विषयाः । सत्यमेव । जाग्रद्बोधापेक्षन्तु तदनृतत्वं न स्वतः । तथा स्वप्नबोधापेक्षञ्च जाग्रद्दृष्टविषयानृतत्वं न स्वतः । विशेषाकारमात्रन्तु सर्व्वेषां मिथ्याप्रत्ययनिमित्तमिति । वाचारम्भणं विकारो नामधेयमनृतं त्रीणि रूपाणीत्येव सत्यं ॥

---

व्या॰ तया भासन्तेऽतश्च कदाचिदपि संविदतिरेकेण सत्त्वानङ्गीकारादत्यन्तासत्त्वलक्षणमनृतत्वमापद्येत । तथा च व्यवहारभङ्गप्रसङ्गस्तत्राह । यद्यपीति ॥ तथापि नानृतत्वमित्यध्याहारः । अध्यस्तस्याधिष्ठानमेव स्वात्मा । तस्मिन्न कदाचिदप्यन्ततासत्त्वं तादात्म्येनैव स्फुरणादतो न व्यवहारभङ्गप्रसङ्ग इति भावः । कदाचिदपि नानृतत्वमिति वदता प्रतीतिकालात्कालान्तरेऽपि विषयाणां नासत्त्वमित्युक्तं तत्रानुभवविरोधं शङ्कते । नन्विति ॥ स्वप्नदृष्टानां समीहितमेव कालान्तरे मिथ्यात्वमित्यङ्गीकरोति ॥ सत्यमिति ॥ तर्हि तेषामसत्त्वमेव स्वीकृतमित्याशङ्क्याह । जाग्रदिति ॥ तथापि जाग्रद्बोधेनाविषयीकरणादसत्त्वं स्वप्नदृष्टानामेष्टव्यमित्याशङ्क्याह । तथेति ॥ यदि जाग्रद्बोधेनाविषयीकरणमात्रेणासत्त्वं स्वप्नदृष्टानां पदार्थानामिष्टं तर्हि जाग्रद्विषयाणामपि स्वप्नबोधेनाविषयीकरणादसत्त्वप्रसङ्गः । तन्न कदाचिदपि संविदि विषयाणामत्यन्तासत्त्वमित्यर्थः ॥ कथं तर्हि वाचारम्भणश्रुतिरित्याशङ्क्याह । विशेषेति ॥ त्रयाणां रूपाणां सत्यत्वे विशेषाकारमात्रं मिथ्येत्युक्तमयुक्तं । तेष्वपि विशेषाकारस्य सत्त्वा-

उ० चर्य्येणानुविन्दन्ति तेषामेवैष ब्रह्मलोकस्तेषाꣳ सर्व्वेषु लोकेषु कामचारो भवति ॥ ४ ॥ ५ ॥

---

भा० तान्यपि आकारविशेषतोऽनृतं। स्वतः सन्मात्ररूपतया सत्यं। प्राक्सदात्मप्रतिबोधात्स्वविषयेऽपि सर्व्वं सत्यमेव स्वप्नदृश्या इवेति न कश्चिद्विरोधः। तस्मान्मानसा एव ब्राह्मलौकिका अरण्यादयः सङ्कल्पजाश्च पित्रादयः कामाः। बाह्यविषयभोगवदशुद्धिरहितत्वाच्छुद्धसत्त्वसङ्कल्पजन्या इति निरतिशयसुखाः सत्याश्चेश्वराणां भवन्तीत्यर्थः। सत्सत्यात्मप्रतिबोधेऽपि रज्ज्वामिव कल्पिताः सर्पादयः सदात्मस्वरूपमेव प्रतिपद्यन्त इति सदात्मना सत्या एव भवन्ति॥ ५॥

---

व्या० दित्याशङ्क्याह। तान्यपीति॥ कथं तर्हि तेषु सत्यपदं प्रयुक्तमित्याशङ्क्याह। स्वत इति॥ तर्हि तत्सत्यमित्येतावत्प्रयोक्तव्यं किमिति चीणि रूपाणीत्येव सत्यमित्युक्तं तत्राह। प्रागिति॥ प्रकृतमुपसंहरति। तस्मादिति॥ प्रथमपच्चवद्द्वितीयपच्चे दोषाभावादिति यावत्। यथैहिकविषयवद्ब्राह्मलौकिका अपि विषया विचार्य्यमाणाः सत्यास्तर्हि कस्तत्र विशेषो येनैतत्परित्यागेन तत्कामिनां विद्याविधानं तत्राह। बाह्येति॥ जन्या ब्रह्मलोके विषया इति शेषः॥ प्रकृतायाः फलश्रुतेरित्यध्याहारः। ननु तेषामविद्यादशायामर्थक्रियाकारित्वरूपसत्यत्वसम्भवेऽपि कुतो विद्यावस्थायां सत्यत्वमित्याशङ्क्याह। सत्सत्येति॥ यथा रज्ज्वां कल्पितसर्पादयो रज्जुतत्त्वबोधे तदात्मतामेवापाद्यन्ते विवेचनात्। तथा सर्व्वेऽपि विषया विद्यावस्थायामन्वयव्यतिरेकाभ्यां परिहारायासन्मात्रत्वमेव प्राप्नुवन्तीति तत्सत्यत्वमविरुद्धमित्यर्थः॥ ५॥

उ॰ अथ या एता हृदयस्य नाड्यस्ताः पिङ्गलस्याणिम्नस्तिष्ठन्ति शुक्लस्य नीलस्य पीतस्य लोहितस्येत्यसौ वा आदित्यः पिङ्गल एष शुक्ल एष

---

भा॰ यस्तु हृदयपुण्डरीकगतं यथोक्तगुणविशिष्टं ब्रह्म ब्रह्मचर्य्यादिसाधनसम्पन्नः त्यक्तबाह्यविषयानृततृष्णः सन्नुपास्ते तस्येयं मूर्द्धन्या नाड्या गतिर्वक्तव्येति खण्ड आरभ्यते ॥ अथ या एता वक्ष्यमाणा हृदयस्य पुण्डरीकाकारस्य ब्रह्मोपासनस्थानस्य सम्बन्धिन्यो नाड्यो हृदयमांसपिण्डात्सर्व्वतो विनिःसृता आदित्यमण्डलादिव रश्मयस्ताश्चैताः पिङ्गलस्य वर्णविशेषविशिष्टस्याणिम्नः सूक्ष्मरसस्य रसेन पूर्णास्तदाकारा एव तिष्ठन्ति वर्त्तन्त इत्यर्थः। तथा शुक्लस्य नीलस्य पीतस्य लोहितस्य च रसस्य पूर्ण इति सर्व्वत्राध्याहार्य्यं। सौरेण तेजसा पित्ताख्येन पाकाभिनिर्वृत्तेन

---

आ॰ सगुणविद्याफलस्वरूपमित्थमुपपाद्य तत्प्राप्तये गतिर्व्वक्तव्येति नाडीखण्डमवतारयति। यस्त्विति ॥ यथोक्तो गुणः सत्यकामत्वादिः। ब्रह्मचर्य्यादीत्यादिशब्दः शमदमादिसङ्ग्रहार्थः। तमेवादिशब्दार्थं स्पष्टयति। त्यक्तेति ॥ अधिकारिणः सफलोपास्तिविध्यनन्तर्य्यमथशब्दार्थः। रसेनान्नस्येति शेषः। तदाकारा इति तच्छब्दोऽन्नरसविषयः। शुक्लस्येत्यादिषष्ठी पूर्व्ववत्। शुताविति शब्दोऽध्याहारद्योतनार्थः ॥ कथं पुनरन्नरसस्य पिङ्गलादिविचित्रो वर्णविशेषः सिद्ध्यतीत्याशङ्क्याह। सौरेणेति ॥ वातपित्ताख्यं सौरं तेजः। तेन पाकोऽशितस्य च जायते। तेनाभिनिर्वृत्तेनाल्पेन कफेन सम्पर्कात्तदेव पित्ताख्यं सौरन्तेजो भवति पिङ्गलं। तेन सम्पर्काद्रसस्य नाडीनाञ्च जायते पिङ्गलत्वमित्यर्थः ॥ तदेव

उ॰ नील एष पीत एष लोहितः ॥१॥ तद्यथा महापथ आतत उभौ ग्रामौ गच्छतीमञ्चामुञ्चैवमेवैता आदित्यस्य रश्मय उभौ लोकौ गच्छन्तीमञ्चा-

---

भा॰ कफेनाल्पेन सम्पर्कात्पिङ्गलं भवति सौरं तेजः पित्ताख्यं॥ तदेव वातभूयस्त्वान्नीलं भवति। तदेव च कफभूयस्त्वाच्छुक्लं। कफेन समतायां पित्तं। शोणितबाहुल्येन लोहितं। वैद्यकाद्वा वर्णविशेषा अन्वेष्टव्याः। कथं भवन्तीति श्रुतित्वाद्धादित्यसम्बन्धादेव तत्तेजसो नाडीष्वनुगतस्यैते वर्णविशेषा इति। कथमसौ वाऽऽदित्यः पिङ्गलो वर्णत एष आदित्यः शुक्लोऽप्येष नील एष पीत एष लोहित आदित्य एव। तस्याध्यात्मनाडीभिः कथं सम्बन्ध इत्यत्र दृष्टान्तमाह। तत्तत्र यथा लोके महान् विस्तीर्णः पन्था महापथ आततो व्याप्त उभौ ग्रामौ

---

आ॰ च पित्ताख्यं सौरन्तेजो यथोक्तपाकाभिनिर्वृत्तेन प्रभूतेन वातेन सम्बन्धात्तद्भूयस्त्वाद्भवति नीलं तेन च सम्पर्कादन्नरसस्य नाडीनाञ्च जायते नैल्यमित्याह। तदेवेति॥ प्रकृतमेव पित्ताख्यं सौरन्तेजो यथोक्तपाकवशादभिनिर्वृत्तकफस्य स्वसम्बन्धिनो भूयस्त्वाद्भवति शुक्लं तेन च सम्पर्कादन्नरसस्य नाडीनाञ्च शौक्ल्यं भवतीत्याह। तदेव चेति॥ उक्तपाकाभिनिर्वृत्तेन कफेन तदभिनिर्वृत्तस्यैव वातस्य समतायां तदेव तेजस्तत्सम्बन्धि पीतं जायते। तत्सम्बन्धाच्चान्नरसस्य च नाडीनाञ्च पीतत्वं भवतीत्याह। कफेनेति॥ यदा तु यथोक्तपाकाभिनिष्पन्नं शोणितम्बहुलं भवति तदा तस्य नाडीनाञ्च लौहित्यं भवतीत्याह। शोणितेति॥ पक्षान्तरमाह। वैद्यकादिति॥ अन्वेषणप्रकारमाह। कथ-

उ॰ मुञ्चामुष्मादादित्यात्प्रतायन्ते ता आसु नाडीषु सृप्ता आभ्यो नाडीभ्यः प्रतायन्ते तेऽमुष्मिन्नादित्ये सृप्ताः॥ २॥ तद्यत्रैतत्सुप्तः समस्तः सम्प्रसन्नः

---

भा॰ गच्छतीमञ्च सन्निहितममुञ्च विप्रकृष्टं दूरस्थमेव। यथा लोके दृष्टान्तो महापथ उभौ ग्रामौ प्रविष्टः। एवमेवैता आदित्या महापथा यथा गच्छन्ति तथोभयत्रादित्यस्य रश्मयः उभौ लोकावमुञ्चादित्यमण्डलमिमञ्च पुरुषं गच्छन्त्युभयत्र प्रविष्टाः। यथा महापथः। कथममुष्मादादित्यमण्डलात्प्रतायन्ते सन्तता भवन्ति। ता अध्यात्ममासु पिङ्गलादिवर्णासु यथोक्तासु नाडीषु सृप्ता गताः प्रविष्टा इत्यर्थः। आभ्यो नाडीभ्यः प्रतायन्ते प्रवृत्ताः सन्तानभूताः सत्यस्तेऽमुष्मिन् रश्मीनामुभयलिङ्गत्वात्ते इत्युच्यन्ते। तत्तत्र एवंसति यत्र यस्मिन् काले एतत्स्वप्नमयो जीवः सुप्तो भवति

---

आ॰ मिति॥ नाभेरूर्द्ध्वं हृदयादधस्तादामाशयमाचक्षते। तद्गतं तेजः सौरं पित्तमित्युच्यते। तच्चान्नरसस्य धात्वन्तरसहकारिवशाद्वर्णविशेषे कारणमाशयगतं पीतं रञ्जकं रसरञ्जनादित्यादिवचनादित्यर्थः। कथं तर्हि पिङ्गलस्येत्याद्या श्रुतिरित्याशङ्क्याह। श्रुतिस्त्विति॥ उक्तमर्थमाकाङ्क्षाद्वारा स्फोरयति। कथमित्यादिना॥ आदित्यस्य पैङ्गल्यादयो वर्णविशेषाः शास्त्रप्रामाण्यादेव प्रत्येतव्याः॥ आदित्यस्य तेजसो नाडीष्वनुगतस्य पैङ्गल्यादयो वर्णविशेषा भवन्तीत्युक्तं तदेव प्रश्नद्वारा दृष्टान्तावष्टम्भेन स्पष्टयति। तस्येत्यादिना॥ उभयत्रादित्यमण्डले पुरुषे चेत्यर्थः। तच्च पूर्व्वोक्तमेव दृष्टान्तमनुवदति। यथेति॥ उभौ ग्रामौ महापथा यथा गच्छति तथोभयत्रादित्यस्य रश्मयः प्रविष्टा

उ० स्वप्नं न विजानात्यासु तदा नाडीषु सृप्तो भवति तन्न कश्चन पाप्मा स्पृशति तेजसा हि तदा सम्पन्नो भवति ॥ ३ ॥ अथ यत्रैतदबलिमानं नीतो

भा० स्वापस्य द्विप्रकारत्वाद्विशेषणं समस्त इति । उपसंहृत-सर्व्वकरणवृत्तिरित्येतत् । अतो वाह्यविषयसम्पर्कजनित-कालुष्याभावात्सम्यक्प्रसन्नः सम्पन्नो भवति । अत एव स्वप्नविषयाकाराभासं मानसं स्वप्नप्रत्ययं न विजानाति नानुभवतीत्यर्थः । यदैवं सुप्तो भवति आसु सौरतेजः-पूर्णासु यथोक्तासु नाडीषु तदा सुप्तः प्रविष्टो नाडी-भिर्द्वारभूताभिर्हृदयाकाशं गतो भवतीत्यर्थः । न ह्यन्यत्र सत्सम्पत्तेः स्वप्नदर्शनमस्तीति सामर्थ्यान्नाडी-ष्विति सप्तमी तृतीयया परिणम्यते । तं सता सम्पन्नं न कश्चन न कश्चिदपि धर्म्माधर्म्मरूपः पाप्मा स्पृशतीति स्वरू-

व्या० इत्यर्थः ॥ तमेव प्रवेशं प्रश्नद्वारा प्रकटयति । कथमित्या-दिना ॥ कथं नाडीनां पिङ्गलादिवर्णत्वमित्याशङ्क्य सौरेण तेजसेत्यादिनोक्तं स्मारयति । यथोक्तास्विति ॥ अमुष्मिन्नादित्ये सृप्ता इति सम्बन्धः । कथं स्त्रीलिङ्गेन निर्द्दिष्टानां रश्मीनां पुंलिङ्गेन निर्द्देशस्तत्राह । रश्मीनामिति ॥ नाडीस्वरूपमुक्त्वा विज्ञानात्मनः सोपाधिकरश्मित्वेन ताः सौतुमादौ स्वापं प्रस्तौति । तत्त्रेति ॥ समम्यर्थमेव स्फुटयति । एवं सतीति ॥ नाडीस्वरूपे पूर्व्वोक्तरीत्या निरूपिते सतीत्यर्थः । एतत्स्वपनमिति क्रियाविशे-षणं ॥ समस्तविशेषणस्यार्थवत्त्वमाह । स्वापस्येति ॥ दर्शनवृत्ति-वददर्शनवृत्तिश्चेति द्विप्रकारं स्वापस्येष्टं । तत्र दर्शनवृत्तेः स्वापस्य व्यावृत्त्यर्थं समस्त इति विशेषणं ॥ तस्य सम्पिण्डितमर्थमाह ।

उ० भवति तमभित आसीना आहुर्जानासि मां जानासि मामिति स यावदस्माच्छरीरादनुत्क्रान्तो भवति तावज्जानाति ॥४॥ अथ यत्रैतदस्माच्छ-

भा० पावस्थितत्वात्तदात्मनः । देहेन्द्रियविशिष्टं हि सुखदुःखकार्य्यप्रदानेन पाप्मा स्पृशतीति। न तु सत्सम्पन्नं स्वरूपावस्थं कश्चिदपि पाप्मा स्प्रष्टुमुत्सहते । अविषयत्वात् । अन्यो ह्यन्यस्य विषयो भवति न त्वनन्यत्वं केनचित्कुतश्चिदपि सत्सम्पन्नस्य । स्वरूपप्रच्यवनं त्वात्मनो जाग्रत्स्वप्नावस्थां प्रति गमनं । वाह्यविषयप्रतिबोधोऽविद्याकामकर्म्मवीजस्य ब्रह्मविद्याकृतनाशादाहनिमित्तमित्यवोचाम षष्ठ एव तदिहापि प्रत्येतव्यं। यदैवं सुप्तः सौरेण तेजसा हि नाड्यन्तर्गतेन सर्व्वतः सम्पन्नो व्याप्तो भवति । अतो विशेषेण चक्षुरादिनाडीद्वारैर्वाह्यविषयभोगायाऽप्रसृतानि करणान्यस्य

व्या० उपसंहृतेति ॥ विशेषणान्तरमुत्थाप्य व्याकरोति। यत इति ॥ उपसंहृतसर्व्वकरणत्वादिति यावत्। उक्तं विशेषणद्वयमुपजीव्य स्वप्नमित्यादि व्याचष्टे॥ यत इति॥ नाडीषु प्रविष्टो भवतीति यदुक्तं तदयुक्तं । य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेत इत्यङ्गीकारादित्याशङ्क्याह । नाडीभिरिति ॥ नाडीष्विति श्रुता सप्तमी । कथं नाडीभिरिति तृतीया व्याख्यायते तत्राह। न हीति ॥ तदेतदिति सुषुप्त्यवस्थोच्यते॥ तस्यामवस्थायां कर्म्माभावे कथं पुनरुत्थानमित्याशङ्क्याह । देहेति॥ सुखदुःखानुभवाभावात्पाप्मासंस्पर्शोऽत्र विवक्षितो न तु कर्म्माभावादित्यर्थः ॥ अविषयत्वं साधयति । अन्यो हीति ॥ सुषुप्तेः स्वरूपावस्थस्य कथं प्रच्यवनमित्याशङ्क्याह। स्वरूपेति॥

उ॰ रीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्द्ध्वमाक्रमते स ओमिति वा होद्वामीयते स यावत्क्षिप्येन्मनस्तावदादित्यं गच्छत्येतद्वै खलु लोकद्वारं वि-

---

भा॰ तदा भवन्ति। तस्मादयं करणानां निरोधात्स्वात्मन्येवावस्थितः स्वप्नं न विजानातीति युक्तं ॥ तत्रैवं सत्यथ यत्र यस्मिन् काले बलिमानमबलभावं देहस्य रोगादिनिमित्तं जरादिनिमित्तं वा कृशीभावमेतन्नयनं नीतः प्रापितो देवदत्तो मुमूर्षुर्यदा भवतीत्यर्थः। तमभितः सर्व्वतो वेष्टयित्वाऽऽसीना ज्ञातय आहुर्जानासि मां तव पुत्रं। जानासि मां पितरं वेत्यादि। स मुमूर्षुर्यावदस्माच्छरीरादनुत्क्रान्तोऽनिर्गतो भवति तावत्पुत्रादीन् जानाति। अथ यत्र यदैतत्क्रियाविशेषणमित्यस्माच्छरीरादुत्क्रामति। अथ तदैतैरेव यथोक्ता रश्मिभिरूर्द्ध्वमाक्रमते यथा कर्म्मजितं लोकं।

---

व्या॰ अविद्याकामकर्म्मणां वीजमनाद्यज्ञानं तस्य ब्रह्मविद्याख्येनाग्निना न स्वापे दाहस्तन्निमित्तं सुषुप्तस्य पुनः स्वरूपप्रच्यवनमिति सम्बन्धस्तदेव व्याचष्टे। जाग्रदिति॥ कीदृक्प्रच्यवनमित्यपेक्षायामाह। वाह्येति॥ एतच्च सति सम्पद्य न विदुरित्यादावुदितमित्याह। इत्यवोचामेति॥ तेजसा हीति पाप्मास्पर्शश्रौतो हेतुस्तं हेतुं व्याचष्टे। यदेति॥ तद्व्यापत्तिकार्य्यमाह। अत इति॥ कार्य्यकरणासंस्पर्शाभावफलं दर्शयति। तस्मादिति॥ नाडीरेवं स्तुत्वा ताभिरूर्द्ध्वगमनं प्रदर्शयितुं मरणकालं प्रपञ्चयति॥ तत्रेति॥ तस्यैवार्थमाह। एवं सतीति॥ नाडीनामुक्तरीत्या प्राशस्त्ये सतीत्यर्थः। ताभिरूर्द्ध्वगमनप्रदर्शनप्रारम्भार्थोऽथशब्दः। रोगादीत्यादिपदमागन्तुकसर्व्वनिमित्तसंग्रहार्थं

उ॰ दुषां प्रपदनं निरोधोऽविदुषां

भा॰ प्रेत्य विद्वान्। इतरस्तु विद्वान्यथोक्तसाधनसम्पन्नः स ॐ इत्योङ्कारेणात्मानं ध्यायन् यथापूर्व्वं वा ह। एवं ऊर्द्धोर्द्धं वा विद्वांश्चेदितरस्तीर्य्यङ्ङित्यभिप्रायः। मीयते प्रमीयते गच्छतीत्यर्थः। स विद्वानुत्क्रमिष्यन्यावत्क्षिपेन्मनो यावता कालेन मनसो चयः स्यात्तावता कालेनादित्यं गच्छति प्राप्नोति चिप्रं गच्छतीत्यर्थो न तु तावतैव काले-नेति विवचितं। किमर्थमादित्यं गच्छतीत्युच्यते। एतद्वै खलु प्रसिद्धं ब्रह्मलोकस्य द्वारं य आदित्यस्तेन द्वार-भूतेन ब्रह्मलोकं गच्छति विद्वान्। अतो विदुषां प्रपदनं प्रपद्यन्ते ब्रह्मलोकमनेन द्वारेणेति प्रपदनं। निरोधनं निरोधोऽस्मादादित्यादविदुषां भवतीति निरोधः।

---

व्या॰ जरादीत्यादिपदं तु नैसर्गिकसर्व्वनिमित्तद्योतनार्थमिति भेदः। एतन्नयनमिति क्रियाविशेषणं। प्रारब्धकर्म्मावसानार्थोऽथशब्दः। एतदिति क्रियाविशेषणमेतदुत्क्रमणं यथा स्यात्तथेत्यर्थः। यथो-क्ताभिर्नाडीषु प्रसृताभिरादित्यमण्डलादागताभिररिति यावत्। कर्म्मणा जितं वशीकृतं स्वात्मसम्बन्धितामापादितं लोकमनतिक्रम्य तं प्रेत्य विद्वान् केवलकर्म्मवान् गच्छतीत्यर्थः॥ दहरविद्यावतो गतिं दर्शयति। इतरस्त्विति॥ यथोक्तसाधनं दहरविज्ञानं तेन सम्पन्नो विशिष्ट इत्यर्थः। स ध्यानमृच्छतीत्युत्तरत्र सम्बन्धः। यथा पूर्व्वं स्वप्नावस्थायामिव मरणावस्थायामपीत्यर्थः। वा हेति निपातद्वयस्यावधारणरूपमर्थं कथयति। एवेति॥ उच्छब्दार्थ-माह। ऊर्द्धमिति॥ वाशब्देन द्योतितं विकल्पं दर्शयति। विद्वांश्चेदिति॥ यदि विद्वान् प्रमीयते तदोर्द्धमेव गच्छति। यदि त्वविद्वान् प्रमीयते तदा तिर्य्यगेव गच्छतीति विभागः॥

उ॰ तदेष श्लोकः शतञ्चैका च हृदयस्य नाड्यस्तासां मूर्द्धानमभिनिःसृतैका । तयोर्द्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्त्युत्क्रमणे भवन्ति ॥ ६ ॥ ६ ॥

---

भा॰ सौरेण तेजसा देहे एव निरुद्धाः सन्तो मूर्द्धन्या नाड्या नोत्क्रामन्त एवेत्यर्थः ॥ ५ ॥

विष्वङ्ङन्या इति श्लोकादेतस्मिन्यथोक्तेऽर्थे एष श्लोको मन्त्रो भवति । शतञ्चैका चैकोत्तरशतं नाड्यो हृदयस्य मांसपिण्डभूतस्य सम्बन्धिन्यः प्रधानतो भवन्ति । आनन्त्या-द्देहे नाडीनां तासामेका मूर्द्धानमभिनिःसृता विनिर्गता तयोर्द्ध्वमायन् गच्छन्नमृतत्वममृतभावमेति विष्वङ्नानागत-यस्तिर्यग्विसर्पिण्य ऊर्द्ध्वगाश्चान्या नाड्यो भवन्ति संसार गमनद्वारभूता न त्वमृतत्वाय किं तर्ह्युत्क्रमणे एवो-त्क्रान्त्यर्थमेव भवन्तीत्यर्थः । द्विरभ्यासः प्रकरणसमा-प्त्यर्थः ॥ ६ ॥

---

आ॰ विदुषस्त्यक्तदेहस्यादित्यप्राप्तावत्यन्तशैघ्र्यं दर्शयितुमनन्तरवाक्य-मादत्ते किं स्यादित्यत आह । अत इति ॥ अविदुषामपि तर्हि प्राप्तानामादित्यं ततो निरुद्धानां पुनर्ब्रह्मलोकप्राप्तिरित्याश-ङ्क्याह । सौरेणेति ॥ ५ ॥

देहे निरुद्धानां मूर्द्धन्यया नाड्या नोत्क्रमणमविदुषामित्यत्र लिङ्गं दर्शयति । विष्वङ्ङिति ॥ यथोक्तार्थो नाडीविभागलक्षणः प्रधानान्त इति विशेषणतात्पर्यमाह । आनन्त्यादिति ॥ प्रकरणं नाडीविषयं दहरविद्याविषयं वा ॥ ६ ॥

उ॰ य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्यस्तमात्मानम-

---

भा॰ अथ य एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतीरूपं सम्पद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेत्युक्तं। तत्र कोऽसौ सम्प्रसादः कथं वा तस्याधिगमः। यथा सोऽस्माच्छरीरात्समुत्थाय परं ज्योतीरूपं सम्पद्य स्वेन रूपेणाभिनिष्पद्यते। येन लक्षणेनाभिनिष्पद्यते स किंलक्षण आत्मा। सम्प्रसादस्य च देहसम्बन्धीनि रूपाणि ततो यदन्यत्कथं स्वरूपं इत्येतेऽर्था वक्तव्या इत्युत्तरो ग्रन्थ आरभ्यते। आख्यायिका तु विद्याग्रहणसम्प्रदानविधिप्रदर्शनार्था विद्यास्तुत्यर्था च। राजसेवितं पानीयमितिवत्॥ य आत्माऽपहतपाप्मा

---

आ॰ दहरविद्यायामुपास्यस्तुत्यर्थमुक्तमनुवदति। अथेति॥ विवेकानन्तर्य्यमथशब्दार्थो व्याख्यातः। शरीरात्समुत्थानं तस्मिन्नहंममाभिमानत्यागः॥ स्वरूपं विशिनष्टि। एष इति॥ उक्तिकर्तृत्वमाचार्य्यस्य दर्शितमेव॥ प्राणो वा सम्प्रसादो विज्ञानात्मा वेति संशयात्पृच्छति। तत्रेति॥ प्रकृतं वाक्यं सप्तम्यर्थः। तस्य च सम्प्रसादस्य परमात्मविषयं ज्ञानं केनोपायेन भवतीति प्रश्नान्तरमाह। कथं वेति॥ किन्तस्य परमात्माधिगमेनेत्याशङ्क्याह। यथेति॥ तथा तस्याधिगमः कथमिति सम्बन्धः। अभिनिष्पद्यमानरूपस्यात्मा सविशेषो निर्विशेषो वेति प्रश्नान्तरं करोति। येनेति॥ आत्मनो हि सच्चिदानन्दैकतानाद्यर्था-

उ॰ नुविद्य विजानातीति ह प्रजापतिरुवाच ॥ १ ॥ तद्धोभये देवासुरा अनुबुबुधिरे ते होचुर्हन्त तमात्मानमन्विच्छामो यमात्मानमन्विष्य सर्वाꣳश्च लोकानाप्नोति सर्वाꣳश्च कामानितीन्द्रो हैव देवा-

---

भा॰ विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः । यस्योपासनायोपलब्ध्यर्थं हृदयपुण्डरीकमभिहितं। यस्मिन् कामाः समाहिताः सत्या अनृतापिधाना यदुपासनसहभावि ब्रह्मचर्यं साधनमुक्तं। उपासनफलभूतकामप्रतिपत्तये च मूर्द्धन्या नाड्या गतिरभिहिता । सोऽन्वेष्टव्यः शास्त्राचार्य्योपदेशैर्ज्ञातव्यः स विशेषेण ज्ञातुमेष्टव्यो विजिज्ञासितव्यः स्वसंवेद्यतामापादयितव्यः । किन्तस्यान्वेषणाद्विजिज्ञासनाच्च स्यादित्युच्यते स सर्व्वांश्च लोकानाप्नोति सर्व्वांश्च कामान् यस्तमात्मानं यथोक्तेन प्रकारेण शास्त्राचार्य्योपदेशेनान्विष्य

---

व्या॰ न्तराणि रूपाणि दृश्यमानानि शरीरसम्बन्धप्रयुक्तानि। तथा च ततः शरीरादुपाधेर्यदन्यत्तस्य स्वरूपं तत्कथं सर्व्वप्रमाणाऽप्रतिपन्नमस्तीति प्रश्नान्तरमाह । सम्प्रसादस्य चेति ॥ एतेषां प्रश्नानामुत्तरग्रन्थमवतारयति । इत्येत इति ॥ प्रजापतेरिन्द्रविरोचनयोश्च सम्वादरूपा याऽऽख्यायिका दृश्यते सा किमर्थेत्याशङ्क्याह। व्याख्यायिका त्विति ॥ शिष्यस्य विद्याग्रहणे गुरोस्तस्याः सम्यक्प्रदाने च यो विधिः श्रद्धालुत्वादिप्रकारस्तत्प्रदर्शनार्थेति यावत् । यद्वा विद्यायाः ग्रहणं स्वीकरणं यत्र सम्प्रदाने तद्दानपात्रे शिष्ये दृश्यते तस्य विधिर्ब्रह्मचर्य्यादिस्तत्प्रदर्शनार्थेत्यर्थः ॥ व्याख्यायिकायास्तात्पर्य्यान्तरमाह । विद्येति ॥

उ॰ नामभिप्रवव्राज विरोचनोऽसुराणां तौ हासंवि-
दानावेव समित्पाणी प्रजापतिसकाशमाजग्मतुः
॥ २ ॥ तौ ह द्वात्रिꣳशतं वर्षाणि ब्रह्मचर्य्यमू-

---

भा॰ विजानाति स्वसंवेद्यतामापादयति तस्यैतत्सर्व्वलोककामावाप्तिः। सर्व्वात्मताफलं भवतीति ह किल प्रजापतिरुवाच। अन्वेष्टव्यो विजिज्ञासितव्य इति चैष नियमविधिरेव नापूर्व्वविधिः। एवमन्वेष्टव्यो विजिज्ञासितव्य इत्यर्थः। दृष्टार्थत्वादन्वेषणविजिज्ञासनयोः। दृष्टार्थत्वञ्च दर्शयिष्यति नाहमत्र भोग्यं पश्यामीत्यनेनासकृत्। पररूपेण च देहादिधर्म्मैरवगम्यमानस्यात्मनः स्वरूपाधिगमे विपरीताधिगमनिवृत्तिर्दृष्टं फलं। इति नियमार्थतैवास्य विधेर्युक्ता न त्वग्निहोत्रादीनामिवापूर्व्वविधित्वमिह सम्भवति। तद्धोभय इत्याद्याख्यायिकाप्रयोजनमुक्तं॥ तद्ध किल प्रजापतेर्वचनमुभये देवासुराः। देवाश्चासुराश्च देवासुरा अनु परम्परागतं स्वकर्णगोचरापन्न-

---

व्या॰ प्रजापतिना प्रोक्ता देवैरसुरैश्च प्रार्थिता इन्द्रविरोचनाभ्यां देवासुराधिपतिभ्यामायासेन महता प्रेप्सिता देवराजेन च कथञ्चित्प्राप्ता। तस्मान्महार्हेयं विद्येति तस्याः स्तुत्यर्थाऽऽख्यायिकेत्यर्थः॥ महद्भिरुपासितस्य महार्हत्वे दृष्टान्तमाह। राजसेवितमिति॥ यन्मायोपाधि सविशेषं चैतन्यं तदेव निरुपाधि निर्विशेषमिति। सविशेषनिर्विशेषयोरभेदाभिप्रायेण प्रजापतिवाक्यं व्याकर्त्तुमादत्ते। य आत्मेति॥ तत्र सोऽन्वेष्टव्य इति वाक्ये सशब्दार्थमाह। यस्येति॥ उपासनमपि किमर्थमित्यपेक्षायामाह। उपलब्ध्यर्थमिति॥ तस्यैतत्फलमिति सम्बन्धः। कथं

उ॰ षतुस्तौ ह प्रजापतिरुवाच किमिच्छन्तावववास्त-
मिति तौ होचतुर्य आत्माऽपहतपाप्मा विजरो
विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्य-

---

भा॰ मनुबुबुधिरेऽनुबुद्धवन्तः। ते चैतत्प्रजापतिवचो बुध्वा किम-
कुर्व्वन्नित्युच्यते। ते होचुरुक्तवन्तोऽन्योन्यं देवाः स्वपरिषद्य-
सुराश्च। हन्त यद्यनुमतिर्भवतां प्रजापतिनोक्तन्तमात्मान-
मन्विच्छामोऽन्वेषणं कुर्म्मो यमात्मानमन्विष्य सर्व्वांश्च
लोकानाप्नोति सर्व्वांश्च कामानित्युक्का इन्द्र एव राजैव
स्वयं देवानामितरान्देवांश्च भोगपरिच्छेदञ्च सर्व्वं
स्थापयित्वा शरीरमात्रेणैव प्रजापतिं प्रत्यभिप्रवव्राज
प्रगतवान्। तथा विरोचनोऽसुराणां विनयेन गुरवोऽभि-
गन्तव्या इत्येतद्दर्शयति। त्रैलोक्यराज्याच्च गुरुतरा
विद्येति। यतो देवासुरराजौ महार्हभोगार्हौ सन्तौ
तौ तथा गुरुमभ्युपगतवन्तौ। तौ ह किलासंविदाना-
वेवान्योन्यं संविदमविकुर्व्वाणौ विद्याफलं प्रत्यन्योन्यमीर्षां

---

व्या॰ निर्गुणविद्यायाः सर्व्वलोककामावाप्तिः फलमित्याशङ्क्याह।
सर्व्वात्मतेति॥ परिच्छेदभ्रमव्यावृत्त्या पूर्णस्वरूपेणावस्थितिरि-
त्यर्थः॥ प्रजापतिवाक्यात्प्रतीयमानविधिस्वरूपमाह। अन्वेष्टव्य
इति॥ एवकारव्यावर्त्त्यं दर्शयति। नापूर्व्वविधिरिति॥ शब्दा-
देव विद्योदये तदुत्पत्त्यर्थोऽपूर्व्वविधिरग्निहोत्रादिविधिवन्न
सम्भवतीत्यर्थः। कथमिह नियमविधिरपि स्यादवघातविधिव-
दित्याशङ्क्याह। एवमिति॥ मिथ्याज्ञानसंस्कारप्राबल्यादना-
त्माभिनिवेशस्य पक्षे प्राप्तौ शास्त्राचार्य्याभ्यामात्मान्वेषणमेव
कार्य्यमिति नियम इत्यर्थः। इतश्च नियमविधिरेव नापूर्व्वविधि-

उ० कामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्

---

भा० दर्शयन्तौ समित्पाणी समिद्भारहस्तौ प्रजापतिसकाशमाजग्मतुरागतवन्तौ। तौ ह गत्वा द्वात्रिंशतं वर्षाणि शुश्रूषापरौ भूत्वा ब्रह्मचर्य्यमूषतुरुषितवन्तौ। अभिप्रायज्ञः प्रजापतिस्तावुवाच किमिच्छन्तौ प्रयोजनमभिप्रेत्येच्छन्ताववास्तमुषितवन्तौ युवामितीत्युक्तौ तौ होचतुः। य आत्मेत्यादि भगवतो वचो वेदयन्ते शिष्टा अतस्तमात्मानं ज्ञातुमिच्छन्ताववास्वेति। यद्यपि प्राक्प्रजापतेः समीपागमनादन्योन्यमीर्षायुक्तावभूतां तथापि विद्याप्राप्तिप्रयोजनगौरवात्त्यक्तरागद्वेषमोहेर्षादि-

---

व्या० रित्याह। दृष्टार्थत्वादिति॥ अन्वेषणविजिज्ञासनाभ्यां साधनमुक्तं। तस्य च विद्याद्वाराऽविद्यानिवृत्तिर्दृष्टमेव फलमन्वयव्यतिरेकाभ्यां तद्धेतुत्वावगमात्तथा च तत्र नापूर्व्वविधेरवकाशोऽस्तीत्यर्थः॥ तयोर्दृष्टफलवत्त्वे वाक्यशेषमनुकूलयति। दृष्टार्थत्वञ्चेति॥ कथमसत्त्वप्रयुक्तेन पश्यामीति वर्त्तमानोपदेशेनान्वेषणादेर्दृष्टफलतेत्याशङ्क्य देहातिरिक्तात्मवादिनां वाक्योत्थज्ञानादनुमानाच्च मनुष्यत्वादिभ्रमनिवृत्तिप्रसिद्धेर्मैवमित्यभिप्रेत्याह। परस्परेणेति॥ अन्वेषणादेर्दृष्टफलत्वे फलितमाह। इति नियमार्थतेति॥ अपूर्व्वविधित्वं तद्विषयत्वमिति यावत्। इह चेत्यन्वेषणादेरुक्तिरभिहोत्रादिवदन्वेषणादेरत्यन्ताप्राप्त्यभावस्योक्तत्वादित्यर्थः॥ इदानीमाख्यायिकां व्याख्यातुमाख्यायिका तु विद्याग्रहणसम्प्रदानविधेः प्रदर्शनार्थेत्यादिनोक्तं स्मारयति। तद्धेति॥ अवतारिताख्यायिकाक्षराणि व्याचष्टे। तद्धेत्यादिना॥ किमितीन्द्रविरोचनौ विद्यार्थिनावपि परिकरं परित्यज्य प्री-

उ॰ यस्तमात्मानमनुविद्य विजानातीति भगवतो वचो वेदयन्ते तमिच्छन्तावववास्तमिति ॥ ३ ॥ तौ ह

---

भा॰ दोषावेव भूत्वोषतुर्ब्रह्मचर्यं प्रजापतौ । तेनेदं प्रख्यापितमात्मविद्यागौरवं तावेवं तपस्विनौ शुद्धावकल्मषौ योग्यावुपलक्ष्य प्रजापतिरुवाचाह । य एषोऽक्षिणि पुरुषो निवृत्तचक्षुर्भिर्मृदितकषायैर्दृश्यते योगिभिर्द्रष्टा । एष आत्माऽपहतपाप्मादिगुणो यमवोचं पुराऽहं यद्विज्ञानात्सर्व्वलोककामावाप्तिरेतदमृतं भूमाख्यं । अत एवाभयमत एव ब्रह्म वृद्धतममित्यर्थैतत्प्रजापतिनोक्तं । अक्षिणि पुरुषो दृश्यत इति वचः श्रुत्वा छायारूपं पुरुषं जगृहतुः गृहीत्वा च दृढीकरणाय प्रजापतिं पृष्टवन्तौ । अथ

---

व्या॰ इमावेव प्रजापतिं प्रगतवन्तौ तत्राह । विनयेनेति ॥ तयोरुक्तरूपगतिवशादेव दर्शितमर्थान्तरं कथयति । त्रैलोक्येति ॥ विद्येति दर्शयतीति पूर्व्वेण सम्बन्धः ॥ तस्या गुरुतरत्वे हेतुमाह । यत इति ॥ सम्विदं मैत्रीं तमात्मानं ज्ञातुमिच्छन्तावववास इति वक्तव्येऽप्यवास्तमिति प्रजापतिवचोऽनुकर्षणमात्रमिति द्रष्टव्यं । अथ इन्द्रविरोचनयोर्मिथो वैरिणोः कथमेकत्रावस्थानं चिरमासीदित्याशङ्क्याह । यद्यपीति ॥ देवासुरराजयोः स्वभावतो वैरिणोरपि विद्यार्थित्वेन चिरमेकत्र ब्रह्मचर्य्यवासेन सूचितमर्थं दर्शयति । तेनेति ॥ शुद्धकल्मषौ प्रक्षालितदोषाविति यावत् । पुरुषो द्रष्टेति सम्बन्धः ॥ अस्मदादिभिस्तत्र द्रष्टा दृष्टो नास्तीत्याशङ्क्याह । निवृत्तेति ॥ इन्द्रियाणां विषयेभ्यो वैमुख्ये हेतुमाह । मृदितेति ॥ योगिभिः समाधिनिष्ठैरन्तर्दृष्टिभिरिति यावत् । य आत्मेत्यादिवाक्येनास्यैकवाक्यतां दर्शयति । एष इति । भूमविद्यया चास्यैकवाक्यत्वं सूचयति । भूमाख्यमिति ॥ इति

उ॰ प्रजापतिरुवाच य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेत्यथ

---

भा॰ योऽयं ह भगवोऽप्सु परिख्यायते परि समन्ताज्ज्ञायते। यश्चायमादर्शे आत्मनः प्रतिबिम्बाकारः परिख्यायते। खड्गादौ च कतम एष एषां भगवद्भिरुक्तः किंवैक एव सर्व्वेष्विति॥ एवं पृष्टः प्रजापतिरुवाच। एष उ एव यश्चक्षुषि द्रष्टा मयोक्त इति। एतन्मनसि कृत्वेषु सर्व्वेषु मध्येषु परिख्यायत इति होवाच॥ ननु कथं युक्तं शिष्ययोर्विपरीतग्रहणमनुज्ञातुं प्रजापतेर्विगतदोषस्याचार्य्यस्य सतः। सत्यमेवं नानुज्ञातं। तथाप्यात्मन्यध्यारोपितपाण्डित्यमहत्त्वबोद्धृत्वौ हीन्द्रविरोचनौ तथैव च प्रार्थितौ लोके। तौ यदि प्रजापतिना मूढौ युवां विपरीतग्राहिणा

---

व्या॰ शब्दो वाक्यसमाप्त्यर्थः। उक्तोऽर्थे वाक्यं पातयति। अथ योऽयमिति॥ प्रश्नार्थोऽयम्शब्दः। इतिशब्दः समाप्त्यर्थः। यश्चक्षुरुपलक्षितो द्रष्टा एष एव मयोक्तोऽपहतपाप्मत्वादिधर्म्मवानात्मा युवाभ्यां पुनरन्यथा गृहीतमिति नियातेन सूचयन्नुक्तवान्प्रजापतिरित्याह। एवमिति॥ प्रजापतिस्त्वेवमुक्तवान् कथं तर्हि तयोर्वैमुख्यं न निवृत्तमित्याशङ्क्याह। एतदिति॥ यथोक्तवचोरूपं वस्त्विति यावत्॥ यत्प्रजापतिना मनसि निहितं तत्प्रकटीकर्त्तुं चोदयति। नन्विति॥ शिष्टशिष्यगतं विपरीतग्रहणमाचार्य्यस्यानुज्ञातुमयुक्तमित्यङ्गीकृत्य प्रजापतेरभिप्रायमाह। सत्यमेवमिति॥ कथं तर्हि तयोर्विपरीतग्रहणमपनेतव्यमित्याशङ्क्याह। गृहीतामिति॥ तावद्विपरीतमिति शेषः। चकारेण क्रियापदमनुकृष्यते। यद्यदाचरति श्रेष्ठ इति

उ॰ योऽयं भगवोऽप्सु परिख्यायते यश्चायमादर्शे कतम एष इत्येष उ एवैषु सर्वेष्वेतेषु परिख्यायत इति होवाच ॥ ४ ॥ ७ ॥

---

भा॰ वित्युक्तौ स्यातां ततस्तयोश्चित्तदुःखं स्यात्तज्जनिताच्च चित्तावसादात्पुनः प्रश्नश्रवणग्रहणावधारणं प्रत्युत्साह-विघातः स्यादतो रक्षणीयौ शिष्याविति मन्यते प्रजा-पतिः। गृहीतां तावत्तदुदशरावदृष्टान्तेनापनेष्यामीति च। ननु न युक्तमेष उ एवेत्यनृतं वक्तुं। न चानृत-मुक्तं। कथमात्मनोक्तोऽक्षिपुरुषो मनसि सन्निहिततरः शिष्यगृहीताच्छायात्मनः सर्व्वेषाञ्चाभ्यन्तरः सर्व्वान्तर इति श्रुतेः। तमेवावोचदेष उ एवेत्यतो नानृतमुक्तं प्रजापतिना। तथा च तयोर्विपरीतग्रहणनिवृत्त्यर्थं ह्याह ॥ ७ ॥

---

व्या॰ न्यायेन सर्व्वेषां मृषावादित्वं स्यादिति शङ्कते। नन्विति ॥ प्राजाप-त्यमभिप्रायमेव प्रकटयन्नतिप्रसङ्गं परिहर्त्तुं तदीयमनृतवादित्वं दूषयति। न चेति ॥ तदेवाकाङ्क्षापूर्व्वकं स्फुटयति। कथमित्या-दिना॥ शिष्याभ्यां गृहीतो योऽयमात्मा ततः सकाशादात्मना स्वेनैव प्रजापतिनोक्तो योऽक्ष्यध्युपलक्षितो द्रष्टा स मनसि प्रजा-पतेः सन्निहिततरोऽतः स एव च तेनोक्त इत्यर्थः। इतश्च द्रष्टा प्रजापतेर्मनसि सन्निहिततर इत्याह। सर्व्वेषाञ्चेति ॥ प्रजा-पतेर्मनसि द्रष्टुः सन्निहितत्वेऽपि कथं तस्य न मृषावादित्वमत आह। तमेवेति ॥ इतश्च प्रजापतेर्न मृषावादित्वमित्याह। तथा चेति ॥ ७ ॥

उ॰ उदशराव आत्मानमवेक्ष्य यदात्मनो न विजानीथस्तन्मे प्रब्रूतमिति तौ होदशरावेऽवेक्षाञ्चक्राते तौ ह प्रजापतिरुवाच किं पश्यथ इति तौ होचतुः सर्वमेवेदमावां भगव आत्मानं पश्याव

---

भा॰ उदशरावे उदकपूर्णे शरावादावात्मानमवेक्ष्यानन्तरं यत्तत्राऽऽत्मानं पश्यन्तौ न विजानीयस्तन्मे मम प्रब्रूतमाचक्षीयाथामित्युक्तौ तौ ह तथैवोदशरावेऽवेक्षाञ्चक्राते ऽवेक्षणञ्चक्रतुस्तथा कृतवन्तौ। तौ ह प्रजापतिरुवाच किं पश्यथ इति ननु तन्मे प्रब्रूतमित्युक्ताभ्यामुदशरावेऽवेक्षणं कृत्वा प्रजापतये न निवेदितमिदमावाभ्यां न विदितमित्यनिवेदिते चाज्ञानहेतौ ह प्रजापतिरुवाच किं पश्यथ इति। तत्र कोऽभिप्राय इति। उच्यते। नैव तयोरिदमावयोरविदितमित्याशङ्का माभूच्छायात्मन्यात्मप्रत्ययो निश्चित एवासीत्। येन वक्ष्यति तौ ह शान्तहृदयौ प्रवव्रजतुरिति। न ह्यनिश्चितेऽभिप्रेतार्थे प्रशान्तहृदयत्वमुपपद्यते। तेन नोचतुरिदमावाभ्यामविदित-

---

व्या॰ आत्मानमुदशरावेऽवेक्ष्यन्तं तत्रात्मानं पश्यन्तौ तावनन्तरं यदात्मनो न विजानीथो युवां तन्मे प्रब्रूतमिति सम्बन्धः॥ प्रजापतिवचनमुपक्रमानुकूलं न भवतीति शङ्कते। नन्विति॥ उपक्रममतिक्रम्य ब्रुवाणस्य प्रजापतेरभिप्रायमाह। उच्यत इति॥ तत्र प्रथममिन्द्रविरोचनाभ्यामिदमविदितमिति प्रजापतिं प्रत्यवचने कारणमाह। नैवेति॥ छायात्मनि छायायां तद्वतौ शरीरे चेन्द्रविरोचनयोर्यथाक्रममात्मधीरियं निश्चिता प्रवृत्ते-

उ० आलोमभ्य आनखेभ्यः प्रतिरूपमिति ॥ १ ॥ तौ ह प्रजापतिरुवाच साध्वलङ्कृतौ सुवसनौ परिष्कृतौ भूत्वोदशरावेऽवेक्षेथामिति तौ ह साध्वलङ्कृतौ सुवसनौ परिष्कृतौ भूत्वोदशरावेऽवेक्षा-

---

भा० मिति। विपरीतग्राहिणौ च शिष्यावनुपेक्षणीयाविति स्वयमेव पप्रच्छ किं पश्यथ इति। विपरीतनिश्चयापनयाय च वक्ष्यति साध्वलङ्कृतावित्येवमादि। तौ होचतुः। यथैवावां हे भगवो लोमनखादिमन्तौ स्वः। एवमेवेदं लोमनखादिसहितमावयोः प्रतिरूपमुदशरावे पश्याव इति। तौ ह पुनः प्रजापतिरुवाच। छायात्मनिश्चयापनयाय साध्वलङ्कृतौ यथा स्वगृहे सुवसनौ महार्हवस्त्रपरिधानौ परिष्कृतौ छिन्नलोमनखौ च भूत्वोदशरावे पुनरीक्षेथाथामितीह च नादिदेश यदज्ञातं तन्मे प्रब्रूतमिति। कथं पुनरनेन साध्वलङ्कारादि कृत्वोदशरावावेक्षणेन तयोश्छायात्मग्रहोऽपनीतः स्यात्। साध्वलङ्कारसुवसनादीनामागन्तुकानां छायाकरत्वमुदशरावे यथा

---

आ० त्यर्थः। तयोस्तत्रात्मप्रत्ययस्य निश्चितत्वे गमकमाह। येनेति॥ प्रव्रजनेऽपि प्रशान्तहृदयत्वात्तयोः सत्यप्रत्ययस्य कथं निश्चितत्वमित्याशङ्क्याह। न हीति॥ तेन विपरीतग्राहित्वेनेति यावत्। उक्तमगृहीत्वा विपरीतं गृहीतवन्तौ तर्हि प्रजापतिनोपेक्षणीयौ कुबुद्धित्वादित्याशङ्क्य प्राजापत्यमभिप्रायमाह। विपरीतग्राहिणौ चेति॥ कथमिदं प्रजापतेरभिमतमित्यधिगतमत आह। विपरीतेति॥ प्राजापत्ये प्रश्ने देवासुरराजयोर्विपरीतग्रहणम-

उ॰ श्रुत्वाते तौ ह प्रजापतिरुवाच किं पश्यथ इति ॥२॥ तौ होचतुर्यथैवेदमावां भगवः साध्वलङ्कृतौ सुवसनौ परिष्कृतौ स्व एवमेवेमौ भगवः साध्व-

भा॰ शरीरसम्बन्धानामेवमेवं शरीरस्यापि छायाकरत्वं पूर्व्वं बभूवेति गम्यते । शरीरैकदेशानाञ्च लोमनखादीनां नित्यत्वेनाभिप्रेतानामखण्डितानां छायाकरत्वं पूर्व्वमासीत् । छिन्नेषु च नैव लोमनखछाया दृश्यतेऽतो लोमनखादिवच्छरीरस्यागमापायित्वं सिद्धमिति । उदशरावादौ दृश्यमानस्य तन्निमित्तस्य च देहस्यानात्मत्वं सिद्धं । उदशरावादौ छायाकरत्वाद्देहसम्बद्धालङ्कारादिवत् । न केवलमेतावदेतेन यावत्किञ्चिदात्मीयत्वाभिमतं सुखदुःखरागद्वेषमोहादि च । कादाचित्कत्वान्नखलोमादिवदनात्मेति प्रत्येतव्यं । एवमशेषमिथ्याग्रहापनयनिमित्ते साध्वलङ्कारादिदृष्टान्ते प्रजापतिनोक्ते श्रुत्वा तथा कृतवतोरपि छायात्मविपरीतग्रहो नापजगाम यस्मा-

टी॰ नुवदति । तौ हेति ॥ तदपनयनप्रकारं सूचयति । तौ ह पुनरिति ॥ छायायां तद्वेतौ च देहे तयोरात्मनिश्चयो यस्तस्य निरासायेति यावत् । ह स्ह चेति पर्य्यायोक्तिः । नादिदेश तत्प्रयोजनाभावादित्यर्थः ॥ उक्तोदाहरणेन छायायां देहे चेन्द्रविरोचनयोरात्मप्रत्ययो नापनीतो भवतीति शङ्कते । कथमिति ॥ छायायास्तत्कारणस्य चागन्तुकत्वादनात्मत्वमत्र विवक्षितमित्युत्तरमाह । साध्वलङ्कारेति ॥ पूर्व्वमुदकादिसम्बन्धावस्थायामिति यावत् । व्यभिचारित्वाच्च छायातत्कारणयोरेवानात्मत्वमित्याह । शरीरैकदेशानामिति ॥ उपपत्तिभ्यां सिद्धमर्थं निगमयति । इत्युदशरावा-

उ॰ लङ्कृतौ सुवसनौ परिष्कृतावित्येष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति तौ ह शान्तहृदयौ प्रवव्रजतुः ॥ ३ ॥ तौ हान्वीक्ष्य प्रजापतिरुवाच

---

भा॰ त्तस्मात्स्वदोषेणैव केनचित्प्रतिबद्धविवेकविज्ञानाविन्द्रविरोचनावभूतामिति गम्यते। तौ पूर्व्ववदेव दृढनिश्चयौ पप्रच्छ किं पश्यथ इति। तौ तथैव प्रतिपन्नौ यथैवेदमिति पूर्व्ववद्यथा साध्वलङ्कारादिविशिष्टावावां स्व एवमेवेमौ छायात्मानाविति सुतरां विपरीतनिश्चयौ बभूवतुः। यस्मात्मनो लक्षणं य आत्माऽपहतपाप्मेत्युक्त्वा पुनस्तद्विशेषमन्विष्यमाणयोर्य एषोऽक्षिणि पुरुषो दृश्यत इति साक्षादात्मनि निर्द्दिष्टे तद्विपरीतग्रहापनयायोदशरावे साध्वलङ्कारदृष्टान्तेऽप्यभिहितमात्मस्वरूपबोधाद्विपरीतग्रहो नापगतः।अतः स्वदोषेण केनचित्प्रतिबद्धविवेकविज्ञानसामर्थ्याविति मत्वा यथाभिप्रेतमेवात्मानं मनसि निधाय एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति

---

व्या॰ दाविति। न केवलं छायातत्कारणयोरेवानात्मत्वं किन्तूक्तन्यायेनाहङ्कारादीनां तद्धर्म्माणाञ्चात्मीयत्वं प्रत्युक्तमिति प्रसङ्गादतिदिशति। न केवलमिति। आत्मत्वाभिमतमहङ्कारादीति शेषः। मोहादावात्मीयत्वाभिमतमित्यध्याहार्य्यं ॥ एतेनेति सूचितमेव हेतुं दर्शयति। कादाचित्कत्वादिति ॥ अनात्मेत्यनात्मत्वमनात्मीयत्वोपलक्षणार्थं ॥ तर्हि तयोर्यथोक्तरीत्या विपरीतग्रहणस्यापगतत्वात्किमुत्तरेण प्रजापतिवाक्येनेत्याशङ्क्याह। एवमिति ॥ तथैवेत्यस्य व्याख्यानं पूर्व्ववदिति ॥ यथैवेदमिति प्रतीकग्रहणं तद्व्याचष्टे। यथेति ॥ आवां स इती-

उ॰ अनुपलभ्यात्मानमननुविद्य व्रजतो यत एतदुपनिषदो भविष्यन्ति देवा वाऽसुरा वा ते पराभविष्यन्तीति स ह शान्तहृदय एव विरोचनोऽसुरान्

भा॰ प्रजापतिः । पूर्व्ववत् । न तु तदभिप्रेतमात्मानं । य आत्मेत्याद्यात्मलक्षणश्रवणेनाक्षिपुरुषश्रुत्या चोदशरावाद्युपपत्त्या च संस्कृतौ तावत् मद्वचनं सर्व्वं पुनः पुनः स्मरतः प्रतिबन्धक्षयाच्च स्वयमेवात्मविषये विवेको भविष्यतीति मन्वानः पुनर्ब्रह्मचर्य्यादेशे च तयोश्चित्तदुःखोत्पत्तिं परिजिहीर्षन् कृतार्थबुद्धितया गच्छन्तावप्युपेक्षितवान्प्रजापतिः । तौ हेन्द्रविरोचनौ शान्तहृदयौ तुष्टहृदयौ कृतार्थबुद्धीव प्रवव्रजतुरित्यर्थः । ननु शम एव शमश्चेत्तयोर्जातो विपरीतग्रहो विगतोऽभविष्यत् प्रवव्रजतुर्गतवन्तौ एवं तयोर्गतयोरिन्द्रविरोचनयो राज्ञोर्भोगासक्तयोर्यथोक्तविस्मरणं स्यादित्याशङ्क्याप्रत्यक्षं प्रत्यक्षवचनेन तयोश्चित्तदुःखं परिजिहीर्षुस्तौ दूरं गच्छन्ताव-

व्या॰ दमुदाहरणं यथैवेति सम्बन्धः । अक्षिवाक्यादुदशराववाक्यात्साध्वलङ्कारवाक्याच्च छायातद्धेतोरन्यतरस्यैवात्मत्वमभ्यासादिति भ्रमातिशयः सुतरामित्युक्तः ॥ प्रजापतिवाक्यमुत्थापयति । यस्येत्यादिना ॥ वाक्यव्याख्यानमतिदिशति । पूर्व्ववदिति ॥ एषशब्देन तयोरभिप्रेतमेवात्मानं छायाख्यं देहाख्यं च परामृश्य प्रजापतिरनुमोदितवानित्याशङ्क्याह । नन्विति ॥ तौ ह शान्तहृदयावित्यादिवाक्यस्य तात्पर्य्यमाह । आत्मेत्यादीति ॥ संस्कृतौ तावद्भवतामिति शेषः । संस्कृतयोरपि तयोरात्मविषये कथं विवेको भविष्यतीत्याशङ्क्याह । मद्वचनमिति ॥ उपेक्षायां कार-

उ॰ जगाम तेभ्यो हैतामुपनिषदं प्रोवाचात्मैवेह महय्य आत्मा परिचर्य्य आत्मानमेवेह महयन्नात्मानं परिचरन्नुभौ लोकाववाप्नोतीमञ्चामु-

भा॰ न्वीक्ष्य य आत्माऽपहतपाप्मेत्यादिवचनवदेतद्यनयोः श्रवणगोचरत्वमेष्यतीति मत्वोवाच प्रजापतिमनुपलभ्य यथोक्तलक्षणमात्मानमननुविद्य स्वात्मप्रत्यक्षाकृत्वा विपरीतनिश्चयौ च भूत्वेन्द्रविरोचनावेतौ प्रव्रजतो गच्छेयातां। अतो यतरे देवा वाऽसुरा वा किं विशेषितेनैतदुपनिषद आभ्यां या गृहीताऽऽत्मविद्या सेयमुपनिषद्येषां देवानामसुराणां वा त एतदुपनिषद एवं विज्ञाना एतन्निश्चया भविष्यन्तीत्यर्थः । ते किं पराभविष्यन्ति श्रेयोमार्गात्पराभूता वह्निर्भूता विनष्टा भविष्यन्तीत्यर्थः । स्वगृहं गच्छतोः सुरासुरराजयोर्योऽसुरराजः स ह शान्तहृदय एव सन् विरोचनोऽसुराञ्जगाम । गत्वा च तेभ्यो ऽसुरेभ्यः शरीरात्मबुद्धिर्योपनिषत्तामेतामुपनिषदं प्रो-

व्या॰ शान्तरमाह। पुनरिति ॥ किमिति शान्तहृदयत्वं तुष्टहृदयत्वेन व्याख्यायते हृदयगतः शम एव किं न विवक्ष्यते तत्राह। नत्विति॥ यदि प्रजापतिस्तावुपेक्षितवान् किमिति तर्हि तौ चान्वीक्ष्येत्यादिवाक्यमित्याशङ्क्याह । राज्ञोरिति ॥ प्रजापतिरुवाचेति सम्बन्धः । तर्हि किमिति तावाहूय नोक्तवानित्याशङ्क्याह । प्रत्यक्षवचनेनेति॥ कर्तृत्वेन सम्बन्धार्थमुक्तमेव पुनरनुवदति । य आत्मेति । किमसावूचिवानित्यपेक्षायामाह । अनुपलभ्येति ॥ यथोक्तं प्रजापतिवाक्यं श्रुत्वापि गच्छतोरिन्द्रविरोचनयोर्विरोचनगतमवान्तरविशेषमाह । स्वगृहमिति ॥ पित्रा-

उ॰ न्वेति ॥ ४ ॥ तस्मादप्यद्येहाददानमश्रद्दधानमय-
जमानमाहुरासुरो बतेत्यसुराणाꣳ ह्येषोपनि-
षत्प्रेतस्य शरीरं भिक्षया वसनेनालङ्कारेणेति
सꣳस्कुर्वन्त्येतेन ह्यमुं लोकं जेष्यन्तो मन्यन्ते
॥ ५ ॥ ८ ॥

---

भा॰ वाचोक्तवान्। देहमात्रमेवात्मा पित्रोक्त इति। तस्मा-
दात्मैव देह इह लोके महय्यः पूजनीयस्तथा परिचर्य्यः
परिचरणीयस्तथात्मानमेवेह लोके देहं महयन् परि-
चरंश्चोभौ लोकाववाप्नोतीमञ्चामुञ्च। इहलोकपरलो-
कयोरेव सर्व्वे लोकाः कामाश्चान्तर्भवन्तीति राज्ञोऽभि-
प्रायः॥ तस्मात्तत्सम्प्रदायोऽद्याप्यनुवर्त्तत इतीह लोके
अददानं दानमकुर्व्वाणमविभागशीलं। अश्रद्दधानं सत्का-
र्य्येषु श्रद्धारहितं यथाशक्ति। अयजमानमयजनस्वभाव-
माहुः। आसुरोऽसुरः खल्वयं यत एवं स्वभावो बतेति
खिद्यमाना आहुः शिष्टाः। असुराणां हि यस्मादश्रद्द-
धानतादिलक्षणैषोपनिषत्। तयोपनिषदा संस्कृताः सन्तः
प्रेतस्य शरीरं कुणपं भिक्षया गन्धमाल्यान्नादिलक्षणया

---

व्या॰ तयोक्तत्वेऽपि किमस्माभिस्तत्र कर्त्तव्यमित्याशङ्क्याह। तस्मा-
दिति॥ तथा पूजनीयत्ववदिति यावत्॥ तथापि प्रार्थिता
सर्व्वलोककामावाप्तिरसिद्धेत्याशङ्क्याह। इहलोकेति। विरो-
चनसम्प्रदायस्यानवच्छिन्नत्वं दर्शयति। तस्मादिति॥ देहात्म-
वादस्यासुरत्वादिति यावत्। तत्सम्प्रदायस्तेषां विरोचनप्रभृती-
नामसुराणां सम्प्रदायो देहात्मत्वोपदेशः। किमित्यात्मत्वादिर-

उ० अथ हेन्द्रोऽप्राप्यैव देवानेतद्भयं ददर्श यथैव खल्वयमस्मिञ्छरीरे साध्वलङ्कृते साध्वलङ्कृतो भवति सुवसने सुवसनः परिष्कृते परिष्कृतः एवमेवायमस्मिन्नन्धेऽन्धो भवति स्रामे स्रामः

---

भा० वसनेन वस्त्रादिप्रकारेणालङ्कारादिकरणेन ध्वजपताकादिकरणेनेत्येवं संस्कुर्व्वन्त्येतेन कुणपं संस्कारेणामुं प्रेत्य प्रतिपत्तव्यं लोकं जेष्यन्तो मन्यन्ते ॥ ८ ॥

अथ ह किलेन्द्रोऽप्राप्यैव देवान्। दैव्याऽक्रौय्यादिसम्पदा युक्तत्वाद्गुरोर्वचनं पुनः पुनः स्मरन्नेव गच्छन्नेतद्वक्ष्यमाणं भयं स्वात्मग्रहणनिमित्तं ददर्श दृष्टवान्। उदशरावदृष्टान्तेन प्रजापतिना यदर्थो न्याय उक्तस्तदेकदेशो मघवतः प्रत्यभाद्बुद्धौ । येन छायात्मग्रहणे दोषं ददर्श । कथं । यथैव खल्वयमस्मिञ्छरीरे साध्व-

---

व्या० ह्रितमासुरमाऊरित्यपेत्तायामाह। असुराणां हीति ॥ प्रकृतोपनिषत्काथ्यं कथयति । तयेति ॥ ८ ॥

एवं विरोचनगतं विशेषं दर्शयित्वा देवराजगामिनं विशेषमाह । अथेत्यादिना ॥ द्वयोस्तुल्यत्वेऽपि प्राजापत्यवाक्यश्रवणे देवराजस्यैव कथं पथि तदनुसन्धानवृत्तमित्याशङ्क्याह । दैव्येति ॥ स्मरणफलमाह। स्मरन्नेवेति ॥ प्रजापतिवचनं स्मरतोऽपि कथमिन्द्रस्य छायात्मग्रहणे दोषदर्शनमित्याशङ्क्याह। उदशरावेति ॥ यदर्थो देहादेरनात्मत्वज्ञापनायेति यावत् । कादाचित्कत्वव्यभिचारित्वादिर्न्यायः । तदेकदेशो व्यभिचारिणो नात्मत्वं ॥ न्यायैकदेशदृष्टिफलमाचष्टे। येनेति ॥ दोषदर्शनमेवाकाङ्क्षाद्वारा स्फोरयति । कथमित्यादिना ॥ उदाहृते वाक्ये

उ० परिवृक्णे परिवृक्णोऽस्यैव शरीरस्य नाशमन्वेष नश्यति नाऽहमत्र भोग्यं पश्यामीति ॥ १ ॥ स समित्पाणिः पुनरेयाय तꣳ ह प्रजापतिरु-

---

भा० लङ्कृते छायात्मापि साध्वलङ्कृतो भवति सुवसने च सुवसनः परिष्कृते परिष्कृतः । यथा नखरोमादिदेहावयवापगमे छायात्मापि परिष्कृतो भवति । नखरोमादिरहितो भवति । एवमेवायं छायात्माप्यस्मिञ्छरीरे नखलोमादिभिर्देहावयवत्वस्य तुल्यत्वादन्धे चक्षुषोऽपगमेऽन्धो भवति स्रामे स्रामः किलैकनेत्रस्तस्यान्यत्वेन गतत्वाच्चक्षुर्नासिका वा यस्य सदा स्रवति स स्रामः । परिवृक्णश्छिन्नहस्तश्छिन्नपादो वा । स्रामे परिवृक्णे देहे छायात्मापि तथा भवति। तथाऽस्य देहस्य नाशमन्वेष नश्यति । अतो नाहमत्रास्मिंश्छायात्मदर्शने देहात्मदर्शने वा भोग्यं फलं पश्यामीति । एवं दोषं देहे छाया-

---

व्या० विवक्षितमर्थं कथयति । यथेति ॥ परिष्कृतो भवतीत्येतद्व्याचष्टे । नखेति ॥ एवमेव देहस्य नखाद्यपगमे छायात्मनोऽपि तदपगमवदित्यर्थः । शरीरेऽस्मिन्नन्धे सति छायात्माप्यन्धो भवतीति सम्बन्धः । किमिति देहस्यान्धे छायात्मनस्तदिष्टमित्याशङ्क्याह । नखरोमादिभिरिति। तैः सह चक्षुरादीनां तुल्यत्वाद्देहावयवत्वस्य देहे नखाद्यभावे छायायामपि तदभावाभ्युपगमाद्देहे चक्षुराद्यभावेऽपि छायायां तदभावो युक्त इत्यर्थः ॥ स्रामशब्दस्यापुनरुक्तमर्थं कथयति । स्रामः किलेति ॥ पदार्थमुक्त्वा वाक्यार्थमाह । स्राम इति ॥ पारतन्त्र्यादनात्मत्वं छायाया दर्शयित्वा तत्रैव हेत्वन्तरमाह । तथेति ॥ विनाशि-

उ॰ वाच मघवन्यच्छान्तहृदयः प्राव्राजीः सार्द्धं विरोचनेन किमिच्छन् पुनरागम इति स होवाच यथैव खल्वयं भगवोऽस्मिंश्छरीरे साध्वलङ्कृते

भा॰ त्मदर्शने चाध्यवस्य समित्पाणिर्ब्रह्मचर्य्यं वस्तुं पुनरेयाय। तं ह प्रजापतिरुवाच। मघवन् यच्छान्तहृदयः प्राव्राजीः प्रगतवानसि विरोचनेन सार्द्धं किमिच्छन् पुनरागम इति। विजानन्नपि पुनः पप्रच्छ इन्द्राभिप्रायाभिव्यक्तये। यद्वेत्थ तेन मोपसीदेति यदुक्तया च स्वाभिप्रायं प्रकटमकरोत्। यथैव खल्वयमित्याद्येवमेवेति चान्वमोदत्प्रजापतिः। ननु तुल्येऽचिपुरुषश्रवणे देहच्छायामिन्द्रोऽग्रहीदात्मेति देहमेव तु विरोचनस्तत्किन्निमित्तं तत्र मन्यते। यथेन्द्रस्योदशरावादिप्रजापतिवचनं स्मरतो देवानप्राप्तस्यैवाचार्य्योक्तबुद्ध्या छायात्मग्रहणं तत्र दोषप्रदर्शनञ्चाभूत् न तथा विरोचनस्य किन्तर्हि

व्या॰ त्वादियुक्तिदर्शनफलमुपसंहरति। अत इति॥ दोषं दृष्ट्वा यथोक्तरीत्या किं कृतवानित्यपेक्षायामाह। इत्येवमिति॥ सर्व्वज्ञो हि प्रजापतिरिन्द्राभिप्रायं जानन्नेव किमर्थं प्राकृतवत्पृच्छतीत्याशङ्क्याह। विजानन्नपीति॥ आचार्य्यस्य ज्ञानवतोऽपि शिष्यं प्रत्यभिप्रायं विशेषेण ज्ञातुं प्रश्नोपपत्तौ दृष्टान्तमाह। यद्वेत्थेति॥ तथाच प्रजापतिप्रश्नानुरोधेनेति यावत्। इन्द्रविषयः स्वशब्दः॥ शिष्ययोः श्रवणसाम्येऽपि प्रतिपत्तिवैषम्ये निमित्तं पृच्छति। नन्विति॥ आचार्य्यमतोपन्यासद्वारा परिहरति। तत्रेति॥ तत्र प्रतिपत्तिविशेषे दृष्टान्तेन निमित्तविशेषं दर्शयति। यथेति॥ आचार्य्योक्तबुद्ध्या तात्पर्य्येण प्रजापतिना

उ० साध्वलङ्कृतो भवति सुवसने सुवसनः परि-
ष्कृते परिष्कृत एवमेवायमस्मिन्नन्धेऽन्धो भवति
स्रामे स्रामः परिवृक्णे परिवृक्णोऽस्यैव
शरीरस्य नाशमन्वेष नश्यति नाऽहमत्र भोग्यं

---

भा० देह एव त्वात्मदर्शनं। नापि तत्र दोषदर्शनं बभूव। तद्व-
देव विद्याग्रहणसामर्थ्ये प्रतिबन्धदोषादल्पत्वबहुत्वापेक्ष-
मिन्द्रविरोचनयोश्छायात्मदेहयोर्ग्रहणं। इन्द्रोऽल्पदोष-
त्वाद्दृश्यत इति श्रुत्यर्थमेव श्रद्दधानतया जग्राहेतरश्छा-
यात्मनिमित्तं देहं हित्वा श्रुत्यर्थं लक्षणया जग्राह प्रजा-
पतिनोक्तोऽयमिति दोषभूयस्त्वात्। यथा किल नीला-
नीलयोरादर्शे दृश्यमानयोर्वाससोर्यन्नीलं तन्मदाह्र-
मिति छायानिमित्तं वास एवोच्यते न छाया तद्वद्विरो-

---

व्या० छायात्मैवोक्त इति भ्रान्त्येत्यर्थः। विरोचनस्येन्द्रवच्छायात्मग्रह-
णमाचार्योक्तबुद्ध्या माभूदित्याह। न तथेति॥ कथं तर्हि तस्यात्म-
दर्शनमित्याशङ्क्याह। देह एवेति॥ आचार्येणात्मा देह एवोक्त
इति बुद्ध्या तत्रैव विरोचनस्यात्मत्वज्ञानमासीदित्यर्थः। इन्द्रस्य
छायात्मग्रहणे देवानप्राप्तस्यैव मार्गमध्ये दोषदर्शनवद्विरोचन-
स्यासुरानप्राप्तस्याध्वनि देहात्मदर्शने दोषप्रदर्शनञ्च न प्रवृत्तमि-
त्याह। नापीति॥ दृष्टान्तमुक्त्वा दार्ष्टान्तिकमाह। तद्वदेवेति॥
विद्याग्रहणोपायिकस्य सामर्थ्यस्य प्रतिबन्धभूतो यो रागादिदोष-
स्तदल्पत्वापेक्षमिन्द्रस्य छायायामात्मग्रहणमित्युक्तं व्यक्तीकरोति।
इन्द्र इति॥ यथोक्तदोषभूयस्त्वापेक्षं गृह्णतो विरोचनस्याभिप्रायं
दृष्टान्तेन दर्शयति। यथेत्यादिना॥ उक्तमर्थं बृहदारण्यकश्रुत्यवष्ट-
म्भेन स्पष्टयति। स्वचित्तेति॥ देवान्मनुष्यानसुरांश्च प्रजापतिना
दकारोपदेशसाधारण्येन कृतं तेषां तदीयश्रवणे तुल्येऽपि तदर्थ-

उ॰ पश्यामीति ॥ २ ॥ एवमेवैष मघवन्निति होवाचैतन्त्वेव ते भूयोऽनुव्याख्यास्यामि वसाऽपराणि द्वात्रिंशतं वर्षाणीति स हापराणि द्वात्रिंशतं वर्षाण्युवास तस्मै होवाच ॥ ३ ॥ ९ ॥

---

भा॰ चनाभिप्रायः । स्वचित्तगुणदोषवशादेव हि शब्दार्थावधारणं तुल्येऽपि श्रवणे ख्यापितं । दाम्यत दत्त दयध्वमिति दकारमात्रश्रवणाच्छ्रुत्यन्तरे निमित्तान्यपि तदनुगुणान्येव सहकारीणि भवन्ति । एवमेवैष मघवन् सम्यक् त्वयावगतं न छायात्मेत्युवाच प्रजापतिर्यो मयोक्त आत्मा प्रकृत एतमेवमात्मानन्तु ते भूयः पूर्वं व्याख्यातमप्यनुव्याख्यास्यामि । यस्मात्सकृद्व्याख्यातं दोषरहितानामवधारणविषयप्राप्तमपि नागृहीतमतः केनचिद्दोषेण प्रति-

---

व्या॰ विशेषावधारणं स्वचित्तगुणदोषवशादेव बृहदारण्यके ख्यापितं तथेहापीत्यर्थः । तत्र वा कथं तुल्येऽपि श्रवणेऽर्थविशेषबुद्धिस्तत्राह । दाम्यतेति ॥ अदान्ता हि वयं स्वभावतस्तेन दाम्यतेत्यस्मान्प्रति पितोक्तवानिति देवानां मतिराविरासीत् । स्वभावतो लुब्धा वयं तेन दत्तेत्यस्मान्प्रत्युक्तवान्पितेति मनुष्याणां बुद्धिरासीत् । क्रूरा हि वयं स्वभावतस्तेन दयध्वमित्यस्मान्प्रजापतिः सूचितवानित्यसुराणां प्रतिपत्तिर्ब्बभूव । तदेवं दकारमात्रश्रवणादात्मचित्तानुरोधेन विचित्रा तेषां मनीषा प्रवृत्ता तथेन्द्रविरोचनयोरपि भविष्यतीत्यर्थः ॥ अथेन्द्रविरोचनयोर्युक्तिदर्शनाविशेषादर्थप्रतिपत्तेरप्यविशेषः स्यादिति चेन्नेत्याह । निमित्तान्यपीति ॥ युक्तिदर्शनान्यपि स्वचित्तगुणदोषाल्पत्वबहुत्वापेक्षाण्यतस्तयोस्तदपेक्षं प्रतिपत्तिवैधर्म्यमविरुद्धमित्यर्थः । इन्द्राभिप्रायं बुध्वा प्रजापतिरनुमोदितवानित्युक्तमिदानीमनुमोदि-

उ० य एष स्वप्ने महीयमानश्चरत्येष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति स ह शान्तहृदयः प्रवव्राज स हाप्राप्यैव देवानेतद्भयं ददर्श तद्यद्यपीदꣳ शरीरमन्धं भवत्यनन्धः स भवति यदि स्राममस्रामो न वैषोऽस्य दोषेण दुष्यति ॥ १ ॥ न वधेनास्य हन्यते नास्य स्राम्येण स्रामो घ्नन्ति त्वेवैनं विच्छादयन्तीवाप्रियवेत्तेव भवत्यपि

भा० बद्धग्रहणसामर्थ्यञ्च मत्वा तत्क्षपणीयं वसापराणि द्वात्रिंशतं वर्षाणीत्युक्त्वा तथोषितवते क्षपितदोषाय तस्मै होवाच ॥९॥

य आत्माऽपहतपाप्मादिलक्षणो य एषोऽक्षिणीत्यादिना व्याख्यात एष सः। कोऽसौ। यः स्वप्ने महिमानः स्त्र्यादिभिः पूज्यमानश्चरत्यनेकविधान् स्वप्नभोगाननुभवतीत्यर्थः। एष आत्मेति होवाचेत्यादि समानं। सद्वैवमुक्त इन्द्रः शान्तहृदयः प्रवव्राज। स हाप्राप्यैव देवान् पूर्व्ववदस्मिन्नप्यात्मनि भयं ददर्श। कथं तदिदं शरीरं यद्यप्यन्धं भवति स्वप्नात्मा योऽनन्धः स भवति। यदि

आ० तद्वाक्यं व्याकरोति। एवमेवेति॥ इन्द्राभिप्रायविषय एष शब्दः॥ अनुव्याख्यास्यामीत्युक्तं श्रुत्वा श्रोतुकाममुपगतमिन्द्रं प्रत्याह। यस्मादिति॥ पूर्व्ववच्छायात्मदर्शनवदित्यर्थः॥ अस्मिन्नप्यात्मनीति स्वप्नद्रष्टरीत्यर्थः॥ ९॥

छायात्मनः शरीरानुविधायित्ववन्न स्वप्नद्रष्टुस्तदनुविधायित्वं॥ तथाच कथं पूर्व्ववद्दोषदर्शनमित्याशङ्क्य परिहरति। कथमित्यादिना। स्राम्येण चक्षुरादिगतानवरतसलिलगलनविषयत्वे-

उ० रोदितीव नाहमत्र भोग्यं पश्यामीति ॥ २ ॥ स समित्पाणिः पुनरेयाय तꣳ ह प्रजापतिरुवाच मघवन्यच्छान्तहृदयः प्राव्राजीः किमिच्छन्पुनरागम इति स होवाच तद्यद्यपीदं भगवः शरीरमन्धं भवत्यनन्धः स भवति यदि स्राममस्रामो नैवैषोऽस्य दोषेण दुष्यति ॥ ३ ॥ न वधेनास्य हन्यते नाऽस्य स्राम्येण स्रामो घ्नन्ति त्वेवैनं विच्छादय-

---

भा० स्राममिदं शरीरमस्रामस्स स भवति नैवैष स्वप्नात्मा ऽस्य देहस्य दोषेण दुष्यति नाप्यस्य वधेन स हन्यते छायात्मवत्। न चाऽस्य स्राम्येण स्रामः स्वप्नात्मा भवति। यदध्यायादावागममात्रेणोपन्यस्तं नास्य जरयैतज्जीर्य्यतीत्यादि। तदिह न्यायेनोपपादयितुमुपन्यस्तं। न तावदयं छायात्मवद्देहदोषयुक्तः किन्तु घ्नन्ति त्वेवैनमेवशब्द इवार्थे घ्नन्ति वैनं केचनेति द्रष्टव्यं। न तु घ्नन्त्येवेत्युत्तरेषु सर्व्वेष्विवशब्ददर्शनात्। नाऽस्य वधेन हन्यत इति विशेषणात् घ्नन्तित्वेवेति चेन्नैवं। प्रजापतिं प्रमाणीकुर्व्वतोऽनृतवा-

---

व्या० नेति यावत्। देहदोषेणात्मनो न दोषो भवतीति प्रागेवोक्तं तत्किमर्थमिह पुनरुच्यतेऽत आह। यदध्यायादाविति। न्यायो ऽन्वयव्यतिरेकाख्यः एतद्देहाभिमाने हि सत्येव देहधर्म्मेण संयुज्यत इव द्रष्टा स्वप्ने त्वेतद्देहाभिमानाभावान्न तेन संहज्यतइत्याह। तदिहेति॥ स्वप्नद्रष्टा चेद्देहदोषेण न युज्यते कथं तर्हि तस्मिन्दोषदर्शनमित्याशङ्क्याह। न तावदिति॥ किमित्येवकारो यथाश्रुतो न व्याख्यायते तत्राह। नत्विति। इतिशब्दो

उ॰ न्तीवाऽप्रियवेत्तेव भवत्यपि रोदितीव नाऽहमत्र भोग्यं पश्यामीत्येवमेवैष मघवन्निति होवाचैत-

---

भा॰ दिलापादनानुपपत्तेः । एतदमृतमित्येतत्प्रजापतिवचनं कथं मृषा कुर्य्यादिन्द्रस्तं प्रमाणीकुर्व्वन् । ननु छायापुरुषे प्रजापतिनोक्तेऽस्य शरीरस्य नाशमन्वेष नश्यतीति दोषमदधात्तथेहापि स्यात् । नैवं । कस्माद्य एषोऽक्षिणि पुरुषो दृश्यत इति न छायात्मा प्रजापतिनोक्त इति मन्यते मघवान् । कथमपहतपाप्मादिलक्षणे पृष्टे यदि छायात्मा प्रजापतिनोक्त इति मन्यते तदा कथं प्रजापतिं प्रमाणीकृत्य पुनः श्रवणाय समित्पाणिर्गच्छेत जगाम च । तस्मान्न छायात्मा प्रजापतिनोक्त इति मन्यते । तथा च व्याख्यातं । द्रष्टाक्षिणि दृश्यत इति । तथा विच्छादयन्तीव विद्रावयन्तीव तथा च पुत्रादिमरणनिमित्तमप्रियवेत्तेव भवति । अपि च स्वयमपि रोदितीव । नन्वप्रियं वेत्तेव कथं वेत्त्ये-

---

आ॰ दृष्टव्यमित्यनेन सम्बध्यते । देहस्य वधेन नायं हन्यत इति विशेषणात्स्वतो वधः स्वप्नदृशो नियमतो विवक्षितः ॥ कस्मादेवशब्दो न यथाश्रुत एवेति शङ्कते । नास्येति ॥ किमयं प्रजापतिमाप्तमनाप्तं वा मन्यते । यद्यनाप्तं बुध्यते न तर्हि तं प्रत्युपगतिरिन्द्रस्य विद्याग्रहणार्थं सम्भवतीति मत्वाऽऽह । नैवमिति ॥ विकल्पान्तरमाह । प्रजापतिमिति ॥ न स्वतो हननं स्वप्नदृशो विवक्षितमिन्द्रस्येति शेषः ॥ उक्तमेव स्फोरयति । एतदिति ॥ दृष्टान्तेन शङ्कते । नन्विति ॥ दृष्टान्तं विघटयति । नैवमिति ॥ तद्विघटनप्रकारं प्रश्नपूर्व्वकं प्रकटयति । कस्मादित्यादिना ॥ एतदेवाकाङ्क्षापूर्व्वकं प्रपञ्चयति । कथमित्यादिना ॥ यथेन्द्रो दृश्यत

उ० न्त्वेव ते भूयोऽनुव्याख्यास्यामि वसाऽपराणि द्वात्रिꣳशतं वर्षाणीति स हाऽपराणि द्वात्रिꣳशतं वर्षाण्युवास तस्मै होवाच ॥ ४ ॥ १० ॥

---

भा० वेत्युच्यते। न। अमृताभयत्ववचनानुपपत्तेः। ध्यायतीवेति च श्रुत्यन्तरात्। ननु प्रत्यक्षविरोध इति चेत्। न। शरीरात्मत्वप्रत्यक्षवद्भ्रान्तिसम्भवात्। तिष्ठतु तावदप्रियवेत्तेव न वेति नाहमत्र भोग्यं पश्यामि। स्वप्नात्मज्ञानेऽपि दृष्टं फलं नोपलभ्यत इत्यभिप्रायः। एवमेवैष तवाभिप्रायेणेति वाक्यशेषः। आत्मनोऽमृताभयगुणवत्त्वस्याभिप्रेतत्वात् द्विरुक्तमपि न्यायतो मया यथावन्नावधारयति। तस्मात्पूर्व्ववदस्याद्यापि प्रतिबन्धकारणमस्तीति मन्वानस्तस्य-

---

व्या० इति श्रुत्यर्थं गृहीत्वा छायात्मानमेव गृहीतवानित्युक्तं कथमिदानीमन्यथोच्यते तत्राह। तथेति॥ यथेदं वाक्यमक्ष्युपलक्षितद्रष्टृपरं तथा प्रागेव व्याख्यातं न तु स्वप्नद्रष्टरि छायात्मनीव स्पष्टा विनाशदृष्टिरित्यर्थः। यथावदुमगम्य स्वप्नद्रष्टारं घ्नन्तीव तथेति यावत्॥ इवशब्दमाक्षिपति। नन्विति॥ वेत्तृत्वं विकारश्चेदमृतत्वं न स्यान्मृदादिवद्विनाशित्वप्रसङ्गात्तस्मादिवशब्दो युक्त इत्युत्तरमाह। उच्यत इति॥ अहं वेद्मीति विक्रियाश्रयत्वप्रत्यक्षविरोधादिवशब्दो न युक्त इति शङ्कते। नन्विति॥ अध्यासादपि प्रत्यक्षोपपत्तेर्न विकारित्वं सिध्यतीति परिहरति। नेत्यादिना॥ नाहमित्यादि वाक्यमवतारयति। तिष्ठत्विति॥ न वेत्यप्रियवेत्तैव भवतीत्यर्थः॥ इष्टं सर्व्वलोककामावाप्तिलक्षणं विधेये ब्रह्मभावे नाध्यासिकमप्यप्रियवेत्तृत्वादिकमस्ति। तत्पुनर्द्वैतेऽप्यागतमतस्त्वदभिप्रायेणाप्रियवेत्तेव स्वप्नद्रष्टा॥ न तु मदभिप्रायेणेति विशिनष्टि। तवेति॥ तत्र हेतुमाह। आत्मन इति॥ वसापराणीत्यादिवाक्यतात्पर्य्यमाह।

उ० तद्धैतत् सुप्तः समस्तः सम्प्रसन्नः स्वप्नं न विजानात्येष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति स ह शान्तहृदयः प्रवव्राज स हाप्राप्यैव देवानेतद्भयं ददर्श नाह खल्वयमेवꣳ सम्प्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति नाहमत्र भोग्यं पश्यामीति ॥ १ ॥ स समित्पाणिः

---

भा० पुनरेयाय ... वर्षाणि ब्रह्मचर्य्यमित्यादिदेश प्रजापतिः । तथोषितवते क्षपितकल्मषायाह ॥ १० ॥

पूर्व्ववदेतन्त्वेव त इत्याद्युक्त्वा तद्यत्रैतत्सुप्त इत्यादि व्याख्यातं वाक्यं । अक्षिणि यो द्रष्टा स्वप्ने च महीयमानश्चरति स एषः सुप्तः समस्तः सम्प्रसन्नः स्वप्नं न विजानात्येष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति स्वाभिप्रेतमेव मघवान् । तत्रापि दोषं ददर्श । कथं नाह नैव सुषुप्तस्थोऽप्यात्मा खल्वयं सम्प्रति सम्यगिदानीञ्चात्मानं जानाति नैवं जानाति । कथमयमहमस्मीति नो एवेमानि भूतानि चेति । यथा जाग्रति स्वप्ने वा । अतो विनाशमेवेति

---

आ० दिष्टक्रममपीति ॥ तथा प्रजापतिवाक्यानुसारेणेति यावत् ॥ १० ॥

यथापूर्व्वमेतन्त्वेव ते इत्याद्युक्त्वा य एव स्वप्ने महीयमान इत्याद्युक्तं तथेहाप्येतन्त्वेवेत्युक्त्वा तद्यत्रैतदित्याह । विशिष्टाधिकारिणे प्रजापतिरिति योजना ॥ व्याख्यातस्यैव वाक्यस्यार्थं सङ्क्षिप्य दर्शयति । अक्षिणीति ॥ तत्रापि सुषुप्तदर्शनेऽपीत्यर्थः ॥ तदेव दोषदर्शनं प्रश्नद्वारा स्फोरयति । कथमित्यादिना ॥

उ० पुनरेयाय तꣳ ह प्रजापतिरुवाच मघवन्यच्छान्तहृदयः प्राव्राजीः किमिवेच्छन्पुनरागम इति स होवाच नाह खल्वयं भगव एवꣳ सम्प्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति नाहमत्र भोग्यं पश्यामीति ॥ २ ॥ एवमेवैष मघवन्निति होवाच एतन्त्वेव ते भूयोऽनुव्या-

भा० नाशमेवेति पूर्ववत्तद्द्रष्टव्यं। अपीतोऽतिगतो भवति विनष्ट इव भवतीत्यभिप्रायः। ज्ञाने हि सति ज्ञातुः सद्भावो गम्यते नाऽसति ज्ञाने। न च सुषुप्तस्यस्य ज्ञानं दृश्यतेऽतो विनष्ट इवेत्यभिप्रायः। न तु विनाशमेवात्मनो मन्यतेऽमृताभयवचनस्य प्रामाण्यमिच्छन् पूर्ववदेवमेवेत्युक्ता यो मयोक्तस्त्रिभिः पर्य्यायैस्तमेवैतं नो एवान्यत्रैतस्मादात्मनोऽन्यं कञ्चन किन्तर्हि एतमेव व्याख्यास्यामि। स्वल्पस्तु दोषस्तवावशिष्टस्तत्क्षपणाय वसाऽपराण्यन्यानि पञ्चवर्षाणीत्युक्तः स तथा चकार। तस्मै मृदितकषायादिदोषाय स्थानत्रयदोषसम्बन्धरहितमात्मनः स्वरूपमपहतपाप्मत्वादिलक्षणं मघवते तस्मै होवाच। तान्येकशतं वर्षाणि

व्या० स्वात्मानं न जानातीत्युक्तमेवाकाङ्क्षाद्वारेणाभिनयति। कथमिति॥ तत्र वैधर्म्यं दृष्टान्तमाह। यथेति॥ स्वपरविवेकाभावे दोषमाह। अत इति॥ घ्नन्तीत्येवेत्यत्रोक्तं लक्षयति। पूर्ववदिति॥ कुतो ज्ञानाभावमात्रेण विनष्टत्वमित्याशङ्क्योक्तमभिप्रायं स्पष्टयति।

उ॰ ख्यास्यामि नो एवान्यत्रैतस्माद्वसाऽपराणि पञ्च वर्षाणीति सहापराणि पञ्च वर्षाण्युवास तान्येकशतꣳ सम्पेदुरेतत्तद्यदाहुरेकशतꣳ ह वै वर्षाणि मघवान्प्रजापतौ ब्रह्मचर्य्यमुवास तस्मै होवाच ॥ ३ ॥ ११ ॥

मघवन्मर्त्यं वा इदꣳ शरीरमात्तं मृत्युना

---

भा॰ सम्पेदुः सम्पन्नानि बभूवुः । यदाहुर्लोके शिष्टा एकशतं ह वै वर्षाणि मघवान् प्रजापतौ ब्रह्मचर्य्यमुवासेति । तदेतद्द्वात्रिंशतमित्यादिना दर्शितमित्याख्यायिकातोऽपसृत्य श्रुत्योच्यते । एवन्तु किलैतदिन्द्रत्वादपि गुरुतरमिन्द्रेणापि महता यत्नेनैकोत्तरवर्षशतकृतायासेन प्राप्तमात्मज्ञानमतो नातःपरं पुरुषार्थान्तरमस्तीत्यात्मज्ञानं स्तौति ॥ ११ ॥

मघवन्मर्त्यं वै मरणधर्मीदं शरीरं । यन्मन्यसेऽच्छाधारादिलक्षणः सम्प्रसादलक्षण आत्मा मयोक्तो विनाशमेवापीतो भवतीति । शृणु तत्र कारणं । यदिदं शरीरं

---

व्या॰ ज्ञाने स्तौति ॥ एवकारो यथाश्रुत एव किं न स्यादित्याशङ्क्याह । न त्विति ॥ पूर्ववद्ब्रह्मचर्यादेशाभावे हेतुमाह । खल्वित्विति ॥ व्याख्यायिकातोऽपसृत्य श्रुतिरस्मभ्यं किमर्थमित्यमुपदिशतीत्याशङ्क्याह । एवन्त्विति ॥ ११ ॥

कार्य्यकारणपरिवेष्टितौ विश्वतैजसावुक्तौ । कारणमात्रबद्धश्च प्राज्ञो व्याख्यातः ॥ समस्तत्यशरीरन्तुरीयमुपदेष्टुं सशरीरतां निन्दति । मघवन्निति ॥ शरीरवदात्मनोऽपि विनाशित्वमवस्थाविशेषे

उ॰ तदस्यामृतस्याशरीरस्यात्मनोऽधिष्ठानमात्तो वै

भा॰ वै यत्पश्यसि तदेतन्मर्त्यं विनाशि। तच्चात्तं मृत्युना ग्रस्तं सन्ततमेव। कदाचिदेव म्रियत इति मर्त्यमित्युक्तेन तथा सन्त्रासो भवति यथा ग्रस्तमेव सदा व्याप्तमेव मृत्युनेत्युक्ते इति वैराग्यार्थं विशेष इत्युच्यते। आत्तं मृत्युनेति। कथं नाम देहाभिमानतो विरक्तः सन्निवर्त्तेत इति। शरीरमित्यत्र सदेहेन्द्रियमनोभिरुच्यते। तच्छरीरमस्य सम्प्रसादस्य त्रिस्थानतया गम्यमानस्यामृतस्य मरणादिदेहेन्द्रियमनोधर्मवर्जितस्येत्येतत्। अमृतस्येत्यनेनैवाशरीरत्वे सिद्धे पुनरशरीरस्येति वचनं वाय्वादिवत्सावयवत्वमूर्त्तिमत्त्वे मा भूतामित्यात्मनो भोगाधिष्ठानं। आत्मनो वा सत ईक्षितुस्तेजोऽबन्नादिक्रमेणोत्पन्नमधिष्ठानं। जीवरूपेण प्रविश्य सदेवाधितिष्ठत्यस्मिन्निति वाधिष्ठानं। यस्येदमीदृशं नित्यमेव मृत्युग्रस्तं धर्माधर्मजनितत्वात्प्रियाप्रियवदधिष्ठानं तदधिष्ठितस्तद्वान् सशरीरो भवति।

व्या॰ दर्शितमित्याशङ्क्याह। यन्मन्यस इति॥ सशरीरो विशेषविज्ञानवान् भवत्यशरीरस्य तु विशेषविज्ञानाभावाद्विनाशभ्रमो न पुनरसौ वस्तुतो विनश्यति स्वेन रूपेणाभिनिष्पद्यत इति सम्प्रसादस्याविनाशित्ववचनादित्यभिप्रेत्य कारणमेव स्पष्टयन्नक्षराणि व्याचष्टे। यदिदमित्यादिना॥ ननु मर्त्यमित्येतावतैव मृत्युव्याप्तत्वे शरीरस्य सिद्धे किमित्यात्तं मृत्युनेति पुनरुच्यते तत्राह। कदाचिदेवेति॥ वैराग्यार्थं विशेषवचनमित्युक्तं यत्तदेव वैराग्यं किमर्थमित्याशङ्क्याह। कथमिति॥ निवर्त्तने विशेषवचनं फलवदिति शेषः॥ तदस्येत्यत्र तच्छब्दार्थमाह।

उ० सशरीरः प्रियाप्रियाभ्यां न वै सशरी-

---

भा० अशरीरस्वभावस्यात्मनस्तदेवाऽहं शरीरं शरीरमेव चाह-
मित्यविवेकादात्मभावः सशरीरत्वमत एव सशरीरः
सन्नात्तो ग्रस्तः प्रियाप्रियाभ्यां। प्रसिद्धमेतत्तस्य च न वै
सशरीरस्य सतः प्रियाप्रिययोर्बाह्यविषयसंयोगवियोग-
योर्निमित्तयोर्बाह्यविषयसंयोगवियोगौ ममेति मन्यमा-
नस्यापहतिर्विनाश उच्छेदः सन्ततिरूपयोर्नास्तीति। तं
पुनर्देहाभिमानादशरीरस्वरूपविज्ञानेन निवर्त्तिता विवे-
कज्ञानमशरीरं सन्तं प्रियाऽप्रिये न स्पृशतः। स्पृशिः
प्रत्येकं सम्बध्यत इति। प्रियं न स्पृशत्यप्रियं न स्पृशतीति
वाक्यद्वयं भवति। न म्लेच्छाशुच्यधार्म्मिकैः सह सम्भाषेतेति
यद्वत्। धर्म्माधर्म्मकार्य्ये हिताहिते यतोऽशरीरता तु
स्वरूपमिति। तत्र धर्म्माधर्म्मयोरसम्भवात्तत्कार्य्यभावो
दूरत एवेत्यतो न प्रियाप्रिये स्पृशतः। ननु यदि प्रियम-

---

व्या० शरीरमित्यत्रेति। मघवन्नित्यादिवाक्यं सम्पर्यः। त्रिस्थानतया
जाग्रत्स्वप्नसुषुप्तिस्थानत्रयसम्बन्धित्वेनेति यावत्। अमृतत्वं षडूर्म्मि-
वर्जितत्वमशरीरत्वं स्वाभाविकसावयत्वादिराहित्यं आत्मनोऽधि-
ष्ठानमित्यत्र भोगेत्यपेक्षितपूर्व्वं कृतं भोगायतनं शरीरमिति विशे-
षणार्थमुक्त्वा तस्यैवार्थान्तरमाह। आत्मनो वेति॥ अधिष्ठानं जन-
यितुस्तस्योपलब्धेरधिकरणमिति यावत्॥ अधिष्ठानशब्दस्यार्था-
न्तरमाह। जीवरूपेणेति॥ उत्तरवाक्यस्थं सशरीरशब्दं व्याचष्टे।
यस्येति॥ ईदृशं मर्त्यत्वादिविशेषणवदित्यर्थः। तद्यथोक्तं शरी-
रमधिष्ठितमनेनेति व्युत्पत्त्या तदधिष्ठितसादृश्यः पुरुष इत्यर्थः॥
तस्यैव सम्पिण्डितमर्थमाह। तद्वानिति॥ उक्तेऽर्थे विशेषणं

उ॰ रस्य सतः प्रियाप्रिययोरपहतिरस्त्यशरीरं

भा॰ य्यशरीरं न स्पृशतीति यन्मघवतोक्तं सुषुप्तस्थो विनाश-
मेवापीतो भवतीति तदेवेहाप्यापन्नं। नैष दोषो धर्म्मा-
धर्म्मकार्य्ययोः शरीरसम्बन्धिनोः प्रियाप्रिययोः प्रतिषेधस्य
विवक्षितत्वात्। अशरीरं न प्रियाप्रिये स्पृशत इत्यादि-
श्रुतिः। आगमापायिनोर्हि स्पर्शशब्दो दृष्टो यथा शीत-
स्पर्श उष्णस्पर्श इति। न त्वग्नेरुष्णप्रकाशयोः स्वभावभूत-
योरग्निना स्पर्श इति भवति। तथाग्नेः सवितुर्वोष्णप्रका-
शवत्स्वरूपभूतस्यानन्दस्य प्रियस्यापि नेह प्रतिषेधो विज्ञा-
नमानन्दमानन्दो ब्रह्मेति श्रुतिभ्यः। इहापि भूमैव
सुखमित्युक्तत्वात्। ननु भूम्नः प्रियस्यैकत्वेऽसंवेद्यत्वात्।
स्वरूपेणैव वा नित्यसंवेद्यत्वान्निर्विशेषतेति नेन्द्रस्य तदिष्टं।
नाह खल्वयं सम्प्रत्यात्मानं जानात्ययमहमस्मीति नो
एवेमानि भूतानि विनाशमेवापीतो भवति। नाहमत्र

व्या॰ पातयति। सशरीर इति॥ अशरीरस्य कथं सशरीरत्वमित्या-
शङ्क्याह। अशरीरेति॥ अविवेकतः सशरीरो भवतीति पूर्व्वेण
सम्बन्धः। यतः सशरीरोऽतएव प्रियाऽप्रियाभ्यामात्तो वै पुरुष
इति योजना॥ वैशब्दार्थमाह। प्रसिद्धमिति॥ एतच्छब्दार्थ-
मेवोत्तरवाक्यव्याख्यानेन स्फोरयति। सशरीरस्येति॥ तौ
ममेति मन्यमानस्य सतः स्वस्य तयोः सन्ततिरूपयोरपहति-
र्नास्तीति सम्बन्धः। प्रियाप्रिययोः स्वारस्येन विनाशोऽस्ति क्षयि-
कत्वादित्याशङ्क्य सन्ततिरूपयोरित्युक्तं। इतिशब्दो वाक्यसमा-
प्त्यर्थः॥ अज्ञस्य देहसम्बन्धद्वारा संसारित्वमुक्त्वा तस्यैव विद्या-
वतो देहनिवृत्तिद्वारेण मुक्तिं दर्शयति। तं पुनरिति॥ मुक्ते

उ० वाव सन्तं न प्रियाप्रिये स्पृशतः ॥ १ ॥

---

भा० भोग्यं पश्यामीत्युक्तत्वात् । तद्धीन्द्रस्येष्टं यद्भूतानि चात्मानञ्च जानाति । न चाप्रियं किञ्चिद्वेत्ति । स सर्व्वांश्च लोकानाप्नोति सर्व्वांश्च कामान् येन ज्ञानेन । सत्यमेतदिष्टमिन्द्रस्येमानि भूतानि मत्तोऽन्यानि लोकाः कामाश्च सर्व्वे मत्तोऽन्येऽहमेषां स्वामीति । न त्वेतदिन्द्रस्य हितं । हितञ्चेन्द्रस्य प्रजापतिना वक्तव्यं । व्योमवदशरीरात्मतया सर्व्वभूतलोककामात्मत्वोपगमेन या प्राप्तिस्तद्धितमिन्द्राय वक्तव्यमिति प्रजापतिनाऽभिप्रेतं । न तु राज्ञो राज्याप्तिवदन्यत्वेन । तत्रैवं सति कं केन विजानीयादात्मैकत्वे इमानि भूतान्ययमहमस्मीति । नन्वस्मिन्पक्षे स्त्रीभिर्वा

---

आ० पुंसि प्रियाप्रिययोर्मिलितयोरस्पर्शेऽप्येकैकस्य स्पर्शः स्यादित्याशङ्क्याह । स्पृशतिरिति ॥ प्रत्येकसम्बन्धमभिनयति । प्रियमिति ॥ समस्ततया श्रुतस्यानेकस्य प्रत्येकं क्रियासम्बन्धे दृष्टान्तमाह । नेति ॥ प्रियाप्रिययोर्मुक्तात्मन्यसंस्पर्शं पातनिकापूर्व्वकं कैमुतिकन्यायेन दर्शयति । धर्म्माधर्म्मेति ॥ तत्रेत्यशरीराख्यं स्वरूपमुच्यते ॥ प्रियस्पर्शाभावं श्रुत्वा मोक्षस्यापुमर्थत्वं शङ्कते । नन्विति ॥ इहापीति मुक्तौ गृह्यते । स्वाभाविकप्रियाप्रियप्रतिषेधदोषान्नापुमर्थत्वं मुक्तेरित्युत्तरमाह । नैष दोष इति ॥ प्रतिषेधमेवाभिनयति । अशरीरमिति ॥ कादाचित्कयोरेव प्रियाप्रिययोरेष निषेध इत्यत्र नियामकमाह । आगमापायिनोरिति ॥ कादाचित्कत्वे स्पर्शशब्दवन्न स्वात्मन्येतच्छब्दोऽस्तीत्याह । न त्विति ॥ आत्मनि तर्हि कादाचित्कमेव प्रियमिति तन्मात्रप्रतिषेधात्तदवस्थमपुमर्थत्वमित्याशङ्क्याह । सवितुरिति ॥ भूमविद्यालोचनायामपि सुखमात्रस्यात्मनि न प्रतिषेधोऽस्तीत्याह । इहापीति ॥ तथापि विषयविषयीभावेन भेदाभावात्तदवस्थमपुरुषार्थत्व-

भा० यानैर्वा स यदि पितृलोककामः स एकधा भवतीत्याद्यै-
श्वर्य्यश्रुतयोऽनुपपन्नाः । न सर्व्वात्मनः सर्व्वफलसम्बन्धो-
पपत्तेरविरोधात्। मृद इव सर्व्वघटकरककुण्डाद्यात्मिः ।
ननु सर्व्वात्मत्वे दुःखसम्बन्धोऽपि स्यादिति चेन्न । दुःखस्या-
प्यात्मत्वोपगमाद्विरोधः । आत्मन्यविद्याकल्पनानिमि-
त्तानि दुःखानि रज्ज्वामिव सर्पादिकल्पनानिमित्तानि ।
सा चाविद्या शरीरात्मैकत्वस्वरूपदर्शनेन दुःखनिमित्तो-
च्छिन्नेति दुःखसम्बन्धाशङ्का न सम्भवति । शुद्धसत्त्व-
सङ्कल्पनिमित्तानान्तु कामानामीश्वरदेहसम्बन्धः सर्व्व-
भूतेषु मानसानां पर एव सर्व्वसत्त्वोपाधिद्वारेण भोक्तेति
सर्व्वाविद्याकृतसंव्यवहाराणां पर एवात्मास्पदं नान्योस्तीति

---

व्या० मिति शङ्कते । नन्विति ॥ भेदो न पुमर्थत्वयोगी केवलव्यति-
रेकभावात्सुखसाक्षात्कारस्तु पुरुषार्थः ॥ स चाभेदेपि भिद्यते
इत्याशङ्क्याह । स्वरूपेणेति ॥ आत्मनि विशेषज्ञानराहित्य-
मिन्द्रस्य नेष्टमित्यत्र हेतुमाह । नाहेति ॥ किन्तर्हि इन्द्रस्येष्ट-
मित्याशङ्क्याह । तद्धीति ॥ येन ज्ञानेनाप्नोति तदिष्टमिन्द्रस्येति
पूर्व्वेण सम्बन्धः । किमिदं विशेषविज्ञानमिन्द्रस्येष्टमित्युच्यते
किंवा हितमिति विवक्ष्यते तत्राद्यमङ्गीकरोति । सत्यमिति ॥
द्वितीयं दूषयति। न त्विति ॥ द्वितीयाद्वै भयं भवतीत्यादिश्रुतेरि-
त्यर्थः ॥ तथापीष्टमेवेन्द्राय प्रजापतिनोपदेष्टव्यमित्याशङ्क्याह ।
हितश्चेति ॥ किन्तर्हि तस्य हितमिति चेत्तदाह। व्योमवदिति॥
वक्तव्यमिति सम्बन्धः॥ हितमेव न त्वनिष्टमिति स्थिते फलितमाह।
तत्रेति॥ सर्व्वेषां भूताना लोकानां कामानाञ्चात्मा सच्चिदानन्दमात्रं।
तद्रूपत्वं चेन्मुक्तस्येष्यते कथं तर्हि तस्यैश्वर्य्यश्रुतयो निर्व्वहन्तीति
चोदयति। नन्विति ॥ सगुणविद्यावतां यदैश्वर्य्यं तन्निर्गुणविद्या-
स्तुत्यर्थं सङ्कीर्त्त्यते॥ ब्रह्मीभूतस्य मुक्तस्य सगुणविद्याया अपि

भा० वेदान्तसिद्धान्तः । य एषोऽक्षिणि पुरुषो दृश्यत इति च्छायापुरुष एव प्रजापतिनोक्तः स्वप्नसुषुप्तयोश्चान्य एव । न परोऽपहतपाप्मत्वादिलक्षणो विरोधादिति केचिन्मन्यन्ते । छायाद्यात्मनाश्चोपदेशे प्रयोजनमाचक्षते । आदावेवोच्यमाने किल दुर्विज्ञेयत्वात्परस्यात्मनोऽत्यन्तबाह्यविषयासक्तचेतसोऽत्यन्तसूक्ष्मवस्तुश्रवणे व्यामोहो माभूदिति । यथा किल द्वितीयायां सूक्ष्मं चन्द्रं दिदर्शयिषुर्वृक्षं कञ्चित्प्रत्यक्षमादौ दर्शयति । पश्यामुमेष चन्द्र इति । ततोऽप्यन्यं गिरिमूर्द्धानं चन्द्रसमीपस्थमेष चन्द्र इति । ततोऽसौ चन्द्रं पश्यति । एवमेतद्य एषोऽक्षिणीत्याद्युक्तं प्रजापतिना त्रिभिः पर्य्यायैर्न पर इति । चतुर्थे तु पर्य्याये देहान्मर्त्यात्समुत्थायाऽशरीरतामापन्नो ज्योतिः-

---

व्या० प्रत्यग्भूतत्वात्फलस्य तत्रोपचरितुं युक्तत्वादिति परिहरति । नेत्यादिना ॥ सर्व्वात्मत्वे निन्दापि प्राप्नोतीति शङ्कते । नन्विति ॥ दुःखस्य दुःखत्वाभाववत्तस्यात्मा विद्वानपि दुःखी भविष्यतीति समाधत्ते । न दुःखस्येति ॥ तर्हि दुःखिनामात्मा मुक्त इति दुःखी स्यात्तत्राह । आत्मनोति ॥ न तावदात्मनः स्वभावतो दुःखित्वं किन्त्वाविद्यकं । सा च मुक्तस्य दग्धत्वादप्रसक्तिरित्यर्थः । तर्हि विद्यया दग्धायामविद्यायां तदध्यारोपितमैश्वर्य्यमपि ईश्वरस्य सगुणविद्याफलभूतं तद्दग्धमेवेति कथं स्तुत्यर्थमिह तदुपदेशसिद्धिरित्याशङ्क्याह । शुद्धेति ॥ शुद्धं सत्त्वं रजस्तमोभ्यामस्पृष्टं तस्मान्मायैकदेशाज्जाताः सङ्कल्पा निमित्तानि येषां कामानामैश्वर्य्यभेदानां ते तथोक्तास्तेषां सर्व्वेषु भूतेषु विषयेषु मनोमात्रेणेश्वराभिधानरूपेण सिद्धानामीश्वराख्येन स्वभावेनाभिसम्बन्धो मायावस्थायां सिद्ध्यतीत्यर्थः । ननु जीवानामेवाविद्यातत्कार्य्यसम्बन्धो नेश्वरस्येति चेन्नेत्याह । पर एवेति ॥ चतुर्थ्वपि

भा॰ स्वरूपं । यस्मिन्नुत्तमपुरुषे स्त्र्यादिभिर्जक्षन् क्रीडन्नममाणो भवति स उत्तमपुरुषः पर उक्त इति चाङ्गः । सत्यं रमणीया तावदियं व्याख्या श्रोतुं। न त्वर्थोऽस्य ग्रन्थस्यैवं सम्भवति । कथमक्षिणि पुरुषो दृश्यत इत्युपन्यस्य शिष्याभ्यां छायात्मनि गृहीते तयोस्तद्विपरीतग्रहणं मत्वा तदपनयायोदशरावोपन्यासः । किं पश्यथ इति च प्रश्नः । साध्वलङ्कारोपदेशश्चानर्थकः स्यात्। यदि छायात्मैव प्रजापतिनाऽक्षिणि दृश्यत इत्युपदिष्टः। किञ्च यदि वा तेन स्वयमुपदिष्टग्रहणस्याप्यपनयनकारणं वक्तव्यं स्यात् । स्वप्नसुषुप्तात्मग्रहणयोरपि तदपनयनकारणं च स्वयं ब्रूयात् । न चोक्तं तेन मन्यामहे। नाक्षिणि छायात्मा प्रजापतिनोपदिष्टः । किञ्चान्यदक्षिणि द्रष्टा चेद्दृश्यत इति उपदिष्टः

---

आ॰ पर्य्यायेषु त्वमर्थानुवादेन तस्य तदर्थत्वं विधेयमिति स्वाभिप्रायेण प्रजापतिवाक्यं व्याख्यातं ॥ सम्प्रति स्वयूथ्यमतमुत्थापयति । य एष इति ॥ प्रथमपर्य्यायस्य छायात्मवद्द्वितीयपर्य्याययोरपि 'विज्ञानात्मविषयत्वमित्याह । स्वप्नेति ॥ अन्य एव परस्मादुक्त इति सम्बन्धः ॥ चतुर्थपर्य्यायवत्पर्य्यायत्रयेऽपि परमात्मैव कस्मान्नोच्यते। तत्राह । न पर इति ॥ अपहतपाप्मत्वादेरवस्थावत्त्वस्य च मिथो विरोधो ह्येत्वर्थः । नन्वन्तिमे पर्य्याये परस्योपदेशो युज्यते। तज्ज्ञानस्य मुक्तिफलत्वात्किमिति पूर्व्वेषु पर्य्यायेषु छायादयो निर्द्दिश्यन्ते तत्फलाभावादत आह । छायाद्यात्मनाश्चेति ॥ तत्र प्रथमं छायात्मनोपदेशस्य प्रयोजनमाह । आदावेवेति ॥ परस्यातिसूक्ष्मत्वेन दुर्व्विज्ञेयत्वात्तस्मिन्नेवादावुच्यमाने सति तस्यापि सूक्ष्मस्य श्रवणेऽपि श्रोतुरनात्मनिष्ठस्य किल व्यामोहः स्यात्स माभूदिति पृथक्छायात्मोपदेशः कृत इति सम्बन्धः ॥ स्वप्नसुषुप्तयोर्विज्ञानात्मोपदेशस्य प्रयोजनं दर्शयन्नुक्त-

भा० स्यात्तत इदं युक्तं। एतन्त्वेव त इत्युक्त्वा स्वप्नेऽपि द्रष्टुरेवोपदेशः। स्वप्ने न द्रष्टोपदिष्ट इति चेन्नापि रोदितीवाप्रियवेत्तेवेत्युपदेशात्। न च द्रष्टुरन्यः कश्चित्स्वप्ने महिमानश्चरति। अत्रायं पुरुषः स्वयं ज्योतिरिति न्यायतः श्रुत्यन्तरे सिद्धत्वात्। यद्यपि स्वप्ने सधीर्भवति तथापि न धीः स्वप्नभोगोपलब्धिं प्रति करणत्वं भजते। किन्तर्हि पटचित्रवज्जाग्रद्वासनाश्रया दृश्यैव धीर्भवतीति। न द्रष्टुः स्वयं ज्योतिष्ट्वबाधः स्यात्। किञ्चान्यत्। जाग्रत्स्वप्नयोर्भूतानि चात्मानं च जानातीमानि भूतान्ययमहमस्मीति प्राप्तौ सत्यां प्रतिषेधो युक्तः स्यान्नाह खल्वयमित्यादि। तथा चेतनस्यैवाविद्यानिमित्तयोः सशरीरत्वे सति

---

व्या० मर्थं दृष्टान्तेन स्पष्टयति। यथेत्यादिना॥ इतिशब्दस्त्विडा सम्बध्यते॥ पर्य्यायान्तरस्य तात्पर्य्यमाह। चतुर्थे त्विति॥ मरणधर्म्मकाद्देहात्पृथग्भूत्वा ज्योतिःस्वरूपमशरीरत्वं प्राप्तो यद्यपि चतुर्थे पर्य्याये कथ्यते तथापि कथमसौ परमात्मा स्यादित्याशङ्क्याह। यस्मिन्निति॥ स सम्प्रसादो यो विद्वान् कर्तृत्वेन विवक्षितः किमिदं व्याख्यानं शब्दानुसारि किंवाऽर्थानुसारीति विकल्प्याद्यमङ्गीकरोति। सत्यमिति॥ द्वितीयं दूषयति। न त्विति॥ असम्भवमेवाकाङ्क्षाद्वारा स्फुटयति। कथमित्यादिना॥ यद्याद्ये पर्य्याये छायात्मोपदिश्यते तर्हीन्द्रविरोचनयोः सम्यग्दर्शित्वाद्विपरीतग्रहापोहार्थं प्रजापतेरायासो वृथा स्यात्। तेन नेदं व्याख्यानमर्थानुसारीत्यर्थः॥ इतश्च नाद्ये पर्य्याये छायात्मोपदेशोऽस्तीत्याह। किञ्चेति॥ प्रजापतिनोपदिष्टस्यापि छायात्मनो मृषात्वं न स्मर्य्यतीत्याशङ्क्य हेत्वन्तरं स्पष्टयति। यदीति॥ तेन छायात्माग्रहणापनयकारणवचनेनेति यावत्। तेन तत्प्रजापतिनेत्येकस्तच्छब्दो योज्यः॥ इतश्च प्रथमे पर्य्याये द्रष्टु-

भा० प्रियाप्रिययोरपहतिर्नास्तीत्युक्त्वा तस्यैवाशरीरस्य सतो ऽविद्यायां सत्यां सशरीरत्वे प्राप्तयोः प्रतिषेधो युक्तोऽशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत इति। एकस्त्वात्मा स्वप्नबुद्धान्तयोर्महामत्स्यवदसङ्गः सञ्चरतीति श्रुत्यन्तरे सिद्धं। यच्चोक्तं सम्प्रसादः शरीरात्समुत्थाय यस्मिन् स्त्र्यादिभीरममाणो भवति सोऽन्यः सम्प्रसादादधिकरण-निर्द्दिष्ट उत्तमः पुरुष इति। तदप्यसत्। चतुर्थेऽपि पर्य्याये एतन्त्वेव त इति वचनात्। यदि ततोऽन्योऽभिप्रेतः स्यात्पूर्व्ववदेतन्त्वेव त इति न ब्रूयान्मृषा प्रजापतिः। किञ्चान्यत्तेजोबन्नादीनां स्रष्टुः सतः स्वविकारदेहे शुङ्गे प्रवेशं दर्शयित्वा प्रविष्टाय पुनस्तत्त्वमसीत्युपदेशो मृषा

---

व्या० स्वैवोपदेशो न छायापुरुषस्येत्याह। किञ्चान्यदिति॥ एतच्छ-ब्देन सन्निहितावलम्बिना छायात्मानमनुकृष्य स्वप्ने द्रष्टृरू-पदेशः प्रजापतेर्मृषावादित्वं प्रसज्येत। तथा च प्रथमेऽपि पर्य्याये द्रष्टैवोपदिष्ट इत्यर्थः॥ स्वप्नावस्थाविशिष्टस्य स्थाना-न्तरे बाध्यत्वान्न तत्र द्रष्टृरूपदेशोऽस्तीति शङ्कते। स्वप्न इति॥ अनुभवानुसारेणोत्तरमाह। नेत्यादिना॥ किञ्च प्रकाश-कारणानामुपरमे यः प्रकाशः स नैसर्गिक इति न्यायेन प्रतीचः स्वयं ज्योतिष्ट्वं बृहदारण्यके स्वप्नावस्थामाश्रित्योक्तं ततश्च तत्र द्रष्टृरूपदेशः सिद्ध्यतीत्याह। न चेति॥ सूर्य्यादी-नामुपरमे यः प्रकाशो दृश्यमानः स नैसर्गिक इत्ययुक्तं। स्वप्ने ऽप्यन्तःकरणस्य सत्त्वादित्याशङ्क्याह। यद्यपीति॥ करणत्वा-भावे हेतुं पृच्छति। किन्तर्हीति॥ नीलपीतादिजाग्रद्वासना-भिर्विवर्त्तमानाः साक्षिणो वेद्यतामापद्यन्ते। तथाच पटे चित्रवद्विचित्रवासनामयचेतसः साक्षिगम्यत्वान्न स्वप्नोपलब्धौ करणं भवतीति तद्द्रष्टुः स्वयं ज्योतिष्ट्वं न्यायसिद्धमित्याह।

भा० प्रसज्येत। तस्मिंश्च स्वप्यादिभी रन्ता भावव्यमीति युक्त उपदेशोऽभविष्यद्यदि सम्प्रसादादन्य उत्तमः पुरुषो भवेत्। तथा भूम्न्यहमेवेत्यादिश्चात्मैवेदं सर्व्वमिति नोपसमहरिष्यद्यदि भूमा जीवादन्योऽभविष्यत्। नान्योऽतोऽस्ति द्रष्टेत्यादिश्रुत्यन्तराच्च। सर्व्वश्रुतिषु च परस्मिन्नात्मशब्दप्रयोगो नाभविष्यत्प्रत्यगात्मा चेत्सर्व्वजन्तूनां पर आत्मा न भवेत्। तस्मादेक एवात्मा प्रकरणी सिद्धः। न चात्मनः संसारित्वं। अविद्याध्यस्तत्वादात्मनि संसारस्य। न हि रज्जुशुक्तिकागगनादिषु सर्परजतमलादीनि मिथ्याज्ञानाध्य-

---

व्या० यष्टेति॥ प्रासङ्गिकं हित्वा द्रष्टैवोपदिष्टः॥ स्वप्नावस्थायामित्यत्र हेत्वन्तरमाह। किञ्चेति॥ तथाच जाग्रदवस्थायामिव स्वप्नेऽपि द्रष्टैवोपदिष्ट इति शेषः॥ इतश्च द्रष्टुरेवोपदेशः स्वप्नदशायामित्याह। प्राप्ताविति॥ न केवलमुक्तसौषुप्तौ निषेधो निषेध्यप्राप्तिसापेक्षत्वादवस्थाद्वये द्रष्टृस्वपदेशमाकाङ्क्षति किन्तु तुरीयगतो निषिद्धोऽपि निषेध्यमाकाङ्क्षन्नवस्थाद्वये द्रष्टृस्वपदेशमाकाङ्क्षतीत्याह। तथा चेति॥ निषेधस्य प्राप्तिसापेक्षत्वात्प्रकृतस्यैव द्रष्टुरविद्यानिदाने सशरीरत्वे तन्निमित्तयोः स्थानद्वयगतयोर्न प्रियाप्रिययोरपहतिरस्तीति न ह वै सशरीरस्येत्यादिनोक्तसशरीरत्वे प्राप्तयोः प्रियाप्रिययोस्तस्यैवावस्थात्रयातीतस्य सत्यां विद्यायामशरीरमित्यादिना प्रतिषेधो युक्त इति योजना॥ स्वप्ने द्रष्टृस्वपदेशे हेत्वन्तरमाह। एकस्येति॥ चतुर्थपर्य्यायस्य सौषुप्तादर्थान्तरविषयत्वमुक्तमनुभाष्य दूषयति। यच्चोक्तमित्यादिना॥ तदेव व्यतिरेकद्वारा स्फोरयति। यदीति॥ अधिकरणाधेयभावेन भेदः सत्यो नास्तीत्यत्र हेत्वन्तरमाह। किञ्चान्यदिति॥ जीवपरयोर्भेदस्य षष्ठप्रपाठकविरोधवत् सप्तमप्रपाठकविरोधोऽपि स्यादित्याह। तथेति॥ बृहदारण्यकश्रुत्यालोचनायामपि जीवेश्वरभेदो न सम्भवतीत्याह। नान्य इति॥ इतश्च

भा० स्त्वानि तेषां भवन्तीति। एतेन मशरीरस्य प्रियाप्रिययोरपहतिर्नास्तीति व्याख्यातं। यच्च स्थितमप्रियवेत्तेवेति ना प्रियावेत्तैवेति सिद्धं। एवञ्च सति सर्व्वपर्य्यायेऽप्येतदमृतमभयमेतद्ब्रह्मेति प्रजापतेर्वचनं। यदि वा प्रजापतिच्छद्मरूपायाः श्रुतेर्वचनं सत्यमेव भवेत्। न च तत्कुतर्कबुद्ध्या मृषाकर्त्तुं युक्तं। ततो गुरुतरस्य प्रमाणान्तरस्यानुपपत्तेः। ननु प्रत्यचं दुःखाद्यप्रियवेत्तृत्वमव्यभिचार्य्यनुभूयत इति चेन्न। जरादिरहितो जीर्णोऽहं जातोऽहमायुष्मान् गौरः कृशो मृत इत्यादिप्रत्यचानुभववत्त-

---

आ० जीवपरयोर्भेदो नास्तीत्याह। सर्व्वश्रुतिष्विति॥ श्रौतमर्थमुपसंहरति। तस्मादिति॥ आत्मैक्ये परस्यैव संसारित्वं सर्व्वदेहेषु स्यादिति चेन्नेत्याह॥ न चेति॥ आरोपितसंसारित्वं वस्तुतो नात्मन्यस्तीत्येतदृष्टान्तेन स्पष्टयति। न हीति॥ मिथ्या च तदज्ञानञ्चेति मिथ्याज्ञानं। तेनाध्यस्तान्यविद्यमानान्येव विद्यमानवत्प्रतीतिमापादितानीति यावत्। न ह वै सशरीरस्येत्यादि वदता वास्तवत्वं प्रियाप्रियसम्बन्धस्य विवक्षितमिति शङ्कामुक्तन्यायातिदेशेन निरस्यति। एतेनेति॥ आत्मनि संसारस्य प्रसक्तिर्नेति यावत्। यावदध्यासभावित्वं प्रियाप्रिययोरपहत्यभावो न वास्तवत्वं शरीरसम्बन्धस्यैव प्रियाप्रियमूलस्य दुर्निरूपत्वादित्यर्थः॥ स्वप्नद्रष्टा खल्वप्रियवेत्तैव भवति न त्वप्रियवेत्तैवेति यत्पूर्व्वं स्थितं तत्सिद्धं लाभान्तरमाह। एवञ्चेति॥ प्रजापतेर्व्वचनं सत्यं भवेदिति सम्बन्धः। अपौरुषेय्यां श्रुतौ कुतः प्रजापतेर्वचनं सावकाशमित्याशङ्क्याह। यदि वेति॥ सुखादयः साश्रयाः गुणत्वाद्रूपादिवदित्यनुमानात्तदाश्रयः परिशेषादात्मा भविष्यतीति वैशेषिकादितर्कविरोधादसत्यं श्रुतेर्वचनमित्याशङ्क्याह। न चेति॥ सुखादीनामुपाधिधर्म्मत्वेन सिद्धसाध्यत्वान्नास्ति श्रौतवचसो बाधकमित्यर्थः॥ प्रत्यचमिति शङ्कते। नन्विति॥ तस्याभासत्वान्न

भा॰ दुपपत्तेः । सर्व्वमप्येतत्सत्यमिति चेद्स्त्वेवैतदेवं दुरवगमं येन देवराजोऽप्युदशरावादिदर्शिता विनाशयुक्तिरपि सुमोहैवाच विनाशमेवापीतो भवतीति । तथा विरोचनो महाप्राज्ञः प्राजापत्योऽपि देहमाचात्मदर्शनो बभूव । तथेन्द्रस्यात्मविनाशभयसागरे एव वैनाशिकाः न्यमज्जन् । तथा साङ्ख्याः द्रष्टारं देहादिव्यतिरिक्तमवगम्यापि त्यक्तागमप्रमाणत्वात् मृत्युविषय एवान्यत्वदर्शने तस्थुः । तथाऽन्ये काणादादिदर्शनाः कषायरक्तमिव क्षारादिभिर्वस्त्रं नवभिरात्मगुणैर्युक्तमात्मद्रव्यं विशोधयितुं प्रवृत्ताः । तथाऽन्ये कर्म्मिणो वाह्यविषयापहृतचेतसो वेदप्रमाणा अपि परमार्थसत्यमात्मैकत्वं विनाशमिवेन्द्रवन्मन्यमाना घटीयन्त्रवदारोहावरोहप्रकारैरनिशं बम्भ्रमन्ति । किमन्ये क्षुद्रजन्तवो विवेकहीनाः स्वभावत एव वहिर्विषयापहृतचेतसः । तस्मादिदं त्यक्तसर्व्ववाह्यैषणैः अनन्यश-

---

आ॰ वाधकत्वमिति परिहरति । नेत्यादिना ॥ दृष्टान्तोऽपि सम्प्रतिपन्नो न भवतीति शङ्कते । सर्व्वमिति ॥ जरादेः सत्यवचनं त्वदीयमेवमस्त्वेवेत्यङ्गीकरोति । अस्त्वेवेति ॥ अङ्गीकारे हेतुमाह । दुरवगममिति ॥ अधिकारिणः प्रमितिजनको वेद इति न्यायात्तादृशानामनधिकारिणां दुर्ज्ञानमात्मतत्त्वं । अतोऽस्त्वेव जरादिसत्यत्ववचनं । न तावता वस्तुक्षतिरित्यर्थः । दुरवगमत्वे लिङ्गमाह । येनेति ॥ अत्रेत्यात्मतत्त्वोक्तिः ॥ तस्य दुर्ज्ञानत्वे लिङ्गान्तरमाह । तथेति । वैनाशिकभ्रान्तिरप्यात्मनो दुर्ज्ञानत्वं गमयतीत्याह । तथेन्द्रस्येति ॥ साङ्ख्यभ्रान्तिरपि दुर्ज्ञानत्वमात्मनो ज्ञापयतीत्याह । तथा साङ्ख्या इति ॥ तार्किकभ्रान्तिरपि तस्य दुर्ग्रहत्वे गमकमाह । तथान्य इति ॥ बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्म्माधर्म्मभावना नवात्मगुणा

उ॰ अशरीरो वायुरभ्रं विद्युत् स्तनयित्नुरशरीराण्येतानि तद्यथैतान्यमुष्मादाकाशात्समुत्थाय परं

भा॰ रणैः परमहंसपरिव्राजकैरत्याश्रमिभिर्वेदान्तज्ञानपरैरेव वेदनीयं पूज्यतमैः। प्राजापत्यश्चेमं सम्प्रदायमनुसरद्भिरुपनिबद्धं प्रकरणचतुष्टयेन। तथाऽनुशासन्त्यद्यापि त एव नान्य इति। तत्राशरीरस्य सम्प्रसादस्याविद्यया शरीरेणाविशेषतां सशरीरतामेव सम्प्राप्तस्य शरीरात्समुत्थाय स्वेन रूपेण यथाऽभिनिष्पत्तिस्तथा वक्तव्येति दृष्टान्त उच्यते। अशरीरो वायुरविद्यमानं शिरःपाण्यादिमच्छरीरमस्येत्यशरीरः। किञ्चाभ्रं विद्युत्स्तनयित्नुरित्येतानि चाशरीराणि। तत्तचैवं सति वर्षादिप्रयोजनावसाने यथा। अमुष्मादिति भूमिष्ठा श्रुतिर्द्युलोकसम्बन्धिनमाकाशदेशं व्यपदिशति। एतानि यथोक्तान्याकाशसमान-

व्या॰ मीमांसकभ्रान्तिः॥ तस्य दुर्ग्रहत्वे गमकमित्याह। तथान्य इति॥ यदा परीक्षकाणामपीदृशी भ्रान्तिरात्मनो दुरवगमत्वं गमयति तदा विचारविधुराणां लौकिकानां भ्रान्तिस्तत्र प्रमाणयितव्येत्याह। किमन्य इति॥ अन्ये च बम्भ्रमन्तीति किं वक्तव्यमिति सम्बन्धः॥ यदि लौकिकानां परीक्षकाणां चेदमात्मतत्त्वं दुर्ज्ञानं प्रतिज्ञायते केषां तर्हि इदं सुज्ञानमित्याशङ्क्याह। तस्मादिति॥ एषणाखिवात्मतत्त्वेऽपि तेषामौदासीन्यं वारयति। अनन्यशरणैरिति॥ तेषां कुटीचरादिभावं व्यासेधति। परमहंसेति॥ कर्म्मनिष्ठानामाश्रमानतीत्य नैष्कर्म्म्यप्राधान्येन वर्त्तमानत्वं दर्शयति। अत्याश्रमिभिरिति॥ अनन्यशरणैरित्युक्तं व्यनक्ति। वेदान्तेति॥ पूज्यतमैरिति नित्यानुवादस्तेषामात्मवेदनोपायं प्राक्तनमुपदिशति। प्राजापत्यश्चेति॥ स्थान-

उ॰ ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यन्ते ॥२॥
एवमेवैष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं

भा॰ रूपतामापन्नानि स्वेन वाय्वादिरूपेणागृह्यमाणानि आकाशाख्यताङ्गतानि । यथा सम्प्रसादोऽविद्यावस्थायां शरीरात्मभावमेवापन्नस्तानि च तथा भूतानि अमुष्माद्युलोकसम्बन्धिन आकाशदेशात्समुत्तिष्ठन्ति वर्षणादिप्रयोजनाभिनिर्वृत्तये । कथं शिशिरापाये सावित्रं परं ज्योतिः प्रकृष्टं ग्रैष्मकमुपसम्पद्य सावित्रमभितापं प्राप्येत्यर्थः । आदित्याभितापेन पृथग्भावमापादिताः सन्तः स्वेन स्वेन रूपेण पुरोवातादिना वायुरूपेण स्तिमितभावं हित्वा ऽभ्रमपि पर्वतहस्त्यादिरूपेण। विद्युदपि स्वेन ज्योतिर्लतादिचपलरूपेण । स्तनयित्नुरपि स्वेन गर्जिताशनिरूपेणेत्येवं प्रावृडागमे स्वेन स्वेन रूपेणाभिनिष्पद्यन्ते । यथाऽयं

आ॰ त्रयं तुरीयस्येत्येतद्विषयं प्रकरणचतुष्टयं ॥ यथोक्ताधिकारिणामेवात्मवेदनमित्यत्र लिङ्गान्तरमाह । तथेति ॥ अशरीरमित्यादिवाक्यव्याख्यानोपसंहारार्थमितिपदं सशरीरस्य बन्धो मुक्तिरशरीरस्येति स्थिते किमर्थमशरीरो वायुरित्यादिवाक्यमित्याशङ्क्याह । तत्रेत्यादिना ॥ कथं वायोरशरीरत्वं तदाह । अविद्यमानमिति ॥ एवं सति वाय्वादीनामशरीरत्वे सतीति यावत् । आकाशस्य सर्व्वत्रैकरूपत्वादमुष्मादिति कुतो व्यपदेशसिद्धिरित्याशङ्क्याह । अमुष्मादितीति ॥ यथोक्तान्यशरीराणि वाय्वादीनि तेषामाकाशत्वापत्तौ दृष्टान्तमाह । यथेति ॥ तथा वाय्वादीनि स्वेन रूपेणागृह्यमाणत्वदशायामाकाशाख्यतां गतानीति सम्बन्धः । तानि च वाय्वादीनि तथाभूतान्याकाशात्मत्वं प्राप्तानीत्येतत् ॥ वर्षादिफलनिष्पत्त्यर्थं वाय्वादीनामाकाशदेशात्

उ॰ ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पूरुषः स तत्र पर्य्येति जक्षन्क्रीडन्रममाणः

---

भा॰ दृष्टान्तो वाय्वादीनामाकाशादिसाम्यगमनवदविद्यया संसारावस्थायां सशरीरसाम्यमापन्नोऽहममुष्य पुत्रो जातो जीर्णो मरिष्य इत्येवम्प्रकारं। प्रजापतिनेव मघवान् यथोक्तेन क्रमेण नासि त्वं देहेन्द्रियादिधर्म्मा तत्त्वमसीति प्रतिबोधितः सन् स एष सम्प्रसादो जीवोऽस्माच्छरीरात् आकाशादिव वाय्वादयः समुत्थाय देहादिवैलक्षण्यमात्मनो रूपमवगम्य देहात्मभावनां हित्वेत्येतत्स्वेन रूपेण सदात्मनैवाभिनिष्पद्यत इति व्याख्यातं पुरस्तात्। स येन स्वेन रूपेण सम्प्रसादोऽभिनिष्पद्यते प्राक् प्रतिबोधात् तद्भ्रान्तिनिमित्तात्सर्पो भवति यथा रज्जुः। पश्चात्कृतप्रकाशाद्रज्ज्वात्मना स्वेन रूपेणाभिनिष्पद्यते। अत एवञ्च स उ-

---

आ॰ समुत्थानमुक्तमाकाङ्क्षाद्वारेण स्फुटयति। कथमित्यादिना॥ स्वेन स्वेन रूपेणाभिनिष्पद्यन्त इति सम्बन्धः। तत्र वायोरभ्रस्य विद्युत्स्तनयित्नोश्च स्वेन रूपेणाभिनिष्पत्तिप्रकारं विवृणोति। पुरोवातादीति॥ स्तिमितभावं हित्वा वायुरिति शेषः॥ दृष्टान्तमनूद्य दार्ष्टान्तिकमाह। यथेति॥ वाय्वादीनामित्यस्मात्पुरस्तात्तथेत्यध्याहर्त्तव्यं। तत्रादिशब्देनाभ्रविद्युत्स्तनयित्नवो गृह्यन्ते। आकाशादित्यादिपदमभ्रादिकारणसङ्ग्रहार्थं॥ शरीरसाम्यमेव विशिनष्टि। अहमिति॥ प्रतिबोधने दृष्टान्तमाह। प्रजापतिनेति॥ यथोक्तेन क्रमेण पर्य्यायचतुष्टयोपदिष्टप्रकारेणेति यावत्। मघवान्प्रतिबोधित इति सम्बन्धः। दार्ष्टान्तिके प्रतिबोधनप्रकारं दर्शयति। नास्तीति॥ शरीरादिदुषः समुत्थाने दृष्टान्तमाह। आकाशादिवेति॥ समुत्थानं विभ-

उ॰ स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा नोपजनꣳ स्मर-

भा॰ त्तमपूरुषः। उत्तमश्चासौ पूरुषश्चेत्युत्तमपूरुषः स एवोत्त-
मपूरुषः। अचिस्वप्नपुरुषौ व्यक्ताव्यक्तस्य सुषुप्तः समस्तः
सम्प्रसन्नोऽशरीरश्च स्वेन रूपेणेति। एषामेव स्वेन रूपे-
णावस्थितः चराचरौ व्याकृताऽव्याकृतावपेक्ष्योत्तमपूरुष-
कृतनिर्वचनो ह्ययं गीतासु स सम्प्रसादः स्वेन रूपेण
तत्र स्वात्मनि स्वस्थतया सर्व्वात्मभूतः पर्य्येति क्वचिदिन्द्रा-
द्यात्मना जक्षन् हसन् भक्षयन् वा भक्ष्यानुच्चावचानीप्सि-
तान् क्वचिन्मनोमात्रैः सङ्कल्पादेव समुत्थितैर्ब्राह्मलौकि-
कैर्वा क्रीडन् स्त्र्यादिभी रममाणश्च मनसैव नोपजनं
स्मरन् स्त्रीपुंसयोरन्योन्योपगमेन जायत इत्युपज-
नमात्मभावेन वात्मसामीप्येन जायत इत्युपजनमिदं
शरीरं तन्न स्मरन्। तत्स्मरणे हि दुःखमेव स्यात्। दुःखा-

व्या॰ जते। देहादीति॥ पुनरुक्तिं परिहरति। इति व्याख्यातमिति॥
उत्तरवाक्यस्य सम्बन्धं व्याचष्टे। स येनेति। स उत्तमः पूरुष
इति सम्बन्धः॥ सम्प्रसादस्य स्वेन रूपेणाभिनिष्पत्तिं दृष्टान्तेन
स्पष्टयति। प्रागित्यादिना॥ उक्तदृष्टान्तानुसारेणाविद्या-
दशायां शरीरात्मत्वमापन्नो जीवो विद्यया प्रकाशितब्रह्मसतत्त्वः
स्वेन रूपेणाभिनिष्पन्नो भवतीति दार्ष्टान्तिकमाह। एवमेवेति॥
पुरुषस्योत्तमत्वविशेषणं पुरुषान्तरव्यवच्छेदार्थमित्यभिप्रेत्य पुरु-
षभेदं दर्शयति। अक्षीति॥ इति चत्वारः पुरुषा इति शेषः।
तत्र पूर्व्वेषां त्रयाणां व्यवच्छेदं तुरीयस्य तूत्तमपुरुषत्वमित्याह।
एषामिति॥ यथोक्तोत्तमपुरुषे भगवत्सम्मतिं सङ्गिरते। क्षरेति॥
द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च। क्षरः सर्व्वाणि भूतानि
कूटस्थोऽक्षर उच्यते॥ उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः।

भा० त्मकत्वात्तस्य। नन्वनुभूतं चेन्न स्मरेदसर्व्वज्ञत्वमुक्तं स्यात्। नैष दोषो येन मिथ्याज्ञानादिना जनितं तच्च मिथ्याज्ञानादि विद्ययोच्छेदितमतस्तच्चानुभूतमेवेति न तदस्मरणे सर्व्वज्ञत्वहानिः। न ह्युन्मत्तेन ग्रहगृहीतेन वा यदनुभूतं तदुन्मादाद्यपगमेऽपि स्मर्त्तव्यं स्यात्तथेहापि संसारिभिरविद्यादोषवद्भिर्यदनुभूयते तत्सर्व्वात्मानमशरीरं न स्पृशति। अविद्यादिनिमित्ताभावात्। ये तूच्छिन्नदोषैर्मृदितकषायैर्मानसाः सत्याः कामा अनृतापिधाना अनुभूयन्ते विद्याभिव्यङ्ग्यत्वात् त एवमुक्तेन सर्व्वात्मभूतेन सम्बध्यन्ते इत्यात्मज्ञानस्तुतये निर्द्दिश्यन्तेऽतः साध्वे तद्विशिनष्टि। य एते ब्रह्मलोक इति। यत्र क्वचन भवन्तोऽपि ब्रह्मण्येव हिते लोके भवन्तीति सर्व्वात्मत्वाद्ब्रह्मण उच्यन्ते। ननु कथमेकः सन्नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानातीति

आ० यो लोकत्रयमाविश्य बिभर्त्त्यव्यय ईश्वरः॥ यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः॥ अतोऽस्मिँल्लोके वेदे च प्रथितः पुरुषोत्तम इति हि स भगवानूचिवान्॥ स तत्रेत्यादि व्याचष्टे। स सम्प्रसाद इति॥ क्वचिदिति स्वर्गलोकोक्तिः। क्वचिन्मनोमात्रैरित्यत्र क्वचिदिति ब्रह्मलोको गृह्यते॥ नोपजनमिति प्रतीकं गृहीत्वा व्याकरोति। स्त्रीपुंसयोरिति॥ तत्र स्मरन्पर्य्येतीति सम्बन्धः॥ यथोक्तदेहस्मृतौ कानुपपत्तिरित्याशङ्क्याह। तत्स्मरणे हीति॥ विदुषो मुक्तस्यानुभूतदेहास्मरणे दूषणमाशङ्कते। नन्विति॥ असर्व्वज्ञत्वदोषं निराकरोति। नैष दोष इति॥ अनुभूतार्थस्मृतौ हि सर्व्वज्ञ इति। न च शरी-

उ॰ एवमेवायमस्मिञ्छरीरे प्राणो युक्तः ॥ ३ ॥

भा॰ स भूमा कामांश्च ब्राह्मलौकिकान् पश्यन्नमत इति च विरुद्धं। यथैको यस्मिन्नेव क्षणे पश्यति स तस्मिन्नेव क्षणे न पश्यति चेति। नैष दोषः। श्रुत्यन्तरे परिहृतत्वाद्द्रष्टुर्दृष्टेर्विपरिलोपात्पश्यन्नेव भवति। द्रष्टुरन्यत्वेन कामानामभावान्न पश्यति चेति। यद्यपि सुषुप्ते तदुक्तं। मुक्तस्यापि सर्व्वैकत्वात्समानो द्वितीयाभावः। केन कं पश्येदिति चोक्तमेव। अशरीरस्वरूपोऽपहतपाप्मादिलक्षणः सन् कथमेष पुरुषोऽक्षिणि दृश्यत इत्युक्तः प्रजापतिना। तत्र यथाऽसावक्षिणि साक्षाद्दृश्यते तद्वक्तव्यमितीदमारभ्यते। तत्र को हेतुरक्षिणि दर्शन इत्याह सदृष्टान्तः। यथा प्रयोग्यः प्रयोग्यपरो वा सशब्दः। प्रयुज्यत इति प्रयोग्योऽश्वो बलीवर्द्दो वा। यथा लोके आचरत्यनेनेत्याचरणो रथोऽनो

आ॰ राद्यनुभूतं तस्याविद्याकामकर्म्ममूलस्याज्ञानमात्रत्वात्तस्य च सकार्य्यस्य ज्ञानोदयमात्रेण नष्टत्वात्प्रागपि शरीरादेरनुभवविपरीतवर्त्तित्वानुपपत्तेरित्यर्थः। शरीरादिपूर्व्वं सम्यग्ज्ञानेनाविषयीकृतमपि सद्भ्रान्त्यानुभूतमेवेति विदुषामपि स्मर्त्तव्यमिति चेन्नेत्याह। न हीति॥ मुक्ते पुरुषे शरीरादयो न सम्बध्यन्ते चेत्कथं तर्हि तत्र कामाः सम्बध्येरन्नित्याशङ्क्याह। येत्विति॥ किमिति सर्व्वैरेते कामा नानुभूयेरन्नित्याशङ्क्याह। अनृतापिधाना इति॥ इतश्च विदुषामेव तदभिव्यक्तिरित्याह। विद्येति॥ किमिति निर्गुणविद्याप्रकरणे विदुषि सत्यकामसम्बन्धवचनं तत्राह। इत्यात्मज्ञानेति॥ आत्मविद्यास्तुत्यर्थं विदुषि कामसम्बन्धवचनं मनसैतान् कामान्पश्यन्नित्यत्र विशेषश्रवणमपि युक्तमित्याह। अत इति॥ इन्द्रियादिषु भवतां

उ॰ अथ यत्रैतदाकाशमनुविषण्णं चक्षुः स चाक्षुषः

भा॰ वा तस्मिन्नाचरणे युक्तस्तदाकर्षणाय। एवमस्मिञ्छरीरे रथस्थानीये प्राणः पञ्चवृत्तिः इन्द्रियमनोबुद्धिसंयुक्तः प्रज्ञात्मा विज्ञानक्रियाशक्तिद्वयसंमूर्च्छितात्मा युक्तः स्वकर्मफलोपभोगनिमित्तं नियुक्तः। कस्मिन्न्वहमुत्क्रान्तो भविष्यामि कस्मिन् वा प्रतिष्ठिते प्रतिष्ठास्यामीतीश्वरेण राज्ञा इव सर्व्वाधिकारी दर्शनश्रवणचेष्टाव्यापारेऽधिकृतः। तस्यैव तु मात्रैकदेशश्चक्षुरिन्द्रियं रूपोपलब्धिद्वारभूतं। अथ यत्र कृष्णतारोपलक्षितमाकाशं देहच्छिद्रमनुविषण्णमनुसक्तमनुगतं तत्र स प्रकृतोऽशरीर आत्मा चक्षुषि भवतीति चाक्षुषश्चक्षुषि भव इति चाक्षुषस्तस्य दर्शनाय रूपोपलब्धये चक्षुः करणं यस्य तत्। देहादिभिः संहतत्वात्परस्य द्रष्टुरर्थं सोऽत्र चक्षुषि दर्श-

आ॰ कामानां कुतो ब्रह्मलोकभावित्वमित्याशङ्क्याह। यत्रेति॥ मनसैतान् कामानित्यादिवाक्यं स्तुत्यर्थमपि प्रधानवाक्यविरुद्धत्वात्त्याज्यमिति शङ्कते। नन्विति॥ वाक्ययोर्मिथो विरोधे दृष्टान्तमाह। यथेति॥ यद्वैतन्न पश्यति न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति। ततोऽन्यद्विभक्तं यत्पश्येदिति बृहदारण्यकश्रुतिमाश्रित्य विरोधं धुनोते। नैष दोष इति॥ अथ यथोक्तं वाक्यं सुषुप्तमधिकृत्य प्रवृत्तं कथं मुक्तविषये तयोदाहृतमत आह। यद्यपीति॥ सुषुप्तस्य मोक्षदृष्टान्तत्वात्तद्गतस्य च दार्ष्टान्तिकेऽनुगमाद्यदुक्तं सुषुप्ते तत्सम्बन्धो मुक्ते सिध्यतीत्यर्थः॥ किञ्च मुक्तमेवाधिकृत्य यत्र त्वस्य सर्व्वमात्मैवाभूदित्यादि तत्रैवोक्तमित्याह। केनेति॥ फलार्थवादस्याक्षितवाक्यस्य च मिथो विरोधं शङ्कते। अशरीरेति॥ दृश्यत

उ॰ पुरुषो दर्शनाय चक्षुरथ यो वेदेदं जिघ्राणीति स आत्मा गन्धाय घ्राणमथ यो वेदेदमभिव्याह-

भा॰ नेन लिङ्गेन दृश्यते परोऽशरीरोऽसंहतः॥ अचिणि दृश्यत इति प्रजापतिनोक्तं सर्व्वेन्द्रियद्वारोपलक्षणार्थं। सर्व्वविषयोपलब्धा हि स एवेति। स्फुटोपलब्धिहेतुत्वा-त्त्वचिणीति विशेषवचनं सर्व्वश्रुतिषु। अहमदर्शमिति तत्सत्यं सम्भवतीति च श्रुतेः। अथापि योऽस्मिन्देहे वेद कथमिदं सुगन्धि दुर्गन्धि वा जिघ्राणीति अस्य गन्धं विजा-नीयामिति स आत्मा। तस्य गन्धाय गन्धविज्ञानाय घ्राणं। अथ यो वेदेदं वचनमभिव्याहराणीति वदिष्यामीति स आत्माऽभिव्याहरणक्रियासिद्धये करणं वागिन्द्रियं। अथ यो वेदेदं शृणवानीति स आत्मा श्रवणाय श्रोत्रं।

था॰ इत्यस्य पदस्य चाक्षुषदर्शने रूपत्वादशरीरस्य तदयोग्यत्वा-दशरीरात्मोक्तिर्दृश्यत इति श्रुतिर्विरुद्धेत्यर्थः॥ आत्मत्वाम्टत-त्वादिब्रह्मविषयानेकश्रुतिलिङ्गविरोधाद्दृश्यत इत्येकस्याः श्रुते-र्ज्ञानमात्रविषयावान्तरविरोधोऽस्तीत्यभिप्रेत्यानन्तरं वाक्यमुत्था-पयति। तत्रेति॥ चाक्षुषदर्शनाविषयत्वे सति चक्षुषो दर्शने को हेतुरित्यपेक्षायां लिङ्गहेतुकं तावद्दर्शनं सम्भवतीति मत्वा दृष्टान्तमाह श्रुतिः। स दृष्टान्तो यथा भवति तथोच्यत-इत्याह। तत्रेति॥ तमेव दृष्टान्तमनूद्य व्याचष्टे। यथेत्यादिना॥ एव-मध्याहारराहित्यसिद्ध्यर्थं पक्षान्तरमाह। प्रयोग्येति॥ एव-मित्यनेन द्वितीयो यथाशब्दः शरीरस्य रथस्थानीयत्वं शरीरं रथमेव त्विति श्रुत्यन्तरान्मन्तव्यं। तस्मिन्नुक्तशरीरे ईश्वरेण स्वक-र्म्मफलोपभोगनिमित्तं प्राणो रथित्वेन नियुक्त इति सम्बन्धः॥ आयाप्राणं व्यावर्त्तयति। पञ्चवृत्तिरिति॥ बुद्धिन्तु सारथिं

उ॰ राणीति स आत्माऽभिव्याहाराय वागथ यो वेदेदꣳ शृण्वानीति स आत्मा श्रवणाय श्रोत्रं ॥ ४ ॥ अथ यो वेदेदं मन्वानीति स आत्मा

---

भा॰ अथ यो वेदेदं मन्वानीति मननव्यापारमिन्द्रियासंप्रयुक्तं केवलं मन्वानीति वेद स आत्मा। यो वेद स आत्मेत्येवं सर्व्वत्र प्रयोगाद्वेदनमस्य स्वरूपमित्यवगम्यते। यथा यः पुरस्तात्प्रकाशयति स आदित्यो यो दक्षिणतो यः पश्चाच्च उत्तरतो य ऊर्द्धं प्रकाशयति स आदित्य इत्युक्ते प्रकाशस्वरूपः स इति गम्यते। दर्शनादिक्रियानिर्वृत्त्यर्थानि तु चक्षुरादिकरणानि। इदञ्चास्यात्मनः सामर्थ्यादवगम्यते। आत्मनः सत्तामात्र एव ज्ञानकर्तृत्वं न तु व्यापृततया।

---

आ॰ विद्धि मनःप्रग्रहमेव च ॥ इन्द्रियाणि हयान्याहुरिति श्रुत्यन्तरमाश्रित्याह। इन्द्रियेति ॥ आत्मानं रथिनं विद्धीति श्रुतेः प्राणस्य रथित्वमित्याशङ्क्य तस्य तदुपाधिर्यस्तदभेदाङ्गीकारान्नैवमित्याह। प्रज्ञात्मेति ॥ तस्याध्यात्मसन्तानद्वयविशिष्टत्वेन स्फुरितं स्वरूपं दर्शयति। विज्ञानेति ॥ ईश्वरस्य यथोक्तप्राणोपाधिद्वारा भोक्तृत्वादिसंसारित्वमित्यत्र श्रुत्यन्तरं प्रमाणयति। कस्मिन्निति ॥ प्रतिष्ठास्यामीति ईक्षित्वा स प्राणमसृजतेत्यादिश्रुतिरिति शेषः ॥ तथाच यथा राज्ञा सर्व्वाधिकारित्वेन सेनाध्यक्षः सन्धिविग्रहादौ नियुज्यते तथेश्वरेण सर्व्वचेष्टान्तराधिकृतः स्वकार्य्यदर्शनादिव्यापारनिमित्तं नियुक्तो भवतीत्याह। राज्ञेति ॥ प्राणः स्वविलक्षणेन चेतनेन नियुज्यते प्रयोज्यत्वादश्वादिवदित्यनुमानाद्देहसंहतात्प्राणादतिरिक्तोऽसंहतश्चेतनः सिद्धतीति समुदायार्थः। चक्षुरादिचेष्टा चेतननिमित्ता चेष्टात्वाद्रथादिचेष्टावदिति॥ अनुमानान्तरं सूचयति। तस्यैवेति ॥ प्रकृतप्राणविषयस्तच्छब्दः। मात्रेत्येतस्य व्याख्यानमेकदेश इति

उ० मनोऽस्य दैवं चक्षुः स वा एष एतेन दैवेन चक्षुषा मनसैतान् कामान् पश्यन् रमते ॥५॥ य

---

भा० यथा सवितुः सत्तामात्र एव प्रकाशनकर्तृत्वं न तु व्यापृततयेति तद्वत् । मनोऽस्यात्मनो दैवमप्राकृतमितरेन्द्रियैरसाधारणं । चक्षुश्चष्टे पश्यत्यनेनेति चक्षुः । वर्त्तमानकालविषयाणि चेन्द्रियाण्यतोऽदैवानि तानि । मनस्तु त्रिकालविषयोपलब्धिकरणं स्मृदितदोषञ्च सूक्ष्मव्यवहितादि सर्व्वोपलब्धिकरणञ्चेति दैवञ्चक्षुरुच्यते । स वै मुक्तः स्वरूपापन्नोऽविद्याकृतदेहेन्द्रियमनोवियुक्तः सर्व्वात्मभावमापन्नः सन्नेष व्योमवद्विशुद्धः सर्व्वेश्वरो मनउपाधिः सन् एतेनेवेश्वरेण मनसैतान् कामान् सवितृप्रकाशवन्नित्यप्रततेन

---

आ० प्राणसंवादे चक्षुरादीनां प्राणपारतन्त्र्यप्रतीतेस्तदेकदेशत्वं तेषामिति द्रष्टव्यं। शरीराद्यतिरिक्तमात्मानं सम्भाव्य तस्यौपाधिकं द्रष्टृत्वमाचष्टे । अथेति ॥ अतिरिक्तात्मसम्भावनानन्तर्य्यमथशब्दार्थः। यत्र तत्रेति सप्तमीभ्यां संसारदशोच्यते। अनुगतं चक्षुरिति सम्बन्धः ॥ दर्शनाय चक्षुरित्यस्यार्थं समर्थयते। यस्येति ॥ यस्य परस्य द्रष्टुरर्थं करणं चक्षुरिष्टं स यश्चक्षुषा लिङ्गेन दृश्यत इति सम्बन्धः॥ परार्थे चक्षुषो हेतुमाह। देहादिभिरिति ॥ यत्संहतं तत्स्वविलक्षणशेषं दृष्टं। यथा शयनासनादि। तथा तदपि चक्षुर्देहादिभिः संहतत्वाद्यस्य विलक्षणस्य शेषभूतं सोऽत्र दर्शनेन लिङ्गेन दृश्यते। विमतं साश्रयं धर्म्मत्वाद्रूपादिवदित्यनुमानादित्यर्थः ॥ दृश्यत इत्यस्याविरुद्धार्थमुक्त्वाऽक्षिणीत्यस्य विवक्षितमर्थमाह। अक्षिणीति ॥ यथाऽक्षिद्वारा रूपोपलब्धा तथा परस्तत्तदिन्द्रियद्वारा तत्तद्विषयोपलब्धा पर एवेति कृत्वा युक्तमिदमुपलक्षणमिति साधयति। सर्व्वविषयेति ॥ सर्व्वेन्द्रियैरुपलब्धृत्वमविशिष्टं चेत्कथं तर्हि सर्व्वास्वपि श्रुतिषु चक्षुष्ये-

उ॰ एते ब्रह्मलोके तं वा एतं देवा आत्मानमुपासते तस्मात्तेषाꣳ सर्वे च लोका आत्ताः सर्वे च कामाः स सर्वाꣳश्च लोकानाप्नोति सर्वाꣳश्च

---

भा॰ दर्शनेन पश्यन् रमते। कान् कामानिति विशिनष्टि। य एते ब्रह्मणि लोके हिरण्यनिधिवद्बाह्यविषयासङ्गानृतेनापिहिताः सङ्कल्पमात्रलभ्यास्तानित्यर्थः। यस्मादेष इन्द्राय प्रजापतिनोक्त आत्मा। ततः श्रुत्वा तमात्मानमद्यत्वेऽपि देवा उपासते। तदुपासनाच्च तेषां सर्व्वे च लोका आत्ताः प्राप्ताः सर्व्वे च कामाः। यदर्थं हीन्द्र एव शतं वर्षाणि प्रजापतौ ब्रह्मचर्य्यमुवास तत्फलं प्राप्तं देवैरित्यभिप्रायः॥ तद्युक्तं देवानां महाभाग्यत्वान्न त्विदानीं मनुष्याणामत्यल्प-

---

आ॰ वास्योपदिश्यते तत्राह। स्फुटेति॥ चक्षुषः स्फुटोपलब्धौ हेतुत्वे श्रुतिं सम्पादयति। अहमिति॥ यत्रादर्शमिति चक्षुषः प्रत्ययस्तद्वस्तु सत्यं स्फुटोपलम्भादिति द्वयोर्व्विवदमानयोर्दृष्टमित्यर्थः। य एषोऽक्षिणीत्यत्र सर्व्वेन्द्रियद्वारोपलब्धा विवक्षित इत्युक्तं व्यक्तीकरोति। अथापीति। चक्षुषि स्फुटोपलम्भेऽपीति यावत्। योऽस्मिन्देहे येन केनापीन्द्रियेण। कं यं चिद्विषयं वेद स आत्मेति सम्बन्धः॥ उक्तमेवार्थमाकाङ्क्षाद्वारा स्फोरयति। कथमित्यादिना॥ जिघ्राणीति यो वेदेत्युक्तमेव सङ्क्षिपति। अस्येति॥ इन्द्रियैर्घ्राणादिभिरसंस्पृष्टं तत्तद्वारेणानिष्पन्नमिति यावत्। केवलं मनोमात्रजनितमित्येतन्मन्त्राणि सम्पादयानीत्यर्थः॥ यो वेदेत्यत्र प्रत्ययार्थभूतं कर्तृत्वं सापेक्षत्वान्मिथ्याप्रकृत्यर्थं रूपन्तु संविन्मात्रमनपेक्षतया सत्यमात्मस्वरूपमित्याह। यो वेदेति। आत्मा संवेदनस्वभावश्चेत्तत्संसर्गादेव विषयसिद्धिसम्भवाच्चक्षुरादिवैयर्थ्यं स्यादित्याशङ्क्याह। दर्शनादीति॥ अन्तःकरणवृत्तिर्दर्शनादिक्रिया। सा चात्मनः संवि-

उ॰ कामान्यस्तमात्मानमनुविद्य जानातीति ह प्रजापतिरुवाच प्रजापतिरुवाच ॥ ६ ॥१२॥

भा॰ जीवितत्वान्मन्दतरप्रज्ञत्वाच्च सम्भवतीति प्राप्ते इदमुच्यते। स सर्व्वांश्च लोकानाप्नोति सर्व्वांश्च कामानिदानीन्तनोऽपि। कोऽसाविन्द्रादिवद्यस्तमात्मानमनुविद्य विजानातीति ह सामान्येन किल प्रजापतिरुवाच। अतः सर्व्वेषामात्मज्ञानं तत्फलप्राप्तिश्च तुल्यैव भवतीत्यर्थः। द्विर्वचनं समाप्त्यर्थं॥ १२ ॥

आ॰ देकरसस्यासङ्गोदासीनस्य विषयसंसर्गभ्रमहेतुस्तन्निष्पत्त्यर्थानि चक्षुरादीनि भवन्ति सार्थकानीत्यर्थः॥ तेषामुक्तरीत्या सार्थकत्वे गमकमाह। इदस्येति॥ करणानामुक्तं सार्थकत्वं प्रकृतस्य संविन्मात्रस्यासङ्गत्वादेव स्वतो विषयसम्बन्धानुपपत्त्या तत्सम्बन्धभ्रान्तिकारणान्तःकरणवृत्तिविशेषापेक्षया निर्द्धारितमित्यर्थः॥ आत्मनः संविन्मात्रस्वभावत्वे कथं कर्तृव्यपदेश इत्याशङ्क्याह। आत्मन इति॥ य एषोऽक्षिणीत्यादि वाक्यं प्रपञ्चितं सम्प्रति स तत्रेत्यादि फलवाक्यं प्रपञ्चयितुमिन्द्रियान्तरेभ्यो मनसो वैलक्षण्यं दर्शयति। मनोऽस्येति ॥ तस्य चक्षुष्ट्वेऽपि कुतो दैवत्वमित्याशङ्क्याह। वर्त्तमानेति॥ आगन्तुकदोषराहित्यं स्वदितदोषत्वं सर्व्वेश्वरो व्यज्यते। यस्मिन्विशुद्धे मनसि तन्मनः सर्व्वेश्वरं तदुपाधिरस्येति तथोक्तः। ईश्वरेण तदभिव्यञ्जकेनेत्येतदविद्यादिप्रतिबन्धकस्याभावान्मनसा नित्यं प्रततं दर्शनं नित्याभिव्यक्तस्वरूपं चैतन्यं तेन पश्यन्नितीति योजना॥ तं वा एतमित्यादि व्याचष्टे। यस्मादिति॥ पदार्थमुक्त्वा वाक्यार्थमाह। यदर्थं ह्यीति॥ सर्व्वांश्चेत्यादिवाक्यमाशङ्कोत्तरत्वेनोत्थाप्य व्याचष्टे। तदुक्तमित्यादिना॥ यथोक्तं फलं तच्छब्दार्थः। प्रकरणनिर्विशेषब्रह्मात्मैकत्वज्ञानविषयं दहरप्रकरणं विद्याप्रकरणे उपास्त्यस्तुत्यर्थं प्रसङ्गादुक्तं तत्प्रकरणपरिसमाप्त्यर्थं॥ १२॥

उ० श्यामाच्छबलं प्रपद्ये शबलाच्छ्यामं प्रपद्ये अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामीत्यभिसम्भवामीति॥१॥१३॥

---

भा० श्यामाच्छबलं प्रपद्य इत्यादिमन्त्राम्नायः पावनो जपार्थस्य ध्यानार्थो वा। श्यामो गम्भीरो वर्णः श्याम इव श्यामो हार्दं ब्रह्म। अत्यन्तदुरवगाह्यत्वात्तद्धार्दं ब्रह्म ज्ञात्वा ध्यानेन तस्माच्छ्यामाच्छबलमिव शबलोऽरण्याद्यनेककामिश्रत्वाद्ब्रह्मलोकस्य शाबल्यं तं ब्रह्मलोकं शबलं प्रपद्ये मनसा। शरीरपातादोर्द्ध्वं गच्छेयं। यस्मादहं शबलाद्ब्रह्मलोकान्नामरूपव्याकरणाच्छ्यामं प्रपद्ये हार्दं ब्रह्मभावं प्रपन्नोऽस्मीत्यभिप्रायः। अतस्तमेव प्रकृतिस्वरूपमात्मानं शबलं प्रपद्य इत्यर्थः। कथं शबलं ब्रह्मलोकं प्रपद्य इत्युच्यते। अश्व इव स्वानि लोमानि विधूय कम्पनेन श्रमं पांश्वादि च रोमतोऽपनीय यथा निर्मलो भवत्येवं हार्दब्रह्मज्ञानेन विधूय पापं धर्माधर्माख्यं चन्द्र इव च मुखाद्राहुग्रस्तस्तस्माद्राहोर्मुखात्प्रमुच्य भास्वरो भवति यथैवं धूत्वा प्रहाय

---

व्या० उक्ताया दहरविद्यायाः शेषभूतं जपविधानार्थमारभते। श्यामादिति॥ अत्यन्तं दुरवगाह्यत्वाज्ज्ञानहीनानामिति शेषः। कथं जीवतो ब्रह्मलोकप्राप्तिरित्याशङ्क्याह। मनसेति॥ न तर्हि मुख्या तत्प्राप्तिरित्याशङ्क्याह। शरीरेति॥ विपरीतपाठं हेतुत्वेनेति व्याचष्टे। यस्मादिति॥ हेतुः प्रतिज्ञया योज्यते। अत इति॥ दृष्टान्तमाकाङ्क्षापूर्व्वकमवतार्य्य व्याचष्टे। कथमित्यादिना॥

उ० आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतꣳस आत्मा प्रजापतेः सभां

---

भा० शरीरं सर्व्वानर्थाश्रयमिहैव ध्यानेन कृतात्मा कृतकृत्यः सन्नकृतं नित्यं ब्रह्मलोकमभिसम्भवामीति। द्विर्वचनं मन्त्रपरिसमाप्त्यर्थं॥ १३ ॥

आकाशो वै इत्यादि ब्रह्मणो लक्षणनिर्द्देशार्थं। आध्यानायाकाशो वै नाम श्रुतिषु प्रसिद्ध आत्मा। आकाश इवाशरीरत्वात्सूक्ष्मत्वाच्च स चाकाशो नाम। नामरूपयोः स्वात्मस्थयोर्जगद्बीजभूतयोः सलिलस्येव फेनस्थानीययोर्निर्व्वहिता निर्व्वोढा व्याकर्त्ता। ते नामरूपे यदन्तरा यस्य ब्रह्मणोऽन्तरा मध्ये वर्त्तेते तयोर्वा नामरूपयोरन्तरा मध्ये यन्नामरूपाभ्यामस्पृष्टं। यदि तद्ब्रह्म नामरूपविलक्षणं नामरूपाभ्यामस्पृष्टं तथापि तयोर्निर्व्वोढैवंलक्षणं ब्रह्मेत्यर्थः । इदमेव मैत्रेयीब्राह्मणोक्तं चिन्मात्रानुगमात्सर्व्वत्र चित्स्वरूपतैवेति गम्यते एकवाक्यतया

---

व्या० शरीरस्य त्याज्यत्वे हेतुमाह। सर्व्वानर्थेति॥ इतिशब्दो ध्यानसमाप्त्यर्थः॥ १३॥

दहरोऽस्मिन्नन्तराकाश इति लक्षणनिर्द्देशस्य प्रकृतोपयोगं दर्शयति। आध्यानायेति॥ सर्व्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ति। आकाशो ह्येवैभ्यो ज्यायानित्याद्याः श्रुतयः॥ आकाशशब्देनात्मनः श्रुतिषु प्रसिद्धत्वे हेतुमाह। आकाश इवेति॥ ते यदन्तरेत्यत्र ते इति पदं प्रथमाद्विवचनान्तं गृहीत्वा व्याख्याय द्वितीयाद्विवचनान्तं षष्ठ्यर्थमादाय व्याचष्टे। तयोर्व्वेति॥ यदन्तरेति समस्तं पदं पूर्व्वत्र

उ॰ वेश्म प्रपद्ये यशोऽहं भवामि ब्राह्मणानां यशो राज्ञां यशो विशां यशोऽहमनुप्रापत्सि स हाहं

भा॰ ऽऽत्मा। कथं तदवगम्यत इत्याह स आत्मा। आत्मा हि नाम सर्व्वजन्तूनां प्रत्यक्चेतनः स्वसंवेद्यः प्रसिद्धस्तेनैव स्वरूपेणोन्नीय अशरीरो व्योमवत्सर्व्वगत आत्मा ब्रह्मेत्यवगन्तव्यं। तच्चात्मा ब्रह्मामृतममरणधर्म्मा। अत ऊर्द्ध्वं मन्त्रः। प्रजापतिश्चतुर्मुखस्तस्य सभां वेश्म प्रभुविमितं वेश्म प्रपद्ये गच्छेयं। किञ्च यशोऽहं यशो नामात्माहं भवामि ब्राह्मणानां। ब्राह्मणा एव हि विशेषतस्तमुपासते। अतस्तेषां यशो भवामि। तथा राज्ञां विशाञ्च। तेऽप्यधिकृता एवेति तेषामप्यात्मा भवामि। तद्यशोऽहमनुप्रापत्सि प्राप्स्यामि प्राप्तुमिच्छामि। स हाहं यशसामात्मनां देहेन्द्रियमनोबुद्धिलक्षणानां यशसामात्मा। किमर्थमहमेवं प्रपद्ये इत्युच्यते। श्वेतं वर्णतः पक्वबदरसमं रोहितं। तथाऽदत्कं दन्त-

आ॰ व्याख्यातमधुना तु व्यस्तं व्याकृतं तदेव व्याकरणं सङ्क्षिपति। नामरूपाभ्यामिति॥ असंस्पृष्टस्तत्कथं तन्निर्व्वाहकमित्याशङ्क्याह। नामरूपाभ्यामस्पृष्टमिति॥ मायावशादिति शेषः। आत्मत्वेऽपि कथं करतलामलकवद्ब्रह्मणोऽपरोक्षत्वमत आह। आत्मा हीति॥ तेन स्वसंवेदनत्वेनेति यावत्। कुतो देहद्वयोपहितस्यात्मनः स्वसंवेद्यत्वं तत्राह। अशरीर इति॥ परिच्छिन्नस्याशरीरत्वमयुक्तमित्याशङ्क्याह। व्योमवदिति॥ ब्रह्मैव प्रत्यग्भूतमिति कथमवगतमित्याशङ्क्याह। आत्मेति॥ अनात्मत्वं चेदब्रह्मत्वप्रसङ्गात्प्रत्यग्भूतं ब्रह्म वक्तव्यमित्यर्थः। उपास्यस्वरूपं दर्शयित्वा तदुपासकस्य प्रार्थनामन्त्रमुत्थाप्य व्याकरोति। अत ऊर्द्ध्वमिति॥ प्रथमतो ब्राह्मण-

उ० यशसां यशः श्वेतमदत्कमदत्कं श्वेतं लिन्दु-
माभिगां लिन्दुमाभिगां ॥ १ ॥ १४ ॥

तद्धैतद्ब्रह्मा प्रजापतय उवाच प्रजापतिर्म-
नवे मनुः प्रजाभ्य आचार्य्यकुलाद्वेदमधीत्य

---

भा० रहितमप्यदत्कं भचयित्व तेजोबलवीर्य्यविज्ञानधर्म्माणामप-
हन्तृ विनाशयिचित्येतत्। तत्सेविनां स्त्रीव्यञ्जनं यदेव
लक्षणं श्वेतं लिन्दु पिच्छलं तं माभिगां माभिगच्छेयं।
द्विर्वचनमत्यन्तानर्थहेतुत्वप्रदर्शनार्थं ॥ १४ ॥

तद्धैतदात्मज्ञानं सोपकरणमोमित्येतदक्षरमित्याद्यैः
सहोपासनैस्तद्वाचकेन ग्रन्थेनाष्टाध्यायलक्षणेन सह ब्रह्मा
हिरण्यगर्भः परमेश्वरो वा तद्द्वारेण प्रजापतये कश्यपायो-
वाच। असावपि मनवे स्वपुत्राय। मनुः प्रजाभ्यः। इत्येवं श्रु-
त्यर्थसम्प्रदायपरम्परयाऽऽगतमुपनिषद्विज्ञानमद्यापि विद्व-
त्स्ववगम्यते। यथेह षष्ठाद्यध्यायत्रये प्रकाशितात्मविद्या
सफलाऽवगम्यते तथा कर्म्मणा न कश्चनार्थ इति प्राप्ते तदा-
नर्थक्यप्राप्तिपरिजिहीर्षयेदं कर्म्मणो विद्वद्भिरनुष्ठीयमानस्य

---

आ० यद्दर्शे हेतुमाह। ब्राह्मण एवेति ॥ विशेषं निर्द्दिशति। स्त्रीव्यञ्जन-
मिति ॥ योनिशब्दितं प्रजननेन्द्रियमित्यर्थः। कथं तद्भक्षयित्व
भवेत्तदाह। तत्सेविनामिति ॥ तदाभिगमनं नाम गर्भवास-
स्तस्यातिशयेनानर्थहेतुत्वं ज्ञापयितुं द्विर्वचनमित्यर्थः ॥ १४ ॥

उक्तविज्ञानस्योत्प्रेक्षितत्वशङ्कां व्युदस्यन्ननादिपारम्पर्य्यागतत्वं
दर्शयति। तद्धैतदिति ॥ सोपकरणमुपकरणैः शमादिभिः
सहितमिति यावत्। तद्द्वारेण हिरण्यगर्भद्वारेणेत्यर्थः। विद्या-

उ॰ यथा विधानं गुरोः कर्म्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्म्मिका-

---

भा॰ विशिष्टफलवत्त्वेनार्थवत्त्वमुच्यते । आचार्य्यकुलाद्वेदमधीत्य यथार्थतोऽध्ययनं कृत्वा यथा विधानं यथा श्रुत्युक्तैर्नियमैर्युक्तः सन्नित्यर्थः । सर्व्वस्यापि विधेः स्मृत्युक्तस्योपकुर्व्वाणकं प्रति कर्त्तव्यत्वे गुरुशुश्रूषायाः प्राधान्यप्रदर्शनार्थमाह । गुरोः कर्म्म यत्कर्त्तव्यं तत्कृत्वा कर्म्मशून्यो योऽतिशिष्टः कालस्तेन कालेन वेदमधीत्येत्यर्थः । एवं हि नियमवताधीतो वेदः कर्म्मज्ञानफलप्राप्तये भवति नान्यथेत्यभिप्रायः । अभिसमावृत्य धर्म्मजिज्ञासां समापयित्वा गुरुकुलान्निवृत्य न्यायतो दारानाहृत्य कुटुम्बे स्थित्वा गार्हस्थ्ये विहिते कर्म्मणि तिष्ठन्नित्यर्थः । तत्रापि गार्हस्थ्यविहितानां कर्म्मणां स्वाध्यायस्य प्राधान्यप्रदर्शनार्थमुच्यते । शुचौ विविक्ते अमेध्यादिरहिते देशे यथावदासीनः स्वाध्यायमधीयानो नित्यनैमित्तिकं कर्म्माधिकञ्च यथा शक्तितो ह्यगाद्यभ्यासञ्च कुर्व्वन् धार्म्मिकान् पुत्रान्

---

आ॰ प्रकरणं समाप्याविद्वदनुष्ठितस्य कर्म्मणः साफल्यमविदत्सन्तोषार्थं कथयति । यथेत्यादिना ॥ इहेति प्रकृतोपनिषदुक्तिः ॥ प्राङ्मुखत्वपवित्रपाणित्वादयो नियमाः ॥ भिक्षाशनस्नानाचमनादिर्विधिः । किमित्येष नियमोऽध्ययने कथ्यते तत्राह । एवं हीति ॥ तत्रापीति समन्या यथोक्तोऽधिकारी गृहीतः ॥ एतत्सर्व्वं स्वयं कुर्व्वन् ब्रह्मलोकमभिसम्पद्यत इति सम्बन्धः । एवं वर्त्तयन्नित्यस्य व्याख्यानमेवं यथोक्तेन प्रकारेण कुर्व्वन्निति ।

उ॰ न्विदधदात्मनि सर्वेन्द्रियाणि सम्प्रतिष्ठाप्याहिꣳसन्त्सर्वभूतान्यन्यत्र तीर्थेभ्यः स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसम्पद्यते न च

भा॰ शिष्यांश्च धर्म्मयुक्तान् विदधद्धार्म्मिकत्वेन तान्नियमयन्नात्मनि स्वहृदये हार्द्दे ब्रह्मणि सर्व्वेन्द्रियाणि सम्प्रतिष्ठाप्योपसंहृत्य सर्व्वेन्द्रियग्रहणात्कर्म्माणि च सन्न्यस्याहिंसयन् हिंसां परपीडामकुर्व्वन् सर्व्वभूतानि स्थावरजङ्गमानि भूतान्यपीडयन्नित्यर्थः ॥ भिक्षानिमित्तमटनादिनापि परपीडा स्यादित्यत आह। अन्यत्र तीर्थेभ्यः। तीर्थं नाम शास्त्रानुज्ञाविषयस्ततोऽन्यत्रेत्यर्थः । सर्व्वाश्रमिणां चैतत्समानं। तीर्थेभ्योऽन्यत्राहिंसैवेत्यन्ये वर्णयन्ति । कुटुम्बे एवैतत्सर्व्वं कुर्व्वन् स खल्वधिकृतो यावदायुषं यावज्जीवमेवं यथोक्तेन प्रकारेणैवं वर्त्तयन् ब्रह्मलोकमभिसम्पद्यते देहान्ते। न च पुनरावर्त्तते। शरीरग्रहणाय पुनरावृत्तेः प्राप्तायाः प्रतिषेधात् । अर्च्चिरादिना मार्गेण कार्य्यब्रह्मलोकमभिसम्पद्य यावद्ब्रह्मलोकस्थितिस्तावत्तत्रैव तिष्ठति प्राक्तता नावर्त्तते

व्या॰ अप्राप्तप्रतिषेधाशङ्कां वारयति। पुनरावृत्तेरिति ॥ चन्द्रलोकादिव ब्रह्मलोकादपि प्राप्ता पुनरावृत्तिस्तस्या न चेत्यादिप्रतिषेधान्नाप्राप्तप्रतिषेधप्रसक्तिरित्यर्थः। अपुनरावृत्तिवाक्यस्यान्यच्चराशि व्याकरोति । अर्च्चिरादिनेति ॥ प्रागिति महाप्रलयात्पूर्व्वकालोक्तिस्ततोब्रह्मलोकादित्यर्थः। वियदादिजगज्जातं जातमज्ञानतो यतः। तदस्मि नामरूपादिविरहि ब्रह्म निर्भयं ॥ १ ॥ नमस्त्वय्यन्तसन्दोहसरसीरुहभानवे । गुरवे परपक्षौघध्वान्तध्वंस

उ॰ पुनरावर्त्तते न च पुनरावर्त्तते ॥ १ ॥ १५ ॥ इति अष्टमः प्रपाठकः ॥ ८ ॥ छान्दोग्योपनिषत्सम्पूर्णा ॥ ॐ तत्सत् ॥

---

भा॰ इत्यर्थः । द्विरभ्यास उपनिषद्विद्यापरिसमाप्त्यर्थः ॥ १५ ॥ इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्य्यस्य श्रीशङ्करभगवतः कृतौ छान्दोग्योपनिषद्भाष्ये अष्टमोऽध्यायः समाप्तः ॥ ८ ॥ छान्दोग्योपनिषद्भाष्यं समाप्तं ॥ ॐ तत्सत् ॥

---

आ॰ पटीयसे ॥ २ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्य्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यश्रीभगवदानन्दज्ञानगिरिकृतायां छान्दोग्यभाष्यटीकायामष्टमोऽध्यायः ॥ ८ ॥ छान्दोग्योपनिषद्भाष्यटीका समाप्ता ॥ ॥ समाप्तश्चायं ग्रन्थः ॥ ॥ ॐ तत्सत् ॥

---

# छान्दोग्योपनिषत्सूचीपत्रं॥

## अथ प्रथमोऽध्यायः।


| | खण्ड | पृष्ठावधि | पृष्ठापर्य्यन्तं |
|---|---|---|---|
| ॐकारस्य रसतमत्वाप्तिसमृद्धिगुणानामुक्तिः | १ | ६ | २४ |
| प्राणदृष्ट्या ॐकारोपासनं ............ | २ | २५ | ३६ |
| आदित्यदृष्ट्या प्राणादिदृष्ट्या च उद्गीथस्वरोपासनं ............... | ३ | ३६ | ४६ |
| स्वरशब्दितमोङ्कारोपासनं ............ | ४ | ५० | ५३ |
| वागादीन् मुख्यप्राणञ्च रश्मीन् आदित्यञ्च उद्गीथदृष्ट्या अभेदोपासनमनिन्दापूर्व्वकं तयोः पुनर्भेदोपासनं | ५। ६। ७ | ५४ | ६६ |
| शिलकदाल्भ्यजैवलिसंवादः .......... | ८। ६। | ७० | ७६ |
| दुर्भिक्षकाले उषस्तेर्देशान्तरगमनं हस्तिपालोच्छिष्टभोजनादिप्रस्तावपूर्व्वकराजदर्शनादिऋत्विक् संवादः | १० | ८० | ८५ |
| राजोषस्तिसंवादपूर्व्वकमार्त्विज्यप्रस्तावेन देवताख्यानं ................ | ११ | ८६ | ६० |
| कुक्कुरैरुद्गीथोपासनोपदेशः .......... | १२ | ६० | ६४ |
| भाष्यवयवोपासनं ............... | १३ | ६५ | ६७ |


## अथ द्वितीयोऽध्यायः।


| | | | |
|---|---|---|---|
| साधुदृष्ट्या समस्तसामोपासना ........ | १ | ६६ | १०१ |
| लोकदृष्ट्या हिङ्कारः प्रस्तावः उद्गीथः प्रतिहारः निधनमिति पञ्चविधसामोपासना | २ | १०२ | १०५ |
| वृष्टिदृष्ट्या पञ्चविधसामोपासना........ | ३ | १०६ | १०६ |
| अब्दृष्ट्या पञ्चविधसामोपासना........ | ४ | १०७ | १०७ |

| | खण्ड | पृष्ठावधि | पृष्ठापर्य्यन्त |
|---|---|---|---|
| ऋतुदृष्ट्या पञ्चविधसामोपासना | ५ | १०८ | १०८ |
| पशुदृष्ट्या पञ्चविधसामोपासना | ६ | १०९ | १०९ |
| प्राणादिदृष्ट्या पञ्चविधसामोपासना | ७ | ११० | १११ |
| वाग्दृष्ट्या हिङ्कारः प्रस्तावः आदिः उद्गीथः प्रतिहारः उपद्रवः निधनमिति सप्तविधसामोपासना | ८ | १११ | ११२ |
| आदित्यदृष्ट्या सप्तविधसामोपासनं | ९ | ११२ | ११७ |
| आदित्यजयेन सप्तविधसामोपासनं | १० | ११७ | १२० |
| प्राणेषु गायत्रसामोपासनं | ११ | १२१ | १२२ |
| प्राणेषु रथन्तरसामोपासनं | १२ | १२२ | १२३ |
| मिथुने वामदेव्यसामोपासनं | १३ | १२४ | १२५ |
| बृहदादित्ये पञ्चविधसामोपासनं | १४ | १२५ | १२५ |
| पर्ज्जन्ये वैरूप्यसामोपासनं | १५ | १२६ | १२६ |
| ऋतुषु वैराजसामोपासनं | १६ | १२६ | १२७ |
| पृथिव्यादिदृष्ट्या सामोपासनं | १७ | १२७ | १२७ |
| पशुदृष्ट्या सामोपासनं | १८ | १२८ | १२८ |
| लोकदृष्ट्या सामोपासनं | १९ | १२८ | १२९ |
| देवतादृष्ट्या सामोपासनं | २० | १२९ | १३० |
| त्रयीविद्यादिदृष्ट्या सामोपासनं | २१ | १३० | १३२ |
| विनर्दिगुणविशिष्टसामोपासनं | २२ | १३२ | १३५ |
| धर्म्मस्कन्धेन ओङ्कारोपासनं | २३ | १३६ | १५१ |
| ओङ्कारप्रसङ्गेन सामहोमेनेन्द्रोपासनं | २४ | १५२ | १५७ |
| अज्ञातसामहोमेन्द्रोपासनस्य कर्म्मनिषेधः | २५ | १५७ | १५७ |


अथ तृतीयोऽध्यायः ।


| | | | |
|---|---|---|---|
| आदित्यादौ मध्वादिदृष्टिः | १ | १५८ | १६२ |
| दक्षिणदिक्स्थरश्म्यादौ मधुनाड्यादिदृष्टिः | २ | १६२ | १६३ |
| पूर्व्वदिक्स्थरश्म्यादौ मधुनाड्यादिदृष्टिः | ३ | १६३ | १६४ |
| उत्तरदिक्स्थरश्म्यादौ मधुनाड्यादिदृष्टिः | ४ | १६४ | १६५ |
| ऊर्ध्वदिक्स्थरश्म्यादौ मधुनाड्यादिदृष्टिः | ५ | १६५ | १६६ |

| | खण्ड | पृष्ठावधि | पृष्ठापर्य्यन्त |
|---|---|---|---|
| प्रथमामृतं यद्रोहितादिरूपं वसूपजीवनभूतं यस्योपासनं ...... | ६ | १६६ | १६८ |
| द्वितीयामृतं रुद्रोपजीवनभूतं यत्तदुपासनं | ७ | १६९ | १७० |
| तृतीयामृतमादित्योपजीवनभूतं यत्तदुपासनं | ८ | १७० | १७० |
| चतुर्थामृतं मरुतोपजीवनभूतं यत्तदुपासनं | ९ | १७० | १७१ |
| पञ्चमामृतं साध्योपजीवनभूतं यत्तदुपासनं | १० | १७१ | १७२ |
| भोगाप्तये आत्मनि संहृतं सर्व्वमित्युपासनं .. | ११ | १७६ | १७९ |
| गायत्र्या ब्रह्मोपासनं ............... | १२ | १८१ | १८७ |
| द्वारपालादिगौणोपासनं हृदि मुख्यब्रह्मोपासनं............... | १३ | १८८ | २०० |
| सर्व्वदृष्ट्या ब्रह्मोपासनं मनोमयत्वाद्यारोपेण शाण्डिल्यविद्या च .... | १४ | २०० | २०९ |
| पुत्रदीर्घायुष्ट्वफला विराट्कोषोपासना.... | १५ | २१० | २१४ |
| आत्मनो दीर्घायुष्ट्वफला आत्मयज्ञोपासना .. | १६ | २१४ | २१९ |
| आत्मयज्ञोपासना आङ्गिरसेन देवकीपुत्रायोक्ता अक्षयादिफला .... | १७ | २१९ | २२४ |
| मनआदिदृष्ट्या अध्यात्माधिदैविकब्रह्मोपासना ................ | १८ | २२५ | २२८ |
| आदित्याद्यदृष्ट्या अध्यात्माधिदैविकब्रह्मोपासना................ | १९ | २२८ | २३३ |


अथ चतुर्थोऽध्यायः।


| | | | |
|---|---|---|---|
| जानश्रुतेर्हंसोक्त्या रैक्वनिकटे क्षत्तप्रेरणं.... | १ | २३३ | २४० |
| रैक्वाय जानश्रुतेर्धनादिदानं .......... | २ | २४० | २४४ |
| ब्रह्मचारिणे अन्नदानरूपा सर्व्वापलब्धिफला संवर्गविद्या .......... | ३ | २४५ | २५२ |
| सत्यकामेन ब्रह्मचर्य्यार्थं गौतमस्य गोचारणं | ४ | २५२ | २५६ |
| बलीवर्दस्य सत्यकामाय ब्रह्मण एकपादोक्तिः | ५ | २५७ | २५८ |
| अग्नेः सत्यकामाय ब्रह्मणो द्वितीयपादोक्तिः | ६ | २५८ | २६० |
| हंसस्य सत्यकामाय तृतीयपादोक्तिः .... | ७ | २६० | २६१ |

| | खण्ड | पृष्ठावधि | पृष्ठापर्य्यन्त |
|---|---|---|---|
| मद्गोः सत्यकामाय चतुर्थपादोक्तिः ...... | ८ | २६१ | २६२ |
| सत्यकामस्य गुरुकुले पुनर्गमनं.......... | ९ | २६३ | २६४ |
| उपकोसलस्य आत्मविद्या .......... | १० | २६४ | २७० |
| गार्हपत्याग्निविद्या .............. | ११ | २७१ | २७२ |
| अन्वाहार्य्यपचनाग्निविद्या.......... | १२ | २७३ | २७३ |
| आहवनीयाग्निविद्या .............. | १३ | २७४ | २७४ |
| अग्नीनामुपकोशलप्रतिवचनं .......... | १४ | २७५ | २७७ |
| अक्षिपुरुषोपासना ................ | १५ | २७७ | २८२ |
| यज्ञे अध्यात्मस्य उपासना.............. | १६ | २८४ | २८७ |
| व्याहृत्युपासना .................. | १७ | २८८ | २९३ |


## अथ पञ्चमोऽध्यायः।


| | | | |
|---|---|---|---|
| ज्येष्ठश्रेष्ठगुणोपासना इन्द्रियाणां विवादश्च.. | १ | २९४ | ३०२ |
| प्राणस्यान्नवासकल्पोपासनं............ | २ | ३०५ | ३१४ |
| पञ्चाग्निविद्यार्थं श्वेतकेतुप्रवाहणसंवादः..... | ३ | ३१५ | ३२१ |
| लोकरूपाग्निविद्या.................. | ४ | ३२४ | ३२५ |
| पर्जन्यरूपाग्निविद्या .............. | ५ | ३२५ | ३२६ |
| पृथिवीरूपाग्निविद्या................ | ६ | ३२७ | ३२७ |
| पुरुषरूपाग्निविद्या ................ | ७ | ३२८ | ३२८ |
| योषिद्रूपाग्निविद्या ................ | ८ | ३२९ | ३२९ |
| पुनर्घटीयन्त्रवदसौ सम्पद्यते .......... | ९ | ३३० | ३३२ |
| आत्मविद्ययोत्तरमार्गः कर्म्मणा दक्षिणमार्गः.. | १० | ३३३ | ३६२ |
| औपमन्यवादिभिः पञ्चभिरुद्दालकेन सहितैः केकयस्य संवादः क आत्मा किं ब्रह्मेति .... | ११ | ३६२ | ३६२ |
| औपमन्यवकैकेयराजसंवादः .. ....... | १२ | ३६७ | ३६८ |
| सत्ययज्ञकैकेयराजसंवादः ............ | १३ | ३६८ | ३७० |
| इन्द्रद्युम्नकैकेयराजसंवादः.............. | १४ | ३७० | ३७१ |
| जनककैकेयसंवादः .............. | १५ | ३७१ | ३७२ |
| बुडिलकैकेयसंवादः ................ | १६ | ३७२ | ३७२ |
| उद्दालककैकेयसंवादः .............. | १७ | ३७३ | ३७३ |

| | खण्ड | पृष्ठावधि | पृष्ठापर्य्यन्त |
|---|---|---|---|
| सर्व्वैः सह कैकेयसंवादः.................. | १८ | ३७३ | ३७६ |
| आकृत्युपासना तेभ्यः प्राणाय स्वाहेति .... | १९ | ३७६ | ३७७ |
| व्यानाय स्वाहेति.................. | २० | ३७७ | ३७७ |
| अपानाय स्वाहेति .................. | २१ | ३७७ | ३७८ |
| समानाय स्वाहेति .................. | २२ | ३७८ | ३७८ |
| उदानाय स्वाहेति .................. | २३ | ३७८ | ३७९ |
| एवंविदोऽग्निहोत्रफलं .............. | २४ | ३७९ | ३८१ |


षष्ठाध्यायः ।


| | खण्ड | पृष्ठावधि | पृष्ठापर्य्यन्त |
|---|---|---|---|
| श्वेतकेतुमुपदिशत्यारुणिः ............ | १ | ३८२ | ३८७ |
| प्रपञ्चस्य कारणात्मना सत्त्वे दृष्टिश्च...... | २ | ३८७ | ४०२ |
| भूतसूक्ष्मात् प्रपञ्चसृष्टिक्रमः ........... | ३ | ४०४ | ४१२ |
| एकविज्ञानेन सर्व्वविज्ञानं ............ | ४ | ४१२ | ४१९ |
| अन्नाद्यशितं त्रेधा भवति ............ | ५ | ४१९ | ४२२ |
| भक्ष्यमाणस्याणीयभागो मनआदिर्भवति .. | ६ | ४२३ | ४२४ |
| षोडशकलपुरुषोपदेशः............... | ७ | ४२४ | ४२८ |
| सुषुप्तिकालोपदेशः ................ | ८ | ४२९ | ४४३ |
| यथायतनं पुनस्तथा सुषुप्तादुत्तिष्ठति...... | ९ | ४४४ | ४४६ |
| नदीदृष्टान्तेनोपदेशः................. | १० | ४४७ | ४४८ |
| वृक्षफलदृष्टान्तेनोपासना ............ | ११ | ४४८ | ४५१ |
| वटफलदृष्टान्तेनोपासना ............ | १२ | ४५१ | ४५३ |
| लवणदृष्टान्तेनोपासना.............. | १३ | ४५३ | ४५६ |
| गन्धारदेशादागतपुरुषदृष्टान्तेनोपासना .. | १४ | ४५६ | ४६५ |
| मुमूर्षुपुरुषदृष्टान्तेनोपासना .......... | १५ | ४६५ | ४६५ |
| चौरपरशुग्रहणदृष्टान्तेनोपासना........ | १६ | ४६५ | ४६८ |


सप्तमाध्यायः ।


| | खण्ड | पृष्ठावधि | पृष्ठापर्य्यन्त |
|---|---|---|---|
| नारदाय सनत्कुमारोपदेशः .......... | १ | ४७३ | ४८० |
| वाक् नाम्नो भूयसीति ............ | २ | ४८० | ४८२ |
| मनो वाचो भूय इति ............ | ३ | ४८२ | ४८३ |

